# तर्कसंग्रहदीपिकाप्रकाशिका

नावल्पाक्कम् श्रीरामानुजताताचार्यविरचितया

बालप्रियाख्यव्याख्यया

तिरुप्पुक्कुलि श्रीकृष्णताताचार्यविरचितया

प्रसारणाख्यव्याख्यया च समुल्लसिता




संपादकः

डाक्टर् एन्. वीलिनाथः

प्राध्यापकः

मद्रपुरीविश्वविद्यालयः



मद्रपुरी

१९८०

ॐ

तर्कसंग्रहदीपिकाप्रकाशिकाबालप्रिया-

प्रसारणाख्यकुसुमानां गुच्छरूपोऽयं ग्रन्थः

अस्मन्मातुलपादानां श्रीवाञ्छिनाथार्यवर्याणां

षष्ठ्यब्दपूर्तिमहोत्सवस्मारकचिह्नतया

प्रकाशितः

श्रीदक्षिणामूर्तिव्यासशङ्करशब्दितं सत्यज्ञानपदोदितं च यज्ज्योतिः

तत्स्वरूपाणां श्रीकामकोष्ठवरपीठजुषां गुरूणां

चरणनलिनयोः

सभक्तिश्रद्धं समर्प्यते

## FOREWORD

Logic and grammar are important not only as independent disciplines, but also as essential tools for mastering any other discipline. Hence the popular adage—

*kāṇādaṃ pāṇinīyaṁ ca sarvaśāstropakārakam.*

Kauṭilya praises the role of logic or *ānvīkṣikī* in glowing terms:

*pradīpaḥ sarvavidyānām upāyaḥ sarvakarmaṇām*
*āśrayaḥ sarvadharmāṇāṃ seyamānvīkṣikī matā.*

Even those who were aware of the limitations of the logical methods in realising ultimate truth, had to use them in their arguments. *Tarko' pratiṣṭhaḥ* says the *Mahābhārata*. *Tarkāpratiṣṭhānādapi* says the *Brahma-sūtra* (2. 1. 11). In the *Vākyapadīya* Bhartṛhari says:

*hastasparśādivāndhena viṣame pathi dhāvatā*
*anumānapradhānena vinipāto na durlabhaḥ.*

But he is aware that even in perception there is an element of inference, since one cannot observe directly every aspect of an object.

*durlabhaṃ kasyacilloke sarvāvayavadarśanam*
*kaiścitvavayavairdṛṣṭairarthaḥ kṛtsno'numīyate.*

Among the six orthodox systems of Indian philosophy, the Nyāya and the Vaiśeṣika were independent in origin, but had not always been kept isolated from each other. The exponents themselves amalgamated them into a syncretic school of Nyāya-Vaiśeṣika by taking the *pramāṇas* from the Nyāya system and manuals like the *Saptapadārthi* of Śivāditya, the *Bhāṣāpariccheda* of Viśvanātha Nyāyapañcānana, the *Tarkabhāṣā* of Keśavamiśra and the *Tarkasaṃgraha* of Annambhaṭṭa treat the two systems together. Among the text books on the syncretic school of Nyāya-Vaiśeṣika the *Tarkasaṃgraha* is the most popular and important and several commentaries and the sub-commentaries are available on it.

A major part of Indian philosophical thought, including even literary criticism, from the fifteenth century onwards is unintelligible without at least an elementary knowledge of the Navya-Nyāya language. To the uninitiated this technical language may seem difficult, but when once this precise and sharp language is understood, it opens up means of conveying accurately and precisely abstract ideas generally considered to be beyond the range of language even in the west till the discovery of symbolic language. The *Tarkasaṃgraha* and its commentaries form the first steps in the acquisition of that language.

One special feature of the present edition is the inclusion of a lucid and authentic commentray on Nīlakaṇṭha's *Prakāśikā* on the *Tarkasaṃgraha-Dīpikā* by Prof.

Rāmānuja Tātāchārya, Sanskrit Vidyapeetha, Tirupati a recognised authority in the field. The Editor's Introduction contains expository studies, using comparative and historical methods, of some of the major topics dealt with in the text. He has confined the scope of his studies to the orthodox Hindu systems. Lucid notes are added at the appropriate places in the text to clarify the points—adding pariṣkāras wherever necessary.

I have great pleasure in writing a Foreword to this useful edition of the *Tarkasaṃgraha* with a lucid, modern commentary and an expository introduction, which, I am sure, will be of great help to the students of Indian logic.

Madras
5-10-1980

K. KUNJUNNI RAJA

श्रीः

# प्रस्तावना

तत्र भवता अन्नम्भट्टेन विरचितः तर्कसंग्रहः तत्कृतदीपिकाख्यव्याख्यानसहितः न्यायशास्त्रमधिजिगांसमानैः सर्वैरपि आदौ पठ्यत इति विश्वप्रसिद्धम् । तर्कसंग्रहस्य दीपिकाव्यतिरिक्तानि पदकृत्यम्, न्यायबोधिनी, वाक्यवृत्तिः, निरुक्तिः, पट्टाभिरामटिप्पणी इत्यादीनि बहूनि व्याख्यानानि मुद्रितान्यमुद्रितानि च उपलभ्यन्ते । तथा दीपिकायाः रामरुद्री, नीलकण्ठकृता प्रकाशिका, नृसिंहशास्त्रिकृता प्रकाशिका, पट्टाभिरामकृता प्रकाशिका, इत्यादयः अनेका व्याख्याः मुद्रिता अमुद्रिताश्च वर्तन्ते । तर्कसंग्रहव्याख्यासु न्यायबोधिन्याः दीपिकाव्यख्यासु नीलकण्ठीयप्रकाशिकायाश्च पठनपाठनप्रचारोऽस्ति । संक्षिप्तशैल्या अपेक्षितसकलार्थप्रतिपादकत्वरूपो विशेष एव पठनपाठनगोचरतायां मुख्यो हेतुः । तत्रापि नीलकण्ठप्रकाशिका लघुगादाधरीति व्यपदेशयोग्या छात्राणां विदुषां च चित्तरञ्जकतमा चकास्ति । येषां गादाधर्यादिषु ग्रन्थेषु गाढः परिचयो वर्तते त एव प्रकाशिकायाः तात्पर्यं रसं च ज्ञातुमनुभवितुं च शक्नुवन्ति ।

तस्याः नीलकण्ठप्रकाशिकायाः प्रतिवाक्यं भावार्थस्पष्टीकरणचणा काचन व्याख्या चिरात् नावतीर्णा । यद्यपि नीलकण्ठपुत्रेण कृता भास्करोदयनाम्नी व्याख्या बहोः कालात् पूर्वं निर्णयसागरयन्त्रालयेन मुद्रापिता उपलभ्यते, तथापि अपेक्षितस्थले समुचितरीत्या अव्याख्यानात् अनपेक्षितविस्तरकरणाच्च बालतार्किकाणां

नोपकारिणी सा । प्रत्युत बहुषु स्थलेषु प्रकाशिकायाः हृदयमनव-गच्छन्ती विपरीततया व्याख्यान्ती व्यामोहमेव जनयति । इयं नील-कण्ठपुत्रेण न कृता स्यादित्यपि तादृशस्थलानां दर्शनेन मतिः समुप-जायते । अत एव मादृशानां बालतार्किकाणां विदुषां चोपकाराय समीचीना काचन व्याख्या कर्तव्येति बहोः कालात् पूर्वं नावल्पाका-भिजनान् पण्डितप्रवरान् एन्. एस्. रामानुजताताचार्यान् प्रार्थयम् । तेषां सविधे न्यायशास्त्रं मयाधीतमितीमं सम्बन्धं पुरस्कृत्य प्रार्थना-मकरवम् । तेऽपि सद्यः प्रार्थनां स्वीकृत्य एकवर्षाभ्यन्तरे बालप्रिया-नाम्नीं प्रकाशिकायाः व्याख्यां निर्माय अदुः । तस्याः प्रकाशनसमयोऽ-धुना समुपनत इति नितरां मोमुद्यते चेतः । अनया व्याख्यया बाल-तार्किकाः सर्वेऽपि महान्तमुपकारं प्राप्स्यन्तीति निश्चप्रचम् ।

अथ **भास्करोदयायां** विद्यमानान्यसांगत्यानि स्थालीपुलाकन्या-येन प्रदर्शयामः—

[१]

**प्रकाशिकायां** 'तर्कस्यापादकाभावसाधकविपर्ययप्रतियोग्यापाद्य-कत्वरूपविपर्यये तत्कोटिपर्यवसायित्वं दर्शयति - दर्शनाभावान्ना-स्तीति' इति पङ्क्तिः (पृ. १४२) दृश्यते । अस्याः पङ्क्तेर्वास्त-वार्थः अयम् - 'यद्यत्र घटः स्यात्तर्हि भूतलमिव घटोऽद्रक्ष्यत' इत्या-कारके तर्के आपादको घटः तस्याभावः घटाभावस्तस्य साधको विपर्यय-दर्शनाभावः तस्य प्रतियोगि दर्शनमेव आपाद्यमिति आपादकाभावः साधकविपर्ययप्रतियोग्यापाद्यकत्वं तर्कस्येति ।

[२]

**भास्करोदयाकारस्तु** इममाशयमगृहीत्वा किमपि लिखति । तथ हि **भास्करोदया**पङ्क्तिः - 'आपादकस्य दर्शनापत्तिसंपादकघंटास्तित्वस्य

अभावसाधको दर्शनाभावो नास्तीति यो विपर्ययः तत्प्रतियोगिदर्श-नाभावरूपविपर्ययप्रतियोगि यद्दर्शनं तस्यापाद्यत्वरूपं विपर्यये दर्शना-भावान्नास्तीति व्यत्यासरूपे तत्कोटिपर्यवसायित्वं नास्तीत्यभावकोटि-पर्यवसायित्वं तर्कस्य दर्शयतीति समुदितार्थः" (पृ. ८०) इति ।

'तर्किता आपादिता प्रतियोगिनो घटादेः सत्त्वस्य सत्त्वप्रसक्तेः' इति **प्रकाशिका** (पृ. १४२) । अत्र तर्किता इत्यस्य आपादन-विषयभूतेत्यर्थः । आपादनाश्रयभूतेति **भास्करोदया** (पृ. ८०) ।

[३]

सत्प्रतिपक्षप्रकरणे **प्रकाशिकायां** 'यत्संबन्धि यत् साध्यं तद-भावव्याप्यहेत्वन्तरस्य ज्ञानं पक्षेऽस्ति स सत्प्रतिपक्ष इत्यर्थः' इति पङ्क्तिर्दृश्यते (पृ. २०३) । तस्या अयमर्थः - यत्संबन्धीत्यस्य यद्धेतुसंबन्धीत्यर्थः । तथा च यद्धेतुसंबन्धि यत् साध्यं तदभावव्याप्य-हेत्वन्तरस्य ज्ञानं तत्पक्षेऽस्ति स सत्प्रतिपक्षः । स सत्प्रतिपक्ष इत्यत्र तत्पदेन यत्संबन्धीत्यत्र यत्पदेन गृहीतो हेतुर्ग्राह्य इति । **भास्करोदयायां** तु - 'यत्पदेन प्रकृताभिप्रेतपक्षपरिग्रहः । पक्षेत्यत्र तदित्यादिः । तथा च यत्पक्षकं यत्साध्यं तदभावव्याप्यहेत्वन्तरस्य ज्ञानं तत्पक्षे स इत्यन्वयः' इति व्याख्यानं दृश्यते (पृ. ११६) । अत्रानन्वयादिकं विदुषां स्पष्टम् ।

[४]

प्रामाण्यवादे **प्रकाशिकायां** - 'भट्टमते तु ज्ञानस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमितेरेव प्राथमिकज्ञानग्रहरूपतया तया प्रामाण्यं गृह्यते' इति पङ्क्तिर्दृश्यते (पृ. २६९) । अत्र ज्ञानस्य ग्रहः ज्ञान-ग्रहः प्राथमिकश्चासौ ज्ञानग्रहश्चेति कर्मधारयः । तेन प्राथमिकत्वं

ज्ञानग्रहविशेषणम् । ज्ञानग्रहे प्राथमिकत्वविशेषणात् नैयायिकसंमत-प्रवृत्त्यादिलिङ्गकानुमित्यात्मकः द्वितीयो ज्ञानग्रहः व्यवच्छिद्यत इति **प्रकाशिकाशयः** ।

**भास्करोदयायां** तु एतत्तत्त्वाज्ञानात् 'प्रथमे भवं प्राथमिकं तच्च ज्ञानं व्यवसायात्मकं, तस्य ग्रहरूपतया तद्ग्राहकानुमित्यात्मकज्ञान-स्वरूपतयेति यावत्' इति यत्किमपि व्याख्यातम् (पृ. १६७) ।

[५]

तथा **तत्रैव** - 'अनुमानप्रयोगस्तु इदं ज्ञानमप्रमा विसंवादि-प्रवृत्तिजनकत्वात् यन्नैवं तन्नैवम्' इति दृश्यते (पृ. २८८) । अत्र विसंवादिप्रवृत्तीत्यत्र विसंवादिनी या प्रवृत्तिः तज्जनकत्वादित्यर्थः । विसंवादिनीत्यस्य विफलेत्यर्थः । **भास्करोदयायां** तु 'विपरीतज्ञान-वत्प्रवृत्तिजनकत्वादित्यर्थः' इत्युक्तम् । अनेन विसंवादिनः प्रवृत्तिरिति विग्रहोऽभिप्रेतः । अत्रानौचित्यं स्पष्टमेव ।

उदाहरणार्थं कानिचित् स्थलानि प्रदर्शितानि । एतादृशस्थलेषु **बालप्रियायां** प्रामाणिकरीत्या व्याख्यानं कृतम् ।

अथैतन्मुद्रणसमाप्तिसमये तिरुप्पुक्कुलिस्वामीति विख्यातैः सार्ध-शतसंवत्सरेभ्यः पूर्वं काञ्चीमध्युषितवद्भिः चतुस्तन्त्रनिष्णातै-विरचितानेकन्यायग्रन्थक्रोडपत्रैः श्रीकृष्णताताचार्यैः कृतायाः प्रसारणा-ख्यायाः प्रकाशिकाव्याख्यायाः एका तालपत्रमयी ग्रन्थलिपिमातृका संप्रति काञ्चीमधिवसतां विल्लियंपाक्कं श्रीसम्पत्कुमारताताचार्याणां सकाशात् लब्धा । व्याख्येयं श्रीकृष्णताताचार्यैः मातृकारूपेण वि-लिखितेति तालपत्रग्रन्थपुष्पिकातः अवगम्यते । अपि चात्रात्यप्रमा-

त्वानुगमः तथैव **न्यायसिद्धाञ्जनव्याख्यायां रत्नपेटिकायां** दृश्यत । किं च तदीयग्रन्थान्तरशैलीमनुकरोतीयं प्रसारणा। अतो व्याख्येयं श्रीकृष्णताताचार्यैः कृतेत्यत्र न कोऽपि संदेहः। अस्यां प्रसारणायां प्रायः सर्वेषां लक्षणानामनुगमाः वर्तन्ते । तस्मादियं व्याख्या अनुगम-मार्गजिज्ञासूनां महते उपकाराय कल्पेतेति मत्वा अस्या अपि प्रका-शनं युक्तरूपं मन्वानेन मया अनुबन्धरूपेण व्याख्येयं मुद्रापिता। यदि पूर्वमेवेयं समुपलब्धा अभविष्यत् तदा इयमपि तत्तत्स्थलस्याध-स्तात् बालप्रियया साकं मुद्रापिता अभविष्यत् । अथापि अनुबन्ध-रूपेण वा मुद्रणार्थमियं लब्धेति अलभ्यलाभेनेव संतुष्यत्यन्तरङ्गम् ।

ग्रन्थस्यास्य तर्कसङ्ग्रह-दीपिका-प्रकाशिका-बालप्रिया-प्रसारणा-गुञ्जरूपस्य प्रकाशनम् -

'सिद्ध्यन्ति कर्मसु महत्स्वपि यन्नियोज्याः
सम्भावना गुणमवेहि तमीश्वरणाम् ।'

इति नीत्या - बाल्यात् प्रभृति निरवग्रहानुग्रहगर्भेण कटाक्षविशेषेण मामुज्जीवयतां वेदादिशास्त्रसंरक्षणार्थं कृतावताराणां आजन्मशुद्धानां महर्षिप्रवराणां आचार्यतल्लजानां भक्तजनबृन्दैः सेव्यमानानां श्रीकाञ्चीकामकोटिपीठाधीश्वराणां श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्री-चरणानां मद्गुरुवर्याणां करुणाविलासविजृम्भितम् ।

मम मातुलपादानां श्रीकाञ्ची-आचार्यचरणपादपद्मभक्ताग्रगण्यानां धर्मरक्षणधुरंधराणां सत्कर्मनिरतानां शमदमाद्यात्मगुणसंपन्नानां समधिगतन्यायादिशास्त्रसाराणां श्रीवाञ्छिनाथार्यवर्याणां षष्टयब्द-पूर्तिमहोत्सवस्मारकचिह्नतया ग्रन्थमेनं श्रीदक्षिणामूर्तिव्यासशङ्कर-शब्दितं सत्यज्ञानपदोदितं च यज्ज्योतिः तत्स्वरूपाणां श्रीकामकोष्ठ-

वरपीठजुषां गुरूणां चरणनलिनयोः प्रणामशतानि विधाय न्यायवेदा-
न्तादिशास्त्रेषु व्युत्पत्त्यतिशयं प्रार्थयमानः सभक्तिश्रद्धं समर्पयामि ।

समुचितसरलव्याख्यानविरहेण तर्कशास्त्राध्ययनात् बिभ्यतां
बालतार्किकाणां ग्रन्थोऽयं महान्तमुपकारमाधास्यति । सत्स्वपि बहुषु
कार्येषु मत्प्रार्थनामङ्गीकृत्य महोपकारकरीं बालप्रियां निर्माय मादृ-
शान् बालतार्किकान् अनुगृहीतवद्भ्यः मम तर्कशास्त्रगुरुभ्यः न्याय-
मीमांसा - व्याकरण - वेदान्तशिरोमणिभ्यः विरचितानेकग्रन्थेभ्यः
श्रीकाञ्चीकामकोटिपीठाधीश्वराणां परमानुग्रहपात्रभूतेभ्यः तिरुपति-
स्थकेन्द्रीयसंस्कृतविद्यापीठे प्राध्यापकपदमलंकुर्वद्भ्यः विद्वद्वरेभ्यः
श्री. एन्. एस्. रामानुजताताचार्येभ्यः परां कृतज्ञतां प्रकटयामि ।

अस्य ग्रन्थस्य आमुखलेखनेन माम् अनुगृहीतवतां प्राच्यप्रतीच्य-
विद्याविशारदानां विख्यातविदुषां मद्रपुरीविश्वविद्यालये संस्कृत-
विभागस्य प्राध्यापकानामध्यक्षाणां च डा० के. कुञ्जुण्णिराजामहो-
दयानां हार्दं कार्तज्ञ्यमाविष्करोमि ।

प्रसारणाख्यव्याख्यायाः तालकोशरूपां प्रतिं दत्त्वा उपकृतवद्भ्यः
काञ्चीपुरनिवासिभ्यः,विद्वद्भ्यः श्रीविल्लिवम्पाक्कं सम्पत्कुमारताता-
चार्येभ्यः, तस्या एव काकदमयप्रतितः छायाचित्ररूपां प्रतिं सम्पाद्य
दत्त्वा उपकृतवद्भ्यः अडयार्कोशालयाधिकारिभ्यश्च हार्दिकीं
कृतज्ञतां प्रकाशयामि ।

एतद्ग्रन्थस्य मुद्रणोपयोगितया सुस्पष्टरीत्या देवनागरलिप्या
मातृकां विलिखितवद्भ्यः न्यायशिरोमणिभ्यः डा० ई. गोविन्दन्
महाशयेभ्यः कृतज्ञतां निवेदयामि ।

समीचीनपङ्क्तिकया निर्दिष्टसमये मुद्रणं कृतवते इळङ्गो मुद्रणालयाधिकारिणो एम्. एस्. मणियवन् महाशयाय मङ्गलाशासनपूर्वकं कृतज्ञता निवेद्यते ।

अपि च उपोद्घाते दीपिकादिषु विवेचितविषयाणां मध्ये मुख्यतमतया प्रतिभातान् पञ्चदशविषयान् अधिकृत्य प्राचीननवीन-न्यायवैशेषिकग्रन्थादिपरामर्शपूर्वकं विवेचनं अकरवम् । अनुसन्धान-मार्गानुसारेण लिखितोऽयमुपोद्घातः अनुसन्धानकुतूहलिनामुपकाराय कल्पते । अनवधानतः मुद्रणादौ जाताः अशुद्धयः विद्वद्भिः क्षन्तव्याः शोधनीयाश्चेति प्रार्थये ।

इति

श्रीकामकोष्ठवरपीठजुषां गुरूणां
पादारविन्दमकरन्दरसैकजीवी
**एन्. वीलिनाथः**

वैशाखशुद्धपूर्णिमा
(२९-५-१९८०)



। श्रीः ।

## [१] मङ्गलवादः

इह खलु प्रायः सर्वेऽपि ग्रन्थकाराः ग्रन्थारम्भसमये मङ्गलमाचरन्तीति सर्वसंप्रतिपन्नम् । तत्र मङ्गलाचरणे किं प्रमाणम् ? किं वा प्रयोजनमिति मङ्गलवादे निरूप्यते । न्यायभाष्यकारः मङ्गलाचरणमधिकृत्य न किमप्यवादीत् । न्यायवार्तिककारोऽपि मङ्गलाचरणं विनैव प्रबन्धमारेभे । टीकाकारस्तु वाचस्पतिमिश्रः मङ्गलाचरणपूर्वकमेव टीकामारभत । तत्र परमशिष्टोऽपि वार्तिककारः कुतो वा ग्रन्थारम्भे मङ्गलं नाचचारेत्याशङ्क्य इष्टदेवतानमस्काररूपं मङ्गलं कृतवानेव । अथापि ग्रन्थे तन्न न्यवेशयत् । न हि मङ्गलकरं यद्यत्क्रियते तत्सर्वं ग्रन्थे निवेशनीयमिति निर्बन्धोऽस्तीति समाधानं प्रोवाच टीकाकारः । तत्सन्दर्भे ---

> 'अविगीतशिष्टाचारपरम्पराप्राप्तो वार्तिककारेण परमशिष्टेन कृतोऽपीष्टदेवतानमस्कारो न शास्त्रे निवेशितः '[1]

इति वदन् मङ्गलाचरणे शिष्टाचारः प्रमाणमिति सूचयति । तात्पर्यटीकापरिशुद्धौ उदयनाचार्याः - कार्यारम्भे प्रारब्धस्यान्तरायविरहेण परिसमाप्तिं कामयमानाः अभीष्टदेवतानमस्कारपूर्वकं प्रेक्षावन्तः प्रवर्तन्ते । परं तु दृश्यते तत्र तत्र बहुशो व्यभिचारः, कृतनमस्कारस्यापि समीहितासिद्धेः, अकृतनमस्कारस्यापि समीहितसिद्धेश्च । न चात्र 'वृष्टिकामः कारीरीं निर्वपेत्' इतिवत् 'प्रारब्धपरिसमाप्तिकामो देवतां नमस्कुर्यात्' इति श्रुतिरस्ति येन व्यभिचारेऽपि कर्मकर्तृसाधनवैगुण्यं कल्पयामः । तस्मात् 'अर्थकाम इह वटे प्रतिवसन्तं यक्षं

---

1. तात्पर्यटीका पृ॰ २१.

पूजयेत्' इतिवत् अप्रामाणिकप्रसिद्धिविजृम्भितमेतन्मङ्गलाचरण-मित्यभिसन्धाय किमु वार्तिककृता मङ्गलं न कृतम्? इत्याकाङ्क्षा-समाधानार्थः पूर्वोक्तटीकाग्रन्थ इत्यवतारिकां कृत्वा, प्रत्यक्षपिव अवि-गीतशिष्टाचारोऽपि श्रुतिसद्भावे प्रमाणमेव, निर्मूलस्य शिष्टाचार-स्यासंभवात् । तथा च क्वचिन्मङ्गले समाप्त्यभावः कर्मकर्तृसाधन-वैगुण्यप्रयुक्तः । इह जन्मनि असत्यपि मङ्गले समाप्तिस्तु जन्मान्तरी-यमङ्गलाधीनेति समवर्णयन् । एतेन शिष्टाचारानुमिता श्रुतिः ग्रन्था-रम्भे मङ्गलकर्तव्यतायां प्रमाणमिति उदयनाचार्याशयोऽवगम्यते, मङ्गलं समाप्तिफलकमिति च ।

### तत्र भूषणकाराशयः

न्यायभूषणकाराः – प्रणामकृतेन हि मङ्गलेन अधर्मप्रति-बन्धकेन अधर्ममूला विघ्नविनायकाः प्रोत्सार्यन्ते । ततः शास्त्रपरि-समाप्तिरित्यर्थवान् प्रणामः । यत्र तु न समाप्तिस्तत्र प्रणामस्या-सम्यक्त्वमनुमेयं कर्तुरधर्मबाहुल्यं वा । यत्राप्यन्तरेण प्रणामं शास्त्र-परिसमाप्तिर्दृश्यते, तत्रापि मानसः कायिको वा प्रणामोऽनुमेयः, सा-धनान्तरसाध्यो वा धर्मः । वाचिकप्रणामे त्वन्येषामप्युपदेशसिद्धिरिति विशेषः । यस्य तु विघ्नहेतुरधर्म एव नास्ति, तेनापि तदाशङ्कया कर्तव्य एव प्रणामः । शल्वाद्याशङ्कया अस्त्रादिसंग्रहवदिति निरूप-यन्तः मङ्गलस्यावश्यकर्तव्यतां बोधयन्ति । मङ्गलकर्तव्यतायां प्रमाणं तु ते न प्रत्यपादयन् । मङ्गलस्य समाप्तिफलकत्वमेव भासर्वज्ञाभि-मतम् ।

### वैशेषिकदर्शनरीतिः

वैशेषिकदर्शने 'अथातो धर्मं व्याख्यास्यामः' इति प्रथमसूत्रे आदौ अथशब्दं प्रयुञ्जानः कणादो मङ्गलमाचरति स्मेति उपस्कार-कारो व्याचष्टे । भाष्यकारः प्रशस्तपादाचार्यः 'प्रणम्य हेतुमीश्वरम्'

1. न्यायभूषणम् पृ० २.

इतीश्वरप्रणामात्मकं मङ्गलमन्वतिष्ठत् । तत्र किरणावल्याम्[1] - कृत-मङ्गलेन चारब्धं कर्म परिसमाप्यते प्रचीयते च ।(प्रचयो नाम प्रारिप्सितस्य ग्रन्थस्य गुरूणा शिष्याय दानस्याविच्छेदः । ) न चान्वय-व्यतिरेकाभ्यां व्यभिचारात् मङ्गलस्य निर्विघ्नपरिसमाप्तिहेतुत्वं न भवतीति वाच्यम् । आगममूलकस्य कार्यकारणभावस्याबाध्यत्वात् । सत्यपि मङ्गले समाप्त्यभावस्तु कर्मकर्तृसाधनवैगुण्यादिति प्रत्यपादि ।

न्यायकन्दलीकारोऽपि 'प्रणम्य हेतुमीश्वरम्' इति श्लोकं व्याचक्षाण आह[2] - कर्मारम्भे हि देवता गुरुश्च नमस्क्रियते इति शिष्टाचारोऽयम् । फलं च नमस्कारस्य विघ्नध्वंसः । ननु किं नमस्कारादेव विघ्नोपशमः उतान्यस्मादपि । न तावन्नमस्कारादेवेत्यस्ति नियमः । असत्यपि नमस्कारे न्यायमीमांसाभाष्ययोः परिसमाप्तत्वात् । यदा चान्यस्मादपि तदा नियमेन मङ्गलाचरणम् व्यर्थम् । अत्रोच्यते । नमस्कारादेव विघ्नोपशमो भवति, शिष्टैः नियमेन ग्रन्थारम्भे तदनुष्ठानात् । न च न्यायमीमांसाभाष्यकाराभ्यां न कृतो नमस्कारः । किं तु कृतोऽपि ग्रन्थे न न्यबन्धि । कथमिदं ज्ञायत इति चेत् - कर्तुः शिष्टतयैव । म्लेच्छोऽपि तावत् गुर्वारम्भे कर्मणि न प्रवर्तते यावदिष्टान् न नमस्यति । तथा च परमास्तिकौ वात्स्यायनशबर-स्वामिनौ मङ्गलं नान्वतिष्ठतामित्येतदसंभावितम् इति ।

**मङ्गलाचारे स्मृतिसंमतिः**

मङ्गलाचारे स्मृतिरपि प्रमाणम् । तथा हि मनुः[3]–
"मङ्गलाचारयुक्तः स्यात् प्रयतात्मा जितेन्द्रियः ।
जपेच्च जुहुयाच्चैव नित्यमग्निमतन्द्रितः ॥

---

1. किरणावली पृ० १.
2. न्यायकन्दली पृ० १-२.
3. मनुस्मृतिः ४-१४५, १४६.

मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम् ।
जपतां जुह्वतां चैव विनिपातो न विद्यते ॥"

इति । विनिपात इत्यस्य विघ्न इत्यर्थः । अत्र द्वितीयश्लोकः मणि-कारैः मङ्गलवादान्ते प्रमाणतया उदाहृतः ।

**तत्र इतिहाससंमतिः**

इतिहासश्रेष्ठे महाभारते[1] व्याससंहितां श्रोतुमिच्छद्भिः मह-र्षिभिः प्रार्थितः सौतिः पौराणिकः कथारम्भात् प्राक्—

"आद्यं पुरुषमीशानं पुरुहूतं पुरुष्टुतम् ।
ऋतमेकाक्षरं ब्रह्म व्यक्ताव्यक्तं सनातनम् ॥
असच्च सदसच्चैव यद्विश्वं सदसत्परम् ।
परावराणां स्रष्टारं पुराणं परमव्ययम् ॥
मङ्गल्यं मङ्गलं विष्णुं वरेण्यमनघं शुचिम् ।
नमस्कृत्य हृषीकेशं चराचरगुरुं हरिम् ॥
महर्षेः पूजितस्येह सर्वलोकैर्महात्मनः ।
प्रवक्ष्यामि मतं पुण्यं व्यासस्याद्भुतकर्मणः ॥"

इतीष्टदेवतानमस्कारपूर्वकं कथामारभमाणः ग्रन्थारम्भे मङ्गलाचरण-स्यावश्यकर्तव्यतां निवेदयति । एवं विष्णुपुराणेऽपि पराशरः[2]—

"विष्णुं ग्रसिष्णुं विश्वस्य स्थितौ सर्गे तथा प्रभुम् ।
प्रणम्य जगतामीशमजमक्षयमव्ययम् ॥
कथयामि यथापूर्वम् ......'

इति विष्णुनमस्कारपूर्वकं ग्रन्थमारभते स्म ।

---

1. महाभारतम् १-२२, २५.
2. विष्णुपुराणम् १-२.७.

**मणिकृन्मतम्**

मणिकाराः आदौ संप्रदायमतमनुसृत्य विस्तरेण मङ्गलस्य समाप्तिफलकत्वं साधयामासुः । शिष्टाचारानुमितश्रुतिरेव मङ्गल-कर्तव्यतायां प्रमाणमित्यपि न्यरूपयन् । ततो मङ्गलस्य विघ्नध्वंसः फलमिति स्वसिद्धान्तं विस्तरेण समवर्णयन् ।

**अन्नम्भट्टस्याशयः**

दीपिकाकारा अन्नम्भट्टाः शिष्टाचारेणानुमिता 'समाप्तिकामो मङ्गलमाचरेत्' इति श्रुतिः ग्रन्थारम्भे मङ्गलकर्तव्यतायां प्रमाणम् । मङ्गलस्य समाप्तिः फलम् । विघ्नध्वंसो द्वारम् । विघ्नसमसंख्याकस्य मङ्गलस्य कारणत्वात् नान्वयव्यभिचारः । जन्मान्तरीयमङ्गलमादाय न व्यतिरेकव्यभिचार इति निरूपयन्ति । प्रकाशिकायाम् मङ्गलस्य विघ्नध्वंसः फलमिति मणिकृन्मतमपि संगृहीतम् । न केवलं श्रुतिः मङ्गलकर्तव्यतायां प्रमाणम्, अपि तु 'मङ्गलं कर्तव्यं समाप्तिफल-कत्वात्' इत्यनुमानमपि तत्र प्रमाणमिति प्रतिपादयाम्बभूवुः प्रकाशि-काकृतः ।

## [२] तमोवादः

नवैव द्रव्याणीति द्रव्यविभजनमसंगतम् । पृथिव्यादिनवद्रव्य-व्यतिरिक्तस्य तमोनामकस्य द्रव्यस्य सद्भावादिति मीमांसकमतरीत्या आक्षिप्य तमसः तेजोऽभावेऽन्तर्भावात् न तदतिरिक्तं द्रव्यमिति दीपि-कायां न्यरूप्यत । तत्र मीमांसकानामयमाशयः - तमसो द्रव्यत्वं ताव-दवश्यमङ्गीकरणीयम् । 'नीलं तमः' इति प्रतीत्या रूपवत्त्वस्य 'चलति तमः' इति प्रतीत्या क्रियावत्त्वस्य चावगमेन रूपवत्त्वक्रिया-वत्त्वाभ्यां द्रव्यत्वव्याप्याभ्यां द्रव्यत्वसिद्धेः । तथा च तमो द्रव्यं नीला-दिप्रकारकाबाधितप्रतीतिविषयत्वात् घटवत् इत्यनुमानं तमसो द्रव्यत्वे प्रमाणम् । न च यत्र यत्रालोकाभावः तत्र चाक्षुषप्रमाविषयत्वाभावः इति वा यत्र यत्रालोकाभाववद्विषयकज्ञानत्वं तत्र चाक्षुषप्रमात्वाभाव

इति वा व्याप्तिसत्त्वात् 'नीलं तमः' इति प्रत्ययस्य प्रमात्वासंभवात् उक्तहेतुः स्वरूपासिद्ध इति वाच्यम् । आलोकाद्यात्मके तेजसि संयोगसंबन्धावच्छिन्नालोकाभावसत्त्वेन तत्र चाक्षुषप्रमाविषयत्वस्यैव सत्त्वेन व्यभिचारात् उक्तव्याप्तेरसंभवात् । न च तेजोभिन्नत्वं निवेश्य व्याप्तिर्वक्तव्या । तथा च यत्र यत्र तेजोभिन्नत्वे सति आलोकाभावः तत्र तत्र चाक्षुषप्रमाविषयत्वाभाव इति व्याप्तेर्न व्यभिचार इति वाच्यम् । तथापि तमस्त्वेन भवदभिमते आलोकाभावे आलोकसंयोगरूपकारणाभावेऽपि चाक्षुषप्रमाविषयत्वस्यैव सत्त्वेन व्यभिचारस्य दुर्वारत्वात् । एवं आलोकाभावः तमः, रूपप्रतीत्यभावः तमः, वियद्व्याप्तं पार्थिवपरमाणुगतनैल्यमेव तम इति पक्षाः न संगच्छन्ते । विधिरूपेण नञुल्लेखरहिततया प्रतीयमानस्य तमसः अभावरूपत्वासंभवात् । नैल्याश्रयतया प्रतीयमानस्य तमसः नैल्यरूपत्वासंभवाच्च । न च विधिरूपेण प्रतीयमानत्वस्य भावत्वसाधकत्वे प्रलयविनाशादिपदोल्लिखितप्रतीतिविषयस्य प्रध्वंसस्याभावत्वानुपपत्तिरिति वाच्यम् । नैल्यचलनादिगुणक्रियाश्रयस्य इतरविविक्तस्य वस्तुनः स्फुटोपलम्भवत् भूतले घटप्रलय इत्यादौ विविक्ततया भावरूपवस्त्वन्तरानुपलम्भात् प्रलयस्याभावरूपत्वात् । अपि च घटस्य प्रलयः घटस्य विनाश इत्येवं सप्रतियोगिकतया उपलम्भात् प्रलयस्याभावरूपत्वम् । तमसस्तु निष्प्रतियोगिकतया उपलम्भात् नाभावरूपत्वम् । न चोद्भूतरूपवत्पार्थिवस्योद्भूतस्पर्शवत्त्वनियमात् तमसः पार्थिवत्वे तत्र स्पर्शोपलम्भप्रसङ्ग इति वाच्यम् । इन्द्रनीलमण्यालोकादीनां नीलरूपवत्तया पार्थिवत्वावश्यंभावात् तत्र व्यभिचारेण उक्तनियमासंभवात् ।

ननु 'तमो न द्रव्यम् , आलोकाभाववत्त्वे सति चाक्षुषप्रत्यक्षविषयत्वात् आलोकाभाववत्' इत्यनुमानेन तमसो द्रव्यत्वाभावसिद्धेः कथं तस्य द्रव्यत्वम् । घटादौ व्यभिचारवारणाय आलोकाभाववत्त्वे सतीति विशेषणमिति चेत् - किमिदमनुमानं प्राभाकरैः प्रयुज्यते, उत नैयायिकैः, आहोस्वित् रूपमात्रं तम इति वादिभिः । नाद्यः,

तन्मते अतिरिक्ताभावानङ्गीकारेण आलोकाभावरूपदृष्टान्तस्य तद्-घटितहेतोश्चासिद्धेः । न द्वितीयः, नैयायिकमते आलोकाभावस्यैव तमस्त्वात् पक्षदृष्टान्तभेदाभावात् । तथा च आलोकाभाव एव द्रव्य-भेदसाधनमिति पर्यवसानात् सिद्धसाधनं दोषः इति । न तृतीयः । दिवाभीतादिदृश्यमानैर्द्रव्यैर्व्यभिचारात् । मानुषचाक्षुषविषयत्वादित्यु-क्तावपि योगिदृश्यमानैर्द्रव्यैर्व्यभिचारात् ।

तथा च तमसो द्रव्यत्वे सिद्धे गन्धशून्यत्वात् पृथिवीत्वाभावे नीलरूपवत्त्वात् जलादित्वाभावे च सिद्धे अतिरिक्तद्रव्यत्वं सिध्यतीति ।

**नैयायिकमतम्**

प्रौढं प्रकाशकं च यत्तेजः तत्सामान्याभावस्तम इत्येतावतैवोपपत्तौ अतिरिक्तद्रव्यत्वकल्पने प्रमाणाभावः । तमो न द्रव्यं आलोकासहकृत-चक्षुर्ग्राह्यत्वात् आलोकाभाववत् इत्यनुमानं तमसो द्रव्यत्वाभावे प्रमाणम् । तेजस्सामान्याभावरूपं तमः पक्षः, तेजोविशेषाभावो दृष्टान्त इति पक्षदृष्टान्तभेदाभाव इति दूषणस्य नावकाशः । अथ वा तमश्शब्दवाच्यं पक्षः आलोकाभावो दृष्टान्त इति न दोषः । 'नीलं तमः' 'चलति तमः' इति प्रतीत्योर्भ्रमत्वात् न ताभ्यां रूपवत्त्वं क्रियावत्त्वं वा तमसः सिध्यतीति नैयायिकमतम् ।

अत्राहुः - रूपादिमत्ताप्रतीतेर्भ्रमत्वं न वक्तुं शक्यम् । 'नीलं तमः' 'चलति तमः' इति प्रतीत्यनन्तरं 'नेदं तमो नीलम्' 'नेदं तमश्चलति' इति बाधकप्रतीत्यनुदयेन तस्याः भ्रमत्वायोगात् । किं च तमसस्तेजोभावरूपत्वे किंचिन्निष्ठनीलरूपारोपेण नीलं तम इति प्रतीतिरुपपादनीया । तथा सति किंचिन्निष्ठपीतरूपारोपेण कदाचित् पीतं तम इति प्रतीतिरपि स्यात् । मणिमयमेरुशिखरादिरूपाद्यारोपेण नीलं नभः पीतं नभः इत्यादिप्रतीतिवत् । तस्मादन्यदीयनीलरूपादरा-रोपासम्भवेन रूपवत्ताप्रतीतेर्भ्रमत्वायोगेन प्रमात्वस्यैवावश्यकतया नीलरूपवत्त्वादिना तमसोऽतिरिक्तद्रव्यत्वं सिद्धमेव ।

ननु निरुक्तयुक्तिभिस्तमसोऽतिरिक्तरूपवद्द्रव्यत्वाङ्गीकारे आलोकसहकृतचक्षुर्ग्राह्यत्वं स्यात् । द्रव्यवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषत्वावच्छिन्नं प्रति आलोकसहकृतचक्षुः कारणत्वावश्यंभावात् तमोविषयकचाक्षुषस्य आलोकविरहेऽपि जायमानत्वान्न तमसोऽतिरिक्तद्रव्यत्वसिद्धिः । न च तमोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येवालोकस्य कारणत्वाङ्गीकारात् नानुपपत्तिरिति वाच्यम् । कार्यतावच्छेदके तमोभिन्नत्वनिवेशेन गौरवापत्तेरिति चेत् - न । भवन्मतेऽपि तेजोविषयक प्रत्यक्षे तेजोऽन्तरसंनिकर्षानपेक्षणेन आलोकसहकृतचक्षुः कारणत्वे अलोकात्मकद्रव्यचाक्षुषानुपपत्त्या तेजोभिन्नद्रव्यचाक्षुषत्वावच्छिन्नं प्रत्येव आलोकसहकृतचक्षुः कारणत्वं वाच्यम् । तथा च तेजोविषयकचाक्षुषं प्रति आलोकसहकृतचक्षुः कारणत्वाभावेन अन्धकारे सुवर्णात्मकतेजश्चाक्षुषापत्त्या तद्वारणाय सुवर्णभिन्नं यत्तेजः तद्भिन्नद्रव्यचाक्षुषं प्रति आलोकसहकृतचक्षुः कारणत्वं वाच्यमिति कार्यतावच्छेदकगौरवस्य दुष्परिहरत्वात् । अतः तमोभिन्नं सुवर्णभिन्नतेजोभिन्नं च यद्द्रव्यं तद्विषयकचाक्षुषं प्रत्येव आलोकसहकृतचक्षुः कारणत्वं वक्तव्यमिति तमसः तेजस इव आलोकसहकृतचक्षुर्ग्राह्यत्वाभावेऽपि क्षतिविरहात् तमसोऽतिरिक्तद्रव्यत्वसिद्धिर्निष्प्रत्यूहैवेति ।

## [३] सुवर्णविचारः

### तत्र प्राचीनमतम्

न्यायसूत्रतद्भाष्यवैशेषिकसूत्रेषु सुवर्णस्य तैजसत्वप्रस्तावो न दृश्यते । परं तु 'त्रपुसीसलोहरजतसुवर्णानामग्निसंयोगाद्द्रवत्वमद्भिः सामान्यम् ' (वै. सू. २–१–७) इति सूत्रं सुवर्णस्य नैमित्तिकद्रवत्वं बोधयति । तत्र सूत्रे 'तैजसानाम्' इति पदमधिकमासीदिति ज्ञायते। यतो वेदान्तदेशिकैः सर्वार्थसिद्धौ[1] -- 'त्रपुसीसलोहसुवर्णानां तैजसा-

---

1. सर्वार्थसिद्धिः पृ० ६२.

मामग्निसंयोगात् द्रवत्वमद्भिः सामान्यम्' इति वैशेषिकसूत्रमुद्धृतमस्ति। तेन च सुवर्णस्य तैजसत्वं कणादस्यापि संमतमिति ज्ञायते। प्रशस्तपादभाष्ये[1] तेजोनिरूपणप्रकरणे विषयरूपं तेजः भौमदिव्योदर्याकरजभेदात् चतुर्धा विभज्य 'आकरजं सुवर्णादि' इत्येतावन्मात्रमुक्तम्। तत्र कन्दलीकारः[2] -- 'आकरः स्थानविशेषः। तस्मिन् सुवर्णरजतादि तैजसं द्रव्यं जायते। सुवर्णादीनां तैजसत्वे तावदागमः प्रमाणम्। न्यायश्चाभिहितः। भोगिनामदृष्टवशेन भूयसां पार्थिवावयवानामुपष्टम्भात् अनुद्भूतरूपस्पर्शं पिण्डीभावयोग्यं सुवर्णादिकमारभ्यते। तत्र पार्थिवद्रव्यसमवेता रसादय उपलभ्यन्ते' इत्याह। अत्र आगमपदेन 'अग्नेरपत्यं प्रथमं हिरण्यम्' इति श्रुतिवाक्यं विवक्षितम्।

'क्षितितेजसोर्नैमित्तिकद्रवत्वयोगः'[3]

इति भाष्यव्याख्यावसरे कन्दल्यां सुवर्णस्य तैजसत्वसाधको न्यायोऽभिहितः। स च – सुवर्णे द्रवत्वं नास्ति। गुरुत्वमिव पृथिव्यामेव विद्यमानं द्रवत्वं दह्यमानेषु सुवर्णेषु संयुक्तसमवायात् प्रतीयत इति चेत् - न। पार्थिवद्रवत्वस्यात्यन्ताग्निसंयोगेन भस्मीभावदर्शनात् सुवर्णद्रवत्वस्य चात्यन्ताग्निसंयोगेऽपि भस्मीभावविरहात् सुवर्णं न पार्थिवम् इति।

किरणावल्यामपि[4] -- 'सुवर्णादिकं न पार्थिवम् अत्यन्तानलसंयोगेऽप्यपरावर्तमानरूपवत्त्वात् जलवत्' इत्यनुमानेन सुवर्णस्य पृथिवीभिन्नत्वं प्रसाध्य सांसिद्धिकद्रवत्वशैत्ययोरभावात् स्नेहाविनाभूतद्रव्यान्तरसंग्रहानुपलम्भाच्च जलभिन्नत्वं संसाध्य, रूपवत्त्वात् वायुप्रभृत्यन्यत्वं साधयित्वा परिशेषात् तैजसत्वं प्रसाधितम्।

---

1. प्रशस्तपादभाष्यम् पृ० ३९
2. न्यायकन्दली पृ० ४०.
3. प्रशस्तपादभाष्यम् पृ० २५.
4. किरणावली पृ० ७८.

मणिकारा अपि कन्दलीकिरणावल्यादृतं पन्थानमेवानुसृत्यानुमानेन सुवर्णस्य तैजसत्वं साधितवन्तः। तत्रानुक्तानि अन्यान्यपि कानिचिदनुमानानि मणौ प्रदर्शितानीति विशेषः।
तानि यथा —

(१) अत्यन्ताग्निसंयोगि पीतरूपवद्द्रव्यं विजातीयरूपप्रतिबन्धकद्रवद्रव्यसंयुक्तम्, नक्तंदिवमग्निसंयोगेऽपि पीतरूपातिरिक्तरूपानाश्रयत्वात्, तावत्पर्यन्तमग्निसंयुक्तजलमध्यस्थपीतपटवत्।

(२) अत्यन्ताग्निसंयोगेनानुच्छिद्यमानद्रवत्वाधिकरणं तैजसम् जलपृथिवीभ्यामन्यत्वे सति रूपवत्त्वात् वह्निवत्।

(३) पीतं द्रवत्वाधिकरणं द्रवत्वोच्छेदप्रतिबन्धकद्रवद्रव्यसंयुक्तम् अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधारपार्थिवत्वात् क्वथ्यमानजलमध्यस्थितघृतवत्।

(४) विवादाध्यासितं द्रवत्वाधिकरणं तैजसं असति द्रवद्रव्यसंयोगे अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधारत्वात् यन्नैवं तन्नैवं यथा जलं घृतं वा।

(५) तेजस्त्वं नाद्रवरूपवन्मात्रवृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् पृथिवीत्ववत्।

यद्वा

तेजस्त्वं द्रुतवृत्ति रूपवद्वृत्तिद्रव्यत्वसाक्षाद्व्याप्यजातित्वात् जलत्ववत्।

(६) सुवर्णारम्भकाः परमाणवः न पार्थिवाः अत्यन्ताग्निसंयोगेनानुच्छिद्यमानद्रवत्वाधिकरणत्वात् जलपरमाणुवत्। तैजसा वा तत एव, यन्नैवं तन्नैवं यथा घृतपरमाणुः।

(७) पार्थिवारब्धं तैजसारब्धं वा सुवर्णमपार्थिवं तैजसं वा अत्यन्ताग्निसंयोगेऽप्यनुच्छिद्यमानद्रवत्वाधिकरणपरमाण्वारब्धत्वात् इति वा ।

दीपिकायामप्यन्नम्भट्टः इमामेव रीतिमवलम्ब्य सुवर्णस्य तैजसत्वं साधयति ।

**एकदेशिमतेन सुवर्णस्य पार्थिवत्वम्**

मुक्तावलीव्याख्याने दिनकरीये[1] — 'नवीनास्तु' इत्यादिना सुवर्णस्य पार्थिवत्वसाधकं मतान्तरमुपन्यस्तम् । तेषामाशयस्तु 'पीतं सुवर्णं द्रुतम्' इति प्रतीत्या पीतरूपवति सुवर्णे अत एव पार्थिवे द्रवत्ववत्त्वमवगम्यते । तथा प्रतीयमानस्य पार्थिवद्रवत्वस्य अतितापेऽप्यनुच्छेदात् तत्र व्यभिचारो दुर्वारः । न च तादृशप्रतीतिर्भ्रमरूपेति वाच्यम् । बाधकाभावात् । न च तस्य पार्थिवत्वे अग्निसंयोगात्तदीयरूपनाशः कुतो न भवतीति वाच्यम् । अनुभवबलेन रूपनाशं प्रति तादात्म्येन सुवर्णस्य प्रतिबन्धकत्वाङ्गीकारादिति ।

अत्रेदं विचारणीयम् — प्रतिबन्धकाभावविशिष्टः अत्यन्ताग्निसंयोगः पार्थिवद्रवत्वनाशं प्रति हेतुरिति कार्यकारणभावः आवश्यकः । तत्र सुवर्णस्थपार्थिवभागगतद्रवत्वनाशरूपकार्यस्य अभावः प्रतिबन्धकाभावविशिष्टात्यन्ताग्निसंयोगरूपकारणाभावप्रयुक्तः इति निर्विवादम् । तत्र तादृशविशिष्टाभावरूपः कारणाभावः न विशेष्याभावात्, अत्यन्ताग्निसंयोगरूपस्य विशेष्यस्य तत्र सत्त्वात् । किं तु प्रतिबन्धकाभावरूपस्य विशेषणस्याभावादेव वक्तव्य इति प्रतिबन्धकं किंचित् द्रवद्रव्यान्तरं तत्रास्तीति वक्तव्यम् । तस्यापि पृथिवीत्वे तद्द्रवत्वनाशप्रतिबन्धकं द्रव्यान्तरं तस्यापि तथेत्यनवस्था स्यात् । अतः प्रतिबन्धकान्तरं विना अविनश्यद्द्रवत्वादेव तत्र पृथिवी इति ।

1. दिनकरीयम् पृ० १४८.

दीपिकाकाराः पार्थिवभागस्यापि द्रवत्वं तेजोभागस्यापि द्रवत्वमङ्गी-कुर्वन्ति । 'पीतद्रव्यद्रवत्वनाश' 'द्रवद्रव्यान्तर' इति पदयोः स्वारस्यात् । मुक्तावल्यां तु 'जलमध्यस्थमषीक्षोदवत्तस्याद्रुतत्वात्' इति ग्रन्थेन पार्थिवभागस्य द्रवत्वाभाव एव प्रतिपादितः । अत एव तदनुसारेण सुवर्णस्य तैजसत्वसाधकमनुमानान्तरं मुक्तावल्यामुपन्यस्तमिति बाल-प्रियाकाराः विस्तरेण निरूपयन्ति ।

### [४] वायुप्रत्यक्षविचारः

दीपिकाकाराः स्पर्शानुमेयो वायुरित्यादिना स्पर्शलिङ्गकानु-मानवेद्यत्वं वायोः प्रसाध्य रूपरहितत्वात् वायुः न प्रत्यक्षवेद्य इति न्यरूपयन् । एतत्तत्त्वमधुना परीक्ष्यते ।

बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षसामान्यं प्रति उद्भूतरूपं कारणम् । तथा च वायोरुद्भूतरूपविरहात् न प्रत्यक्षगोचरत्वम्, किं त्वनुमानै-कवेद्यता । तथा च वैशेषिकं सूत्रम्—'स्पर्शश्च वायोः' [वै.सू.२-१-९] इति । चशब्देन शब्दधृतिकम्पा गृह्यन्ते । अतः स्पर्शादिभिर्वायुरनु-मेयः, न तु प्रत्यक्ष इति सूत्रार्थः ।

तथा च प्रशस्तपादभाष्यम्[1] —

' विषयस्तूपलभ्यमानस्पर्शाधिष्ठानभूतः
स्पर्शशब्दधृतिकम्पलिङ्गः '

इति । तत्र कन्दलीकारः[2] — न तावद्वायोरस्तित्वे प्रत्यक्षं प्रमाणम्, स्पर्शादन्यस्य त्वचा अग्रहणात् । न च वायुर्वातीति ज्ञानात् वायुः प्रत्यक्ष इति वाच्यम् । तस्य ज्ञानस्य स्पर्शलिङ्गकानुमितिरूपत्वात् । यत्र यत्र स्पार्शनप्रत्यक्षविषयत्वं तत्र तत्र चाक्षुषप्रत्यक्षविषयत्वमिति व्याप्तेः घटादौ दर्शनात् रूपाभावेन वायौ चाक्षषत्वरूपस्य व्यापकस्य

1. प्रशस्तपादभाष्यम् पृ० ४४.
2. न्यायकन्दली पृ० ४६.

निवृत्तौ तद्व्याप्यं स्पार्शनत्वमपि निवर्तते। अतो वायुर्न प्रत्यक्षविषयः, अपि त्वनुमेय इति न्यरूपयत्।

**मणिकारमतम्**

द्रव्यविषयकस्पार्शनं प्रति नोद्भूतस्पर्शमात्रं प्रयोजकम्। तथा सति उद्भूतस्पर्शाश्रयस्य निदाघोष्मणः प्रत्यक्षतया तद्वृत्तिसंख्यादेरपि प्रत्यक्षता स्यात्। योग्यव्यक्तिवृत्तेः संख्यायाः योग्यत्वमिति नियमात्। न खलूष्मणि करेण परामृष्टेऽपि तद्गतां संख्यां कोऽप्यध्यक्षयति। नापि द्रव्यप्रत्यक्षं प्रति उद्भूतरूपमात्रं प्रयोजकम्, तथा सति उद्भूतरूपवतः चन्द्राद्युद्योतस्यापि प्रत्यक्षतया तद्गतसंख्याया अपि प्रत्यक्षता प्रसज्येत। न हि निपुणमवलोकयन्नपि चन्द्रप्रभादिगतं संख्यादिकं कश्चित् पश्यति। अतः प्रत्येकं व्यभिचारात् उद्भूतस्पर्शः उद्भूतरूपं चेत्युभयमपि द्रव्यप्रत्यक्षत्वे प्रयोजकमिति वक्तव्यम्। चन्द्राद्यालोकः उद्भूतरूपवानपि उद्भूतस्पर्शवान्न भवति। निदाघोष्मा उद्भूतस्पर्शवानपि नोद्भूतरूपवान्। अतस्तयोरप्रत्यक्षत्वात् तद्गतसंख्यायाः प्रत्यक्षता आपादयितुं न शक्यते। तथा च वायुरुद्भूतस्पर्शवानपि नोद्भूतरूपवानिति न प्रत्यक्षः।

अपि च द्रव्यप्रत्यक्षं प्रति नोद्भूतस्पर्शः कारणम्। तथा सति पक्षिकाण्डे चलति पूर्वदेशविभागोत्तरदेशसंयोगयोः प्रत्यक्षता न स्यात्। प्रभामण्डलात्मकयोः पूर्वोत्तरदेशयोः उद्भूतस्पर्शशून्यत्वात्। अत उद्भूतरूपमेव द्रव्यप्रत्यक्षतायां तन्त्रमिति संप्रदायविदः। तन्मतेऽपि उद्भूतरूपशून्यो वायुरप्रत्यक्ष एवेति मणिकाराः प्रत्यपीपदन्।

एवं च बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षं प्रति उद्भूतरूपस्य कारणत्वे निश्चिते 'वायुः बहिरिन्द्रियजन्यप्रत्यक्षविषयः प्रत्यक्षस्पर्शाश्रयत्वा' दित्यनुमाने पक्षधर्मद्रव्यत्वावच्छिन्नसाध्यव्यापकमुद्भूतरूपवत्त्वमुपाधिः। तथा च वायुः बहिरिन्द्रियजन्यप्रत्यक्षाविषयः रूपशून्यद्रव्य-

त्वात् आकाशवदित्यनुमानेन वायोरप्रत्यक्षत्वं सिध्यतीति मणिकार-निरूपणस्य सारांशः। दीपिकाकारोऽप्यमुमेव पन्थानमवललम्बे।

**मुक्तावल्यां वायोः प्रत्यक्षत्वोपपादनम्**

मुक्तावल्यां[1]नवीनास्तु इत्यादिना वायोः प्रत्यक्षत्वं व्यवास्थापि। तथा हि - बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षत्वावच्छिन्नं प्रति न रूपं कारणं, प्रमाणाभावात्। अपि तु चाक्षुषप्रत्यक्षे रूपं, स्पार्शनप्रत्यक्षे स्पर्शः कारणम्। तथा च स्पर्शाश्रयस्य वायोः त्वाचप्रत्यक्षविषयत्वे न किमपि बाधकम्। यथा हि उद्भूतस्पर्शशून्याया अपि प्रभायाः 'प्रभां पश्यामि' इत्यनुभवबलात् चाक्षुषप्रत्यक्षविषयत्वमुपेयते, तथा 'वायुं स्पृशामि' इत्यनुभवात् उद्भूतरूपशून्यस्यापि वायोः स्पार्शन-प्रत्यक्षविषयत्वे को विरोधः? तर्हि योग्यवायुवृत्तिः संख्यापि गृह्येतेति मण्युक्तदोषस्य कः परिहार इति चेत् - अयम्। सजातीयसंवलनरूपा-द्दोषात् क्वचित् वायोः संख्या न गृह्यते। दोषाभावे तु संख्याग्रहण-मिष्टमेवेति।

वस्तुतस्तु पक्षिकाण्डे गच्छति पूर्वोत्तरसंयोगविभागौ प्रत्यक्षौ। तत्राश्रयस्य प्रभात्मकदेशस्याप्रत्यक्षत्वे तदाश्रितसंयोगविभागयोरप्र-त्यक्षता स्यादिति युक्त्या प्रभायाः प्रत्यक्षत्वेऽपि वायोर्न तथात्वमिति मणिकारैरुक्तत्वात् प्रभादृष्टान्तेन वायोः प्रत्यक्षता साधयितुं न शक्यते। वायौ तु नैतादृशी युक्तिरस्ति। अतो वायुरप्रत्यक्ष एवेति दिनकर्यादौ[2] स्पष्टम्।

चिन्तामणिप्रकाशकारः रुचिदत्तमिश्रः वायोः प्रत्यक्षत्वमेव समर्थयते। उद्भूतरूपस्पर्शवति सौरतेजसि प्रत्यक्षेऽपि संख्यादिकं न प्रत्यक्षम्। तथा वायावप्यस्तु। यदि च सौरतेजसि संख्यादिकं प्रत्यक्षमेवेत्यङ्गीक्रियते, तथा वायावपि स्वीक्रियताम्। यद्वा संख्या-

---

1. मुक्तावली पृ० ४२३-४२४.
2. दिनकरी पृ० ४२५.

प्रत्यक्षं प्रति आश्रये उद्भूतस्पर्शवत्त्वे सति उद्भूतरूपवत्त्वमेव प्रयोजकम् । अतो वायौ संख्या न गृह्यते । तथापि वायोः स्पार्शनत्वे उद्भूतस्पर्शमात्रं प्रयोजकमिति वायोः स्पार्शनत्वं निराबाधमिति तेन न्यरूपि ।

## [५] प्रमालक्षणविचारः

दीपिकायां 'तद्वति तत्प्रकारकोऽनुभवो यथार्थः', 'तदभाववति तत्प्रकारकोऽनुभवोऽयथार्थः' इति मणिकारनिष्कृष्टं पन्थानमवलम्ब्य प्रमायाः अप्रमायाश्च लक्षणे अभिहिते । अत्र विषये प्राक्तनानामाशयं नूतनलक्षणाभिधाने कारणं च विमृशामः । 'तत्त्वज्ञानान्निःश्रेयसाधिगमः' (न्या.सू.१-१-१) इति प्रथमसूत्रे तत्त्वज्ञानस्यापवर्गोपायत्वमुक्त्वा तत्प्रकारप्रतिपादनपरे 'दुःखजन्म' इत्यादिद्वितीयसूत्रे तत्त्वज्ञानं मिथ्याज्ञानस्य निवर्तकमित्यवदत् । तेन तत्त्वज्ञानं प्रमेति सूत्रकारो मन्यते । प्रमाया एव भ्रमरूपमिथ्याज्ञाननिवर्तकत्वात् । तस्य भावः तत्त्वं - विशेष्यवृत्तिधर्मः तस्य ज्ञानं तत्त्वज्ञानम् । विशेष्यवृत्तिधर्मप्रकारकं ज्ञानं तत्त्वज्ञानमिति यावत् । अनेन विशेष्यवृत्तिधर्मप्रकारकज्ञानत्वं प्रमायाः लक्षणमिति पर्यवस्यति । अत्र पक्षे यथार्थस्मृतावतिव्याप्तिः प्रसजति, तस्या अपि विशेष्यवृत्तिधर्मप्रकारकज्ञानत्वात् ।

तृतीयसूत्रे भाष्ये[1] — 'उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्यात् बोद्धव्यमिति वदन् भाष्यकारः 'उपलब्धि प्रमा' इति सूचयति । 'बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम्' इति (न्या.सू.१-१-१५) सूत्रानुसारेण उपलब्धिपदस्य ज्ञानम् इत्यर्थः । निर्विषयकज्ञानस्यासंभवात् अर्थविषयकज्ञानत्वं प्रमात्वमिति लभ्यते । अत एव 'यत्तत् अर्थविज्ञानं सा प्रमितिः' इति प्रथमसूत्रे भाष्यम् । परं त्वत्र लक्षणे स्मृतौ भ्रमे चातिव्याप्तिः, तयोरपि अर्थविषयकत्वात् ज्ञानत्वाच्च ।

1. न्यायभाष्यम् पृ० १८२.

उक्तानुपपत्तिमालोच्यैव टीकाकाराः वाचस्पतिमिश्राः[1] --

'लोकाधीनावधारणो हि शब्दार्थसंबन्धः । लोकश्च
स्मृतेरन्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे '

इत्याहुः । अर्थाव्यभिचारि स्मृतिभिन्नं ज्ञानं प्रमेति तदर्थः । ज्ञानस्यार्थाव्यभिचरितत्वं यथावस्थितार्थविषयकत्वम् । अत्र पक्षेऽपि यथार्थस्मृतावतिव्याप्तिदोषो वर्तते ।

अत एव न्यायसारे[2] ज्ञानपदस्य स्थाने अनुभवपदं निवेश्य 'सम्यगनुभवः प्रमा' इति प्रमायाः लक्षणमुक्तम् । अनुभवे सम्यक्त्वं च तथाभूतार्थनिश्चयस्वभावत्वमिति न्यायभूषणे[3] ।

सूत्रस्थस्य तत्त्वज्ञानस्य प्रमात्वे स्मृतावतिव्याप्तिरिति पर्यालोच्यैव 'तत्त्वानुभूतिः प्रमा' इति लक्षणावल्यामुदमनाचार्यैः सप्तपदार्थ्यां शिवादित्यमिश्रैश्चाभ्यधायि । इदं लक्षणं बहुधा विकल्प्य खण्डनखण्डखाद्ये अदूष्यत ।

न्यायकुसुमाञ्जलौ उदयनाचार्याः—

'यथार्थानुभवो मानमनपेक्षतयेष्यते '[4]

इति कारिकाभागेन यथार्थानुभवत्वं प्रमायाः लक्षणमिति अवदन् । अनुभवपदसंयोजनेन स्मृतावतिव्याप्तिर्निराकृता भवति । अनुभवे यथार्थत्वं च यत्र यदस्ति तत्र तद्विषयकत्वमेव । तथा हि भ्रान्तिनिर्वचनावसरे कुसुमाञ्जलौ[5] –

'यत्रास्ति तत्र तस्यावगतिरिति भ्रान्त्यर्थत्वात्' इत्यभाणि । तद्व्याख्याने प्रकाशे वर्धमानोपाध्यायैः[6] —

---

1. तात्पर्यटीका पृ० ३५.
2. न्यायसारः पृ० ११.
3. न्यायभूषणम् पृ० १२.
4. न्यायकुसुमाञ्जलिः ४-१.
5. न्यायकुसुमञ्जलिः पृ० ३० (स्तबक.४)
6. न्यायकुसुमाञ्जलिः पृ० २९ (स्तबक.४ )

'एतेन यद् यत्रास्ति तत्र तज्ज्ञानं प्रमेत्यपि निरूक्तम्'
इत्यवादि । एवं च तद्वति तत्प्रकारकानुभवत्वं प्रमात्वमिति उदयनाचार्याणां निष्कृष्टं प्रमालक्षणम् । मणिकारैरप्येतल्लक्षणं सिद्धान्तत्वेन स्वीकृतमिति दीपिकाकारोऽपि तदेव लक्षणं प्रोवाच ।

**स्मृतिसाधारणं प्रमात्वम्**

विश्वनाथपञ्चाननेन कारिकावल्यां प्रमायाः लक्षणद्वयमुक्तम् –

'भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा' (कारिका. १३४)

'अथवा तत्प्रकारं यज्ज्ञानं तद्विशेष्यकम् । तत्प्रमा'

(कारिका १३५)

इति । तत्र प्रथमं लक्षणं भ्रमभिन्नत्वे सति ज्ञानत्वमिति । अत्र लक्षणे शुक्तिरजतयोः 'इमे रजते' इति ज्ञानं रजते रजतविषयकत्वांशे प्रमा इतीष्यते । तत्र भ्रमभिन्नत्वं नास्तीति अव्याप्ति पर्यालोच्य द्वितीयं लक्षणमनुसृतम् । तच्च तद्वद्विशेष्यकत्वे सति तत्प्रकारकं ज्ञानं प्रमेति ।

अत्र लक्षणद्वयेऽपि अनुभवपदमनिवेश्य ज्ञानपदस्यैव निवेशात् स्मृतावतिव्याप्तिः प्रमालक्षणस्येति शङ्कायाः इत्थं समाधानमुक्तं मुक्तावल्याम् - स्मृतेः प्रमात्वमिष्यत एव । अतस्तस्या अपि प्रमालक्षणलक्ष्यत्वान्नातिव्याप्तिः । यदि स्मृतेः प्रमात्वमभ्युपगम्यते तर्हि तत्कारणस्य पञ्चमप्रमाणत्वमापद्यत इति चेत् - मैवम् । प्रमाणलक्षणस्यानुभवघटितत्वात् । यथार्थानुभवकरणं प्रमाणमिति प्रमाणलक्षणम्। स्मृतिकरणस्यानुभवकरणत्वं नास्ति, स्मृतेरनुभवत्वाभावात् इति न प्रमाणत्वप्रसक्तिः इति ।

विश्वनाथस्येदमुपपादनं युक्तरूपं प्रतिभाति । न्यायसूत्रकारेण मिथ्याज्ञानविरोधिनि प्रमाज्ञाने 'तत्त्वज्ञानम्' इति स्मृतिसाधारणज्ञानपदस्यैव प्रयोगात् स्मृतेरपि प्रमात्वं तदभिमतम् । तेनैव 'प्रत्य-

क्षानुमानोपमानशब्दाः प्रमाणानि' (न्या.सू.१-१-३) इति सूत्रे स्मृति-करणस्य प्रमाणमध्येऽपरिगणनात् अनुभवघटितमेव प्रमाणलक्षणं कर्तव्यमिति सूचितमिति ।

प्रकाशिकाकारनिष्कर्षः

'तद्वति तत्प्रकारकानुभवो यथार्थः' इत्युक्तावपि रंगरजतयोः 'इमे रजतरङ्गे' इति भ्रमेऽतिव्याप्तिः । तस्यापि रजतत्ववद्रजत-विशेष्यकत्वे सति रजतत्वप्रकारकत्वात् रङ्गत्ववद्रङ्गविशेष्यकत्वे सति रङ्गत्वप्रकारकत्वाच्च । अतो विशेष्यताप्रकारतयोर्निरूप्यनि-रूपकभावं निवेश्य तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशाल्य-नुभवत्वं प्रमालक्षणं वाच्यमिति प्रकाशिकायां निष्कर्षः कृतः ।

अयमत्रानुगमः – प्रकारताविशिष्टविशेष्यतानिरूपकानुभवः प्रमा । वैशिष्टयं च स्वावच्छेदकसम्बन्धेन स्वाश्रयवन्निष्ठत्वस्वनिरूपि-तत्वोभयसम्बन्धेन । यद्वा प्रकारिताविशिष्टविशेष्यितावदनुभवः प्रमा । वैशिष्टयं च स्वावच्छिन्नत्वस्वनिरूपितप्रकारताविशिष्टविशेष्यतानिरू-पितत्वोभयसंबन्धेन । प्रकारतावैशिष्टयं च स्वावच्छेदकसम्बन्धेन स्वाश्रयवन्निष्ठत्वसम्बन्धेनेति । अधिकं प्रसारणाख्यव्याख्यायां द्रष्टव्यम् ।

परं त्वेवं निष्कृष्टलक्षणस्यापि निर्विकल्पकाव्याप्तिः । निष्प्र-कारके निर्विकल्पकपदाभिधेयज्ञाने तत्प्रकारकत्वघटितप्रमालक्षणविर-हात् । अतः तदभाववति तत्प्रकारकानुभवः अप्रमा, तद्भिन्नोऽनुभवः प्रमा इति लक्षणं वाच्यम् । मुक्तावलीकृतस्तु निर्विकल्पकं भ्रमप्रमा-बहिर्भूतमिति मन्यन्ते ।

## [६] कारणत्रैविध्यविचारः

तर्कसंग्रह-दीपिका-कारिकावली-मुक्तावलीप्रभृतिषु न्यायवैशेषि-कानुसारिषु प्रकरणग्रन्थेषु समवायिकारणम् असमवायिकारणं निमि-

त्तकारणं चेति कारणं त्रेधा विभज्य तस्य प्रत्येकं लक्षणमपि निष्कृष्य प्रतिपादितमस्ति । परं त्वाधुनिकविमर्शकाः केचन इत्थं कारणस्य त्रेधा विभागः न सूत्रादिषु प्राचीनेषु ग्रन्थेषूल्लिखितः केवलं नवीन-नैयायिकैः प्रतिपादित इति मन्यन्ते । एतत्तत्त्वमधुना पर्यालोच्यते ।

'क्रियागुणवत् समवायिकारणमिति द्रव्यलक्षणम्' (वै.सू. १-१-१५), 'कारणं त्वसमवायिनो गुणाः' (वै.सू.५-२-२४) 'कारणेन कालः' (वै.सू.५-२-२६) इत्यादिवैशेषिकसूत्राणामवलोकनेन कारण-त्रयमपि सूत्रकारसंमतमिति ज्ञायते । प्रशस्तपादभाष्येऽपि कारण-त्रयं स्वीकृतम् । 'युगपत् त्रयाणां समवाय्यसमवायिनिमित्तकारणानां विनाशात् परत्वस्य विनाशः' इत्यादयो भाष्यग्रन्थाः द्रष्टव्याः ।

यद्यपि न्यायसूत्रेषु कारणत्रयप्रस्तावो न दृश्यते, तथापि वा-त्स्यायनभाष्ये तत्सूचनं वर्तते । तथा हि न्यायदर्शने चतुर्थाध्याये प्रथमाह्निके अष्टादशं सूत्रम् — 'क्रमनिर्देशादप्रतिषेधः' इति । सूत्र-मिदं शून्यमेव जगदुपादानकारणमिति मतनिराकरणसंदर्भे विद्यते । तत्र च भाष्यम् —

> 'बीजावयवाः कुतश्चिन्निमित्तात् प्रादुर्भूतक्रियाः
> पूर्वव्यूहं जहति व्यूहान्तरं चापद्यन्ते ।
> व्यूहान्तरात् अङ्कुर उत्पद्यते । दृश्यन्ते
> खल्ववयवाः तत्संयोगाश्च अङ्कुरोत्पत्तिहेतवः'

इति । अत्र 'कुतश्चिन्निमित्तात्' इत्यनेन अदृष्टादिरूपं निमित्तकारणं सूचितम् । 'अवयवास्तत्संयोगाश्चाङ्कुरोत्पत्तिहेतवः' इत्यनेन अवयव-रूपं समवायिकारणम् अवयवसंयोगरूपमसमवायिकारणं च सूचितम् । न्यायवार्तिककारोऽपि त्रीणि कारणानि तत्र तत्र कण्ठरवेण नि-र्दिशति । 'तत्कारितत्वादहेतुः' (न्या.सू.४-१-२१) इति सूत्रस्थं 'तत्कारितत्वादित्येवं ब्रुवता निमित्तकारणमीश्वरः इत्युपगतं भवति ।

यच्च निमित्तं तत् इतरयोः समवायिकारणासमवायिकारणयोरनु-ग्राहकं यथा तुर्यादि तन्तूनां तत्संयोगानां च' इति वार्तिकम्, 'घ्राण-रसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ' (न्या.सू. १-१-१२) इति सूत्रस्थं 'न किंचिदप्येककारणकं कार्यं दृष्टम् । सर्वं हि कार्यं प्रादु-र्भवत् समवाय्यसमवायिनिमित्तकारणेभ्यो भवति ' इति वार्तिकं चा-त्रानुसन्धानमर्हतः । तथा च समवायिकारणासमवायिकारणनिमित्त-कारणरूपेण कारणं त्रिविधमिति विभागः प्राचीनग्रन्थारूढ इति सिद्धम् । नव्यग्रन्थेषु तेषां कारणानां लक्षणान्येव परिष्कृत्य प्रति-पादितानि ।

#### कारणत्रयस्वीकारे उपपत्तयः

अत्र काचिदाशङ्का — यथा वेदान्तिप्रभृतयः उपादानकारणं निमित्तकारणं चेति कारणं द्विविधमङ्गीकुर्वन्ति, तथा कुतो नैया-यिका नाङ्गीकुर्वन्तीति । तत्रोच्यते । नैयायिका अवयवातिरिक्तम-वयविनं स्वीकुर्वन्ति । वेदान्तिनस्तु तन्तूनां संयोगविशेष एव पटो न तदतिरिक्त इति प्राहुः । वेदान्तिनां मते तन्तुसंयोगः कार्यकोटौ नि-विशते । नैयायिकानां मते तु पटनामकोऽवयवी कार्यभूतः । स च तन्तुसंयोगविशेषादुत्पद्यते । अतस्तन्तुसंयोगोऽपि कारणमिति स्वीक-र्तव्यम् । तस्य समवायिकारणत्वासंभवेन असमवायिकारणत्वं प्रति-पादितमिति ।

तर्हि समवायिकारणं निमित्तकारणं चेति द्वेधा विभागोऽस्तु, तन्तुसंयोगस्यापि निमित्तकारणत्वमेवास्तु इति चेत् — अत्रोच्यते । निमित्तकारणभूततन्तुवायनाशेऽपि पटरूपं कार्यं तिष्ठति । तन्तुसंयो-गनाशे तु न पटस्तिष्ठति, अपि तु नश्यति । अतो निमित्तकारणस्य वैधर्म्यात् समवायिकारणवैधर्म्याच्च तन्तुसंयोगः असमवायिकारण-त्वेन स्वीकृत इति ।

किं चासमवायिकारणानभ्युपगमे द्रव्यनाशं प्रति किं कारण-मिति वक्तव्यम् । न तावन्निमित्तकारणनाशः, कुलालादिसद्भावेऽपि घटनाशदर्शनात् कुलालादिनाशेऽपि घटसद्भावदर्शनाच्च । नापि समवायिकारणनाशः कारणम् । द्व्यणुकनाशानुपपत्तेः । द्व्यणुकस्य हि परमाणुः समवायिकारणम् । न हि तस्य नाशः संभवति, नित्य-त्वात् । अतो द्व्यणुकस्य समवायिकारणनाशान्नाशो न संभवतीति असमवायिकारणभूतस्य परमाणुद्वयसंयोगस्य नाशादेव नाशो वक्तव्यः। तथा च द्व्यणुकनाशस्य असमवायिकारणनाशो हेतुः, इतरकार्यद्रव्य-नाशस्य समवायिकारणनाशो हेतुरिति कल्पनामपेक्ष्यानुगततया कार्यद्रव्यसामान्यनाशं प्रति असमवायिकारणनाशः कारणमिति कल्पनमेव ज्यायः। तथा चैतदर्थमपि असमवायिकारणस्वीकार आवश्यकः ।

तर्हि समवायिकारणं असमवायिकारणं चेति द्वेधा विभागोऽ-स्तु, निमित्तकारणं मास्तु इति चेत् - न । यदि समवायिकारणभिन्नं सर्वं कारणमसमवायिकारणमिति वर्गेऽन्तर्भाव्यते, तर्हि असमवायि-कारणनाशस्य पूर्वोक्तरीत्या द्रव्यनाशहेतुत्वात् कुलालादिनाशेऽपि घटनाशापत्तिः स्यात् । अतो निमित्तकारणमतिरिक्ततया स्वीकरणी-यमिति । तथा च युक्तियुक्तत्वात् कारणत्रयमपि स्वीकरणीयमिति त्रेधा कारणविभागः प्राचीनग्रन्थारूढश्चेति सिद्धम् ।

## (७) **निर्विकल्पकसविकल्पकविचारः**

प्रत्यक्षं द्विविधं निर्विकल्पकं सविकल्पकम् च ।

निष्प्रकारकं ज्ञानं निर्विकल्पकम्, सप्रकारकं ज्ञानं सविकल्पकम् इति तर्कसंग्रहे उक्तम् । विशेषणविशेष्यसंबन्धानवगाहि ज्ञानं निर्विकल्पकम्, नामजात्यादिविशेषणविशेष्यसंबन्धावगाहि ज्ञानं सविकल्पकम् इति दीपिकायाम् । विशेष्यताशून्यत्वं प्रकारताशून्यत्वं संसर्गताशून्यत्वं च

निर्विकल्पकत्वम्, विशेष्यतानिरूपकत्वं प्रकारतानिरूपकत्वं संसर्गतानिरूपकत्वम् च सविकल्पकत्वमिति प्रकाशिकायाम्। एतत्तत्त्वमिदानीं प्राक्तनग्रन्थालोडनपूर्वकं विचार्यते ।

न्यायसूत्रे न क्वापि निर्विकल्पकसविकल्पकशब्दाभ्यां प्रत्यक्षविभागः कृतः । 'इन्द्रियार्थसंनिकर्षोत्पन्नम्' इति प्रत्यक्षलक्षणप्रतिपादकसूत्रस्थाभ्यां 'अव्यपदेश्यम्' 'व्यवसायात्मकम्' इति पदाभ्यां निर्विकल्पकसविकल्पके विवक्षिते इति तात्पर्यटीकाकाराः निरूपयन्ति । परं तु भाष्ये वार्तिके वा नैवंविधं निरूपणमुपलभामहे ।

न्यायमञ्जर्यां न्यायसारे च निर्विकल्पकं सविकल्पकं चेति प्रत्यक्षद्वयं यद्यपि सयुक्तिकं प्रसाधितम्, तथापि सूत्रात् तादृशविभागस्य लाभप्रकारस्तत्र न प्रदर्शितः । न्यायभूषणे तु अव्यपदेश्यपदेन निर्विकल्पकस्य व्यवसायात्मकपदेन सविकल्पकस्य ग्रहणमिति सयुक्तिकं प्रत्यपादि ।

प्रशस्तपादभाष्ये[1] —

'द्रव्ये तावद्द्विविधे महत्यनेकद्रव्यवत्त्वोद्भूतरूपप्रकाश–
चतुष्टयसंनिकर्षात् धर्मादिसामग्र्ये च स्वरूपालोचनमात्रम्'

इति ग्रन्थेन निर्विकल्पकप्रत्यक्षं प्रदर्शितम् । स्वरूपालोचनमात्रमित्यस्य स्वरूपमात्रस्य ग्रहणमित्यर्थः । मात्रपदेन जात्यादिसंबन्धविषयकत्वव्यवच्छेदः । ततः —

'सामान्यविशेषद्रव्यगुणकर्मविशेषणापेक्षात् आत्ममनः-
संनिकर्षात् प्रत्यक्षमुत्पद्यते सत् द्रव्यं पृथिवी विषाणी
शुक्लो गौर्गच्छति'

1. प्रशस्तपादभाष्यम् पृ० १८६.
2. ibid.

इति ग्रन्थेन सविकल्पकप्रत्यक्षं सोदाहरणमुपदर्शितम् । परं तु निर्वि-कल्पकसविकल्पकशब्दौ न प्रयुक्तौ । कुमारिलभट्टा अपि[1]—

'अस्ति ह्यालोचनाज्ञानं प्रथमं निर्विकल्पकम् ।
बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम् ॥'

इति श्लोकेन निर्विकल्पकं,

'ततः परं च तद्वस्तु धर्मैर्जात्यादिभिर्यथा ।
बुद्ध्यावसीयते सापि प्रत्यक्षत्वेन संमता ॥'

इति श्लोकेन सविकल्पकं च लक्षयांबभूवुः । प्रकरणपञ्चिकायां च —

'सविकल्पाविकल्पा च द्विविधा बुद्धिरिष्यते ।
आद्या विशिष्टविषया स्वरूपविषयेतरा ॥'

इति प्रत्यक्षस्य निर्विकल्पकसविकल्पकभेदेन द्वैविध्यं प्रादर्शयन् ।

तत्त्वचिन्तामणौ[2]—'नामजात्यादियोजनारहितं वैशिष्ट्यानवगाहि निष्प्रकारकं निर्विकल्पकम्' इति निर्विकल्पकलक्षणं प्रादर्शि । वैशिष्टाद्यानवगाहीत्यस्यैव विवरणं निष्प्रकारकमिति । निर्विकल्पके प्रकारताख्यविषयताशून्यत्वमिव विशेष्यताख्यविषयताशून्यत्वमपि वर्तते । तथा च निर्विशेष्यकं ज्ञानं निर्विकल्पकमित्यपि शक्यते वक्तुम् । तथा अनुक्त्वा निष्प्रकारकमिति वदतां मणिकाराणामयमाशयः— यथा सविकल्पकस्य विशिष्टज्ञानत्वात् ततः पूर्वं विशेषणज्ञानं कल्प्यते, तथा निर्विकल्पकहेतुतया ज्ञानान्तरं नापेक्षितमिति ।

एतादृशनिर्विकल्पकसद्भावे प्रमाणं तु - एतज्जन्मनि प्राथमिकं गौरिति प्रत्यक्षं जन्यविशेषणज्ञानजन्यं जन्यविशिष्टज्ञानत्वात् अनुमितिवत् इत्यनुमानम् । यथा 'पर्वतो वह्निमान्' इत्यनुमितिः वह्नि-

1. श्लोकवार्तिकम् पृ० १४७-१५०.
2. तत्त्वचिन्तामणिः पृ० ८५७.

विशिष्टपर्वतविषयिणी वह्निरूपविशेषणज्ञानात्मकसाध्यप्रसिद्धिजन्या तथा प्राथमिकं गौरिति विशिष्टप्रत्यक्षमपि गोत्वात्मकविशेषण-ज्ञानादेवोदेतीति वक्तव्यम् । तदेव वैशिष्ट्याविषयकं निर्विकल्पकम् ।

न च तत्र प्राथमिकविशिष्टप्रत्यक्षं प्रति गोत्वरूपविशेषणस्मरणमेव हेतुः, तथा च न निर्विकल्पकप्रत्यक्षं सिध्यतीति वाच्यम् । एतज्जन्मनि पूर्वं गोत्वस्याननुभवेन तत्स्मरणासंभवात् ।

न च गोत्वरूपविशेषणानुभवः सविकल्पक एव सन् 'अयं गौः' इति विशिष्टप्रत्यक्षं जनयतु । तथा च गतं निर्विकल्पकेनेति वाच्यम्। तथात्वे तस्यापि विशिष्टज्ञानत्वेन विशेषणज्ञानजन्यत्वं तस्यापि तथेत्यनवस्थाप्रसङ्गात् । तथा च गोत्वविषयकं निर्विकल्पकमर्थात्सिध्यति ।

अत्रेदमाशङ्क्यते - यदुक्तं विशिष्टबुद्धेर्विशेषणज्ञानपूर्वकत्वान्निर्विकल्पकं सिध्यतीति । तन्न । गौरिति विशिष्टज्ञानं विशेषणज्ञान-जन्यं विशिष्टज्ञानत्वात् इत्यनुमाने भिन्नसामग्रीवेद्यविषयकत्वस्योपाधित्वात् । यत्र विशेषणं विशेष्यं च भिन्नसामग्रीवेद्यं तत्रैव विशिष्ट-ज्ञानं विशेषणज्ञानपूर्वकं दृष्टम्, यथा सुरभि चन्दनमिति विशिष्ट-प्रत्यक्षम् । तत्र हि विशेषणं सौरभं घ्राणेन्द्रियवेद्यं विशेष्यं चन्दनं चक्षुर्वेद्यमिति भिन्नसामाग्रीवेद्यविषयकत्वात् विशिष्टप्रत्यक्षस्य आदौ सौरभरूपविशेषणज्ञानं, तेन सुरभि चन्दनमिति विशिष्टप्रत्यक्षं भवति । एकेन्द्रियवेद्ययोर्गोगोत्वयोरेककाल विशिष्टज्ञानसंभवात् गोत्व-ज्ञानं ततो गोत्वविशिष्टगोज्ञानमिति कल्पनं न युज्यते ।

ननु विशेषणविशेष्ययोः गोत्वगोव्यक्त्योः एकेन्द्रिययोग्यत्वेन एकज्ञानविषयत्वेऽपि तयोः संबन्धस्यातथात्वात् प्रथमज्ञाने तयोः संबन्धो न भासते । तदेव निर्विकल्पकम् । विशेषणविशेष्यसंबन्धानवगाहिज्ञानस्यैवास्माभिर्निविकल्पकशब्दवाच्यत्वाङ्गीकारादिति चेत्-न । संबन्धपदेन किं स्वरूपं विवक्षितम्? उत समवायः? आद्ये वि-

शेषणविशेष्यस्वरूपग्रहणे संबन्धोऽपि गृहीत एवेति क्व निर्विकल्पकम् । द्वितीये चक्षुषा संयुक्तविशेषणताख्यसंनिकर्षेण समवायो गृह्यत इति भवत्सिद्धान्तात् गोगोत्वसमवायानामेकेन्द्रिययोग्यत्वात् एककाल एव त्रयाणां ग्रहणं भवितुमर्हति । अन्यथा योग्यस्यापि समवायस्य प्रथममग्रहणे पश्चादपि ग्रहणं न स्यात् । तथा च संसर्गानवगाहि निर्विकल्पकज्ञानं न युक्तिसहमिति ।

अत्रेत्थं समाधीयते — निर्विकल्पकज्ञाने जात्यादिरूपं विशेषणं व्यक्तिरूपं विशेष्यं च भासते । संबन्धस्तु न भासते । संबन्धज्ञानं प्रति संबन्धिज्ञानस्य कारणतया पूर्वं तदभावात् । तथा च पूर्वं विशेषणविशेष्यरूपसंबन्धिनोर्ज्ञानं निर्विकल्पात्मकं जायते, ततस्तयोः संबन्धावगाहि सविकल्पकं ज्ञानं जायते । तदुक्तमुदयनाचार्यैः — 'सहकारिवैकल्यात्तु निर्विकल्पके समवायाग्रहणम्' इति । सहकारिवैकल्यादित्यस्य संबन्धिज्ञानविरहादित्यर्थः । तथा च संबन्धोऽपि कुतो निर्विकल्पके न भासत इति चोद्यस्य नावसरः ।

यदपि भिन्नसामग्रीवेद्यविषयकत्वमुपाधिरिति - तत्रदं वक्तव्यम् । अनुमितिशाब्दादौ साध्यप्रसिद्ध्यादेः कारणतया यद्विशेषयोरिति न्यायेन विशिष्टज्ञानत्वावच्छिन्नं प्रति विशेषणज्ञानत्वावच्छिन्नं कारणमिति सामान्यकार्यकारणभावस्य सिद्धौ एकसामग्रीवेद्येष्वपि विशेषणज्ञानकल्पनेन तज्जन्यैव विशिष्टबुद्धिः । तथा च भिन्नसामग्रीवेद्यविषयकत्वस्य साध्यव्यापकत्वभङ्गात् उपाधित्वं न संभवतीति । सर्वमिदं मनसिकृत्यैव दीपिकायामुक्तम् —

> ' ननु निर्विकल्पके किं प्रमाणमिति चेत्-न । गौः इति विशिष्टज्ञानं विशेषणज्ञानजन्यं विशिष्टज्ञानत्वात् दण्डीति ज्ञानवत् इत्यनुमानस्य प्रमाणत्वात् । विशेषणज्ञानस्यापि सविकल्पकत्वे अनवस्थाप्रसङ्गात् निर्विकल्पकसिद्धिः'

इति ।

## [८] संनिकर्षविचारः

तर्कसंग्रहे दीपिकायां च प्रत्यक्षहेतुः संनिकर्षः संयोगादिभेदेन षड्विध इति सोदाहरणं प्रदर्शितम् । प्रकाशिकायां प्रत्यक्षं द्विविधं लौकिकम् अलौकिकं चेति । लौकिकप्रत्यक्षहेतुः संनिकर्षः संयोगादि-भेदेन षड्विधः । अलौकिकप्रत्यक्षहेतुः संनिकर्षः सामान्यलक्षणः ज्ञान-लक्षणः योगजधर्म इति त्रिविध इति प्रत्यपादि ।

षोढा संनिकर्षस्तु न्यायवार्तिके प्रस्तुतः, सूत्रे भाष्ये वा न दृश्यते क्वापि । एतं विषयमधिकृत्य न्यायभूषणकाराः[1] इत्थं किंचि-द्विचारयन्ति — आचार्याध्ययनपादनामा न्यायसूत्रभाष्यकारः निकर्ष-शब्देनैव संबन्ध इत्यर्थे लब्धे 'सम्' इत्युपसर्गबलात् संभवी संबन्धः संनिकर्षशब्देनोच्यते । संभवी च संबन्धः षड्विध एवेति प्रत्यपादयत् । तन्न । तथा सति 'नि' इत्युपसर्गस्य व्यर्थत्वात् । कर्षशब्देनैव धातू-नामनेकार्थत्वात् संबन्ध इत्यर्थे लब्धे 'सं'शब्दमहिम्ना षड्विधत्वलाभे निशब्दो व्यर्थ इति । कर्षशब्दस्य संबन्धार्थकत्वेन लोकप्रसिद्धिर्ना-स्तीति चेत् निकषशब्दस्य संबन्धवाचकत्वेन कुत्र प्रसिद्धिरिति भवता वक्तव्यम् । निकृष्टत्ववाचकतया हि निकर्षशब्दो लोके प्रसिद्धो न सम्बन्धवाचकतया । तस्मात् 'सम्' 'नि' इत्युपसर्गद्वययुक्त एव कृष-धातुः संबन्धमभिधत्ते यथा 'सम्' 'अव' इत्युपसर्गद्वयपूर्वकः इण्धातुः समवायम् । तस्मात् कृषधातोः सम्बन्धार्थकत्वद्योतकतया सार्थकः 'सम्' शब्दः षड्विधत्वप्रतिपादनाय नालमिति 'सम्'शब्दमहिम्ना षड्विधत्वलाभ इति व्याख्यानं न समीचीनम् । तस्माद्यथा आलोका-दयः सूत्रानुक्ता अपि अन्वयव्यतिरेकबलात् प्रत्यक्षहेतुतया अनुमन्यन्ते तथा षड्विधानां संनिकर्षाणामपि प्रत्यक्षं प्रत्यन्वयव्यतिरेकबलाद्धेतुत्वं सिध्यति । न्यायसिद्धोऽयमर्थो यतः सूत्रकारैर्न निराकृतः अतस्तत्संमत

---

1. न्यायभूषणम् पृ० १६७-१६८.

इत्युन्नीयते । 'परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः' इति न्यायात् इति ।

वैशेषिकदर्शने तु संनिकर्षप्रभेदविषये न्यायसूत्रापेक्षया किंचित् स्पष्टतया सूचनमस्ति । तथा हि –

'आत्ममनसोः संयोगादात्मप्रत्यक्षम्' (वै.सू.९-१-११) इति सूत्रेण आत्मविषयकप्रत्यक्षं प्रति मनस्संयोगः कारणमित्युक्तम् । तेन द्रव्यविषयकप्रत्यक्षं प्रति इन्द्रियसंयोगः कारणमिति सूचितम् । ततः-- 'आत्मसमवायादात्मगुणेषु' (वै.सू.९-१-१५) इति सूत्रेण आत्मसमवेतज्ञानादिगुणविषयकप्रत्यक्षे मनस्संयुक्तसमवायः कारणमिति स्पष्टीकृतम् । तथा --

'अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धिः' (वै.सू.४.१.८) 'संख्याः परिमाणं कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि' (वै.सू. ४-१-११) इति सूत्राभ्यां द्रव्यगतगुणक्रियाविषयकप्रत्यक्षे चक्षुस्संयुक्तसमवायः कारणमिति स्पष्टमुक्तम् ।

'एतेन गुणत्वे भावे च सर्वेन्द्रियं ज्ञानं व्याख्यातम्' (वै.सू. ४.१.१३) इति सूत्रेण यथा गुणप्रत्यक्षे द्रव्यसमवायो हेतुस्तथा गुणगतजातिप्रत्यक्षेऽपि संयुक्तसमवेतसमवायो हेतुरिति व्यञ्जितम् । तथा

'श्रोत्रग्रहणो योऽर्थः स शब्दः' (वै.सू.२-२-२१) इति सूत्रेण शब्दस्य श्रोत्रजन्यप्रत्यक्षविषयत्वं लक्षणमुक्त्वा,

'एकद्रव्यत्वान्न द्रव्यम्' (वै.सू.२-२-२३) इति सूत्रेण शब्दस्याद्रव्यत्वे आकाशात्मकैकद्रव्यसमवायस्यं हेतूकरणात्,

'भूयस्त्वात् गन्धवत्त्वाच्च पृथिवी गन्धज्ञाने प्रकृतिः'

(वै.सू.८-२-५)

'तथापस्तेजो वायुश्च रसरूपस्पर्शाविशेषात्' (वै. सू. ८-२-६) इत्याष्टमिकसूत्राभ्यां घ्राणरसनचक्षुस्त्वचां चतुर्णामिन्द्रियाणां भूतप्रकृतिकत्वमुपन्यस्यता श्रोत्रस्य प्रकृतिविशेषानिर्देशेन नित्यत्वसूचनद्वारा आकाशस्य श्रोत्रत्वसूचनाच्च श्रोत्रसमवायः शब्दप्रत्यक्षे हेतुरिति ध्वनितम् ।

'एतेन गुणत्वे भावे च' (वै.सू.४-१-१३)

इति सूत्रोक्तन्यायेन शब्दत्वप्रत्यक्षे समवेतसमवायाख्यः संनिकर्षोऽपि सूचित एव । तथा —

'असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेर्विरोधिप्रत्यक्षवत्'

(वै.सू.९-१-६)

इति सूत्रं दृश्यते । तस्यायमर्थः — असन् घट इत्याद्याकारकमभावप्रत्यक्षं विरोधिप्रत्यक्षवत् प्रतियोगिघटप्रत्यक्षतुल्यम् । प्रतियोगिनो घटस्य प्रत्यक्षं यथानुभवसिद्धं लौकिकसंनिकर्षजन्यं च तथा अभावप्रत्यक्षमपि नापलापार्हं संनिकर्षजन्यं चेत्यर्थः । अभावप्रत्यक्षे तु प्रतियोगिनो योग्यानुपलब्धिः स्मरणं चेति सहकारिकारणद्वयमपेक्षितमिति विशेषः । तदाह — **भूतप्रत्यक्षाभावात् भूतस्मृतेरिति** । भूतस्य उत्पद्य विनष्टस्य घटादेः प्रतियोगिनः उपलब्ध्यभावात् स्मरणाच्चेत्यर्थः । एवं चाभावप्रत्यक्षस्य संनिकर्षजन्यत्वं सूचयन् सूत्रकारः संयोगसमवायाद्यसंभवात् विशेष्यविशेषणभावात्मकं संनिकर्षमपि समसूचयत्। तथा च षड्विध इति शब्देन अविभक्तोऽपि षट्संख्याकः संनिकर्षः वैशेषिकतन्त्रसूचित इति निश्चिनुमहे । प्रशस्तपादभाष्ये प्रत्यक्षनिरूपणावसरे विशेषणविशेष्यभावं विना अन्ये पञ्च संनिकर्षाः निर्दिष्टाः । अभावपदार्थमधिकृत्य प्रशस्तपादभाष्ये यतो निरूपणं नास्ति अतो विशेषणताख्यसंनिकर्षस्य तत्र प्रस्तावो न विद्यते । कन्दलीकारास्तु षड्विधमपि संनिकर्षं सोदाहरणं प्रदर्शयामास ।

प्रत्यक्षसूत्रे न्यायवार्तिककाराः[1] 'संनिकर्षः पुनः षोढा भिद्यते, इत्यादिना ग्रन्थेन पूर्वोक्तान् षड्विधान् संनिकर्षान् सोदाहरणं प्रादर्शयन् । सूत्रादयं विभागः कथं लभ्य इति शङ्कायाम्—

'सोऽयं संनिकर्षशब्दः संयोगसमवाय·
विशेषणविशेष्यभावव्यापकत्वादुपात्तः'

इति ग्रन्थेन[2] संयोगसमवायादिसाधारणं संनिकर्षशब्दं प्रयुक्तवता सूत्रकारेण संभाविताः संनिकर्षा ग्रहीतव्या इति सूचितमिति समाहितम् ।

**विशेषणविशेष्यभावः**

न्यायवार्तिके विशेषणविशेष्यभावः षष्ठः संनिकर्षः प्रोक्तः । स च समवायविषयकप्रत्यक्षं प्रति अभावविषयकप्रत्यक्षं प्रति च हेतुरिति प्रसाधितम् । तत्र टीकायाम्[3]—

' विशेषणभावेन संयुक्तविशेषणं समवेतविशेषणं च संगृहीतम्' इति व्याख्यानं दृश्यते । तस्यायमाशयः । भूतलादिविशेष्यकाभावप्रत्यक्षं प्रति संयुक्तविशेषणत्वं संनिकर्षः । अकारेऽनुदात्तस्वरो नास्तीत्यादिशब्दविशेष्यकाभावप्रत्यक्षं प्रति समवेतविशेषणत्वं संनिकर्ष इति । न्यायसारे[4] तु—

'एतपञ्चविधसम्बन्धसंबद्धविशेषणविशेष्यभावात्
दृश्याभावसमवाययोर्ग्रहणम्'

इत्यभिहितम् । विशेषणत्वं पञ्चविधं संयुक्तविशेषणत्वम्, संयुक्तसमवेतविशेषणत्वम्, संयुक्तसमवेतसमवेतविशेषणत्वम्, समवे-

---

1. न्यायवार्तिकम् पृ० १९९.
2. ibid. पृ० २००.
3. तात्पर्यटीका पृ० २१०.
4. न्यायसारः पृ० १६७.

तद्विशेषणत्वम्, समवेतसमवेतविशेषणत्वम् चेति तदाशयः। दीपिकायां प्रकाशिकायां च विशेषणत्वविशेष्यत्वयोरुभयोरपि संनिकर्षत्वम् सयुक्तिकं प्रत्यपादि। तद्विस्तरो बालप्रियायां द्रष्टव्यः।

त्रिविधः अलौकिकसंनिकर्षस्तु प्राचीनग्रन्थेषु न दृश्यते। मणिकारैस्तत्र तत्र व्यवहृतः मुक्तावलीकारादिभिः प्रपञ्चितः। अनुमानखण्डे मणौ सामान्यलक्षणा प्रत्यासत्तिः परं विस्तरेण स्थापितेत्यास्तामियता।

## (९) अनुपलब्धिविचारः

अनुपलब्धिसहकृतेन्द्रियेणैवाभावज्ञानोपपत्तौ अनुपलब्धिः न प्रमाणान्तरम्। अधिकरणज्ञानार्थमपेक्षितस्येन्द्रियस्यैव करणत्वोपपत्तौ अनुपलब्धेः करणत्वायोगादिति दीपिकाकाराः। एतत्तत्त्वमिदानीं विचार्य निर्धार्यते।

न्यायदर्शने—'न चतुष्ट्वमैतिह्यार्थापत्तिसंभवाभावप्रामाण्यात्' (न्या. सू. २-२-१) इति सूत्रेण चत्वार्येव प्रमाणानीत्येतन्न संगच्छते। ऐतिह्यम् अर्थापत्तिः संभवः अभावश्चेति चतुर्णां प्रमाणानां संभवात् इत्याशङ्क्य, 'शब्दे ऐतिह्यानर्थान्तरभावात् अनुमानेऽर्थापत्तिसंभवाभावानामनर्थान्तरभावाच्चाप्रतिषेधः' (न्या. सू. २-२-२) इति सूत्रेण ऐतिह्यस्य शब्दे अर्थापत्तिसंभवाभावानां त्रयाणामनुमानेऽन्तर्भावात् चत्वार्येव प्रमाणानीति सिद्धान्तितम्। तत्राभावपदेन किं विवक्षितम्? तस्य कथमनुमानेऽन्तर्भावः? इति विषये न्यायसूत्रतः किमपि नावगम्यते। न्यायभाष्यकारः तत्सूत्रव्याख्यानावसरे—

> 'अभावो विरोधी अभूतं भूतस्य। अविद्यमानं
> वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम्।
> विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म
> न भवति'

इति अभाषत । तस्यायमाशयः - अभावोऽपि कस्यचिदर्थस्य प्रमिति-हेतुर्भवति, यथा तोयपातरूपवृष्ट्यभावः वायुमेघसंयोगस्य । अतः अभावेनाप्यर्थान्तरप्रमित्युत्पत्त्या अभावोऽपि प्रमाणमिति पूर्वपक्षः । सिद्धान्तस्तु - सत्यमभावः प्रमाणम्, न त्वतिरिक्तं प्रमाणम् । अभा-वस्य लिङ्गविधया अर्थान्तरप्रमितिजनकत्वेनानुमानेऽन्तर्भावात् इति । वार्तिकतात्पर्यटीकयोरप्येवमेवोपपादितम् । परं त्वेतेषु मूलग्रन्थेषु मीमांसकैः अभावशब्देन व्यवह्रियमाणं यत् अनुपलब्ध्याख्यं प्रमाणं तस्य प्रस्ताव एव नास्ति । यद्यप्यनुपलब्धेरप्युपलब्ध्यभावरूपतया तस्यापि घटाभावादिप्रत्यायकस्य प्रमाणत्वशङ्का तस्यानुमानेऽन्तर्भा-वश्च पूर्वोत्तरपक्षसूत्राभ्यां सूच्यत इत्यस्ति संभावयितुमवकाशः तथापि भाष्यवार्तिकादितोऽस्याशयस्य सूचकं किमपि नोपलभ्यते ।

कणादमुनिः अभावप्रमाणमधिकृत्य विशिष्य न किंचिदभ्य-धात् । तथापि 'असदिति भूतप्रत्यक्षाभावात् भूतस्मृतेः' [वै.सू.९-१-६] इति सूत्रेण अभावप्रत्यक्षं प्रतियोग्युपलम्भाभावजन्यमिति कथनेन प्रतियोग्युपलम्भाभावसहकृतमिन्द्रियमभावप्रत्यक्षहेतुरिति सूचितवान् । कन्दलीकारः[1] —

' अपि चेन्द्रियार्थसंनिकर्षादुपलभ्यमाने भूतले
अभावज्ञानमपि भवति अघटं भूतलमिति ।
तत्र भूतलस्येवाभावस्यापि प्रत्यक्षता किं नेष्यते '

इति ग्रन्थेन अभावबुद्धिः प्रत्यक्षेप्यन्तर्भावयितुं शक्यते, अतो न तत्साधनं प्रमाणान्तरमन्वेष्टव्यमिति प्रत्यपादयत् ।

शबरस्वामिनः अभावाख्यप्रमाणमधिकृत्य[2] —
'अभावोऽपि प्रमाणाभावः नास्तीत्यस्यार्थस्यासंनिकृष्टस्य '

---

1. न्यायकन्दली पृ० २२६.
2. शाबरभाष्यम् पृ ३९ (जै. सू. १-१-५.)

इत्यभाषन्त। 'भूतले घटो नास्ति' इत्येवं प्रतीयमानो यो नञर्थोऽभावः इन्द्रियासंनिकृष्टः तस्य बोधकं प्रमाणम् अभाव इत्युच्यते। अभावो नाम प्रमाणाभावः, प्रत्यक्षादिप्रमाणपञ्चकाभाव इत्यर्थः। अयमेवानुपलब्धिपदेन पश्चात्कालिकैर्व्यवह्रियते।

उदयनाचार्याः[1] अनुपलब्धेः प्रत्यक्षानुमानयोरन्तर्भावं साधयन्ति स्म। तथा हि - अनुपलब्धिः कदाचित् ज्ञायमाना अभावप्रमां प्रति कारणम्, कदाचिच्चाज्ञायमाना। तत्र ज्ञातानुपलब्धेः अनुमाने, अज्ञातानुपलब्धेः प्रत्यक्षेऽन्तर्भावः। ज्ञातकारणस्य परोक्षज्ञानजनकतायाः अज्ञातकारणस्य प्रत्यक्षज्ञानजनकतायाश्च लिङ्गेन्द्रियादौ दर्शनात्। ज्ञातानुपलब्धेरुदाहरणं यथा - मन्दिराच्चैत्रमानेतुमाज्ञप्तः प्रेष्यः स्वामिनं कथयति - 'निपुणतरमन्विष्टो मया मन्दिरे चैत्रः, एवमपि नोपलब्धः' इति। अस्माच्च मन्दिरे चैत्रस्य योग्यानुपलब्धिं ज्ञात्वा स्वामी अनुमिनोति 'प्रेष्यप्रवेशसमये चैत्रो मन्दिरे नासीत्' इति। अत्र परकीयानुपलब्धिः शब्दतो ज्ञायमाना अनुमित्यात्मकं परोक्षज्ञानं जनयतीति। एवमेव प्रातःकालिकाभावप्रतीतिरपि व्याख्यातव्या। तथा हि चैत्रो मन्दिरे प्रातरासीत् किम्? इति मध्याह्ने केनचित् पृष्टे कश्चिदेवं मन्यते - निपुणतरं प्रातश्चैत्रान्वेषणाय मन्दिरं प्रविष्टवतापि मया यस्माच्चैत्रो नोपलब्धः, तस्मात्तदा स तत्र नासीदिति। अत्र स्वयमेव स्वकीयानुपलब्धिं कालान्तरे ज्ञात्वा अभावमनुमिनोति। तस्मात्प्रातःकालिकस्याभावस्य प्रतीतिर्मध्याह्ने जायमाना ज्ञातानुपलब्धिजन्यत्वादनुमितिरूपेति।

अज्ञातानुपलब्धिजन्यं तु ज्ञानं प्रत्यक्षम्। तत्र चत्वारो हेतव उपन्यस्ताः—

'प्रतिपत्तेरपारोक्ष्यादिन्द्रियस्यानुपक्षयात्।
अज्ञातकारणत्वाच्च भावावेशाच्च चेतसः॥' इति।

---

1. न्यायकुसुमाञ्जलिः पृ २३०. (तृतीयस्तबकः)

इन्द्रियभूतलसंयोगानन्तरभवा 'अघटं भूतलं' इत्यभावप्रतीतिः इन्द्रिय-करणिका अपरोक्षरूपत्वात् कार्यान्तरानुपक्षीणेन्द्रियसापेक्षत्वात् अज्ञायमानकरणकत्वात् मनसो भावरूपं कारणान्तरमपेक्ष्यैव बाह्यानुभवजनकत्वनियमसिद्धात् मनस्सहकारिभावभूतकरणसापेक्षत्वाच्चेति उक्तश्लोकस्यार्थः। एते च हेतवः कुसुमाञ्जलौ तत्त्वचिन्तामणौ सविस्तरमुपपादितास्तत्रैव द्रष्टव्याः।

अपि च प्राचीनेषु सर्वेषु ग्रन्थेषु योग्यस्यानुपलब्धिः इति षष्ठीतत्पुरुषमभिप्रेत्य योग्यप्रतियोगिप्रकारकयोग्याधिकरणविशेष्यकोपलम्भाभावो योग्यानुपलब्धिरिति व्यवह्रियते स्म। योग्यप्रतियोगिप्रकारकत्वविशेषणात् स्तम्भे पिशाचाभावस्य न प्रत्यक्षता। योग्याधिकरणविशेष्यकत्वनिवेशात् जलपरमाणौ पृथिवीत्वाभावस्य न प्रत्यक्षता। मणिकारास्तु योग्या चासावनुपलब्धिश्च योग्यानुपलब्धिरिति कर्मधारयमभिप्रेत्य प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वं योग्यत्वमिति परिष्कारं चक्रुः। दीपिकादौ मणिकृन्मतानुसारेणैव निर्वचनं कृतम्। प्राचीनमतेऽपि न काचिदस्त्यनुपपत्तिरिति दिनकरीव्याख्यायां रामरुद्रयां स्पष्टम्।

## [१०] व्याप्तिविचारः

तत्त्वचिन्तामणौ अनुमानखण्डे प्राचीनोक्तानि बहूनि व्याप्तिलक्षणानि अनूद्य दूषयित्वा स्वयं निर्दोषाण्यनेकानि व्याप्तिलक्षणानि गङ्गेशोपाध्यायाः प्रदर्शयामासुः। तत्र प्रतियोग्यसमानाधिकरणयत्समानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नं यन्न भवति तेन समं तस्य सामानाधिकरण्यमिति प्राथमिकी सिद्धान्तव्याप्तिः। इयमेव दीपिकायां प्रकाशिकायां च अनूदिता। तद्घटकदलानां प्रयोजनानि च विवेचितानि।

अत्रेदं विचार्यते — सर्वेष्वपि मणिकारप्रदर्शितेषु व्याप्तिलक्षणेषु साध्यहेत्वोः सामानाधिकरण्यस्य प्रवेशात् व्यधिकरणसाध्य-

साधनयोरपि व्याप्तेरिष्टत्वात् तत्र कथं समन्वयः । तथाहि - अधोदेशे नदीपूर्त्या ऊर्ध्वदेशे वृष्टिरनुमीयते, पद्मस्य विकासेन सूर्यस्योदयोऽनुमीयते, समुद्रस्य वृद्ध्या चन्द्रस्योदयनुमीयते । तथा भूमिष्ठेनालोकेन उपरिष्ठः सविता, चक्रस्य भ्रमणेन भ्रामकस्य कुलालस्य संनिहितत्वम्, कृत्तिकोदयेन रोहिण्युदयासत्तिः ऊर्ध्वभागस्थधूमेनाधोभागस्थवह्निश्चानुमीयते । एतादृशस्थलेषु सामानाधिकरण्यगर्भव्याप्तेरभावात् लक्षणाव्याप्तिः इति ।

इदमत्र समाधानम् — व्यधिकरणतया उदाहृतस्थलेष्वपि नदी वृष्टिमदूर्ध्वदेशसंबद्धा पूरवदधोदेशसंबद्धत्वात्, अयं कालः सूर्योदयवान् पद्मविकासवत्कालत्वात्, अयं प्रदेशः कुलालासत्तिमान् भ्रमच्चक्राधिकरणत्वात् इत्याद्यनुमानानां विवक्षितत्वात् तत्र सामानाधिकरण्यस्योपपत्तिः । देशतः व्यधिकरणेषूक्तस्थलेषु कालतः सामानाधिकरण्यसद्भावात् कालिकसंबन्धस्य साध्यहेतुतावच्छेदकत्वं स्वीकृत्य व्याप्तिः संपादनीयेति ।

## (११) पदशक्तिविचारः

दीपिकायां शब्दपरिच्छेदे गवादिपदानां गोत्वादिजातावेव शक्तिरिति मीमांसकमतेन पूर्वपक्षं कृत्वा वृद्धव्यवहारबलेन जातिविशिष्टव्यक्तावेव शक्तिरिति स्थापितम् । एतत्तत्त्वं प्राच्यनव्यग्रन्थविवेचनपूर्वकं स्पष्टीक्रियते ।

तत्रादौ न्यायसूत्रकाराद्याशयः चिन्त्यते । गवादिप्रातिपदिकस्यार्थः कः? किं व्यक्तिः? किं वा अवयवसंयोगविशेषरूपा आकृतिः? अथ वा जातिरिति सन्देहः । संदेहस्य कारणं तु अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति शब्दः प्रयुज्यते । तत्र न ज्ञायते किं तासामन्यतमः शब्दार्थः? अथ वा ताः तिस्रोऽपीति । तत्र व्यक्तिवादी आह - शब्दप्रयोगसामर्थ्याद्धि पदार्थो निश्चेतव्यः । शब्दप्रयोगश्च व्यक्तिमु-

दृश्यैव भवति । तथा हि 'या गौस्तिष्ठति' 'या गौर्निषण्णा' इति गोशब्दार्थस्य स्थित्यादीनि विशेषणानि दीयन्ते । जातेः शब्दार्थत्वे तस्याः एकत्वात् विशेषणमनुपपन्नम्, व्यावर्तनीयान्तराभावात् । व्यक्तेः पदार्थत्वे तु या गोव्यक्तिर्न तिष्ठति तद्व्यावर्तनार्थं तिष्ठतीति विशेषणं संगच्छते । एवं गौः उपचीयते, अपचीयते, गां ददाति प्रतिगृह्णाति इत्यादौ वृद्धिदानादिक्रियासंबन्धः व्यक्तेरेव भवति न जातेः । गौः शुक्ला कपिलेत्यादौ शुक्लादिगुणसंबन्धः व्यक्तेरेवोपपद्यते । एवं गोत्वजातेरेकत्वात् एकत्वातिरिक्तसंख्यावत्त्वं तस्याः नास्तीति जातेः पदार्थत्वे विंशतिर्गाव इत्यादिवाक्यार्थबोधोऽनुपपन्नः । एवं गोसुखमित्यादिसमासे सुखाद्यन्वयो गोव्यक्तेरेव श्लिष्यते । गौर्गां जनयतीत्यादौ जन्मान्वयः गोव्यक्तेर्न गोत्वजातेः । तस्मात् व्यक्तिरेव पदार्थ इति ।

आकृतिवादी तु प्राह — न व्यक्तिः पदार्थः । अयं गौः अयमश्व इति प्राणिनां या व्यवस्था सा अवयवसंयोगरूपाकृतिमपेक्ष्य हि भवति । तस्मात् आकृतिः पदार्थ इति ।

जातिवादी तु - न व्यक्तिः नाप्याकृतिः पदार्थः । तासामानन्त्येन तत्र शक्तिग्रहासंभवात् । अपि च मृद्गवके व्यक्तेराकृतेश्च सद्भावेऽपि 'गां प्रोक्षय' 'गामानय' इत्यादिवाक्योक्तप्रोक्षणानयनादिकं न क्रियते । व्यक्तिवादे आकृतिवादे च तत्रापि तत्प्रसङ्गः । जातेः पदार्थत्वे तु मृद्गवके गोत्वजात्यभावात् न प्रोक्षणादिकमिति ।

परं तु जातिपक्षेऽपि अगृह्यमाणायां व्यक्तौ आकृतौ च जातेरग्रहात् जातिज्ञानस्य व्यक्त्याकृतिविषयकत्वनियमात् जातिमात्रं न पदवाच्यं भवितुमर्हतीत्याक्षेपो वर्तते । अतः कः पदार्थ इति जिज्ञासायामुक्तं सूत्रकारेण —

'जात्याकृतिव्यक्तयस्तु पदार्थः' (न्या. सू. २-२-६७) इति । अस्यैवं व्याख्यानम् – त्रिष्वेका शक्तिरिति सूचनायपदार्थ इत्येक-

**वचनम्।** कदाचित् व्यक्तेः प्राधान्यम्, कदाचिदाकृतेः, कदाचिज्जातेः इति प्राधान्यानुसारेण पदार्थत्वमिति विशेषसूचनाय तुशब्दः। यदा भेदविवक्षा व्यक्तिविशेषावगतिश्च गौस्तिष्ठति गौर्निषण्णेति तदा व्यक्तिः पदार्थः अङ्गे जात्याकृती। यदा तु भेदोऽविवक्षितः सामान्यावगतिश्च तदा जातिः पदार्थः यथा गौर्न पदा स्प्रष्टव्येत्यादौ। पिष्टकमय्यो गावः क्रियन्तामित्यादौ आकृतिः पदार्थ इति।

एवमपि लाघवात् जातावेव शक्तिरस्तु, इतरयोर्लक्षणयैव बोधो भवतु इति शङ्का जायते। अत्रोक्तं तात्पर्यटीकायाम् - गोशब्दश्रवणानन्तरं विदितसंगतेः पुरुषस्य एककाले व्यक्त्याकृतिजातीनां बोधो भवति, न पुनर्यथा 'गङ्गायां घोषः प्रतिवसति' इत्यत्र वा 'गौर्वाहीकः' इत्यत्र वा गङ्गात्वगोत्वावगमोत्तरं वाक्यार्थे तत्सम्बन्धानुपपत्तेः तदविनाभावेन वा लक्ष्यमाणगुणयोगेन वा तीरं वाहीको वावगम्यते तथेहावगतिः। अपि तु युगपदेवावगतिः। अतोऽवगतिरूपेण कार्येण कल्पनीया पदशक्तिस्त्रिषु पदार्थेषु विश्राम्यति, त्रयाणामेककालेऽवगत्यविशेषादिति। **इयं प्राचीनन्यायग्रन्थरीतिः।**

**नव्यनैयायिकास्तु** घटादिपदात् घटत्वघटाकृतिप्रकारकव्यक्तिविशेष्यकबोधोदयात् जात्याकृतिविशिष्टव्यक्तौ घटादिपदानां शक्तिः। आत्मादावाकृत्यभावात् जातिविशिष्टव्यक्तौ शक्तिः। आकाशादिपदानामुपाधिविशिष्टे शक्तिः, आकाशजात्यभावात्। तत्रापि घटत्वादेः शक्यत्वे सति शक्यतावच्छेदकत्वमप्यङ्गीक्रियते। अवयवसंयोगविशेषरूपाकृतेः शक्यत्वेऽपि शक्यतावच्छेदकत्वं नाङ्गीक्रियते, जातेरिव साक्षात्संबन्धेन शक्यव्यक्त्यवृत्तित्वात्, स्वाश्रयसमवेतत्वरूपपरम्परासंबन्धेनैव शक्यतावच्छेदकत्वं वाच्यमिति गौरवात् इत्याहुः।

अन्ये तु संस्थानानुपस्थितावपि गोत्वादिना गवाद्यन्वयबोधात् जातिविशिष्टव्यक्तावेव गवादिपदानां शक्तिः। संस्थाने च पृथगेव शक्तिरित्याहुः। परं त्वस्मिन् पक्षे सूत्रस्थमेकवचनमस्वरसं भवति।

यत्तु मीमांसकैः प्रथमोपस्थितत्वाज्जातावेव शक्तिरित्युक्तम्, तद्विपरीतम् । आश्रयप्रतीतिमन्तरा जातिगुणयोरेवाप्रतीतेः । व्यक्तिर्हि प्रथमतो ज्ञायते । ततो व्यक्तिगतव्यञ्जकाकृतिविशेषदर्शनानन्तरं व्यङ्ग्यायाः जातेः प्रतीतिरित्यनुभवसिद्धम् । किं च संयुक्तसमवेतविषयकचाक्षुषं प्रति चक्षुस्संयुक्तसमवायः कारणम् । तस्य च संयोगपूर्वकत्वात् द्रव्यचाक्षुषत्वावच्छिन्नं प्रति चक्षुस्संयोगस्य कारणतया जात्यादिप्रत्ययात् प्राक् सामग्रीवशाज्जायमानं द्रव्यप्रत्यक्षं नापलपितुं शक्यम् ।

ननु अयं दण्डीति ज्ञानवत् अयं घट इति ज्ञानमपि विशिष्टज्ञानत्वात् विशेषणज्ञानपूर्वकमास्थेयम् । विशेषणज्ञानं च न विशिष्टार्थविषयकम्, अनवस्थाप्रसङ्गात् । अतो जातिमात्रविषयकं तदित्यवश्यमङ्गीकरणीयमिति जात्यादेः प्रथमोपस्थितत्वं वक्तव्यमिति चेत् – सत्यं विशिष्टज्ञानं विशेषणज्ञानजन्यमिति । तदेव च विशेषणज्ञानं न जातिमात्रविषयकम् । जातिभासकसंनिकर्षस्य संयुक्तसमवायरूपस्य तदाश्रयव्यक्तिभासकसंयोगाख्यसंनिकर्षघटिततया तज्जन्यज्ञानस्य जातिविषयकत्ववत् तदाश्रयव्यक्तिविषयकत्वस्यापि दुर्वारत्वात् । न चैवमनवस्था, विशेषणज्ञानस्य जातिव्यक्त्युभयविषयकस्यापि वैशिष्ट्याविषयकतया विशिष्टज्ञानत्वाभावेन तत्र विशेषणज्ञानान्तरस्यानपेक्षणात् । अतो विशेषणज्ञानकारणत्वबलात् जातेः प्रथमोपस्थितत्वं भवेदिति प्रत्याशा न कार्या ।

एवं लाघवाज्जातिमात्रे शक्तिरित्यनुपपन्नम् । व्यक्तिपरप्रयोगस्यैव बाहुल्येन बहुत्र व्यक्तिलक्षणायाः कल्पनीयतया गौरवात् । तदपेक्षया विशिष्टव्यक्तौ शक्तिं स्वीकृत्य क्वाचित्कजातिपरप्रयोगस्य लाक्षणिकताया एव युक्तत्वात् । 'व्रीहिभिर्यजेत' इत्यादिविधिवाक्येषु

सर्वत्र व्रीह्यादिपदानां व्यक्तिलाक्षणिकत्वे सति 'न विधौ परः शब्दार्थः' इति न्यायविरोधश्च स्यात् ।

अपि च शक्तिग्राहकेषु व्याकरणादिषु गवादिपदानां जातिमात्रशक्तौ न किमपि प्रमाणं पश्यामः । व्यक्तिवाचकत्वमुपजीव्य प्रवृत्तेषु सरूपादिसूत्रेषु व्यक्त्याख्यायामित्यनभिधानात् जातिवाचकत्वमुपजीव्य प्रवृत्तेषु 'जात्याख्यायामेकस्मिन्' (पा.सू.१-२-५८) इत्यादिसूत्रेषु क्वचिदेव जात्याख्यायामित्यादिनिर्देशाच्च सर्वत्र व्यक्तेरभिधेयत्वं गम्यते । 'चादयोऽसत्त्वे' (पा.सू.१-४-५७) इत्यादिपर्युदासाच्च द्रव्यवाचित्वं गम्यते । सादृश्यप्रतीतिमुपजीव्य प्रवर्तमानमुपमानं च न व्यक्तिवाचकतामन्तरेण घटते । 'गोसदृशो गवयः' इत्यतिदेशवाक्यगतगवयपदार्थव्यक्तौ सादृश्यग्रहाद्धि गवयो गवयपदवाच्य इति शक्तिग्रहः । लिङ्गविशेषनिर्णयपुरस्कारेण प्रवृत्तः कोशोऽपि तद्योग्यव्यक्तिवाचकत्वमेव कल्पयति । आप्तवाक्यं च 'गामानय' 'न सुरांपिब' इत्यादिकं प्रवृत्तिनिवृत्त्यन्वयिपदार्थगोचरं व्यक्तिशक्तिं व्यनक्ति । व्यवहारोऽपि गवानयनप्रवृत्त्यादिर्व्यक्तिवाचकत्व एवोपपद्यते । वाक्यशेषोऽपि'यत्रान्या ओषधयो म्लायन्त' इत्यादिः मोदमानत्वादिविशेषणार्हव्यक्तिवाचकतामेव द्रढयति । विवरणमपि पाकं करोतीत्यादि क्रियादिव्यक्तिवाचकतापक्षस्वरसम् । प्रसिद्धपदसांनिध्यमपि 'इह सहकारतरौ मधुरं पिको रौति' इत्यादिकं द्रव्यवाचकत्व एव संगतम् । अतो गवादिशब्दानां जातिशक्तत्वे न किमपि प्रमाणं स्वारसिकम् । बाधकानि च भूयांसि लिङ्गसङ्ख्यानन्वयादीनि पूर्वमेवोपपादितानि ।

किं च जातिरेव यदि गवादिशब्दार्थस्तर्हि गोत्वं व्यक्तिनिष्ठमितिवत् गौर्व्यक्तिनिष्ठेत्यपि प्रयोगः प्रसज्यते । गवादिपदानां जातिमात्रविवक्षया प्रयोगे त्वतलाद्यपेक्षा च न स्यात् । किं च खण्डो गौः शुक्लो गौः इत्यादिसामानाधिकरण्यं न घटते । खण्डत्वादेर्जातावनन्वयात् । यत्त्वत्रोच्यते मीमांसकैः लक्ष्यार्थव्यक्तौ तदन्वय इति ।

तदपि न। कुत्रापि वाक्ये लक्ष्यार्थान्वयिविशेषणाप्रयोगात्। न हि गङ्गायां घोष इत्यादौ गङ्गापदलक्ष्यार्थतीरासाधारणं विशेषणं केनापि वाक्ये प्रयुज्यते। प्रत्युत गभीरायां नद्यां घोष इत्यादौ शक्यार्थन्वय्येव विशेषणं प्रयुज्यते। तस्माज्जातिविशिष्टव्यक्तौ पदानां शक्तिरित्येव युक्तम् इति नैयायिकाः।

## [१२] प्रामाण्यविचारः

दीपिकायां प्रामाण्यस्य ज्ञप्तावुत्पत्तौ च स्वतस्त्वं परतस्त्वं च निरुच्य मीमांसकमतनिराकरणपूर्वकमुभयत्र परतस्त्वं स्थापितं प्रामाण्यवादप्रकरणे। एतत्तत्त्वं प्राच्यनव्यग्रन्थविमर्शपूर्वकमधुना विव्रियते।

कस्मिंश्चिद्विषये ज्ञाते सति जाते ज्ञाने प्रामाण्यबुद्धिमन्तरा विषये प्रवृत्तिर्न भवतीति ज्ञानगतप्रामाण्यज्ञानमपि प्रवृत्तिहेतुरिति वक्तव्यम्। न चेदं ज्ञानं प्रमेति ज्ञानं विनापि प्रवृत्तेरुत्पत्त्या व्यतिरेकव्यभिचारात् प्रामाण्यज्ञानस्य प्रवृत्तिहेतुत्वं नास्तीति वाच्यम्। बहुवित्तव्ययायाससाध्ये यागादौ प्रवृत्तेः प्रामाण्यनिश्चयं विना असंभवात्। न च तत्राप्यावश्यकार्थनिश्चयादेव प्रवृत्तिरिति वाच्यम्। यत्संशयः यद्व्यतिरेकनिश्चयश्च यत्प्रतिबन्धकौ तन्निश्चयस्तद्धेतुरित्यवश्यं स्वीकरणीयम्। यथा व्याप्तिसंशये वा व्याप्तिव्यतिरेकनिश्चये वा सत्यनुमितिर्न जायत इति व्याप्तिनिश्चयोऽनुमितिं प्रति हेतुरिति अङ्गीक्रियते, तथा प्रामाण्यसंशये वा प्रामाण्यव्यतिरेकनिश्चये वा सति प्रवृत्तिर्न जायत इति प्रवृत्तिं प्रति प्रामाण्यनिश्चयः कारणमिति सिध्यति। तथा च ज्ञानप्रमात्वनिश्चयं विना प्रवृत्त्यसंभव इति। न च ज्ञाने प्रामाण्यसंदेहे सत्यर्थसंदेहात् अर्थनिश्चयरूपकारणाभावादेव प्रवृत्त्यभावोपपत्तौ प्रवृत्तिं प्रति प्रामाण्यसंदेहस्य प्रतिबन्धकत्वाभावेनोक्तनियमाप्रवृत्त्या प्रामाण्यनिश्चयस्य प्रवृत्तिं प्रति हेतुत्वाभावात् प्रामाण्यस्वतस्त्वपरतस्त्वविचारोऽनवसर इति वाच्यम्। यत्र ज्ञान-

विशेषे प्रमात्वसंदेहो तत्र निष्कम्पप्रवृत्तिः इदमित्थमेवेत्यवधारणादेव संपादनीया। तच्चावधारणं ज्ञानस्य प्रमात्वनिश्चयं विना न संभवतीति प्रवृत्तिहेतुभूतार्थनिश्चयहेतुतया प्रामाण्यनिश्चयस्य प्रवृत्तिं प्रति प्रयोजकत्वात् प्रामाण्यनिश्चयोऽपि संपादनीयः। स च स्वतः परतो वेति विचारो युक्त एव।

तत्र प्रामाण्यज्ञप्तौ स्वतस्त्वं परतस्त्वं च मणौ पञ्चधा निरुक्तम्। तत्र प्रथमनिरुक्तिमात्रं दीपिकायामनूदितम्। ज्ञानं यया सामग्र्या ज्ञायते तयैव ज्ञानगतं प्रमात्वमपि ज्ञायत इति ज्ञानग्राहकसामग्रीग्राह्यत्वात्मकं प्रथमं स्वतस्त्वम्। तत्र **प्राभाकराः** - घटमहं जानामीत्येव ज्ञानाकारः। तस्य ज्ञानस्य स्वयंप्रकाशत्वात् ज्ञानग्राहकमपि स्वयमेवेति तद्ग्राह्यत्वं प्रामाण्यस्येति वदन्ति। **भाट्टाः** — ज्ञानं ज्ञाततयानुमीयत इति ज्ञाततालिङ्गकानुमितिः ज्ञानग्राहकसामग्रीजन्यग्रहः तद्विषयत्वं प्रामाण्यस्येत्याचक्षते। **मुरारिमिश्राः** — 'अयं घटः' इति ज्ञानानन्तरं 'घटमहं जानामि' इत्यनुव्यवसायो जायते। तेन ज्ञाने विषयीक्रियमाणे तद्गतं प्रमात्वमपि विषयीक्रियते। तथा च ज्ञानग्राहकानुव्यवसायग्राह्यत्वात् प्रामाण्यस्य स्वतस्त्वमित्युपवर्णयन्ति। मतत्रयेऽपि ज्ञानग्राहकसामग्र्याःभिन्नत्वेऽपि ज्ञानग्राहकसामग्रीग्राह्यत्वात्मकं स्वतस्त्वं साधारणम्। अत्र यत्प्रामाण्याश्रये ज्ञाने दोषवशादप्रामाण्यग्राहिका काचन सामग्री तया तत्प्रामाण्यस्याग्रहात् स्वतस्त्वबाधः स्यादिति अप्रामाण्यग्राहकेति सामग्रीविशेषणं देयम्। एवमपि इदं ज्ञानमप्रमेति ज्ञाननिष्ठस्य अप्रामाण्यवति अप्रामाण्यप्रकारकत्वरूपस्य प्रामाण्यस्य अप्रामाण्यग्राहकसामग्र्यैवं ग्रहणात् अप्रामाण्यग्राहकसामग्रीग्राह्यत्वात्मकस्वतस्त्वस्य तत्र बाधः स्यादिति तद्वारणाय तदप्रामाण्याग्राहकेति वक्तव्यम्। तस्मिन् अप्रामाण्ग्राहकेति तदर्थः। यादृशप्रामाण्ये स्वतस्त्वमिष्यते तादृशप्रामाण्याश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानजनकेति यावत्। इदं ज्ञानमप्रमेत्याकारकज्ञाननिष्ठप्रामाण्यग्राहकसामग्र्याः

इदंज्ञानविशेष्यकाप्रामाण्यग्राहकत्वेऽपि प्रकृतप्रामाण्याश्रयभूतं यत् इदं ज्ञानमप्रमेत्याकारकं ज्ञानं तद्विशेष्यकाप्रामाण्यज्ञानाजनकत्वान्न दोषः। नैयायिकैरपि ज्ञानग्राहकं यत् इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् इत्यनुमानं तद्ग्राह्यत्वस्य प्रमात्वेऽङ्गीकारात् स्वतस्त्वापत्तिवारणाय यावज्ज्ञानग्राहकसामग्रीति यावत्त्वविशेषणमपि देयम् । तच्च सामग्र्यां न विशेषणम् । सर्वाभिर्ज्ञानसामग्रीभिरेकस्य ज्ञानस्याजननेन यावत्सामग्रीजन्यग्रहाप्रसिद्धेः । अपि तु ज्ञानविशेषणम् । तथा च ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वमिति फलितम् । तादृशयावद्ग्रहान्तर्गतानुव्यवसायग्राह्यत्वस्य प्रामाण्ये नैयायिकैरनङ्गीकारान्न दोषः । यावत्त्वस्य च व्यापकत्वरूपत्वात् तदप्रामाण्यग्राहकतत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयितानिरूपकत्वं स्वतस्त्वमिति दीधितिकारैर्निष्कर्षः कृतः । स निष्कर्षः प्रकाशिकायामनूदितः ।

### अथ प्रामाण्यवादस्य तुलनात्मकदृष्ट्या विचारः

प्रमात्मकज्ञानगतं प्रामाण्यं अप्रमात्मकज्ञानगतमप्रामाण्यं च किं स्वतः उत परत इत्यत्र तीर्थंकरा विप्रतिपद्यन्ते । तत्र प्रामाण्यमप्रामाण्यं चेत्युभयं स्वत इति सांख्याः । उभयं परत इति वैशेषिकादयः । अप्रामाण्यं परत इति बौद्धाः । प्रामाण्यं स्वतः अप्रामाण्यं परत इति मीमांसकाः वेदान्तिनश्चेति चत्वारः पक्षाः ।

### सांख्यमतम्

ज्ञाने पूर्वमविद्यमानं प्रामाण्यमप्रामाण्यं वा पश्चात् कारणबलादुत्पद्यत इत्यङ्गीकारे असत्कार्यवादो भवेदिति भीताः सांख्याः प्रामाण्यमप्रामाण्यं चेत्युभयमपि स्वाभाविकमिति ।

परं तु उभयमपि हेतुविशेषं विना यदि स्वभावतो भवेताम्, तदा 'इदं ज्ञानं प्रमाणं' 'इदं ज्ञानमप्रमाणम्' इति व्यवस्था न स्यात् इति अस्वारस्यमस्मिन् मतेऽस्ति ।

**बौद्धमतम्**

अप्रामाण्यं स्वतः प्रामाण्यं परत इति मन्यन्ते बौद्धाः। तथा हि — यदि प्रामाण्यं स्वत एव निश्चीयते, तर्हि प्रामाण्यरूपैकतर-कोटेः निश्चयात् इदं ज्ञानं प्रमा अप्रमा वेति संशयो न स्यात्। अतः कारणभूतस्य गुणस्य ज्ञानात् प्रवृत्तिसंवादाच्च प्रामाण्यं निश्चीयते। तदुक्तम् —

'तस्मिन् सदपि मानत्वं विनिश्चेतुं न शक्यते।
उत्तरार्थक्रियाज्ञानात् केवलं तत् प्रतीयते॥'

इति। अप्रामाण्यं तु स्वत एवावसीयते। अत एव वेदादुत्पन्नं ज्ञानं विपर्ययरूपम्। अतः स्वतोऽप्रमाणं वेदाः इति बौद्धानामाकूतम्।

इदमत्र दूषणम्। अप्रामाण्यं स्वाभाविकमिति वादिनां मतेऽपि भ्रमज्ञानेऽधिष्ठानांशे प्रामाण्यस्य स्वाभाविकत्वं वक्तव्यम्। अन्यथा निरधिष्ठानभ्रमप्रसङ्गात्। किं च 'प्रमाणात् प्रमेयसिद्धिः' 'युक्तियुक्तं वचो ग्राह्यम्' इत्यादिकं वचनं सर्वैरपि वादिभिः स्वतः प्रमाणपिति वक्तव्यम्। तथा निर्विकल्पकस्य वासनोपप्लवशून्यस्य स्वत एव प्रामाण्यमुपगच्छन्ति। सविकल्पकस्यापि स्वांशे प्रामाण्यं विषयांशेऽ-प्रामाण्यं च वदन्ति। तथा च कुत्रचित् प्रामाण्यस्वतस्त्वं तेषामप्य-वर्जनीयम्। अपि च सर्वेष्वपि ज्ञानेषु किंचिदंशे प्रामाण्यस्य सत्त्वात् अप्रामाण्यस्यैव क्वाचित्कत्वात् तदेव किंशुकाद्युपाधिकारुण्यवत् सहे-तुकं, प्रामाण्यमेव निर्हेतुकमिति व्यवस्थापनात् इति मीमांसकाः। नैयायिकास्तु दोषतः अप्रामाण्यं गुणतः प्रामाण्यमित्याहुः। सर्वथा अप्रामाण्यस्वतस्त्वं न घटते।

**मीमांसकमतम्**

प्रामाण्यं स्वत एवोत्पद्यते ज्ञायते च। अप्रामाण्यं तु परत उत्पद्यते ज्ञायते चेति मीमांसकाः। प्रामाण्यं स्वत उत्पद्यत इत्यस्य

प्रामाण्याश्रयज्ञानस्य या सामग्री उत्पादिका तयैव ज्ञानगतं प्रामाण्यमप्युत्पद्यते, न तु गुणादित्यर्थः। तेन च वेदादुत्पन्नस्य ज्ञानस्य यत् प्रामाण्यं तत्र वक्तृयथार्थज्ञानरूपगुणापेक्षाविरहात् वेदस्यापौरुषेयत्वं स्थिरं भवतीति तेषामाशयः। प्रामाण्यं स्वतो ज्ञायत इत्यस्य प्रामाण्याश्रयस्य ज्ञानस्य यया सामग्र्या ज्ञानं भवति तयैव तद्गतप्रामाण्यस्यापि ज्ञानं भवति। पश्चात्तु बाधकज्ञानकारणदोषज्ञानाभ्यां प्रामाण्यं बाध्यते। एवं च अपौरुषेये वेदे अनाप्तपुरुषसंबन्धकृतदोषाणामभावात् बाधकज्ञानाभावाच्च ज्ञातं प्रामाण्यं तथैवावतिष्ठते। तथा च वेदप्रामाण्यस्थिरीकरणमेव ज्ञप्तौ स्वतस्त्वसाधनस्य प्रयोजनमिति।

### प्रामाण्यनिश्चये न्यायदर्शनाभिप्रायः

यद्यपि न्यायसूत्रे प्रामाण्याप्रामाण्यस्वतस्त्वपरतस्त्वविचारः न कृतः, तथापि 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' (न्या०.सू०. २-१-६८) इति सूत्रेण परतः प्रामाण्यं सूचितमेव। न्यायभाष्यकारः आरम्भवाक्यमेव प्रामाण्यपरतस्त्वख्यापकं विन्यास्थत् - 'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत्प्रमाणम्' इति। इदं च भाष्यवाक्यं वाचस्पतिमिश्रैः एवमवतारितम् - ननु यच्छास्त्रमनुष्ठातुमशक्यमुपायं प्रतिपादयति तदनर्थकम्, यथा ज्वरहरतक्षकचूडारत्नाहरणोपदेशकं शास्त्रम्। इदं न्यायशास्त्रमपि तादृशमेव। तथा हि, षोडशपदार्थतत्वज्ञानाद्धि निःश्रेयसयुपदिश्यतेऽस्मिन् शास्त्रे। तदेव दुर्लभम्। प्रमेयादीनां पदार्थानां तत्त्वज्ञानं प्रमाणतत्त्वज्ञानाधीनम्। न हि प्रमाणं तत्त्वेनानिर्णीतं सन् स्वविषयं अवधारयितुमलम्। प्रमाणतत्त्वावधारणं च प्रमातत्त्वावधारणाधीनम्। न हि प्रमां तत्त्वेनानवधारयन् प्रमाजनकस्य तत्त्वमवधारयितुं शक्नोति। प्रमायाश्च तत्त्वमव्यभिचारित्वरूपं स्वतः परतो वा निश्चेतुमशक्यम्। घटादिविषयगोचरं ज्ञानमात्मानमपि विषयीकर्तुमशक्नुवत् कथं हि नाम स्वगतं प्रमात्वं ग्रहीष्यतीति स्वतः पक्षः तावन्न युक्तः। ज्ञानं स्वयंप्रकाशम् इति पक्षेऽपि कथंचित् ज्ञानस्य स्वविषयकत्वसम्भवेऽपि

स्वगताव्यभिचारित्वरूपप्रमात्वविषयकत्वं दुरूपपादम् । परतः प्रमात्वं ज्ञायत इति पक्षेऽपि परशब्देन ज्ञानविषयकज्ञानान्तरस्य वा अर्थक्रियाविषयकज्ञानस्य वा अन्यस्य वा विवक्षायां तेषामपि स्वस्मिन् प्रमात्वानवधारणे पूर्वज्ञाने प्रामाण्यं कथं ज्ञातुम् शक्येत । अतस्तेषां प्रामाण्यं ज्ञानान्तरेभ्यश्चेत् तेषामपि तथेत्यनवस्था । तेषां प्रमात्वं स्वत इति तु पूर्वोक्तरीत्यानुपपन्नम् । तथा च स्वतः परतो वा प्रमातत्त्वानवधारणात् प्रमाणतत्त्वावधारणं न सम्भवति। तदसंभवाच्च प्रमेयादितत्त्वज्ञानमपि न संभवति । तस्मात् प्रमाणादिषोडशपदार्थतत्त्वज्ञानान्निःश्रेयसाधिगम इत्युपदिशच्छास्त्रमनर्थकमित्याशङ्कायाः निराकरणार्थं "प्रमाणतो अर्थप्रतिपत्तौ" इत्यादिभाष्यं प्रवृत्तमिति ।

अस्य भाष्यस्यायमर्थः - प्रामाणमर्थवदिति प्रतिज्ञा । प्रवृत्तिसामर्थ्यादिति हेतुः । प्रमाणमिति करणार्थकल्युडन्तः शब्दः । अर्थवदिति नित्ययोगे मतुप् । नित्यता चार्थाव्यभिचारिता । अर्थाव्यभिचारित्वं च तद्वति तत्प्रकारकत्वम् । तच्च प्रमाणस्य ज्ञानद्वारकम् । तथा च प्रमाणं तद्वति तत्प्रकारकज्ञानजनकमिति प्रतिज्ञार्थः । समर्थायाः भावः सामर्थ्यम्, प्रवृत्तेः सामर्थ्यं प्रवृत्तिसामर्थ्यम् । सफलप्रवृत्तिजनकत्वमिति तदर्थः । यदि प्रमाणमर्थाव्यभिचारि नाभविष्यत् समर्थां प्रवृत्तिं नाकरिष्यत् यथा अर्थव्यभिचारी प्रमाणाभास इति व्यतिरेक्यनुमानमत्र विवक्षितम् । प्रमाणस्य प्रवृत्तिजनकत्वं न साक्षात्, किं तु अर्थप्रतिपत्तिजननद्वारेणेत्याशयेन प्रमाणतोऽर्थप्रतिपत्तावित्युक्तम्। तथा च विप्रतिपन्नं ज्ञानं तद्वति तत्प्रकारकं सफलप्रवृत्तिजनकत्वादित्यनुमान एव पर्यवसानम् । इत्थं च सफलप्रवृत्तिजनकत्वहेतुकानुमित्या ज्ञानगतं प्रमात्वं गृह्यत इति भाष्यकाराशयः ।

नन्वनुमितिरूपज्ञाननिष्ठं प्रमात्वं केन गृह्यते? अनुमित्यन्तरेणेति यदि, तदानवस्थेति चेत्—न । अनुमितिविषयकानुव्यवसायेन अनुमितौ गृह्यमाणायां तन्निष्ठप्रामाण्यस्यापि ग्रहात् अनुमितिशा-

माण्यस्य स्वतोग्राह्यत्वाङ्गीकारात् । तर्हि 'घटमहं जानामि' इत्यनुव्यवसायेन घटज्ञाने गृह्यमाणे तत्प्रामाण्यमपि गृह्यताम्, किमर्थं तत्र प्रवृत्तिसामर्थ्यलिङ्गकानुमित्यनुधावनमितिचेत्–इदं ज्ञानं प्रमा न वेति संशयानुरोधेन प्रमात्वनिश्चयाय प्रवृत्तिसामर्थ्यरूपहेतुपरामर्शात् प्रकृते तदभावादिति तात्पर्यटीकाकाराः निरूपयन्ति [1]। प्रामाण्यस्यावश्यवेद्यत्वानभ्युपगमान्नानवस्थेति कुसुमाञ्जलिकाराः उपपादयन्ति [2]।

'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्' (न्या.सू. २—१—६८) इति सूत्रेण,

> 'किङ्कृतमेतत् ? आप्तप्रामाण्यकृतम् । किं पुनराप्तानां प्रामाण्यम् ? साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषा'

इत्यादितत्सूत्रस्थभाष्येण च प्रामाण्यस्योत्पत्तौ गुणजन्यत्वाद्यं परतस्त्वं सूचितमेव। कुसुमाञ्जलौ ज्ञप्तौ उत्पत्तौ च परतस्त्वं विस्तरेणोपपादितम्। तदपेक्षयापि विस्तरेण मणौ दीधितौ गादाधरीये च विवेचितम्। दीपिकायां प्रकाशिकायां च तत्रत्यमेवोपपादनं पुनः संगृहीतमिति।

## [१३] अन्यथाख्यातिविचारः

भ्रमात्मकज्ञानस्य ख्यातिरिति व्यपदेशः शास्त्रग्रन्थेषु वर्तते। तत्र विषये वादिनो बहुधा वदन्ति। लोके यस्य यस्य यद्यत् ज्ञानं भवति तत्सर्वं प्रमेति वक्तुं न शक्यते। तथा सति प्रतिवादिनो ज्ञानमपि प्रमा स्यात्। तथा च प्रतिवाद्यपि विजयेत। तथासर्वं ज्ञानमप्रमेत्यपि वक्तुं न पार्यते। तथा सति वादिनो यत् ज्ञानं तदप्यप्रमा स्यात्। तथा च वादि पराजितो भवेत्। तस्मात् किंचित् ज्ञानं प्रमा किंचित्

---

1. तात्पर्यटीका पृ० २९.
2. न्यायकुसुमाञ्जलिः पृ० ८७–९१ (द्वितीयस्तबकः)

ज्ञानमप्रमा इति विभागः सर्वैरभ्युपगन्तव्यः । तत्र अप्रमात्मके ज्ञाने अन्यस्य अन्यथाभानात्मिकामन्यथाख्यातिं नैयायिका जैना भाट्टाश्च उररीकुर्वन्ति । अन्यथाख्यातेः या सामग्री भेदाज्ञानरूपा अख्यातिः तथैव व्यवहारोपपत्तेः अख्यातिपक्ष एव युक्त इति प्राभाकराः । क्षणिकविज्ञानरूपः आत्मैव बाह्यवस्त्वाकारेण प्रतीयत इत्यात्मख्यातिवादिनः बौद्धाः । भ्रमस्थले असदेव प्रतीयत इति असत्ख्यातिवादिनः माध्यमिकाः । भ्रमे सदसदनिर्वचनीयं वस्तूत्पद्यते प्रतीयते चेत्यद्वैतिनः । एतन्मते अनिर्वचनीयख्यातिः ।

तत्र नैयायिका अन्यथाख्यातिवादिन इति प्रसिद्धिः । न्यायदर्शने प्रथमसूत्रेण तत्त्वज्ञानान्निःश्रेयसप्राप्तिमभिधाय 'दुःखजन्मे' त्यादिद्वितीयसूत्रेण मिथ्याज्ञानं परम्परया संसारहेतुरिति प्रतिपादितम् । तत्र 'मिथ्याज्ञानमनेकप्रकारकं वर्तते आत्मनि तावन्नास्तीति अनात्मन्यात्मेति दुःखे सुखमिति' इत्यादि भाषमाणः वात्स्यायनः अतस्मिंस्तदिति ज्ञानं मिथ्याज्ञानमिति मन्यते । वार्तिककारोऽपि — 'कः पुनरयं विपर्ययः । अतस्मिंस्तदिति प्रत्ययः' इति कथयति । अस्य विपर्ययस्य अन्यथाख्यातिरिति संज्ञा तु पश्चात्कालिकी । तात्पर्यटीकायाम्[1]—

> 'संप्रति संदिहानो विपर्ययस्वरूपं पृच्छति
> कः पुनरयं विपर्यय इति । परीक्षकाणां विप्रतिपत्तेः
> संशयः । केचित् स्वाकारबाह्यत्वविषयं ज्ञानं
> विपर्यय इत्याचक्षते । अन्येऽसद्विषयं ज्ञानं........
> अन्यथाख्यातिं तु वृद्धाः । '

इति कथनात् अन्यथाख्यातिपक्षः नैयायिकानामिति ज्ञायते ।

अयमत्र निष्कर्षः — आदौ शुक्त्या इन्द्रियसंनिकर्षानन्तरम् अयं शुक्लभास्वर इत्याकारकं ज्ञानं, ततः उद्बुद्धसंस्कारात् रजतस्मरणम्, पुरोवर्ति-रजतयोर्भेदाग्रह इत्येतावत्पर्यन्तम् अख्यात्यन्यथा-

1. तात्पर्यटीका पृ. १६०

ख्यातिवादिनोः समानम् । ततः 'इदं रजतम्' इत्याकारकं रजतत्वाभाववद्विशेष्यकरजतत्वप्रकारकं विशिष्टज्ञानमुत्पद्यते, तत एव प्रवृत्तिरिति नैयायिकाः तादृशविशिष्टज्ञानकारणत्वेनाभिमताभ्यां भेदाग्रहसहिताभ्यां पुरोवर्तिवस्तुप्रत्यक्षरजतस्मरणाभ्यामेव प्रवृत्त्यादिनिर्वाहे मध्ये विशिष्टज्ञानमनावश्यकमिति प्राभाकराः इति ।

#### विशिष्टज्ञानस्यावश्यकता

सत्यस्थले प्रवृत्तिं प्रति विशिष्टज्ञानस्य हेतुत्वात् असत्यस्थलेऽपि विशिष्टज्ञानमेव प्रवर्तकं वाच्यम् । तथा च 'विसंवादिप्रवृत्तिः विशिष्टज्ञानजन्या प्रवृत्तित्वात् सत्यप्रवृत्तिवत्' इत्यनुमानमन्यथाख्यातौ प्रमाणम् । तथा 'रजतेच्छाजन्यशुक्तिविषयकप्रवृत्तिजनकरजतत्वप्रकारकं ज्ञानं शुक्तिविशेष्यकं शुक्तिप्रवृत्तिप्रयोजकज्ञानत्वात् शुक्तौ शुक्त्यर्थप्रवृत्तिप्रयोजकज्ञानवत्' इत्यादीन्यनुमानान्यपि अन्यथाख्यातिसाधकतया मणावुपन्यस्तानि। एवमनुव्यवसायात्मकप्रत्यक्षमप्यन्यथाख्यातौ मानम् । तथा हि - शुक्तौ इदं रजतमिति भ्रमानन्तरम् इदं रजततया जानामि इत्यनुव्यवसायो जायते । इदंविशेष्यकरजतत्वप्रकारकज्ञानवाहनम् इति हि तदर्थः । तत्र व्यवसायस्य इदंविशेष्यकरजतत्वप्रकारकत्वाभावे उक्तानुव्यवसायः कथं घटेत? ज्ञानद्वयपक्षे 'इदं जानामि' 'रजतं जानामि' इत्याकारको ह्यनुव्यवसायः स्यात्, न तु इदं रजतं जानामि इति ।

#### अन्यथाख्यातिशब्दार्थविचारः

अन्यत्रैव सता आकारेण पुरोवर्तिनो विशिष्टताज्ञानमन्यथाख्यातिः । अन्यत्रैव सत्त्वं तु प्रवृत्तिबाधसहकृतात् नास्तीति बाधकप्रत्ययान्निश्चीयते । अतो भ्रान्तिज्ञानबाधितस्य सत्यरजतस्यात्यन्तासत्त्वमापादयितुं न शक्यते, प्रवृत्तिबाधविरहात् । न वा मन्त्रादिप्रतिबद्धस्याग्नेः स्फोटजननादिप्रवृत्तिबाधात् मिथ्यात्वनिश्चयप्रसङ्गः । तत्र नास्तीति बाधकप्रत्ययस्याभावात् ।

ख्यात्यन्तरवादिभिरप्यन्ततो गत्वा अन्यथाख्यातिरवश्याश्रयणीया। तथा हि—असत्ख्यातिमते किमसत् असदिति प्रतीयते सदिति वा ? असदिति चेत् भ्रमत्वासंभवः। असतः असत्त्वेन भानस्य प्रमात्वात् बाधप्रवृत्ती च न घटेताम्। सदिति प्रतीयते चेत्, असतः सत्त्वेन भानात् अन्यथाख्यातिरेव स्यात्। आत्मख्यातिपक्षे आत्मशब्दितं ज्ञानं किं ज्ञानमिति प्रतीयते ? उतार्थं इति? आद्येन भ्रमत्व-बाधप्रवृत्तीनामसंभवः। द्वितीये ज्ञानस्यार्थात्मना भानादन्यथाख्यातिरेव स्वीकृता स्यात्।

प्राभाकरमतेऽपि ग्रहणस्मरणात्मकज्ञानद्वयाङ्गीकारात् तत् ज्ञानद्वयं किं ज्ञानद्वयमिति प्रतीयते किं वा एकत्वेन ? आद्ये बाधप्रवृत्त्योरसंभवः। द्वितीये द्वयस्यैकत्वेन भानात् अन्यथाख्यातिः।

ज्ञानमस्ति विषयो नास्तीति पक्षे विषयः किमविद्यमानत्वेन प्रतीयते उत विद्यमानत्वेन ? आद्ये प्रवृत्त्याद्यसंभवः। न जातु कश्चित् अविद्यमानत्वेन प्रतीते वस्तुनि प्रवर्तते। द्वितीये अविद्यमानस्य विद्यमानत्वेन भानादन्यथाख्यातिः इति।

## (१४) अभावविचारः

तर्कसंग्रहे दीपिकायां च अभावस्य चतुर्धा विभागः अतिरिक्तपदार्थत्वं च प्रादर्शिषाताम्। इदं किंचिद्विचार्यते।

'प्रागुत्पत्तेरभावोपपत्तेश्च' (न्या.सू.२–२–१२) इति सूत्रे भाष्यम्—

'अभावद्वैतं खलु भवति प्राक् चोत्पत्तेरविद्यमानता
उत्पन्नस्य चात्मनो हानादविद्यमानता'

इति। वार्तिकेप्येवमेव प्रतिपाद्यते। तेन प्रागभावः प्रध्वंसश्चेति द्विविध एवाभावो भाष्यवार्तिककारयोः संमत इति प्रतीयते। तत्रैव तात्पर्यटीकाकारः—

'अभावद्वैतमिति प्रकृतापेक्षम् । प्रकृतं प्रध्वंसमात्र-
वादिनं प्रति प्रागभावप्रतिपादनम् । परमार्थतस्तु
प्रथममभावे द्वैतम्–तादात्म्याभावः संसर्गा-
भावश्चेति । संसर्गाभावोऽपि प्राक्प्रध्वंसात्यन्ताभावेन
त्रिविध इति चतस्रो विधा अभावस्य'

इत्यभावचतुष्टयमपि न्यायदर्शनसंमतमिति प्रत्यपादयत् । भाववद-
भावोऽपि प्रमाणवेद्यः । यत् प्रमाणं भावं ज्ञापयति तदेव प्रमाणं प्रति-
योग्यनुपलब्धिसहकृतमभावं ज्ञापयति इत्याशयवता भाष्यकारेण—

'कथं पुनरुत्तरस्य प्रमाणेनोपलब्धिः ।
सत्युपलभ्यमाने तद्वदनुपलब्धेः प्रदीपवत् ।

तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति ।'

इति प्रथमसूत्रेऽभाषि । तत्राभावस्यापि प्रमाणसिद्धत्वे तस्य भाववत्
उपदेशः कुतो न कृतः इत्याशङ्कायामाह वार्तिककारः —

'सत् खलु प्रमाणस्यालम्बनं स्वतन्त्रं भवति ।
असत्तु परतन्त्रं प्रतिषेधमुखेन प्रतिपद्यते ।'

इति निषेध्यं निषेधाधिकरणम् इत्युभयज्ञानाधीनत्वात् अभावस्य,
भावे ज्ञाते अभावोऽपि ज्ञातप्राय इत्याशयेन सूत्रकृता अभावो न
निर्दिष्ट इति तदाशयः ।

वैशेषिकसूत्रेष्वपि अभावचतुष्टयाभ्युपगमः सूचितो वर्तते ।
'क्रियागुणव्यपदेशाभावात् प्रागसत्' (वै.सू.९-१-१) इति सूत्रं
घटादिरूपकार्यस्य उत्पत्तेः प्रागविद्यमानतां प्रतिपादयत् प्रागभावमनु-
मन्यते । उत्पत्तेः प्रागविद्यमानता हि प्रागभावो नाम । तथा
'सदसत्' (वै.सू.९-१-२) इति सूत्रं सतो घटादेः मुद्गरपाताद्यनन्तर-
मभावं प्रतिपादयत् ध्वंसाख्यमभावं सूचयति । ततः 'सच्चासत्'
(वै.सू.९-१-३) इति सूत्रं सतो घटादेः पटाद्यात्मना अभावं बोधयत्

तादात्म्याभावरूपमन्योन्याभावं व्यञ्जयति। ततः 'यच्चान्यदसदतस्तदसत्' (वै.सू.९-१-५) इति सूत्रम्। तत्र असच्छब्दद्वयं भावप्रधानो निर्देशः। यत् अतः असतः अन्यत् असत् तत् असत् इत्यन्वयः। पूर्वोक्ताभावत्रयात् अन्यो योऽभावः सोऽत्यन्ताभाव इति। एवं स्थिते अभावस्य पृथगनुपदेशः भावपारतन्त्र्यात् न त्वभावादिति सिध्यति।

न्यायमञ्जरीकारास्तु—

'न प्रागभावादन्ये तु भिद्यन्ते परमार्थतः।
स हि वस्त्वन्तरोपाधिरन्योन्याभाव उच्यते॥
स एवावधिशून्यत्वादत्यन्ताभावतां गतः।
.... .... .... .... ....
उत्पन्नस्य विनाशो वा तदनुत्पाद एव वा।
अभावस्तत्त्वतोऽन्ये तु भेदास्त्वौपाधिका मताः॥' [1]

इति ग्रन्थेन प्रागभावप्रध्वंसभेदेनाभावो द्विविधः। अन्योन्यात्यन्ताभावौ प्रागभाव एवान्तर्भवतः। प्रागभाव एव वस्त्वन्तरप्रतियोगिकश्चेत् अन्योन्याभाव इत्युच्यते। स एवावधिशून्यश्चेत् अत्यन्ताभाव इति कथ्यते इति न्यरूपयन्।

प्राभाकराः अतिरिक्तमभावं नाङ्गीकुर्वन्ति। अभावः बुद्धिविशेषस्वरूपः, अधिकरणस्वरूपः कालविशेषस्वरूपः इति पक्षत्रयं प्रदर्शयन्ति। एतत्पक्षत्रयमपि मणौ विस्तरेण दूषितम्, तदनुसारेण मुक्तावल्यां च। दीपिकायां त्वधिकरणात्मकत्वपक्षः अनूद्य दूषित इति विशेषः।

अत्र विचार्यते। अभावाधिकरणकोऽभावः अधिकरणीभूताभावस्वरूप इति नैयायिका अपि स्वीकुर्वन्ति। तत्र 'घटाभावे न पटः'

1. न्यायमञ्जरी पृ० ५९.

इत्याधाराधेयभावः प्रतीयते । स चाधाराधेययोरभेदेऽपि आधारतावच्छेदकयोर्घटाभावत्वपटाभावत्वयोर्भेदान्निरुह्यते । तथा 'भूतले घटाभाव' इति प्रतीतिरपि भूतलत्वघटाभावत्वयोर्भेदात् निरूढा भविष्यति । अतः अधिकरणात्मकत्वमेवाभावस्यास्तु ।

शब्दाभावस्य गृहस्वरूपस्य गृहत्वेन रूपेण श्रोत्रेन्द्रियवेद्यत्वाभावेऽपि शब्दाभावत्वेन रूपेण तद्वेद्यत्वं भविष्यति । यथा नैयायिकमतेऽपि रूपाभावाधिकरणकरसाभावस्य रूपाभावात्मकत्वेऽपि रूपाभावत्वेनैव चाक्षुषविषयता न रसाभावत्वेनेत्यङ्गीक्रियते, तद्वत् । तथा च शब्दाद्यभावानां प्रत्यक्षत्वानुपपत्तिरपि नास्ति ।

तथा ज्ञानविशेषत्वेन कालविशेषत्वेन चाप्रत्यक्षत्वेऽपि तत्तदभावत्वेन ज्ञानविशेषकालविशेषयोः प्रत्यक्षता संभवत्येव । अतोऽभावस्यानतिरिक्तत्वेऽपि न कोऽपि दोष इति ।

अत्र समाधीयते । प्रायशो लोके भिन्नयोरेवाधाराधेयभावः प्रसिद्धः । स चाभावातिरिक्तत्ववादिनैयायिकमते सूपपादः । अभावाधिकरणकाभावस्थले गत्यन्तरविरहादाधाराधेयभावप्रतीतेर्गौणतया निर्वाहेऽपि गत्यन्तरसत्त्वे तथा निर्वाहस्यानुचितत्वात् । अतोऽधिकरणात्मकत्वपक्षो न युक्तः ।

ज्ञानविशेषरूपत्वपक्षे कालविशेषरूपत्वपक्षे च शब्दाद्यभावानां प्रत्यक्षत्वानुपपत्तिदोषो दुरुद्धरः । तत्र यदुक्तं ज्ञानत्वेन कालत्वेन च रूपेण तयोर्बहिरिन्द्रियग्राह्यत्वाभावेऽपि शब्दाद्यभावत्वेन तत्त्वमक्षतमिति, तत्रोच्यते । रूपान्तरेणापि तयोः तादृशप्रत्यक्षविषयत्वं न संभवति । तथा हि गेहे शब्दो नास्तीति प्रतीतौ शब्दाभावत्वेन रूपेण किं स्वात्मकज्ञानं विषयः ? पुरुषान्तरीयज्ञानं वा? नाद्यः, प्रत्यक्षे विषयस्य कारणत्वात् पूर्वक्षणे स्वात्मकज्ञानस्याभावात् पूर्वक्षणेऽसतः कारणत्वासंभवात् । न द्वितीयः, एकस्मिन् अभावज्ञाने भूयसीनां पुरुषान्तरीयज्ञानव्यक्तीनां विषयत्वकल्पने गौरवात् । एवं कालविशेष-

स्यापि न तादृशप्रत्यक्षविषयत्वं संभवति, तादृशज्ञानोत्पत्तिक्षणात्मक-कालस्य पूर्ववृत्तित्वाभावात्। पूर्वक्षणात्मककालस्य च तत्कालेऽभावात्। न च ज्ञानोत्पत्तिक्षणतत्पूर्वक्षणोभयावस्थायिस्थूलकालस्य 'गेहे शब्दो नास्ति' इत्यादिप्रत्यक्षविषयत्वमस्तु, तथा च नोक्तदोष इति वाच्यम्। तथापि तादृशक्षणद्वयावस्थायिनानापदार्थरूपस्थूलकालस्य एकैकतादृशज्ञानविषयत्वकल्पने गौरवादिति निरूपयामासुः मुक्तावलीमञ्जूषाकाराः।

## [१५] आख्यातार्थविचारः शाब्दबोधप्रक्रिया च

दीपिकायां प्रकाशिकायां च विध्यर्थनिरूपणप्रसङ्गेन आख्यातस्य कृत्यर्थकत्वं प्रसाध्य देवदत्तः तण्डुलं पचतीति वाक्यस्य तण्डुलकर्मकपाकानुकूलकृतिमान् देवदत्त इत्यर्थ इति निरूपितम्। एतत्तत्वं किंचिद्विचार्यते।

शाब्दबोधो नाम शब्दजन्यं ज्ञानम्। शब्दो नाम परस्परान्वितार्थप्रतिपादकपदसमूहात्मकं वाक्यम्। पदसमूहो वाक्यं इत्येतावन्मात्रोक्तौ 'गौरश्वः पुरुषो हस्ती' इत्यादेः अनन्वितार्थकपदसमूहस्यापि वाक्यत्वं स्यात्। अतः परस्परान्वितार्थकेत्युक्तम्। गौर्गच्छति, अश्वो धावति इत्यनयोः प्रत्येकं वाक्यत्वेऽपि तयोर्द्वयोर्मिलित्वा एकवाक्यत्वं न भवति, द्वयोर्वाक्यार्थयोः परस्परमनन्वयात्। तस्मात् साक्षाद्वा परंपरया वा स्वार्थविशेषणीभूतार्थप्रतिपादकयावत्पदविशिष्टं विशेष्यभूतार्थप्रतिपादकं पदमेकवाक्यमिति पर्यवस्यति। इदमेव 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यात्' इति पूर्वमीमांसासूत्रे[२-१-४६] उक्तम्। एकस्मिन्नर्थे अन्येषां विशेषणतयान्वयः इति सूचनायैव 'साकाङ्क्षं चेद्विभागे स्यात्' इत्युक्तम्।

तत्र पदेषु बहुषु प्रयुज्यमानेषु कस्य पदार्थस्य किं विशेषणम्? किं किमवान्तरविशेष्यम्? किं मुख्यविशेष्यमिति विचारणीयं भवति। तत्र वैयाकरणाः मीमांसकाः नैयायिकाश्च भिन्नभिन्नं पन्थानमाश्रयन्ते।

वैयाकरणमतम्

तथा हि वैयाकरणास्तावदेवं मन्यन्ते — कारकाणां क्रियायामन्वयः इत्यनुभवात् क्रियापदे प्रायः सुबन्तानामन्वय इति प्रतीयते । नीलोत्पलमानयतीत्यत्र समासार्थस्य नीलत्वविशिष्टोत्पलस्य द्वितीयार्थे कर्मणि तस्य धात्वर्थे आनयनेऽन्वय इति नीलत्वविशिष्टोत्पलकर्मकमानयनमिति बोधो भवति । नीलमुत्पलमानयेति व्यासस्थलेऽपि नीलकर्मकमानयनम् उत्पलकर्मकानयनमिति पृथक् पृथक् बोधस्याननुभवात् द्विः कर्मत्वभानं विहाय समानाधिकरणयोर्नीलोत्पलपदयोः नीलत्वविशिष्टोत्पलरूपैकार्थपरत्वमङ्गीकृत्य तस्य धात्वर्थे आनयने द्वितीयार्थकर्मत्वद्वारा अन्वयस्वीकारात् नीलत्वविशिष्टोत्पलकर्मकमानयनमित्येव बोधः । एवं च सविशेषणानां विशेषणरहितानां वा कर्त्रतिरिक्तानां सर्वेषां कारकाणां धात्वर्थक्रियान्वयस्य नैयायिकादिभिरपि स्वीकृतत्वात् प्रथमान्तार्थस्य कर्तृकारकस्यापि तथैवान्वय उचितः, समानन्यायात् । तथा च देवदत्तः नीलोत्पलमानयतीत्यत्र द्वितीयार्थः कर्म, तत्र प्रकृत्यर्थस्य नीलत्वविशिष्टोत्पलस्याभेदसंबन्धेनान्वयः । कर्मणः धात्वर्थेऽन्वयः । तिङः कर्ता अर्थः । तत्राभेदसंबन्धेन प्रथमान्तपदार्थस्य देवदत्तस्यान्वयः । कर्तुरपि धात्वर्थे आनयनेऽन्वयः । तथा च नीलत्वविशिष्टोत्पलाभिन्नकर्मकं देवदत्ताभिन्नकर्तृकं चानयनमिति धात्वर्थमुख्यविशेष्यको बोधः । अत्र प्रमाणं तु 'भावप्रधानमाख्यातम्' इति निरुक्तवचनं 'क्रियाप्रधानमाख्यातम्' इति महाभाष्यवचनं चेत्याहुः ।

मीमांसकमतम्

मीमांसकास्तु – तिङर्थभावनामुख्यविशेष्यकं बोधं वर्णयन्ति । तथा हि तण्डुलमित्यादीनि द्वितीयान्तानि पदानि क्रियापदं विना निराकाङ्क्षं बोधं न जनयन्तीत्यनुभवसिद्धम् । तेन तिङन्तपदं विशेष्यसमर्पकमिति लभ्यते । तत्रापि 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह

ब्रूतस्तयोस्तु प्रत्ययः प्राधान्येन' इति व्युत्पत्तिबलात् प्रत्ययार्थस्यैव प्राधान्यं वक्तव्यमिति तिङर्थः भावनापरपर्याया कृतिरेव शाब्दबोधे मुख्यविशेष्यभूता। 'एवं च चैत्रस्तण्डुलं पचति' इति वाक्ये द्वितीयायाः कर्मत्वमर्थः। तत्र तण्डुलस्य आधेयतासम्बन्धेनान्वयः। कर्मत्वस्य निरूपकतासंबन्धेन (स्वनिरूपकधात्वर्थानुकूलत्वपर्यवसितेन) तिङर्थककृतावन्वयः। धात्वर्थस्य पाकस्य स्वकरणकौदनोद्देश्यकत्वसम्बन्धेन कृतावन्वयः। चैत्रपदोत्तरप्रथमायाः प्रातिपदिकार्थः चैत्रोऽर्थः। चैत्रपदं तात्पर्यग्राहकम्। प्रथमार्थस्य चैत्रस्य आधेयतासंबन्धेन भावनायामन्वयः। आख्यातार्थकालसंख्ययोरपि भावनायामेवान्वयः। संख्यायाः सामानाधिकरण्यसम्बन्धेनान्वयः, कालस्य आधेयतासंबन्धेनान्वय इति विशेषः। एवं च चैत्रनिष्ठा तण्डुलकर्मकपाककरणकौदनोद्देश्यिका वर्तमाना एका भावनेति बोधः। 'भावप्रधानमाख्यातम्' इति निरुक्ते आख्यातशब्दः तिङ्परः। भावयतीति व्युत्पत्त्या णिजन्तात् भूधातोरच्प्रत्ययान्तत्वेन निष्पन्नः भावशब्दः भावनावाची। तिङश्च संख्या कालः भावना इति त्रयोऽर्थाः। तेषु भावना प्रधानभूता इति भावनामुख्यविशेष्यकबोधमेव निरुक्तकारो मन्यत इति निरूपयन्ति।

### नैयायिकमतम्

'पण्डितश्चैत्रः' इति वाक्यम् पण्डिताभिन्नश्चैत्र इति बोधोऽनुभूयते। तत्र तिङन्तपदाभावात् धात्वर्थस्य वा तिङर्थभावनाया वा मुख्यविशेष्यतया भानं न संभवति। तथा च क्वचित् प्रथमान्तार्थमुख्यविशेष्यकबोधस्य स्वीकरणीयतया तिङन्तसमभिव्याहारस्थलेऽपि तथैव बोधवर्णनं युक्तम्। न च तत्रापि योग्यक्रियाध्याहारेणैव शाब्दबोध इति वाच्यम्। अनध्याहारेणैव निर्वाहे अध्याहारस्यायुक्तत्वात्। अपि च वैयाकरणभूषणे—'प्रायशो वाक्यस्य सुप्तिङन्तसमुदायत्वात्' इति वदन्तः कौण्डभट्टाः तिङन्तशून्यमपि वाक्यमभ्युपगच्छन्ति। तथा

आख्यातार्थव्यापाराश्रयत्वरूपस्य कर्तृत्वस्य निराकरणावसरे 'आख्यातशून्ये देवदत्तः पक्तेत्यादौ देवदत्तस्याकर्तृत्वापत्तेः' इति भूषणसारेऽपि तिङन्तरहितवाक्यप्रामाण्याङ्गीकारः प्रतीयते। एवं च तिङन्तासमभिव्याहारस्थले प्रथमान्तार्थविशेष्यकबोधस्य स्वीकार्यत्वात् चैत्रः पचतीत्यादावपि तथैव बोधवर्णनं युक्तम्। तथा च 'चैत्रः तण्डुलं पचति' इति वाक्ये तण्डुलपदोत्तरद्वितीयायाः कर्मत्वमर्थः। कर्मत्वे प्रकृत्यर्थस्य तण्डुलस्याधेयतासंबन्धेनान्वयः। कर्मत्वस्य निरूपकतासम्बन्धेन धात्वर्थे पाकेऽन्वयः। आख्यातार्थः कृतिः। तत्रानुकूलतासंबन्धेन धात्वर्थपाकस्यान्वयः। कृतेश्च आश्रयतासंबन्धेन प्रथमान्तार्थे चैत्रेऽन्वयः। आख्यातार्थस्य वर्तमानकालस्य कृतावेवान्वयः। आख्यातैकवचनस्य तु नैकत्वसंख्या अर्थः। सुबेकवचनेनैव एकत्वलाभात्। तथा च तण्डुलनिष्ठकर्मतानिरूपकपाकानुकूलवर्तमानकृतिमान् एकत्वाश्रयश्चैत्र इत्यन्वयबोधः।

किं च 'सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वम्' इति न्यायात् पूर्ववाक्यार्थे यः प्रधानः तस्यैव तच्छब्देन परामर्शो वक्तव्यः। धात्वर्थमुख्यविशेष्यकस्य आख्यातार्थकृतिमुख्यविशेष्यकस्य वा बोधस्याङ्गीकारे 'पुरुषः प्रयाति, तस्य पादयोरभिवादय' इत्यत्रानुपपत्तिः। पुरुषः प्रयाति इति वाक्ये प्रधानस्य गमनस्य कृतेर्वा तच्छब्देन परामर्शे पादयोरभिवादयेत्यनेनान्वयस्यासंगतेः। नैयायिकमते तु पुरुषस्यैव प्रधानतया तस्य तच्छब्देन परामर्शे पादयोरभिवादयेत्यनेनान्वयः साधु संगतः।

किं च प्रत्यक्षानुभवे यस्य येन संबन्धः प्रतीतस्तस्य तेन संबन्धं तथैव ज्ञापयितुं वाक्यं प्रयुज्यते। प्रत्यक्षेण च कारकाणां क्रियान्वय एवावगम्यते, न तु कृत्यपरपर्यायभावनान्वयः। अतो मीमांसकमतं नोचितम्। नापि वैयाकरणमतम्। प्रत्यक्षे धर्मस्य प्रकारतायाः धर्मिणो विशेष्यतायाश्चानुभवसिद्धतया धर्मभूतधात्वर्थापेक्षया धर्मिणः

प्रथमान्तार्थस्यैव विशेष्यत्वौचित्यात् । तत्रापि प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थस्य प्रधानत्वात् तिङ्वाच्यायाः कृतेः धात्वर्थं प्रति विशेष्यत्वात् तादृशकृत्याश्रयस्य देवदत्तादेर्विशेष्यत्वमुचितम् । सकलकर्मादिकारकप्रेरकस्य क्रियाकर्तुः सर्वापेक्षया प्राधान्यं हि आनुभविकम् ।

अपि च पाणिनिः 'प्रातिपदिकार्थ' इत्यादिना सूत्रेण प्रथमायाः प्रातिपदिकार्थ एवार्थ इति वदन् कारकार्थकत्वं नानुमन्यते । तेन च प्रथमान्तार्थस्य क्रियायामन्वयः तस्या नानुमत इति स्पष्टम् । कारकार्थकत्वे हि क्रियान्वयमूलकः क्रियाप्रधानकत्वनिर्बन्धः । तस्मात् प्रथमान्तार्थविशेष्यकबोध एवासति बाधके उचितः । सति तु बाधके भावाख्यातस्थले चैत्रेण सुप्यते इत्यादौ, पश्य मृगो धावतीत्यादौ च धात्वर्थादिमुख्यविशेष्यकोऽपि बोधः स्वीक्रियते इति नैयायिकसिद्धान्तसारः ।



# विषयानुक्रमणिका

विषयः | पृष्ठसंख्या

## प्रत्यक्षपरिच्छेदः

## अनुमानपरिच्छेदः

शब्दपरिच्छेदः



प्रामाण्यवादः

श्रीः

श्रीगुरुचरणारविन्दाभ्यां नमः

# तर्कसङ्ग्रहः

# दीपिका-प्रकाशिका-बालप्रियासमन्वितः

## तर्कसङ्ग्रहः

### मङ्गलवादः

**निधाय हृदि विश्वेशं विधाय गुरुवन्दनम् ।**
**बालानां सुखबोधाय क्रियते तर्कसङ्ग्रहः ॥**

## दीपिका

विश्वेश्वरं साम्बमूर्तिं प्रणिपत्य गिरां गुरुम् ।
टीकां शिशुहितां कुर्वे तर्कसङ्ग्रहदीपिकाम् ॥

चिकीर्षितस्य ग्रन्थस्य निर्विघ्नपरिसमाप्त्यर्थं शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकम् इष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षायै ग्रन्थतो निबध्नन् चिकीर्षितं प्रतिजानीते - **निधायेति** ।

ननु मङ्गलस्य समाप्तिसाधनत्वं नास्ति । मङ्गले कृतेऽपि किरणावल्यादौ समाप्त्यदर्शनात्, मङ्गलाभावेऽपि कादम्बर्यादौ समाप्तिदर्शनाच्च अन्वयव्यतिरेकाभ्यां व्यभिचारात् इति चेत् - न । किरणावल्यादौ विघ्नबाहुल्यात् समाप्त्यभावः । कादम्बर्यादौ ग्रन्थाद्बहिरेव मङ्गलं कृतम्, अतो न व्यभिचारः ।

ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणमिति चेत् - न । शिष्टाचारानुमितश्रुतेरेव प्रमाणत्वात् । तथा हि - मङ्गलं वेदबोधितकर्तव्यताकम्, अलौकिकाविगीतशिष्टाचारविषयत्वात्, दर्शादिवत् । भोजनादौ व्यभिचारवारणाय अलौकिकेति । रात्रिश्राद्धादौ व्यभिचारवारणाय अविगीतेति । शिष्टपदं स्पष्टार्थम् । "न कुर्यात् निष्फलं कर्म"

इति जलताडनादेरपि निषिद्धत्वात् । तर्क्यन्ते - प्रतिपाद्यन्ते इति तर्काः - द्रव्यादिपदार्थाः, तेषां सङ्ग्रहः - सङ्क्षेपेण स्वरूपकथनं क्रियते इत्यर्थः । कस्मै प्रयोजनाय इति, अत आह – **सुखबोधायेति ।** सुखेन - अनायासेन यो बोधः पदार्थतत्त्वज्ञानं तस्मा इत्यर्थः । ननु बहुषु तर्कग्रन्थेषु सत्सु किमर्थमपूर्वोऽयं ग्रन्थः क्रियत इति, अत आह- **बालानामिति** । तेषामतिविस्तृतत्वात् बालानां बोधो न जायत इत्यर्थः। ग्रहणधारणपटुर्बालः न तु स्तनन्धयः । किं कृत्वा क्रियत इति, अत आह – **निधायेति** । **विश्वेशम्** - जगन्नियन्तारम् । **हृदि निधाय** - नितरां स्थापयित्वा । सदा तद्ध्यानपरो भूत्वा इत्यर्थः । गुरूणाम् - विद्यागुरूणाम् , वन्दनम् - नमस्कारम् , **विधाय** - कृत्वा इत्यर्थः ।।

## प्रकाशिका

वन्दे गुरुं शिवं साम्बं दक्षिणामूर्तिमव्ययम् ।
यद्वन्दनेन मन्दोऽपि विन्देद्गुरुसमानताम् ।।

प्रारिप्सितग्रन्थस्य निर्विघ्नपरिसमाप्तये समाचरितं मङ्गलम् ईश्वरनत्यात्मकं शिष्यशिक्षायै निबध्नन् चिकीर्षितं प्रतिजानीते - **विश्वेश्वरमिति** । **गिरां गुरुम्** - निखिलविद्यानामुपदेष्टारम् । इदमपि विश्वेश्वरे विशेषणम् । 'गिरं गुरुम्' इति पाठे तु सरस्वतीं विद्यागुरुं च प्रणिपत्य इत्यर्थो बोध्यः । स्वग्रन्थस्य इतरग्रन्थैरगतार्थतां दर्शयति - **शिशुहितामिति** । **तर्कसङ्ग्रहदीपिकाम्** - तर्कसङ्ग्रहार्थप्रकाशिकाम् ।

आचरितस्य मङ्गलस्य तन्निबन्धनस्य च फलं दर्शयति— **चिकीर्षितस्य** इत्यादिना ।

ननु समाप्तिं प्रति मङ्गलस्य कारणता स्यात् चेत् तदा तदाचरणं युज्यते । सैव न सम्भवतीत्याशङ्कते–**नन्विति** । **व्यभिचारादिति।** अन्वयव्यतिरेकव्यभिचारज्ञानरूपप्रतिबन्धकसत्त्वात् नियतान्वयव्यति-

रेकसहचारनिश्चयरूपकारणासम्भवेन न कारणत्वनिश्चय इत्यभिसन्धिः। **समाप्त्यभाव** इति । अतो न व्यभिचार इत्यनेनान्वयः । विघ्नान्यून-सङ्ख्याकस्य बलवत्तरस्य वा मङ्गलस्य विघ्ननिरसनद्वारा समाप्ति-साधनत्वेन तादृशमङ्गलाभावात् नान्वयव्यभिचार इति भावः । **बहि-रेवे**ति । जन्मान्तर एवेत्यर्थः । अतः कुत्रचित् ग्रन्थकर्तुर्नास्तिकत्वेऽपि न क्षतिः। **अत** इति । तादृशमङ्गलस्य विघ्नध्वंसद्वारा सत्वात् न व्यतिरेक-व्यभिचार इत्यर्थः । एवं च कारणत्वं सिद्ध्यतीति भावः । परे तु '**अतः**-उक्तहेतुद्वयात् **न व्यभिचारः**-नान्वयव्यतिरेकव्यभिचारः' इति व्याचख्युः। **मणिकृतस्तु** 'मङ्गलस्य विघ्नध्वंस एव फलम् । समाप्तिस्तु स्वसामग्री-वशादेव' इत्याहुः । एतत्तत्त्वमस्मदीय**चिन्तामणिव्याख्यायाम्** अनु-सन्धेयम् ।

मङ्गलस्य श्रुतिबोधितकर्तव्यताकत्वं व्यवस्थापयितुं शङ्कते—**नन्वि**ति । **अनुमितश्रुतेरेवे**ति । अत्रायमाशयः-श्रुतेः वेदबोधितकर्त-व्यताकत्वरूपवक्ष्यमाणविधेयकोटिप्रविष्टत्वेऽपि तदन्तर्भावेण विधेयत्व-मभ्युपगम्यते । तच्छ्रुतेः अनुमितेः पूर्वमसिद्धत्वात् । एतेन 'वह्न्यादि-साध्यकानुमितिविषयतामादाय वह्नित्वादिकमनुमितम्' इति व्यवहारा-भावेन श्रुतावनुमितत्वव्यवहारः कथमिति शङ्का निरस्ता । श्रुतौ विधेयत्वाभ्युपगमेन तादृशव्यवहारे बाधकाभावात् । एवकारोऽप्यर्थकः । तेन 'मङ्गलं कर्तव्यम् समाप्तिफलकत्वात्' इत्यनुमानरूपप्रमाणान्तर-सत्त्वेऽपि न क्षतिः । अन्ये तु–'स्वबोधितकर्तव्यताकत्वसम्बन्धेन श्रुते-रेव साध्यता । अग्रिमग्रन्थस्यात्रैव तात्पर्यम् । एवं च श्रुतेरनुमितत्वो-पपत्तिः' इत्याहुः ।

**अलौकिके**ति विधिमन्तरा रागादिप्राप्तभिन्नेत्यर्थः । **अवि-गीते**ति धर्मशास्त्राविरुद्धेत्यर्थः । **शिष्टे**ति वेदोक्ततत्त्वज्ञानेन वेद-विहितकर्मकारीत्यर्थः । वेदोक्ताहिंसादिकर्तरि बौद्धेऽतिव्याप्तिवारणाय तृतीयान्तम् । **आचारविषयत्वादि**ति । **आचारः**- कृतिः । तस्याः वृत्त्यनि-

यामकविषयतासम्बन्धेन हेतुता विवादग्रस्ता इति तद्विषयत्वस्य हेतुत्वानुधावनम् । यथाक्रमं हेतुविशेषणप्रयोजनमाह — **भोजनादौ** इत्यादिना । अलौकिकाविगीताचारविषयत्वस्यैव हेतुताऽस्तु । अशिष्टाचारविषये तादृशहेतोरसत्त्वेन व्यभिचारासम्भवात् इत्याशङ्कामिष्टापत्त्या परिहरति — **शिष्टपदमि**ति । जलताडनादौ अशिष्टाचारविषये तादृशहेतोरसत्त्वं स्फुटयति—**न कुर्यादि**ति । स्वर्गादिफले व्यभिचारवारणाय **आचारविषयत्वे**ति । विधेयतया आचारविषयत्वार्थकमिति सङ्क्षेपः । तर्कपदस्यारोपार्थकत्वभ्रमं वारयितुं द्रव्यादिसाधारणतर्कत्वं निर्वक्ति—**तर्क्यन्त** इति । उपादानरूपसङ्ग्रहस्यासम्भवादाह—**सङ्क्षेपेणे**ति । **स्वरूपकथनम्**—स्वरूपज्ञानानुकूलशब्दः । एतावता द्रव्यादिपदार्था विषयाः, पदार्थतत्त्वावधारणं प्रयोजनम्, सम्बन्धश्च प्रतिपाद्यप्रतिपादकभावः, पदार्थतत्त्वावधारणकामोऽधिकारीत्यनुबन्धचतुष्टयं प्रेक्षावत्प्रवृत्त्यङ्गं सूचितम् । षष्ठीतत्पुरुषभ्रमवारणायाह—**सुखेने**ति । मुखबोधरूपप्रयोजनस्यान्यतः सिद्धत्वेन एतद्ग्रन्थकरणे प्रयोजनाकाङ्क्षा न शाम्यतीत्याशयेनावतारयति—**नन्वि**ति । **तेषाम्**—भाष्यादिग्रन्थानाम् ॥

## बालप्रिया

निस्समाभ्यधिकसद्गुणाकरं भक्तरक्षणरतं दयानिधिम् ।
नित्यसूरिभिरनारतं स्तुतं वन्दिषीय वृषशैलनायकम् ॥ १ ॥

श्रीशैलवंशनवमौक्तिकतुल्यभासं
वेदान्तलक्ष्मणमुनीन्द्रपदाब्जभृङ्गम् ।
सत्तर्कतन्त्रनिगमान्तनितान्ततान्तं
श्रीमन्नृसिंहगुरुवर्यमहं नमामि ॥ २ ॥

नृत्यत्कलं सकलदिक्षु विभातकीर्तिं
शास्त्रेषु निष्ठितधियं बहुशिष्ययुक्तम् ।

आचारपूतमनवद्यगुणाभिरामं
श्रीदेवनाथगुरुमन्वहमानतोऽस्मि ॥ ३ ॥

न्यायादिशास्त्रविदमात्मगुणोज्ज्वलं तं
सम्भावनादिपरिपन्थिनमात्मवन्तम् ।
मत्तातपादमनघं क्षमया समेतं
श्रीकृष्णतातगुरुवर्यमहं प्रपद्ये ॥ ४ ॥

प्रौढगम्भीरसंक्षिप्तवचोविन्यासभासुरा ।
नीलकण्ठेन रचिता दीपिकायाः प्रकाशिका ॥ ५ ॥

गदाधरादिग्रन्थेषु येषां परिचयो दृढः ।
प्रकाशिकाशयं गूढं ते सम्यग्ज्ञातुमीशते ॥ ६ ॥

बालानामुपकाराय यथाशक्ति यथामति ।
विशदां सरलां बालप्रियां व्याख्यां करोम्यहम् ॥ ७ ॥

मूलार्थज्ञानमात्रं हि ममोद्देश्यं यतस्ततः ।
अनपेक्षितविस्तारविचारावत्र नादृतौ ॥ ८ ॥

अथ तत्रभवान् तर्ककर्कशविचारचातुरीधुरीणः नीलकण्ठभट्टाचार्यः तर्कसङ्ग्रहदीपिकां प्रकाशिकाभिधया स्वकीयव्याख्यया प्रकाशयितुमिच्छन् चिकीर्षितायाः व्याख्यायाः निर्विघ्नपरिसमाप्तिमुद्दिश्य शिष्टाचारपरम्पराप्राप्तं मङ्गलमातनोति— **वन्दे गुरुमिति** । ननु तर्कसङ्ग्रहदीपिकामित्यस्य पदार्थविषयकज्ञानजनकसङ्क्षिप्तशब्दात्मकग्रन्थप्रकाशिकामित्यर्थः यथाश्रुतलभ्यः । तत्र शब्दात्मकदीपिकाग्रन्थस्य शब्दात्मकतर्कसङ्ग्रहप्रकाशकत्वं नोपपद्यते, दीपिकाग्रन्थेन तर्कसङ्ग्रहग्रन्थार्थस्यैव प्रकाशनात् इत्यतो व्याचष्टे— **तर्कसङ्ग्रहार्थप्रकाशिकामिति** । यथा अपवरके आरोपितो दीपः अपवरकान्तर्निहितानि वस्तूनि प्रकाशयति, तथा दीपिकाख्यो ग्रन्थोऽपि तर्कसङ्ग्रहान्तर्निगूढानर्थान् प्रकाश-

यतीति भावः। तथा च तर्कसङ्ग्रहदीपिकामित्यत्र तर्कसङ्ग्रहशब्दः तर्कसङ्ग्रहग्रन्थप्रतिपाद्यार्थपर इति तात्पर्यम् ।

चिकीर्षितस्येत्यादिदीपिकाग्रन्थात् मङ्गलस्य निर्विघ्नपरिसमाप्तिः प्रयोजनम्, तन्निबन्धनस्य शिष्यशिक्षा प्रयोजनमिति लभ्यते । तत्र मङ्गल-ग्रन्थसमाप्त्योः कार्यकारणभावो न सम्भवति, अन्वयव्यभिचारात् व्यतिरेकव्यभिचाराच्चेति शङ्कितं "ननु मङ्गलस्य" इत्यादिना दीपिकायाम् । तत्र व्यभिचारस्य कथं कार्यकारणभावाभावप्रयोजकत्वमित्याशङ्कायामाह प्रकाशिकायाम् **अन्वयव्यतिरेकेत्यादिना** । अयं भावः- कारणतानिश्चयं प्रति नियतान्वयसहचारनिश्चयः नियतव्यतिरेकसहचारनिश्चयश्च कारणम् । नियतान्वयसहचारो नाम [1]कारणव्यापककार्यकत्वम् । नियतव्यतिरेकसहचारो नाम [2]कारणाभावव्यापककार्याभावकत्वम् । अन्वयव्यभिचारो नाम कारणसत्त्वेऽपि कार्याभावः, कारणाव्यापककार्यकत्वमिति यावत् । व्यतिरेकव्यभिचारो नाम कारणाभावेऽपि कार्यसत्त्वम्, कारणाभावाव्यापककार्याभावकत्वमिति यावत् । तत्र नियतान्वयसहचारज्ञानं प्रति अन्वयव्यभिचारज्ञानं प्रतिबन्धकम् । नियतव्यतिरेकसहचारज्ञानं प्रति व्यतिरेकव्यभिचारज्ञानं प्रतिबन्धकम् । प्रकृते मङ्गलरूपकारणे सत्यपि किरणावल्यादौ समाप्तिरूपकार्यादर्शनात् मङ्गलं स्वाव्यापकसमाप्तिकमिति निश्चयरूप-

---



॥ श्रीः ॥

प्रणौमि दक्षिणामूर्तिव्यासशङ्कररूपिणम् ।
ज्योतिर्मयं गुरुं चन्द्रशेखरेन्द्रसरस्वतीम् ॥

1. कारणव्यापककार्यकत्वमिति । यत्र यत्र चक्रादिसहकृतदण्डरूपं कारणं तत्र घटरूपं कार्यमिति व्याप्त्या दण्डव्यापकघटात्मककार्यकत्वस्य दण्डे सत्त्वात् दण्डः नियतान्वयसहचारवानिति भावः ।

2. कारणाभावव्यापककार्याभावकत्वमिति । यत्र यत्र चक्रादिसहकृतदण्डाभावः तत्र घटाभाव इति दण्डाभावव्यापको घटाभावः । तथा च स्वाभावव्यापककार्याभावकत्वात् दण्डः नियतव्यतिरेकसहचारवानिति भावः ।

प्रतिबन्धकसत्त्वात् मङ्गलं स्वव्यापकसमाप्तिकमित्याकारकनियतान्वय-सहचारनिश्चयो न भवति । एवं मङ्गलरूपकारणाभावेऽपि कादम्बर्यादौ समाप्तिरूपकार्यदर्शनात् मङ्गलाभावव्यापकत्वं समाप्त्यभावे नास्ति, मङ्गलाभाववति [1]समाप्तेः सत्त्वात् । तथा च मङ्गलं स्वाभावाव्यापकसमाप्त्यभावकमिति निश्चयरूपप्रतिबन्धकसत्त्वात् मङ्गलं स्वाभावव्यापकसमाप्त्यभावकमित्याकारकनियतव्यतिरेकसहचारनिश्चयो न भवति । तथा च नियतान्वयव्यतिरेकसहचारनिश्चयरूपस्य कारणस्याभावात् मङ्गलं समाप्तिकारणमित्याकारकःमङ्गले समाप्तिनिरूपितकारणत्वावगाही निश्चयो न भवतीति ।

ननु किरणावल्यादौ मङ्गले सत्यपि समाप्त्यभावात् अन्वयव्यभिचार इति शङ्कायाः समाधानार्थं हि 'किरणावल्यादौ विघ्नबाहुल्यात् समाप्त्यभावः' इति ग्रन्थः प्रावर्तत । तेन तु ग्रन्थेनान्वयव्यभिचार एव दृढीकृतः, कारणे मङ्गले सत्यपि समाप्त्यभावस्य प्रतिपादनात् इत्याशङ्क्य यथा तस्मात् ग्रन्थात् अन्वयव्यभिचारस्य परिहारो लभ्येत तथा तात्पर्यं कथयति–**विघ्नान्यूनसङ्ख्याकस्ये**ति । मङ्गलं हि न साक्षात् समाप्तिकारणम्, किं तु विघ्नध्वंसद्वारा । विघ्नध्वंसश्च विघ्नान्यूनसङ्ख्याकात् बलवत्तराद्वा मङ्गलात् भवति । तथा च विघ्नान्यूनसङ्ख्याकं बलवत्तरं वा मङ्गलं समाप्तिकारणम् । किरणावल्यादौ च विघ्नानां बहुत्वात् तादृशं मङ्गलं नास्तीति समाप्तिरूपं कार्यं नाभूत् । अतः कारणे सति कार्याभावात्मकः अन्वयव्यभिचारो नास्तीति भावः । विघ्नसमसङ्ख्याकस्येत्युक्तौ विघ्नाधिकसङ्ख्याकस्य मङ्गलस्य कारणत्वमिष्टं नोपपद्येतेत्यत उक्तं-**विघ्नान्यूनसङ्ख्याकस्ये**ति । विघ्नापेक्षया न्यूनसङ्ख्याकमपि मङ्गलं बलवत्तरं चेत् तस्य विघ्ननाशकत्वमिष्यते ।

---

1. समाप्तेः सत्त्वादिति । तथा च मङ्गलाभाववति समाप्त्यभावाभावरूपसमाप्तेः सत्त्वात् तत्प्रतियोगित्वमेव समाप्त्यभावस्येति मङ्गलाभाववन्निष्ठात्यन्ताभावाप्रतियोगित्वरूपं मङ्गलाभावव्यापकत्वं समाप्त्यभावस्य नास्तीति भावः ।

विघ्नान्यूनसङ्ख्याकस्येत्युक्तौ तत्सङ्ग्रहो न स्यादित्यालोच्योक्तम् - **बलवत्तरस्य वे**ति । ननु कादम्बर्यादौ नास्तिककृते ग्रन्थे मङ्गलाभावेऽपि समाप्तिदर्शनात् व्यतिरेकव्यभिचार इति शङ्कायाः परिहारार्थं हि 'कादम्बर्यादौ ग्रन्थाद्बहिरेव मङ्गलं कृतमतो न व्यभिचारः' इति दीपिकाग्रन्थः प्रवृत्तः । तेन च **बहिरेव** ग्रन्थारम्भे मङ्गलनिबन्धनमकृत्वा, मङ्गलं कृतम्, मङ्गलनिबन्धनमेव न कृतम्, मङ्गलं तु कृतमेवेत्यर्थो लभ्यते । स तु न युक्तः; नास्तिकेन कादम्बर्यादिग्रन्थप्रणेत्रा ईश्वरनमस्कारादिरूपमङ्गलकरणासम्भवादित्याशङ्क्य व्याचष्टे-**बहिरेवे**ति । **जन्मान्तर एवेत्यर्थ** इति । तथा च तादृशग्रन्थकर्तुः एतज्जन्मनि नास्तिकत्वेऽपि जन्मान्तरे आस्तिकत्वात् तदानीं कृतात् मङ्गलात् अस्मिन् जन्मनि समाप्तिः । अतः कारणाभावेऽपि कार्यरूपः व्यतिरेकव्यभिचारो दुर्वच इत्याशयः । ननु जन्मान्तरीयमङ्गलस्य तदानीमेव नष्टत्वात् एतज्जन्मीयसमाप्त्यव्यवहितपूर्वमसतस्तस्य [1]कथं कारणत्वं, कथं वा व्यतिरेकव्यभिचारपरिहार इत्याशङ्क्य स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन मङ्गलस्य कारणत्वात् मङ्गलाभावेऽपि तज्जन्यविघ्नध्वंसरूपद्वारसत्त्वात् कारणत्वमुपपद्यते, यथा यागस्य नाशेऽपि तज्जन्यापूर्वरूपद्वारस्य स्वर्गाव्यवहितपूर्वं सत्त्वात् यागस्य स्वर्गकारणत्वं तद्वदित्याशयेन समाधत्ते—**तादृशमङ्गलस्य विघ्नध्वंसद्वारे**ति। **एवं च कारणत्वं सिध्यती**ति । पूर्वोक्तरीत्या अन्वयव्यतिरेकव्यभिचारयोः परिहृतत्वात् अन्वयव्यतिरेकव्यभिचारनिश्चयरूपप्रतिबन्धकाभावात् नियतान्वयव्यतिरेकसहचारनिश्चयरूपकारणसत्त्वात् मङ्गलस्य समाप्तिकारणत्वनिश्चयो भवतीत्यर्थः । अथवा एवं च - जन्मान्तरीयमङ्गलस्य विघ्नध्वंसद्वारा सत्त्वात् जन्मान्तरीयमङ्गलस्य [2]समाप्त्य-

1. कथं कारणत्वमिति । कार्याव्यवहितप्राक्क्षणवृत्तित्वस्यैव कारणत्वपदार्थत्वादिति भावः ।

2. समाप्त्यव्यवहितेत्यादि । तथा च साक्षात्सम्बन्धेन समवायेन समाप्तेः पूर्वं मङ्गलस्याभावेऽपि स्वजन्यविघ्नध्वंसवत्त्वसम्बन्धेन सत्त्वात् समाप्त्यव्यवहितपूर्वक्षणवृत्तित्वमस्तीति भावः ।

व्यवहितपूर्ववृत्तित्वरूपं कारणत्वं सिध्यतीति भावः । **उक्तहेतुद्वयादिति** - 'किरणावल्यादौ विघ्नबाहुल्यात् समाप्त्यभावः, कादम्बर्यादौ ग्रन्थात् बहिरेव मङ्गलं कृतम्' इति पूर्वग्रन्थोक्तहेतुद्वयादित्यर्थः । **स्वसामग्रीवशादिति** । स्वस्याः - समाप्तेः सामग्री - बुद्धिप्रतिभादिकारणकलापः तद्वशात्-तदधीनतयेत्यर्थः। सत्यपि मङ्गले बुद्धिप्रतिभादिकारणकलापाभावे गृन्थसमाप्तेरसम्भवात् बुद्धिप्रतिभादिकमेव समाप्तिं प्रति कारणम् । मङ्गलं तु समाप्तिप्रतिबन्धकविघ्नोत्सारणे कारणम् इति मणिकाराशयः ।

मङ्गलं कर्तव्यमिति ज्ञानमन्तरा मङ्गलं न कोऽपि कुर्यात् । [1] तद्विषयककृतिं प्रति तद्विशेष्यककृतिसाध्यताज्ञानस्य कारणत्वात् । कर्तव्यत्वं च कृतिसाध्यत्वम् । मङ्गलं कर्तव्यमिति ज्ञानं च शिष्टानां ग्रन्थारम्भे मङ्गलानुष्ठानरूपेण आचारेण अनुमिता या 'समाप्तिकामो मङ्गलमाचरेत' इति श्रुतिः तया भवति इत्याशयेन पूर्वं 'शिष्टाचारानुमितश्रुतिबोधितकर्तव्यताकमिष्टदेवतानमस्कारात्मकं मङ्गलम्' इति **दीपिकायामुक्तम्** । तेन मङ्गलस्य कर्तव्यत्वे शिष्टाचारानुमिता श्रुतिः प्रमाणमिति लभ्यते । तदेव श्रुतिप्रमाणककर्तव्यताकत्वं मङ्गलस्य शङ्कासमाधानरूपेण स्थापयति 'ननु मङ्गलस्य कर्तव्यत्वे किं प्रमाणम्' इत्यादिना दीपिकाग्रन्थेन । तदेतदाह **प्रकाशिकायां—मङ्गलस्य श्रुतिबोधितकर्तव्यताकत्वं व्यवस्थापयितुमिति** ।

ननु मङ्गलस्य कर्तव्यत्वे 'समाप्तिकामो मङ्गलमाचरेत' इति श्रुतिर्न प्रमाणम् । तादृशश्रुतेः पठ्यमानवेदे कुत्राप्यदर्शनात् इत्याशङ्कायां शिष्टाचारानुमितेति श्रुतेर्विशेषणमुपात्तं **दीपिकायाम्** । यद्यपि श्रुतिः न प्रत्यक्षा तथापि आचारेण लिङ्गेन तादृशी श्रुतिरनुमीयते । तथा च आचारानुमिता श्रुतिः मङ्गलकर्तव्यत्वे प्रमाण-

---

1. **तद्विषयककृतिं प्रतीति । यथा यागविषयकप्रयत्नं प्रति 'यागः मत्कृतिसाध्यः' इत्याकारकं यागविशेष्यकं कृतिसाध्यत्वप्रकारकं ज्ञानं कारणमिति भावः ।**

मिति तदाशयः । अनुमानप्रकारश्च 'मङ्गलं वेदबोधितकर्तव्यताकम्' इत्यादिग्रन्थेन प्रदर्शितः । तस्मिन् अनुमाने वेदबोधितकर्तव्यताकत्वं हि साध्यम्, न तु वेदः । यत् अनुमानसाध्यं - अनुमितिविधेयं तदेवानुमितमित्युच्यते । तथा च वेदबोधितकर्तव्यताकत्वं शिष्टाचारानुमितं न तु वेद इति कथं श्रुतेः शिष्टाचारानुमितत्वमुपपद्यते? अनुमितिविधेयतावच्छेदकस्यापि अनुमितिविषयत्वमात्रेण अनुमितिविधेयत्वमङ्गीकृत्यानुमितमिति व्यवहारोपपादने वह्नित्वमनुमितमित्यपि व्यवहारापत्तेरित्याशङ्कायाम् आशयमाविष्करोति–**अत्रायमाशय** इति ।

**वेदबोधिते**त्यादि । वेदबोधितकर्तव्यताकत्वरूपं यत् वक्ष्यमाणं विधेयं साध्यं तत्कोटिप्रविष्टत्वेऽपि तदवच्छेदकत्वेऽपीत्यर्थः । **अपिना** विधेयतावच्छेदकस्य विधेयत्वासम्भवरूपो विरोधो द्योत्यते । **तदन्तर्भावेण**–विधेयतावच्छेदकान्तर्भावेण । **तच्छ्रुतेः**—'समाप्तिकामो मङ्गलमाचरेत' इति श्रुतेः । **अनुमितेः पूर्वमसिद्धत्वादि**ति । तथा च अनुमितेः पूर्वमसिद्धत्वमेव अनुमितिविधेयतायां प्रयोजकम् । मङ्गलस्य कर्तव्यता अनुमितेः पूर्वमसिद्धेति तत्र यथा अनुमितिविधेयता अस्ति, तथा अनुमितेः पूर्वमसिद्धत्वात् विधेयतावच्छेदकभूतायां श्रुतावपि विधेयताख्यविषयता अङ्गीक्रियते । ततश्च श्रुतेरनुमितिविधेयत्वात् अनुमितत्वमुपपद्यत इति श्रुतिशिष्टाचारानुमिता इति व्यवहारे न किमपि बाधकमिति भावः ।

ननु अनुमितिविधेयतावच्छेदकस्याप्यनुमितिविधेयत्वाङ्गीकारे 'पर्वतो वह्निमान्' इति अनुमितिविधेयतावच्छेदकस्य वह्नित्वस्यापि तादृशानुमितिविधेयत्वं स्यात् । तथा च वह्निर्धूमानुमित इति व्यवहारवत् वह्नित्वं धूमानुमितमिति व्यवहारोऽपि प्रामाणिकः स्यात् इत्याशङ्कां समाधत्ते-**एतेने**ति । अनुमितेः पूर्वमसिद्धस्यैव विधेयतावच्छेदकस्य अनुमितिविधेयत्वाङ्गीकारेणेत्यर्थः । तथा च वह्नित्वस्यानुमितेः पूर्वं सिद्धतया नानुमितिविधेयत्वप्रसङ्ग इति भावः । **अनुमितिविषयतामि**ति ।

विधेयतावच्छेदकतारूपां विषयतामित्यर्थः । विशेष्यतया विशेषणतया वा अनुमितिविषयत्वमेव अनुमितत्वव्यवहारे प्रयोजकमिति स्वीकारेणेत्यर्थः । **श्रुतौ विधेयत्वाभ्युपगमेने**ति । अनुमितेः पूर्वमसिद्धत्वादिति शेषः । **तादृशव्यवहार** इति । श्रुतिः अनुमिता इति व्यवहार इत्यर्थः। **बाधकाभावादि**ति । अनुमितमिति व्यवहारे अनुमितेः पूर्वं सिद्धत्वं बाधकम्, तदभावात् इत्यर्थः । ननु 'श्रुतेरेव प्रमाणत्वात्' इत्यत्र एवकारस्य अन्ययोगव्यवच्छेदार्थकतया श्रुत्यतिरिक्तस्य प्रमाणत्वं व्यवच्छिद्यत इति प्रतीयते । तन्न सङ्गच्छते, मङ्गलकर्तव्यतायां 'मङ्गलं कर्तव्यम् समाप्तिफलकत्वात्' इत्यनुमानस्यापि प्रमाणत्वादित्याशङ्कायामाह—**एवकारोऽप्यर्थक** इति । अपेरर्थो यस्य सः अप्यर्थकः, अप्यर्थसमुच्चयार्थक इत्यर्थः । तथा च श्रुतेरेवेत्यस्य श्रुतेरपीत्यर्थः । अपिना अनुमानस्य प्रमाणत्वं समुच्चीयते । अतो नासङ्गतिरिति भावः ।

श्रुतेरनुमितत्वं अनुमितिविधेयतावच्छेदकेऽपि पूर्वमसिद्धे विधेयत्वाङ्गीकारेण उपपादितं प्रकाशिकाकारैः । एतं क्लेशं विनैव श्रुतेरनुमितत्वम् उपपादयतां मतमाह—**अन्ये** त्विति । 'मङ्गलं वेदबोधितकर्तव्यताकम्' इति प्रतिज्ञायाः मङ्गलं स्वबोधितकर्तव्यताकत्वसम्बन्धेन वेदविशिष्टम् इत्यर्थः । तथा च तादृशानुमितौ वेद एव विधेय इति वेदस्यानुमितत्वमनायासेनोपपद्यत इति भावः । ईदृशपरम्परायाः साध्यतावच्छेदकसम्बन्धत्वे मानाभावः, यथाश्रुतमूलार्थत्यागश्चास्वरसः **आहु**रित्यनेन सूचितः ।

दीपिकायाम् **अलौकिकाविगीतशिष्टाचारविषयत्वादि**ति । शिष्टानामाचारः शिष्टाचारः शिष्टाचारस्य विषयः शिष्टाचारविषयः, अविगीतश्चासौ शिष्टाचारविषयश्च अविगीतशिष्टाचारविषयः, अलौकिकश्चासौ अविगीतशिष्टाचारविषयश्च अलौकिकाविगीतशिष्टाचारविषयः तस्य भावस्तत्त्वम् । अलौकिकत्वे सति अविगीतत्वे सति शिष्टाचारविषयत्वं हेतुरिति फलितम् । लौकिकत्वं विध्यतिरिक्तप्रमाणगम्यत्वम्,

तद्भिन्नत्वमलौकिकत्वम् । हेतौ अलौकिकत्वानुपादाने रागप्राप्ते भोजनादौ वेदबोधितकर्तव्यताकत्वरूपसाध्याभाववति अविगीतशिष्टाचारविषयत्वरूपहेतुसत्त्वात् व्यभिचारः स्यात् । तद्वारणाय अलौकिकत्वमुपात्तम् । अविगीतत्वं धर्मशास्त्रानिषिद्धत्वम् । तदनुपादाने वेदबोधितकर्तव्यताकत्वरूपसाध्याभाववति रात्रिश्राद्धादौ [1]अलौकिकशिष्टाचारविषयत्वरूपहेतुसत्त्वात् व्यभिचारः स्यात् । तद्वारणाय अविगीतत्वमुपात्तम् । रात्रिश्राद्धादेः 'रात्रौ श्राद्धं न कुर्वीत' इति धर्मशास्त्रनिषिद्धत्वात् न तत्र व्यभिचारः ।

प्रकाशिकायां **विधिमन्तरेति** । लिङ्लोट्तव्यप्रत्ययघटितं वेदवाक्यं विधिः । **वेदोक्ततत्त्वज्ञानेनेति** । तृतीयायाः जन्यत्वमर्थः कर्मकारीत्यत्र कृधात्वर्थकृत्यन्वयि । वेदोक्तं यत्तत्त्वं तद्विषयकज्ञानजन्या या वेदविहितकर्मविषयककृतिः तदाश्रयः शिष्ट इत्यर्थः । **वेदोत्थतत्त्वज्ञानेनेति** क्वचित्पाठः । वेदजन्यं यत्तत्त्वज्ञानं तेनेत्यर्थः । स एव पाठः श्रेयान् । वेदविहितकर्मकर्ता शिष्टः इत्येतावन्मात्रोक्तौ वेदविहिताहिंसादिकर्मकर्तुः बौद्धस्यापि शिष्टत्वापत्तिः । तद्वारणाय **वेदोत्थतत्त्वज्ञानेनेति** । बौद्धस्य यत् अहिंसादितत्त्वज्ञानं न तत् वेदजन्यमिति नातिव्याप्तिः । यद्वा **वेदोक्ततत्त्वज्ञानेनेति** पाठः [2]साधीयान् । इदं वेदोक्तमिति ज्ञानपूर्वकं यः वेदविहितं कर्म करोति स शिष्टः । बौद्धस्तु वेदविहितमहिंसादिकं कर्म कुर्वन्नपि इदं वेदोक्तमिति बुद्ध्या न करोति, तेन वेदप्रामाण्यानभ्युपगमादिति न तस्य शिष्टत्वापत्तिः ।

ननु शिष्टाचारस्यैव हेतुत्वमस्तु,किमाचारविषयत्वपर्यन्तस्य हेतुत्वानुधावनेन । न च आचारः कृतिः, तस्या आत्मनिष्ठत्वेन मङ्गलरूप-

---

1. अलौकिकेति । रात्रिश्राद्धस्य 'श्राद्धं कुर्वीत' इति विधिनैवावगमात् विध्यतिरिक्तप्रमाणानवगम्यत्वरूपमलौकिकत्वमस्तीति भावः ।

2. साधीयानिति । तथा च वेदोक्तत्वप्रकारकज्ञानजन्ययागादिकर्मानुकूलकृतिमत्त्वं शिष्टत्वमिति लभ्यते ।

पक्षनिष्ठत्वाभावात् कथं हेतुत्वमिति वाच्यम् । कृतेर्विषयतासम्बन्धेन हेतुत्वसम्भवात्, समवायेन आत्मनिष्ठायाः कृतेः विषयतासम्बन्धेन मङ्गलनिष्ठतया हेतुत्वसम्भवादित्याशङ्क्याह **आचारः कृतिरि**त्यादिना । वृत्तिः आधेयता तन्नियामकः सम्बन्धः वृत्तिनियामकः सम्बन्धः संयोग-समवायादिः । विषयता तु न वृत्तिनियामकसम्बन्धः । विषयता-सम्बन्धेन कृतिः मङ्गलवृत्तिरिति प्रतीत्यभावात् । वृत्तिनियामक-सम्बन्ध एव च हेतुतावच्छेदकसम्बन्धः न तु वृत्त्यनियामको विषय-तादिः । तथा च कृतेः विषयतासम्बन्धावच्छिन्नहेतुत्वासम्भवात् आचारविषयत्वस्य हेतुत्वानुधावनम् । विषयत्वं तु स्वरूपसम्बन्धेन हेतुः, स्वरूपसम्बन्धस्तु वृत्तिनियामक इति तेन सम्बन्धेन आचार-विषयत्वस्य हेतुत्वं सम्भवतीत्याशयः ।

आचारविषयत्वपदस्य प्रयोजनं मूलेऽनुक्तमिति स्वयं तत्प्रयोजनं कथयति—**स्वर्गादिफल** इति । तथा च हेतौ आचारविषयत्वपदानु-पादाने अलौकिकत्वे सति अविगीतत्वं हेतुः स्यात् । स्वर्गादिरूपे फलेऽपि तत्सत्त्वात् वेदबोधितकर्तव्यताकत्वरूपसाध्याभावात् व्यभि-चारः स्यादिति तद्वारणाय **आचारविषयत्वात्** इत्युपात्तम् । स्वर्गादेस्तु कृतिविषयत्वं नास्तीति न व्यभिचार इति भावः । ननु कृतेः उद्देश्यं विधेयम् उपादानमिति विषयत्रयमस्ति । यागः विधेयः स्वर्ग उद्देश्यः प्रयाजाद्यङ्गजातमुपादानम् । स्वर्गे कृतिनिरूपितोद्देश्यताख्यविषयतायाः सत्त्वात् कृतिविषयत्वोपादानेऽपि व्यभिचार इत्याशङ्क्याह—**विधे-यतया आचारविषयत्वार्थकमि**ति । तृतीयाया अभेदोऽर्थः । आचारनि-रूपितविधेयत्वाभिन्नविषयत्वं हेतुः । स्वर्गादौ कृतिनिरूपितविधेयता-ख्यविषयत्वाभावात् न व्यभिचार इति भावः ।

ननु व्याप्यारोपेण व्यापकारोपस्तर्कः । तथा च तर्कसङ्ग्रह इत्यस्य व्याप्यारोपजन्यव्यापकारोपात्मकतर्कप्रतिपादकग्रन्थ इत्यर्थो भवति । स न युज्यते, तर्कसङ्ग्रहग्रन्थेन आरोपमात्रस्याप्रतिपादनात्,

इतरपदार्थानामपि प्रतिपादनादित्याशङ्क्य तर्कशब्देन यथा ग्रन्थप्रति-पाद्यसकलपदार्थः प्रतिपाद्येत तथा तर्कशब्दो व्युत्पाद्यते दीपिकायामि-त्याह–**तर्कपदस्ये**त्यादिना । **आरोपार्थकत्वभ्रमम्**िति । व्याप्यारोपेग व्या-पकारोपार्थकत्वभ्रममित्यर्थः । सङ्ग्रहशब्दस्योपादानमित्यप्यर्थोऽस्ति । सोऽत्र न सम्भवति; [1]गुणादिपदार्थानां, द्रव्येष्वपि आकाशादीना-मुपादानस्यासम्भवात् । उपादानं हि हस्तकरणकव्यापारविशेषः । तस्मात् सङ्ग्रहपदस्य सङ्क्षेपेण स्वरूपकथनमित्यर्थो मूले वर्णित इत्याह-**उपादानरूपे**ति । ननु स्वरूपकथनमित्यत्र कथनशब्दस्योच्चारणमर्थः । उच्चारणं नाम ताल्वोष्ठपुटसंयोगानुकूलव्यापारः । तस्य शब्दमात्र-विषयकस्य द्रव्यादिपदार्थस्वरूपविषयकत्वासम्भवात् स्वरूपकथनमिति शब्दः कथं साधुरित्याशङ्क्याह–**स्वरूपकथनं स्वरूपज्ञानानुकूलः शब्द** इति । तथा च प्रकृते कथनशब्दस्य नोच्चारणमर्थः, किन्तु ज्ञानानु-कूलः शब्दोऽर्थः । ज्ञाने स्वरूपविषयकत्वान्वयात् पदार्थस्वरूपविषय-कज्ञानानुकूलशब्दः स्वरूपकथनशब्दार्थ इति नानुपपत्तिरिति भावः ।

प्रेक्षावतां बुद्धिपूर्वकारिणां या ग्रन्थाध्ययने प्रवृत्तिः तत्र अनु-बन्धचतुष्टयमङ्गम् । विषयप्रयोजनसम्बन्धाधिकारिणः चत्वारोऽनु-बन्धाः । अनुबध्नन्ति पुरुषं ग्रन्थाध्ययने प्रेरयन्तीत्यनुबन्धाः । ग्रन्थ-प्रतिपाद्यो विषयः, ग्रन्थाध्ययनस्य प्रयोजनम्, ग्रन्थस्य विषयस्य च सम्बन्धः, ग्रन्थाध्ययनेऽधिकारी इत्येतेषां चतुर्णां ज्ञानं विना न कोऽपि ग्रन्थाध्ययने प्रवर्तेत । तथा चावश्यवक्तव्यस्यानुबन्धचतुष्टयस्या-कथनात् मूलस्य न्यूनतामाशङ्क्य तच्चतुष्टयं कण्ठरवेणानुक्तमपि मूलेन सूचितमेवेत्याह - **एतावते**ति । तर्कसङ्ग्रहपदस्य व्याख्यानेनेत्यर्थः । सुखबोधाय इत्यत्र सुखस्य बोध इति षष्ठीतत्पुरुषाङ्गीकारे सुख-विषयकबोधः अस्य ग्रन्थस्य प्रयोजनमिति लभ्येत । तथा सति नि-खिलपदार्थबोधकत्वं तर्कसङ्ग्रहपदव्याख्यानेन सूचितं विरुध्येत । अतः

---

1. गुणादिपदार्थानामित्यस्य उपादानस्यासम्भवादित्यनेनान्वयः ।

सुखेन बोध इति तृतीयातत्पुरुषतया व्याख्यातमित्याह - **षष्ठीतत्पुरुषेति** । **अन्यतः सिद्धत्वेने**ति । भाष्यादिग्रन्थान्तरपठनादपि सिद्धत्वेनेत्यर्थः ॥



## तर्कसङ्ग्रहः

पदार्थविभागः

**द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाः सप्तपदार्थाः ।**

### दीपिका

पदार्थान् विभजते - **द्रव्ये**ति । पदस्यार्थः पदार्थ इति व्युत्पत्त्या अभिधेयत्वं पदार्थसामान्यलक्षणम् । ननु विभागादेव सप्तत्वे सिद्धे सप्तपदग्रहणं व्यर्थमिति चेत् - न । अधिकसङ्ख्याव्यवच्छेदार्थकत्वात् । ननु अतिरिक्तः पदार्थः प्रमितो वा न वा । नाद्यः; प्रमितस्य निषेधायोगात् । न द्वितीयः; प्रतियोगिप्रमितिं विना निषेधानुपपत्तेरिति चेत् - न । पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति व्यवच्छेदार्थकत्वात् । ननु सप्तान्यतमत्वं सप्तभिन्नभिन्नत्वम् । सप्तभिन्नस्याप्रसिद्धया कथं सप्तान्यतमत्वव्याप्तिनिश्चय इति चेत् - न । द्रव्यादिसप्तान्यतमत्वं नाम द्रव्यादिभेदसप्तकाभाववत्त्वम् । अतो दोषविरहात् । एवमग्रेऽपि द्रष्टव्यम् ॥

### प्रकाशिका

**मूले सप्तपदार्था** इति । द्रव्यत्वादिरूपा ये पदार्थविभाजकाः सप्तोपाधयः तदन्यतमवन्तः पदार्था इत्यर्थः । तत्र सप्तत्वमपेक्षाबुद्धिविशेषविषयत्वम् । एवमग्रिमग्रन्थस्यापि अत्रैव पर्यवसानमवधेयम् ।

ननु सामान्यधर्मज्ञानस्य विशेषजिज्ञासां प्रति हेतुत्वात् सामान्यलक्षणकथनानन्तरमेव विभागो युक्तः । तथा च मूले कथमादौ विभाग इति न्यूनतां परिहरति–**पदस्ये**ति । पदस्यार्थः अभिधेयः इति व्युत्पत्त्या पदसम्बन्ध्यभिधाविषयत्वस्य लाभेऽपि पदसम्बन्धित्वांश-

स्याव्यावर्तकत्वादाह—**अभिधेयत्वमिति**। लक्षणं लभ्यत इति शेषः। तथा च न न्यूनतेति भावः। **विभागादेवेति**। पदार्थत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनादेवेत्यर्थः। **अधिकसङ्ख्याव्यवच्छेदार्थकत्वादिति**। तादृशसङ्ख्यानिषेधसिद्धिफलकत्वादित्यर्थः। उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदके विधेयव्याप्यत्वभानमौत्सर्गिकमित्याशयेनाह—**पदार्थत्वमिति**। **इति व्यवच्छेदार्थकत्वादिति**। इति एतद्रूपो यो व्यवच्छेदो निर्णयस्तदर्थकत्वादित्यर्थः। **सप्तभिन्नभिन्नत्वमिति**। द्रव्यादयो ये सप्तपदार्थाः तद्भेदकूटविशिष्टभिन्नत्वं वक्तव्यमित्यर्थः। **द्रव्यादिभेदसप्तकाभाववत्त्वमिति**। द्रव्यादिभेदानां प्रत्येकं प्रसिद्धानां सप्तानां कुत्राप्यसत्त्वेन तादृशभेदसप्तकत्वावच्छिन्नाभावस्य सर्वत्र सत्त्वात् न दोष इति भावः। वस्तुतस्तु "पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यम्" इत्यस्य पदार्थत्वं द्रव्यत्वादिसप्तोपाध्यन्यतमवत्त्वव्याप्यमित्यर्थः। तेन बहुषु पुस्तकेषु सप्तान्यतमत्वाप्रसिद्धिशङ्कातत्समाधानपरस्य "ननु सप्तान्यतमत्वम्" इत्यादिग्रन्थस्यासत्त्वेऽपि न क्षतिरिति ध्येयम्। **एवमग्रेऽपीति**। एवं रीत्या द्रव्याणीत्यादावपीत्यर्थः॥

## बालप्रिया

ननु सप्तपदार्था इति यथाश्रुतमूलात् पदार्थाः सप्तत्वसङ्ख्यावन्त इति लभ्यते। तन्न युक्तम्। द्रव्यगुणादीनां प्रत्येकमनेकत्वात् आहत्य सप्ताधिकसङ्ख्याया एव पदार्थेषु सत्त्वात् पदार्थेषु सप्ताधिकसङ्ख्याव्यवच्छेदस्य सप्तपदेन कर्तुमशक्यत्वादित्याशयेन प्रकारान्तरेण मूलं व्याचष्टे—**द्रव्यत्वादिरूपा इत्यादिना**। तथा च [1] भावप्रधाननिर्देशात् द्रव्यादिपदानि द्रव्यत्वादिपराणि। अन्तिमस्य अभावपदस्य द्रव्यत्वाद्यन्यतमवति लक्षणा। द्रव्यत्वादिषु सप्तत्वान्वयः। द्रव्यत्वादि-

---

1. **भावप्रधाननिर्देशादिति। भावः प्रकृत्यर्थप्रकारीभूतो धर्मः प्रधानः तात्पर्यविषयो यस्य शब्दस्य सः भावप्रधाननिर्देशः। तथा च द्रव्यादिपदानां स्वार्थप्रकारीभूतद्रव्यत्वादिधर्मतात्पर्यकत्वात् भावप्रधाननिर्देशत्वम्।**

रूपाः ये पदार्थत्वव्याप्याः धर्माः सप्त तदन्यतमवन्तः पदार्था इति सप्त पदार्था इति वाक्यात् बोधः । द्रव्यादिपदार्थानां [1]अनेकत्वेऽपि द्रव्यत्वादयः पदार्थविभाजकधर्माः सप्तैवेति नानुपपत्तिरिति भावः ।

ननु सप्तत्वं सङ्ख्यारूपो गुणः तदाश्रयत्वं द्रव्यत्वगुणत्वादिषु नास्ति, सङ्ख्यायाः गुणस्य द्रव्यमात्रवृत्तित्वात् इत्याशङ्क्य प्रकृते सप्तत्वं न सङ्ख्याविशेषरूपम्, किं तु अपेक्षाबुद्धिविशेषविषयत्वमिति व्याचष्टे - **अत्र सप्तत्वमि**ति । 'इदमेकम्', 'इदमेकम्' इति या बुद्धिः सा अपेक्षाबुद्धिः तद्विषयत्वमित्यर्थः । **अग्रिमग्रन्थस्यापी**ति । रूपादयः 'चतुर्विंशतिर्गुणाः', उत्क्षेपणादीनि 'पञ्च कर्माणि' इत्यादिवक्ष्यमाण-ग्रन्थस्यापीत्यर्थः । **अत्रैव पर्यवसानमवधेयमि**ति । चतुर्विंशतित्वादेः अपेक्षाबुद्धिविशेषविषयत्व एव तात्पर्यं निश्चेयमित्यर्थः ।

द्रव्यगुणकर्मेत्यादिवाक्यं पदार्थविभागवाक्यम् । विभागो नाम [2]सामान्यधर्मप्रकारकज्ञानविशेष्यभूतपदार्थविशेष्यकपदार्थत्वव्याप्यपर-स्परासमानाधिकरणधर्मप्रकारकज्ञानजनकशब्दः । एतादृशशब्दात्मक-विभागश्च पदार्थः कतिविध इति शिष्यस्य विशेषधर्मप्रकारकजिज्ञा-सायां सत्यामेव कर्तुं शक्यः । अन्यथा अजिज्ञासितार्थकथनरूपार्थान्तर-दोषापत्तेः । विशेषजिज्ञासां प्रति सामान्यधर्मप्रकारकज्ञानं कारणम् । विभागात् पूर्वं मूले पदार्थसामान्यलक्षणस्याकथनात् सामान्यधर्मप्रका-रकज्ञानं शिष्यस्य न जातमिति पदार्थत्वव्याप्यधर्मप्रकारकज्ञानेच्छा-रूपविशेषजिज्ञासायाः अनुत्पत्तेः विभागकरणमनुचितम् इति शङ्कापरि-हारार्थः 'पदस्यार्थः' इत्यादि**दीपिका**ग्रन्थ इत्याह - **ननु सामान्यधर्मज्ञान-स्येति । हेतुत्वादि**ति । [3]सामान्यज्ञानस्य विशेषजिज्ञासायां स्वातन्त्र्येण,

---

1. अनेकत्वेऽपीति । सप्ताधिकसंख्याकत्वेऽपीत्यर्थः ।
2. सामान्यधर्मः पदार्थत्वं तत्प्रकारकज्ञानविशेष्यः पदार्थः तद्विशेष्यकं यत् पदार्थत्व-व्याप्याः परस्परासमानाधिकरणाः ये धर्माः द्रव्यत्वगुणत्वादयः तत्प्रकारकं ज्ञानं 'पदार्थाः द्रव्यत्वगुणत्वादिमन्तः' इत्याकारकं तज्जनकशब्द इत्यर्थः ।
3. सामान्यज्ञानस्य - सामान्यधर्मप्रकारकज्ञानस्य, विशेषजिज्ञासायाम्—विशेष-धर्मप्रकारकज्ञानेच्छां प्रति ।

इष्टसाधनताज्ञानधर्मितावच्छेदकज्ञानसम्पादकतया वा हेतुत्वमिति **सव्यभिचारग्रन्थे गदाधरभट्टाचार्याः** प्राहुः । सामान्यधर्मज्ञानसत्त्वे विशेषजिज्ञासा तदभावे तदभाव इति स्वतन्त्रान्वयव्यतिरेकशालितया हेतुत्वं सामान्यज्ञानस्य । अथवा [1]स्वप्रकारकत्वसम्बन्धेन विशेषधर्मविशिष्टज्ञानविषयकेच्छां प्रति विशेषधर्मविशिष्टज्ञानमिष्टसाधनमित्याकारकं विशेषधर्मविशिष्टज्ञानधर्मिकेष्टसाधनताप्रकारकज्ञानं कारणम् । तादृशेष्टसाधनताज्ञानं प्रति धर्मितावच्छेदकीभूतविशेषधर्मप्रकारकं ज्ञानं कारणम् । विशिष्टे वैशिष्ट्यावगाहिबुद्धिं प्रति विशेष्यतावच्छेदकप्रकारकज्ञानस्य हेतुतायाः [2] **राजपुरुषवादे** व्यवस्थापितत्वात् । विशेषधर्मप्रकारकज्ञाने च सामान्यधर्मज्ञानं कारणमिति परम्परया सामान्यधर्मज्ञानस्य विशेषधर्मजिज्ञासायां हेतुत्वमिति **गदाधरा**शयः । तथा च सामान्यधर्मज्ञानं विना विशेषजिज्ञासा नोत्पत्तुमर्हतीति भावः । **सामान्यलक्षणकथनानन्तरमि**ति । पदार्थानां सामान्यलक्षणे कथिते तादृशलक्षणात्मकसामान्यधर्मज्ञानात् पदार्थः कतिविध इति विशेषधर्मजिज्ञासा भवितुमर्हतीति भावः । **न्यूनतामि**ति । अवश्यवक्तव्यार्थाकथनं न्यूनता । ननु पदार्थशब्दात् पदसम्बन्ध्यभिधाविषयत्वमेव लभ्यते । कथम् अभिधेयत्वं लभ्यत इति मूलोक्तं सङ्गच्छत इत्याशङ्क्याह - **पदस्यार्थोऽभिधेय** इति । यद्यपि शब्दतः पदसम्बन्ध्यभिधाविषयत्वं लभ्यते, तथापि समग्रं न लक्षणम्, अभिधाविषयत्वस्यैव पदार्थसामान्यलक्षणत्वसम्भवेन पदसम्ब-

---

1. स्वं विशेषधर्मः द्रव्यत्वगुणत्वादिः तत्प्रकारकत्वसम्बन्धेन द्रव्यत्वादिविशिष्टं यत् ज्ञानं तद्विषयकेच्छा 'द्रव्यत्वादिप्रकारकज्ञानं मम भवतु' इत्याकारिका तां प्रति 'द्रव्यत्वादिप्रकारकज्ञानं मदिष्टसाधनम्' इत्याकारक[ज्ञा]नं कारणम् । तादृशज्ञानं प्रति धर्मितावच्छेदकानां द्रव्यत्वादीनां ज्ञानं कारणम् । द्रव्यत्वादिज्ञाने पदार्थस्वरूपसामान्यधर्मज्ञानं कारणमित्यर्थः ।

2. व्युत्पत्तिवादे प्रथमाकारके राजपुरुषवाक्यार्थविचारावसरे 'राजस्वत्वाभाववान् पुरुषः सुन्दरः' इत्याकारके राजस्वत्वाभावविशिष्टे पुरुषे सुन्दरत्ववैशिष्ट्यावगाहिज्ञाने 'राजस्वत्वाभाववान् पुरुषः' इत्याकारकं विशेष्यतावच्छेदकीभूतराजस्वत्वाभावप्रकारकं ज्ञानं कारणमिति निरूपितम् । तदत्र अनुसंहितम् ।

न्धित्वांशस्य व्यर्थत्वात् । अतः पदार्थशब्दलभ्यार्थैकदेशभूतं अभिधेयत्वमेव लक्षणत्वेन विवक्षितमित्याशयः । **अव्यावर्तकत्वादिति** । अव्याप्त्यतिव्याप्त्यादिवारणरूपप्रयोजनशून्यत्वादित्यर्थः ।

अत्रेदं चिन्त्यम् - दीपिकोक्तः विभागवाक्यघटकपदार्थपदेन सामान्यलक्षणलाभप्रकारः न शोभते । सामान्यलक्षणकथनानन्तरं ततः शिष्यस्य सामान्यधर्मज्ञानेन पदार्थः कतिविध इति विशेषजिज्ञासायां विभागवाक्यस्य प्रवृत्तेः विभागवाक्याघटकपदेन सामान्यधर्मसूचनस्यैवोचितत्वात् विभागवाक्यघटकेन पदेन विभागवाक्यप्रयोजकविशेषजिज्ञासाजनकसामान्यधर्मज्ञानोत्पादनेऽन्योन्याश्रयादिदोषेणौचित्यविरहात् । तस्मात् मङ्गलश्लोकस्थतर्कपदेन ज्ञेयत्वरूपं सामान्यलक्षणं सूचितम् । ततो विशेषजिज्ञासायां द्रव्यगुणेत्यादिविभागवाक्यमवतीर्णमिति कथनमेव युक्तम् । तथैव निर्व्यूढं च **निरुक्त्यादिग्रन्थ** इति ।

**पदार्थत्वावान्तरधर्मपुरस्कारेण धर्मिप्रतिपादनादेवेति** । पदार्थत्वव्याप्यद्रव्यत्वादिधर्मविशिष्टद्रव्यादिधर्मिप्रतिपादकद्रव्यादिशब्दादित्यर्थः । ननु द्रव्यगुणेत्यादिशब्दमात्रात् द्रव्यत्वादिविशिष्टद्रव्यादीनां बोधेऽपि तेषु सप्तत्वसङ्ख्यायाः कथं बोध इति चेत् - अत्राहुः । विभागादेवेति मूलस्य द्रव्यगुणेत्यादिद्वन्द्वसमभिव्याहृतबहुवचनादेवेत्यर्थः । तथा च द्वन्द्वसमभिव्याहृतबहुवचनस्य द्वन्द्वप्रतिपाद्यतावदर्थपर्याप्तसङ्ख्यावाचकत्वनियमः अवश्यमङ्गीकरणीयः । अन्यथा रामलक्ष्मणभरतशत्रुघ्ना इत्यत्र बहुवचनेन त्रित्वादिबोधापत्त्या अनुभवविरोधापत्तेः । एवं च प्रकृते द्वन्द्वप्रतिपाद्यद्रव्याद्यभावान्तसमुदायपर्याप्तसङ्ख्यावाचकतायाः तादृशद्वन्द्वसमभिव्याहृतबहुवचनस्यावश्यं स्वीकरणीयतया तादृशसङ्ख्या सप्तत्वसङ्ख्यैवेति बहुवचनेन तत्सिद्धिरिति । **नीलकण्ठप्रकाशिकाया** अपि कथंचिदत्रैव तात्पर्यं बोध्यम् ।

**मूले अधिकसङ्ख्याव्यवच्छेदार्थकत्वादिति** । अधिकसङ्ख्यायाः सप्तत्वाधिकाष्टत्वसङ्ख्यायाः व्यवच्छेदः निषेधनिर्णयः अर्थः प्रयोजनं यस्य

तत्त्वादित्यर्थः । तदाह - **तादृशसङ्ख्येति** । एवं च सप्तपदेन अष्टमपदार्थ-नास्तित्वं बोध्यत इति फलितम् । अष्टमपदार्थस्य भ्रान्तिसिद्धत्वे तस्य निषेधसम्भवेन निषेधायोगादिति खण्डनं न युज्यत इत्याशयेन ज्ञात इत्यनुक्त्वा प्रमित इति मूले उक्तम् । प्रमित इत्यस्य प्रमाविषय इत्यर्थः । प्रमाविषयस्य सत्तानियमेन निषेधायोगात् इति वक्तुं शक्यत इति भावः । **तत्रैव प्रतियोगिप्रमितिं विनेति** । यद्यप्यभावबुद्धौ प्रति-योगिज्ञानमेव कारणम् न तु प्रतियोगिप्रमा, गगनाद्यभावबुद्धौ प्रति-योगिगगनादिप्रकारकप्रमायाः कारणत्वासम्भवात्, गगनादेरवृत्तितया तत्प्रकारिकायाः 'इदं गगनवत्' इत्याकारकप्रमायाः असम्भवात् । तथापि प्रकृते प्रतियोगिप्रमापदेन न प्रतियोगिप्रकारकप्रमा विवक्षिता अपि तु प्रतियोगितावच्छेदकप्रकारकप्रतियोगिविशेष्यकप्रमैव [1]विव-क्षिता। 'इदं गगनम्' इत्याकारिका गगनत्वप्रकारकगगनविशेष्यकप्रमा प्रसिद्धैवेति तद्बलात् गगनाभावबुद्धिः सम्भवति । प्रकृते सप्तपदार्थाति-रिक्तपदार्थस्य प्रमा नास्तीति तन्निषेधो नोपपद्यत इति **दीपिका**शयः ।

द्रव्यगुणेत्यादिवाक्येन पदार्थानुद्दिश्य द्रव्यादिसप्तान्यतमत्वं वि-धीयते । उद्देश्यविधेयभावस्थले च उद्देश्यतावच्छेदके विधेयव्याप्यत्वं भासत इति सामान्यनियमः । यथा धनवान् सुखीत्यत्र धनवन्तमुद्दिश्य सुखस्य विधाने उद्देश्यतावच्छेदके धने सुखव्याप्यत्वं भासते यत्र यत्र धनं तत्र सुखमिति, तथा प्रकृतेऽपि उद्देश्यतावच्छेदके पदार्थत्वे द्रव्या-दिसप्तान्यतमत्वव्याप्यत्वं भासते यत्र यत्र पदार्थत्वं तत्र तत्र द्रव्यादि-सप्तान्यतमत्वमिति । तथा च सिद्ध्यसिद्धिभ्यां व्याघातो नेत्यर्थः । तदेतदाह - **उद्देश्यविधेयभावस्थल** इति । **औत्सर्गिक**मिति । सामान्यन्याय-सिद्धमित्यर्थः । 'अधिकसङ्ख्याव्यवच्छेदार्थकत्वात्' इति पूर्वतनमूल-ग्रन्थे व्यवच्छेदशब्दस्य यथा निषेधोऽर्थः तथा 'सप्तान्यतमत्वव्याप्य-

---

1. तथा च 'अभावबुद्धौ प्रतियोगिज्ञानं कारणम्' इति प्रवादस्यापि प्रतियोगिता-वच्छेदकप्रकारकप्रतियोगिविशेष्यकज्ञानं कारणमित्येवार्थः । न तु प्रतियोगिप्रकारक-ज्ञानमिति भावः ।

मिति व्यवच्छेदार्थकत्वात्' इति प्रकृतमूलस्थव्यवच्छेदपदस्यापि निषेधोऽर्थ इति न भ्रमितव्यमिति बोधयितुं व्याचष्टे - **एतद्रूप** इति । **तदर्थकत्वादि**ति । सप्तग्रहणस्येति शेषः ।

ननु सप्तान्यतमत्वं नाम सप्तभिन्नभिन्नत्वम् । सप्तपदार्थभिन्नस्याप्रसिद्ध्या तद्भिन्नत्वरूपमन्यतमत्वमप्रसिद्धमिति तन्निरूपितव्याप्यत्वं पदार्थे न निश्चेतुं शक्यत इति तादृशनिश्चयफलकत्वं सप्तग्रहणस्य न युज्यत इत्याशङ्कितं 'ननु सप्तान्यतमत्वम्' इत्यादिना **दीपिकायाम्** । तत्राप्रसिद्धिशङ्का न युज्यते, ये द्रव्यादयः सप्तपदार्थाः प्रत्येकं तद्भिन्नभिन्नत्वस्य प्रत्येकं सत्त्वात् । द्रव्यभिन्नगुणादिभिन्नत्वस्य द्रव्ये, गुणभिन्नद्रव्यादिभिन्नत्वस्य गुणे सत्त्वमिति रीत्या सप्तस्वपि पदार्थेषु तद्भिन्नभिन्नत्वस्य सत्त्वादित्याशङ्क्य व्याचष्टे - **द्रव्यादयो ये सप्ते**ति । एवं च द्रव्यादयो ये सप्त पदार्थाः तद्भेदकूटविशिष्टं - तद्भेदसप्तकविशिष्टं यत् तद्भिन्नत्वं सप्तान्यतमत्वम् । **तत्र** भेदसप्तकविशिष्टमप्रसिद्धम्, द्रव्ये गुणादिप्रतियोगिकभेदषट्कस्य सत्त्वेऽपि द्रव्यभेदस्यासत्त्वेन तद्घटितसप्तभेदसमुदायस्यासम्भवात्, एवं गुणादावपि । तथा च भेदसप्तकविशिष्टात्मकस्य सप्तभिन्नस्याप्रसिद्धतया तद्भिन्नत्वरूपं सप्तभिन्नभिन्नत्वमप्रसिद्धमिति शङ्कितुराशय इति भावः । द्रव्ये गुणभेदः गुणे द्रव्यभेद इत्येवं प्रत्येकं प्रसिद्धा ये भेदाः सप्त तत्समुदायत्वावच्छिन्नाभावोऽत्र सप्तान्यतमत्वम् । पदार्थत्वं यत्र यत्रास्ति तत्र तादृशसमुदायत्वावच्छिन्नाभावोऽस्ति अतः व्याप्तिनिश्चयः सुकर इत्याशयमाह - **द्रव्यादिभेदानामि**ति ।

बहुषु ग्रन्थेषु सप्तान्यतमत्वमप्रसिद्धमिति शङ्कातत्समाधानपरो ग्रन्थो न दृश्यते । अतः पदार्थत्वं द्रव्यादिसप्तान्यतमत्वव्याप्यमिति दीपिकायाः यादृशार्थवर्णनेऽप्रसिद्धिशङ्का नोदियात् तादृशमर्थं कथयति - **वस्तुतस्त्वि**ति । यत्र यत्र पदार्थत्वं तत्र तत्र द्रव्यत्वादयः ये सप्त उपाधयः धर्मास्तदन्यतमवत्त्वमिति व्याप्तिः प्रकृते विवक्षिता । पदार्थत्वं द्रव्येऽस्ति, तत्र द्रव्यत्वादिसप्तान्यतमभूतद्रव्यत्ववत्त्वमस्तीति

द्रव्यादौ व्याप्तिः सुग्रहा । अन्यतमत्वं च तद्भिन्नभिन्नत्वमेव । द्रव्यत्वादयः ये सप्त धर्माः तद्भिन्नाः घटत्वादयः तद्भिन्नत्वं द्रव्यत्वादिष्वस्तीति नाप्रसिद्धिशङ्कावकाश इति भावः । **एवं रीत्येति** । द्रव्यत्वं पृथिव्याद्यन्यतमत्वव्याप्यमिति निर्णयार्थं नवग्रहणमिति रीत्येत्यर्थः ॥



## तर्कसङ्ग्रहः

### द्रव्यविभागः

| तत्र द्रव्याणि पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसि नवैव । |
|---|

## दीपिका

द्रव्यं विभजते - **तत्रेति** । **तत्र** - द्रव्यादिमध्ये । द्रव्याणि नवैवेत्यन्वयः । कानि तानि इत्यत आह - **पृथिवीति** ॥

## प्रकाशिका

**द्रव्यमिति** । जात्येकवचनम् ।

## बालप्रिया

ननु 'द्रव्यं विभजते तत्रेति' इति **दीपिका**ग्रन्थोऽनुपपन्नः । तथा हि - द्रव्यपदोत्तरैकवचनस्य एकत्वमर्थः । तस्य प्रकृत्यर्थे द्रव्येऽन्वयः । तस्य द्वितीयार्थे विशेष्यत्वे आधेयतासम्बन्धेनान्वयः । विशेष्यतायाः निरूपकतासम्बन्धेन धात्वर्थैकदेशज्ञाने अन्वयः । विपूर्वकभजधातोः द्रव्यत्वव्याप्यपरस्परविरुद्धनानाधर्मप्रकारकप्रमात्मकज्ञानजनकशब्दोऽर्थः, तस्यानुकूलतासम्बन्धेन आख्यातार्थकृतौ, तस्याः आश्रयतासम्बन्धेन अन्नम्भट्टे अन्वय इति एकत्वविशिष्टद्रव्यविशेष्यकद्रव्यत्वव्याप्यपरस्परासमानाधिकरणनानाधर्मप्रकारकप्रमात्मकज्ञानजनकशब्दानुकूलकृत्याश्रयोऽन्नम्भट्ट इति 'द्रव्यं विभजत' इति वाक्यात् बोधः । तत्र एकद्रव्यविशेष्यकं द्रव्यत्वव्याप्यपृथिवीत्वादिनानाधर्मविशेषणकं प्रमात्मकं ज्ञानं न सम्भवति । पृथिव्यादि रूपैकद्रव्यविशे-

ष्यिकायाः पृथिवीत्वजलत्वादिप्रकारकप्रमाया अप्रसिद्धेः । तथा च द्रव्यं विभजत इति वाक्यार्थासम्भवात् तादृशवाक्यमप्रमाणमित्याशङ्क्याह - **द्रव्यमिति जात्येकवचनमि**ति । प्रकृत्यर्थतावच्छेदकद्रव्यत्वजात्यन्वय्येकत्वार्थकमेकवचनमित्यर्थः । तथा च एकवचनस्य एकत्वमर्थः । तस्य प्रकृत्यर्थैकदेशे द्रव्यत्वेऽन्वयः । प्रकृतेः द्रव्यपदस्य द्रव्यत्वविशिष्टं पृथिव्यादिकमर्थः । तस्य विशेष्यत्वेऽन्वयः, अन्यत् पूर्ववदिति एकत्वविशिष्टं यत् द्रव्यत्वं तद्विशिष्टपृथिव्यादिविशेष्यकद्रव्यत्वव्याप्यपरस्परासमानाधिकरणनानाधर्मप्रकारकज्ञानजनकशब्दानुकूलकृत्याश्रयोऽन्नम्भट्ट इति 'द्रव्यं विभजत' इति वाक्याद्बोधः। तत्र च न काप्यनुपपत्तिः । एकद्रव्यविशेष्यकपृथिवीत्वादिधर्मप्रकारकज्ञानस्यासम्भवेऽपि एकद्रव्यत्वविशिष्टनानाद्रव्यविशेष्यकतज्ज्ञानस्य सम्भवादित्याशयः । **द्रव्याणि विभजत** इति पाठे तु न काप्यनुपपत्तिः ।।

## दीपिका

### तमोवादः

ननु तमसो दशमद्रव्यस्य विद्यमानत्वात् कथं नवैव द्रव्याणि इति । तथाहि - 'नीलं तमः चलति' इत्यबाधितप्रतीतिबलाल् नीलरूपाधारतया क्रियाधारतया च तमसो द्रव्यत्वं तावत् सिद्धम् । तत्र तमसो नाकाशादिपञ्चकेऽन्तर्भावः, रूपवत्त्वात् । अत एव न वायौ; स्पर्शाभावात् सदागतिमत्त्वाभावाच्च । नापि तेजसि, भास्वररूपाभावात् उष्णस्पर्शाभावाच्च । नापि जले; शीतस्पर्शाभावात् नीलरूपवत्त्वाच्च । नापि पृथिव्याम्; गन्धाभावात् स्पर्शरहितत्वाच्च । तस्मात् तमो दशमद्रव्यमिति चेत्-न । तमसस्तेजोऽभावरूपत्वात् । तथाहि - तमो न रूपिद्रव्यम्, आलोकासहकृतचक्षुर्ग्राह्यत्वात्, आलोकाभाववत् । रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वात् । तस्मात् प्रौढप्रकाशकतेजस्सामान्याभावस्तमः, तत्र 'नीलं तमः चलति' इति प्रत्ययो भ्रमः । अतो नव द्रव्याणीति सिद्धम् ।।

## प्रकाशिका

मीमांसकमतं दूषयितुमुपन्यस्यति - **नन्वित्या**दिना । **प्रतीति-बलात्** - प्रात्यक्षिकप्रतीतिबलात् । तस्य द्रव्यत्वेऽनुमानं प्रमाणयति - **नीलरूपाधारतये**ति । समवायेन नीलरूपवत्तयेत्यर्थः । तेन कालिक-सम्बन्धेन तस्यातिप्रसक्तत्वेऽपि न क्षतिः । एवमग्रेऽपि बोध्यम् । तत्र द्रव्यत्वे सिद्धे सति अतिरिक्तत्वं व्यवस्थापयितुं क्लृप्तद्रव्येष्वन्तर्भावं निराचष्टे - **तमस** इत्यादिना । **अत एव** - रूपवत्त्वादेव । **न वायौ** इति । अन्तर्भाव इत्यनुषज्यते । सम्बन्धभेदाभिप्रायेणाह - **स्पर्शाभावा-दि**ति । इदं च ध्वंसप्रागभावाधिकरणेऽत्यन्ताभावो नाङ्गीक्रियत **इ**ति प्राचीनमताभिप्रायेण । अन्यथा समवायावच्छिन्नस्पर्शसामान्याभावस्य दैशिकविशेषणतया उत्पत्तिकालावच्छेदेन वायावपि सत्त्वात् व्यभि-चरितत्वापत्तेः । वस्तुतस्तु निरवच्छिन्नदैशिकविशेषणतया तस्य हेतु-त्वमिति ध्येयम् । विषमव्याप्तहेतुमभिधाय समव्याप्तं तमाह - **सदा-गती**ति । सदागतिर्विजातीयक्रिया । उपसंहरति - **तस्मात्** इति । क्लृप्त-द्रव्येष्वनन्तर्भावादित्यर्थः ।

**तेजोऽभावरूपत्वादि**ति । प्रौढप्रकाशकतेजस्सामान्याभावरूपत्वा-ङ्गीकारादित्यर्थः । अतः तमस्वत्यपि देशे तेजःपरमाण्वादिसत्त्वेन, तेजस्सामान्याभावाभावेऽपि न क्षतिः । द्व्यणुकादिवारणाय **प्रौढे**ति इति दिक् ।

घटादौ व्यभिचारवारणाय **आलोकासहकृ**तेति । चक्षुर्ग्राह्यत्वं चक्षुर्जन्यज्ञानीयलौकिकविषयत्वम् । तेन तमसः चाक्षुषे घटादीना-मुपनयमर्यादया भानेऽपि न क्षतिः । विशेषाभावं दृष्टान्तयति- **आलोकाभाववदि**ति । आलोकं विना रूपवत्त्वेन तमोविषयकचाक्षुष-भ्रमोदयादाह - **प्रमाया**मिति । **कारणत्वादि**ति । अन्यथा अन्धकारस्थ-घटादेः चाक्षुषत्वापत्तेरिति दिक् ।

ननु तमसोऽभावरूपत्वे तमसि रूपवत्ताप्रतीतिः कर्मवत्ताप्रती-तिश्च कथम्? अभावे रूपकर्मणोरभावादित्यत आह - **तत्रे**ति । तमसो-

ऽतिरिक्तत्वे अनन्तावयवतत्प्रागभावादिकल्पनागौरवम् अत आवश्यक-तेजोऽभावरूपत्वं सिध्यतीत्यपि बोध्यम् ॥

## बालप्रिया

'तमः दशमद्रव्यम्, क्लृप्तद्रव्यानन्तर्भूतत्वे सति द्रव्यत्वात्' इति परिशेषानुमानेन तमसः दशमद्रव्यत्वं सिषाधयिषितम् । तत्र हेतौ द्रव्यत्वरूपविशेष्यासिद्धिपरिहाराय 'तमः द्रव्यम्, रूपवत्त्वात् क्रिया-वत्त्वाच्च' इत्यनुमानेन तमसो द्रव्यत्वं साधनीयम् । तत्रापि हेत्व-सिद्धिशङ्का न कार्या; 'नीलं तमः,' 'चलति तमः' इत्याकारिकया अबाधितया प्रत्यक्षरूपया प्रतीत्या तमसः रूपवत्त्वस्य क्रियावत्त्वस्य च सिद्धेः । तदाह **दीपिकायां 'नीलं तम'** इत्यादिना । **प्रतीतिबलादिति** [1]पञ्चम्यन्तस्य रूपाधारत्वे क्रियाधारत्वे चान्वयः । बाधितप्रतीतेर्विष-यासाधकत्वात् अबाधितेत्युक्तम् । ज्ञानसामान्यवाचकप्रतीतिशब्दः प्रकृते प्रत्यक्षात्मकज्ञानपरः, प्रथमोपस्थितपरित्यागे मानाभावात् । प्रत्यक्षासम्भवस्थल एवानुमानपरत्वात् ज्ञानसामान्यवाचकपदस्येत्या-शयेनाह - **प्रकाशिकायां प्रात्यक्षिकप्रतीतिबलादि**ति ।

ननु 'तमो द्रव्यम्, नीलरूपाधारत्वात् क्रियाधारत्वाच्च' इत्यनु-मानं व्यभिचारि, द्रव्यत्वाभाववति [2]जन्यगुणादावपि कालिकसम्बन्धेन रूपाधारत्वस्य क्रियाधारत्वस्य च सत्त्वादित्याशङ्क्याह - **समवायेन नीलरूपवत्तयेत्यर्थ** इति । तथा च समवायसम्बन्धावच्छिन्ननीलरूपनि-ष्ठाधेयतानिरूपिताधारत्वं तादृशक्रियानिष्ठाधेयतानिरूपिताधिकरण-त्वं च प्रकृते हेतुतया विवक्षितम् । जन्यगुणादौ कालिकसम्बन्धाव-

---

1. प्रतीतिबलादिति पञ्चम्यन्तस्य 'तमसो द्रव्यत्वं सिद्धम्' इत्यनेनान्वय इति भ्रमवार-णाय रूपाधारत्वे क्रियाधारत्वे चान्वय इत्युक्तम् ।

2. नित्यपदार्थेषु कालिकसम्बन्धेन किमपि नास्ति, नित्येषु कालिकायोगादिति सिद्धान्तात् । तथा च नित्यगुणादेः कालिकसम्बन्धेन रूपाधारत्वं न सम्भवती-त्यभिप्रेत्य जन्यगुणादावित्युक्तम् ।

च्छिन्न[1]रूपक्रियानिष्ठाधेयतानिरूपिताधारत्वमेवास्तीति न व्यभिचार इति भावः । **कालिकसम्बन्धेन तस्ये**ति । कालिकसम्बन्धावच्छिन्नरूप-क्रियाधारत्वस्येत्यर्थः । **अतिप्रसक्तत्वेऽपि** - द्रव्यातिरिक्तवृत्तित्वेऽपि । **न क्षतिः** - न व्यभिचारः । **एवमग्रेऽपि बोध्यमि**ति । 'तमसो नाकाशादि-पञ्चकेऽन्तर्भावः रूपवत्त्वात्' इत्यत्रापि रूपवत्त्वादित्यस्य समवायेन रूपवत्त्वादित्यर्थो बोध्य इति भावः ।

एतावता 'तमो दशमद्रव्यम्, क्लृप्तद्रव्यानन्तर्भूतत्वे सति द्रव्य-त्वात्' इति परिशेषानुमाने हेतुघटकं द्रव्यत्वं साधितम् । अथ हेतु-घटकं क्लृप्तद्रव्यानन्तर्भूतत्वं साध्यते **दीपिकायाम् तत्र तमस** इत्या-दिना । ननु रूपवत्त्वहेतुनैव तमसः वायावनन्तर्भावे सिद्धे पुनः तत्सा-धकतया स्पर्शाभावस्योपन्यासो व्यर्थ इत्याशङ्क्याह - **सम्बन्धभेदाभि-प्राये**णेति । रूपवत्त्वं समवायसम्बन्धेन हेतुः । स्पर्शाभावस्तु स्वरूपसम्ब-न्धेन हेतुः । समवायसम्बन्धेन हेतुमुक्त्वा स्वरूपसम्बन्धेन हेतुमाहेत्यर्थः । यदि तमो वायावन्तर्भवेत् रूपवत् न स्यात् स्पर्शशून्यं च न स्यात् । यतः तमः रूपवत् स्पर्शशून्यं च अतो वायौ नान्तर्भवतीति भावः ।

ननु 'तमः वायुभिन्नम्, स्पर्शाभावात्' इत्यनुमानं फलितम् । तत्र वायुभेदरूपसाध्याभाववति वायौ स्पर्शनिष्ठसंयोगसम्बन्धावच्छिन्नप्रति-योगिताकाभावरूपस्य स्पर्शाभावस्य सत्त्वात् व्यभिचारः । न च स्पर्श-निष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगिताकाभावो हेतुत्वेन विवक्षितः। स च न वायावस्ति, तत्र समवायेन स्पर्शस्य सत्त्वात् तदभावासम्भ-वादिति वाच्यम् । समवायसम्बन्धावच्छिन्नस्पर्शनिष्ठप्रतियोगिताका-भावस्य कालिकसम्बन्धेन वायौ सत्त्वात् व्यभिचारतादवस्थ्यात् । न च समवायावच्छिन्नस्पर्शाभावस्य स्वरूपसम्बन्धेन हेतुतायाः विवक्षि-तत्वात् न व्यभिचार इति वाच्यम् । एवमपि उत्पत्तिकालावच्छिन्न-वायौ 'उत्पन्नं द्रव्यं क्षणमगुणमक्रियं च तिष्ठति' इति न्यायेन स्पर्शस्या-

---

1. रूपनिष्ठा क्रियानिष्ठा च या आधेयता तन्निरूपिताधारत्वमित्यर्थः ।

भावः स्वरूपसम्बन्धेनास्तीति व्यभिचारस्य दुर्वारत्वादित्याशङ्क्याह- **इदं च ध्वंसप्रागभावाधिकरण** इति। तथा च स्पर्शप्रागभाववति उत्पत्ति- क्षणावच्छिन्नवायौ स्पर्शात्यन्ताभावो नास्तीति हेतोः प्राचीनमते न व्यभिचार इति भावः। **अन्यथेति**। ध्वंसप्रागभावाधिकरणेऽत्यन्ता- भावोऽङ्गीक्रियत इति नवीनमत इत्यर्थः। नव्यमतेऽपि व्यभिचारं वा- रयितुमाह - **वस्तुतस्तु** इति। तथा च वायौ स्पर्शात्यन्ताभावः उत्पत्ति- कालावच्छिन्नदैशिकविशेषणतासम्बन्धेनैव वर्तते, न तु निरवच्छिन्न- दैशिकविशेषणतासम्बन्धेनेति न व्यभिचार इति भावः। दैशिकविशे- षणतापदेन स्वरूपसम्बन्धः कालिकविशेषणतापदेन कालिकसम्बन्धश्च नव्यन्यायग्रन्थेषु व्यवह्रियते ।

**विषमव्याप्तहेतुमिति**। साध्यमात्रनिरूपितव्याप्तिमान् हेतुः विष- मव्याप्त इति, हेतुनिरूपितव्याप्तिमत्साध्यनिरूपितव्याप्तिमान् हेतुः समव्याप्त इति चोच्यते। 'तमः वायुभिन्नम्, रूपवत्त्वात्' इत्यनुमान- प्रयोगे यत्र यत्र रूपवत्त्वं तत्र वायुभेद इति वायुभेदनिरूपिता व्याप्तिः हेतौ रूपवत्त्वेऽस्ति। यत्र यत्र वायुभेदः तत्र तत्र रूपवत्त्वमिति रूप- वत्त्वनिरूपिता व्याप्तिस्तु वायुभेदे न सम्भवति, वायुभेदवत्याकाशादौ रूपवत्त्वाभावेन व्यभिचारात्। अतो रूपवत्त्वं विषमव्याप्तो हेतुः। एवं स्पर्शाभावोऽपि। यत्र यत्र स्पर्शाभावः तत्र तत्र वायुभेद इति व्याप्तिसत्त्वेऽपि यत्र यत्र वायुभेदः तत्र तत्र स्पर्शाभाव इति व्याप्त्य- भावात् वायुभेदवति घटादौ स्पर्शस्यैव सत्त्वात्। 'तमः वायुभिन्नम्, सदागतिमत्त्वाभावात्' इत्यत्र सदागतिमत्त्वाभावस्तु समव्याप्तो हेतुः। यत्र यत्र वायुभेदः तत्र तत्र सदागतिमत्त्वाभाव इति सदागतिमत्त्वा- भावनिरूपितव्याप्तेः वायुभेदे, यत्र यत्र सदागतिमत्त्वाभावः तत्र तत्र वायुभेद इति वायुभेदनिरूपितव्याप्तेः सदागतिमत्त्वाभावे च सत्त्वा- दिति। **विजातीयक्रियेति**। वायुमात्रवृत्तिविलक्षणक्रियेत्यर्थः।

**दीपिकायां नापि तेजसीति**। 'तमः तेजसि नान्तर्भवति (तेजो- भिन्नम्), भास्वररूपाभावात् उष्णस्पर्शाभावाच्च' इत्यनुमानम्। तत्र

भास्वररूपाभावः विषमव्याप्तः, उष्णस्पर्शाभावः समव्याप्तः । एवं 'तमः जलभिन्नम् शीतस्पर्शाभावात् नीलरूपवत्त्वाच्च' इत्यनुमाने शीतस्पर्शाभावः समव्याप्तः, नीलरूपवत्त्वं विषमव्याप्तम् । 'तमः पृथिवीभिन्नम्, गन्धाभावात् स्पर्शरहितत्वाच्च' इत्यत्र गन्धाभावः समव्याप्तः, स्पर्शरहितत्वं विषमव्याप्तमिति ऊह्यम् ।

तमसः द्रव्यत्वमेव नास्ति, कुतो दशमद्रव्यत्वम् । तमस्त्वभावाख्ये सप्तमपदार्थेऽन्तर्भूतमिति मत्वा **तमसस्तेजोऽभावरूपत्वात्** इत्युक्तं **दीपिकायाम्** । तत्र तेजोऽभावपदेन तेजःप्रतियोगिकाभावविवक्षायां सूर्यादितेजस्वत्यपि देशे तेजोऽन्तरप्रतियोगिकाभावसत्त्वेन तम इति प्रतीतिप्रसङ्गः । तेजस्त्वावच्छिन्नप्रतियोगिताकाभावविवक्षायां तमस्वत्यपि देशे तेजःपरमाण्वादिसत्त्वेन तेजस्सामान्याभावस्यासत्त्वेन तम इति प्रतीत्यनुपपत्तिः । प्रकाशकं यत्तेजः तत्त्वावच्छिन्नप्रतियोगिताकाभावविवक्षणेन तेजःपरमाण्वादीनां प्रकाशकत्वाभावात् पूर्वोक्तदोषवारणेऽपि प्रकाशकतेजस्त्र्यणुकखद्योतादिमति प्रदेशे तमःप्रतीत्यनुपपत्तिः । अतः प्रौढं प्रकाशकं च यत्तेजः तत्त्वावच्छिन्नप्रतियोगिताकाभावो विवक्षणीयः । प्रौढत्वं च प्रकृष्टमहत्ववत्त्वम् । त्र्यणुकादेः तादृशप्रौढत्वाभावात् तत्सत्त्वेऽपि तमःप्रतीतेर्नानुपपत्तिः । तदेतत्सर्वं मनसिकृत्याह - **प्रौढप्रकाशके**ति । प्रकाशकपदप्रयोजनमाह - **अत** इति ।

प्रौढप्रकाशकतेजस्त्वावच्छिन्नप्रतियोगिताकाभावस्तम इत्युक्तौ प्रकाशकपदं व्यर्थम् । तेजःपरमाणूनां प्रकृष्टमहत्त्वरूपप्रौढत्वाभावादेव वारणसम्भवात् । अतः हिरण्यादितेजोवारणाय प्रकाशकपदमिति वक्तव्यम् । एवमपि चक्षुरादितेजस्वति प्रदेशे तमःप्रतीत्यनुपपत्तिः । तद्वारणाय उद्भूतरूपवत्त्वमपि तेजसि विशेषणं देयम् । तथा च प्रकृष्टमहत्त्ववत्प्रकाशकोद्भूतरूपवत्तेजस्त्वावच्छिन्नप्रतियोगिताकाभावस्तमः । अथ वा प्रौढत्वं महाप्रभावत्त्वम् । तेनैव परमाणूनां हिरण्यादेश्च वारणसम्भवात् प्रकाशकपदमनुपादेयम् । महाप्रभा[illegible]त्त्वावच्छि-

त्नप्रतियोगिताकाभावस्तम इति फलितम् । तदेतदभिसन्धायाह - **दिगिति** ।

ननु तमसो रूपवत्त्वेन द्रव्यत्वस्य पूर्वं प्रसाधितत्वात् कथमभाव-रूपत्वमित्याशङ्क्य **दीपिकायां** 'तमः न रूपिद्रव्यम्' इत्याद्युक्तम् । अत्र तमसो रूपवत्त्वाभावः द्रव्यत्वाभावश्च सिषाधयिषितः । तमो यदि रूपवत् द्रव्यं वा भवेत्, तदा आलोकसहकृतेनैव चक्षुषा गृह्येत, यतः आलोकासहकृतेन चक्षुषा गृह्यते अतः तमो न रूपवत् न वा द्रव्यमिति । यत्र यत्र आलोकासहकृतचक्षुर्ग्राह्यत्वं तत्र तत्र रूपवद्भिन्नत्वं द्रव्य-भिन्नत्वं च यथा आलोकाभावे इति व्याप्तिसद्भावात् । हेतौ आलो-कासहकृतेति विशेषणानुपादाने साध्याभाववति रूपवद्द्रव्ये घटादौ चक्षुर्ग्राह्यत्वरूपहेतुसत्त्वात् व्यभिचारः स्यादिति तदुपादानम् । घटा-दिरालोकसहकृतचक्षुर्ग्राह्यः न तदसहकृतचक्षुर्ग्राह्य इति न व्यभिचारः । तदाह - **घटादाविति** ।

ननु चक्षुर्ग्राह्यत्वं नाम चक्षुर्जन्यप्रत्यक्षविषयत्वम् । आलोका-सहकृतचक्षुर्जन्यतमोविषयकप्रत्यक्षे यत्र ज्ञानलक्षणप्रत्यासत्त्या घटोऽपि भातः,तत्प्रत्यक्षविषये घटादौ व्यभिचार इति शङ्कायामाह - **चक्षुर्ग्राह्यत्वं चक्षुर्जन्यज्ञानीयलौकिकविषयत्वमिति** । **तमसश्चाक्षुष** इति । तमोविषयके चक्षुर्जन्यप्रत्यक्ष इत्यर्थः । **उपनयमर्यादयेति** । ज्ञानलक्षणप्रत्यासत्त्येत्यर्थः। केषुचित् कोशेषु "तेन तमसश्चाक्षुषे तमोवान् घट इति घटादीनामुप-नयमर्यादया भानेऽपि न क्षतिः" इति पाठो दृश्यते । तत्र 'तमोवान् घट इति' इति भागः अप्रामाणिकः, उपनीतं विशेषणतयैव भासते न तु विशेष्यतयेति सिद्धान्तविरोधात् । अतस्तद्भागरहितः पाठः एव क्वचित् दृश्यमानः साधुः । अथ वा 'घटवत्तमः इति' इति शोधयित्वा पठनीयम् ।

ननु तेजस्सामान्याभावस्य पक्षतया तदन्तर्गतस्य आलोकाभाव-स्य दृष्टान्तत्वकथनं न युक्तम् , पक्षातिरिक्तस्यैव दृष्टान्तत्वात् इत्यत

आह - **विशेषाभावमिति** । सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावः पक्षः, तदतिरिक्तः विशेषधर्मावच्छिन्नाभावो दृष्टान्तः । अतो नानुपपत्तिरिति भावः ।

ननु आलोकासहकृतचक्षुर्ग्राह्यत्वरूपहेतुरस्तु रूपवद्द्रव्यभेदरूपसाध्यं मास्तु इत्यप्रयोजकशङ्कायामुक्तं **दीपिकायाम् - रूपिद्रव्यचाक्षुषप्रमायामित्यादि** । यदि रूपिद्रव्यभेदो न स्यात् तर्हि आलोकासहकृतचक्षुर्ग्राह्यं न स्यात् । अर्थात् यदि रूपिद्रव्यं स्यात् तर्हि आलोकसहकृतचक्षुर्ग्राह्यं स्यादिति तर्कः अप्रयोजकशङ्कानिवारकः वक्तव्यः । स च तर्कः रूपवत्त्वप्रकारकद्रव्यविशेष्यकचक्षुर्जन्यप्रमात्मकप्रत्यक्षे आलोकः कारणमिति कार्यकारणभावे सति स्यादित्याशयेन कार्यकारणभावः प्रदर्शितः । तत्र प्रमापदस्य प्रयोजनमाह - **आलोकं विनेति** । तथा च प्रमापदानुपादाने आलोकाभावेऽपि रूपवत्त्वप्रकारकतमोविशेष्यकभ्रमात्मकप्रत्यक्षोत्पत्त्या व्यतिरेकव्यभिचारः स्यात् । तद्वारणाय प्रमापदमिति भावः । **अन्यथेति** । रूपिद्रव्यचाक्षुषप्रमायामालोकस्य कारणत्वाभावे इत्यर्थः ।

ननु रूपिद्रव्यविषयकचाक्षुषप्रमायामालोकस्य कारणत्वं न सम्भवति, आलोकं विनापि रूपवतस्तेजोद्रव्यस्य चाक्षुषप्रमायाः उत्पत्त्या व्यतिरेकव्यभिचारात् । न च तेजोभिन्नं यत् रूपिद्रव्यं तद्विषयकचाक्षुषप्रमायामेवालोकस्य कारणत्वम्, अतो न व्यतिरेकव्यभिचार इति वाच्यम् । तेजोभिन्नत्ववत् तमोभिन्नत्वमित्यपि विशेषणं दत्त्वा तमोभिन्नं तेजोभिन्नं च यत् द्रव्यं तद्विषयकचाक्षुषप्रमायामेव आलोकः कारणमिति स्वीकारेण आलोकं विनापि तमसश्चाक्षुषत्वसम्भवात् । तथा च आलोकासहकृतचक्षुर्ग्राह्यत्वेऽपि क्षत्यभावात् तमसोऽतिरिक्तद्रव्यत्वं निष्प्रत्यूहमेवेत्यत आह-**दिगिति** । सर्वानुभूयमानोष्णस्पर्शाश्रयतया तेजोद्रव्यस्यावश्यं स्वीकार्यतया तत्प्रत्यक्षनिर्वाहाय कार्यतावच्छेदककोटौ तेजोभिन्नत्वनिवेशेऽपि तमसोऽभाव-

रूपत्वेऽपि क्षत्यभावात् तद्भिन्नत्वनिवेशोऽनुचितः । तथा च तमसो द्रव्यत्वे आलोकासहकृतचक्षुर्ग्राह्यत्वानुपपत्त्या तमो न रूपिद्रव्यमिति सुष्ठूक्तमिति भावः ॥



## दीपिका

द्रव्यलक्षणम्

**द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यसामान्यलक्षणम् ।**

## प्रकाशिका

मुक्तिसाधनीभूतपदार्थतत्त्वज्ञानं लक्षणज्ञानं विना नोपपद्यत इत्यत आह - **द्रव्यत्वे**ति । संयोगजनकतावच्छेदकतया द्रव्यत्वजातिसिद्धिरिति भावः ।

ननु लक्षणलक्ष्यतावच्छेदकयोरभेद इत्यत आह - **गुणवत्त्वमि**ति । **द्रव्यसामान्यलक्षणमि**ति । एवं च सामान्यधर्मकथनेन न न्यूनतेति भावः ।

## बालप्रिया

मूले द्रव्यत्वजातिमत्त्वं द्रव्यस्य लक्षणमुक्तम् । तत्र द्रव्यत्वजातौ किं मानमित्याशङ्क्याह - **संयोगजनकतावच्छेदकतये**ति । अनेन द्रव्यत्वजातौ अनुमानं प्रमाणमुक्तं भवति । तथा हि - द्रव्ययोरेव संयोग इति संयोगं प्रति द्रव्यं समवायिकारणम् । समवायसम्बन्धेन संयोगं प्रति तादात्म्यसम्बन्धेन द्रव्यं कारणम् । समवायसम्बन्धावच्छिन्नसंयोगनिष्ठकार्यतानिरुपिततादात्म्यसम्बन्धावच्छिन्नकारणता द्रव्ये वर्तते । तां कारणतां पक्षीकृत्य तत्र किंचिद्धर्मावच्छिन्नत्वं कारणतात्वेन हेतुना साधनीयम् । समवायसम्बन्धावच्छिन्नसंयोगनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नद्रव्यनिष्ठकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात्, या या कारणता सा सा कारणता किंचिद्धर्मावच्छिन्ना यथा घटनिष्ठकार्यतानिरूपितदण्डनिष्ठकारणता दण्डत्वावच्छिन्ना तद्वत् इत्यनुमानेन द्रव्यनिष्ठोक्तकारणतायां द्रव्यत्व-

रूपकिंचिद्धर्मावच्छिन्नत्वसिद्धौ सिध्यतो धर्मस्य जातित्वे लाघवमिति लाघवज्ञानसहकारेण द्रव्यत्वाख्यजातिसिद्धिरिति भावः ।

द्रव्यस्य गुणवत्त्वं लक्षणान्तरमुक्तं मूले । तत्कथने बीजमाह· **लक्षणलक्ष्यतावच्छेदकयोरभेद** इति । द्रव्यस्य द्रव्यत्वं लक्षणमित्युक्ते लक्ष्यं द्रव्यम् लक्ष्यतावच्छेदकं द्रव्यत्वम्, लक्षणमपि द्रव्यत्वमेवेति लक्षणलक्ष्यतावच्छेदकयोरभेदः स्यात् । नन्वस्तु नाम तयोरभेदः, तावता को दोष इति चेत् - श्रूयताम् । लक्षणस्य हि लक्ष्ये इतरभेदानुमितिः प्रयोजनम् । लक्षणं लक्ष्योद्देश्यकेतरभेदविधेयकानुमितिजनकमिति यावत् । यथा गोः सास्नावत्त्वं लक्षणं चेत् 'गौः स्वेतरभिन्ना, सास्नावत्त्वात्' इत्यनुमानेन गोः इतरभिन्नत्वं सिध्यति । तथा प्रकृतेऽपि द्रव्यस्य यदि द्रव्यत्वं लक्षणं तदा 'द्रव्यम् इतरभिन्नम्, द्रव्यत्वात्' इत्यनुमानं प्रयोक्तव्यम् । तत्र 'द्रव्यम् इतरभिन्नम्' इत्यनुमितिः । तां प्रति इतरभेदव्याप्यद्रव्यत्ववत् द्रव्यमिति परामर्शः कारणम् । व्याप्तिश्च हेतुव्यापकसाध्यसामानाधिकरण्यरूपा । तथा च द्रव्यत्वव्यापकेतरभेदसमानाधिकरणद्रव्यत्ववत् द्रव्यमिति परामर्शस्य आकारः सम्पन्नः । तत्र द्रव्यत्वे इतरभेदसामानाधिकरण्ये भासमाने तुल्यवित्तिवेद्यतया इतरभेदे द्व्यत्वसामानाधिकरण्यमपि भासते । तुल्यवित्तिवेद्यता नाम एकज्ञानविषयत्वम् । अनुमितौ च पक्षवृत्तित्वात्मकं पक्षतावच्छेदकसामानाधिकरण्यं साध्ये भासते । एवं च अनुमितिविषयस्य इतरभेदे द्व्यवृत्तित्वस्य परामर्शेन विषयीकृततया परामर्शसिद्धस्यैव विषयस्य अनुमित्या साधनात् सिद्धसाधनाख्यो दोषः प्रसजति । अनुमितेः पूर्वं पक्षे साध्यनिश्चयसत्त्वे सिद्धसाधनदोषः भवति । अतो द्व्यस्य यदि द्व्यत्वजातिमत्त्वं लक्षणं तदा सिद्धसाधनाख्यदोषः प्रसजतीति पर्यालोच्य लक्षणान्तरानुधावनं कृतमिति भावः ।

सामान्यधर्मज्ञानं विना विशेषधर्मजिज्ञासाया अनुदयात् विभागकरणमनुचितमिति शङ्कापरिहाराय मूले द्व्यसामान्यलक्षणमुक्तमित्याह - **एवंचेति** । **न्यूनतेति** । लक्षणाकथनरूपा न्यूनतेत्यर्थः ।

## दीपिका

### अव्याप्त्यादिलक्षणम्

[1]लक्षणस्य त्रीणि दूषणानि । लक्ष्यैकदेशावृत्तित्वमव्याप्तिः । यथा गोः कपिलत्वम् । अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिः । यथा गोः शृङ्गित्वम् । लक्ष्यमात्रावृत्तित्वमसम्भवः। यथा गोरेकशफवत्त्वम् ।

## प्रकाशिका

दूषणत्रयरहितधर्मस्यैव लक्षणत्वस्य वक्ष्यमाणतया तज्ज्ञानं विशेषणीभूतदूषणत्रयरहितत्वज्ञानं विना न सम्भवति । दूषणत्रय-रहितत्वज्ञानं तु विशिष्य दूषणत्रयज्ञानाधीनम् । अभावबुद्धिं प्रति प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य तन्त्रत्वादित्याशयेन दूष-णत्रयं दर्शयति - **लक्ष्यैकदेशावृत्तित्व**मिति । लक्षणतावच्छेदकत्वाभि-मतसम्बन्धेन किंचिल्लक्ष्यावृत्तित्वमित्यर्थः । **लक्ष्यमात्रे**ति । मात्रपदं कृत्स्नार्थकं सम्बन्धविशेषावच्छिन्नलक्ष्यवृत्तित्वसामान्याभावस्फोरकम् । **एकशफवत्त्व**मिति । न चात्र अलक्ष्यवृत्तित्वरूपातिव्याप्तेरपि सत्त्वात् सङ्कर इति वाच्यम् । दुष्टसङ्करेऽपि दोषासङ्कर इति न्यायात् ।

## बालप्रिया

द्रव्यसामान्यलक्षणमिति **दीपिका**ग्रन्थश्रवणानन्तरं लक्षणशब्दा-र्थः कः? किं नाम लक्षणस्य लक्षणम् इति शिष्यस्य जिज्ञासा जायते । तच्छान्तये लक्षणस्य लक्षणं वक्तव्यम् । ततः प्राक् अव्याप्त्यादीनां लक्षणकथनमसङ्गतमित्यत आह - **दूषणत्रये**त्यादिना । दूषणत्रयरहित-धर्मत्वं लक्षणस्य लक्षणम् । दूषणत्रयरहितत्वं च दूषणत्रयाभाववत्त्वम् । तथा च दूषणत्रयाभावविशिष्टधर्मत्वं लक्षणलक्षणमिति पर्यवसितम् । तत्र विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् दूषणत्रयाभावरूप-विशेषणज्ञानं कारणम् । तादृशविशेषणज्ञानं च दूषणत्रयज्ञानं विना न सम्भवति, अभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वात् । अतः दूषण-

1. लक्षणस्य त्रीणि दूषणानीति नृसिंहप्रकाशिकानुमतः पाठः ।

त्रयं लक्षणतो दर्शनीयम् इत्याशयेन **दीपिकायां** अव्याप्त्यादिदूषणत्रयस्य लक्षणमुक्तमिति भावः ।

**विशिष्य दूषणत्रयज्ञानाधीनमिति** । अत्रायमाशयः – दूषणत्रयरहितत्वं नाम न दूषणत्रयत्वावच्छिन्नप्रतियोगिताकाभावः । तथा सति अव्याप्त्याद्येकतमदूषणवति कपिलत्वादिधर्मे एकसत्त्वेऽपि त्रयं नास्तीति न्यायेन दूषणत्रयाभावसत्त्वेन तद्वतः कपिलत्वादेः धर्मस्य लक्षणत्वापत्तेः । किं तु अव्याप्त्यतिव्याप्त्यसम्भवरूपदूषणानि अव्याप्तित्वादिना विशिष्योपादाय तदवच्छिन्नप्रतियोगिताकाभावत्रयं दूषणत्रयरहितत्वमिति वक्तव्यम् । तथा च अव्याप्तित्वावच्छिन्नप्रतियोगिताकाभाव - अतिव्याप्तित्वावच्छिन्नप्रतियोगिताकाभाव - असम्भवत्वावच्छिन्नप्रतियोगिताकाभाव - एतत्त्रयविशिष्टो धर्मो लक्षणमिति फलितम् । तत्र अभावबुद्धौ प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानस्य कारणत्वात् अव्याप्तित्वादिविशिष्टाव्याप्त्यादिज्ञानं कारणमिति तादृशज्ञानोत्पादनाय आदौ अव्याप्त्यादीनां स्वरूपमाह **दीपिकायाम्** इति ।

**लक्ष्यैकदेशावृत्तित्वमव्याप्तिरिति** । किञ्चिल्लक्ष्यनिरूपिताधेयत्वाभावः लक्ष्यतावच्छेदकाधिकरणकिञ्चिन्निरूपितवृत्तित्वाभावः अव्याप्तिस्वरूपमित्यर्थः । गोः कपिलत्वं लक्षणम् इत्युक्ते लक्ष्या गौः लक्ष्यतावच्छेदकं गोत्वम्, तदधिकरणं श्वेतगौः तन्निरूपितवृत्तित्वाभावः कपिलत्वेऽस्तीति अव्याप्ते धर्मे लक्षणसमन्वयः । ननु गोत्वाधिकरणे श्वेतगवि कपिलत्वस्य कालिकसम्बन्धेन वर्तमानतया लक्ष्यतावच्छेदकाधिकरणनिरूपितवृत्तित्वाभावो नास्तीति अव्याप्तधर्मे अव्याप्तलक्षणासम्भव इत्याशङ्क्याह – **लक्षणतावच्छेदकत्वाभिमतसम्बन्धेनेति** । वृत्तित्वान्वयि अवच्छिन्नत्वं तृतीयार्थः । तथा च लक्ष्यतावच्छेदकाधिकरणनिरूपितलक्षणतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावः अव्याप्तस्य लक्षणम् । अव्याप्तेः स्वरूपम् । कपिलत्वं कपिलगवि समवायेन

---

1. लक्षणं येन सम्बन्धेन लक्ष्ये वर्तते स सम्बन्धः लक्षणतावच्छेदकसम्बन्धः ।

अस्तीति समवायसम्बन्धः लक्षणतावच्छेदकसम्बन्धः । गोत्वाधिकरण-श्वेतगोनिरूपितकालिकसम्बन्धावच्छिन्नवृत्तित्वस्य कपिलत्वे सत्त्वेऽपि तन्निरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वाभावात् कपिलत्वे लक्षणसमन्वयः । लक्ष्यतावच्छेदकाधिकरणत्वं च लक्ष्यतावच्छेदकनिष्ठाधेयतानिरूपिताधिकरणत्वम्, तत्राधेयतायां [1]लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा सल्लक्षणे सास्नावत्त्वादौ कालिकसम्बन्धेन लक्ष्यतावच्छेदकगोत्वाधिकरणं यत् महिषादि तद्वृत्तित्वाभावसत्त्वेन अव्याप्तलक्षणस्यातिव्याप्तेः । एवं लक्ष्यतावच्छेदकसमानाधिकरणत्वे सतीत्यपि अव्याप्तलक्षणे विशेषणं देयम् । अन्यथा असम्भवग्रस्ते एकशफवत्त्वादौ अव्याप्तलक्षणस्यातिव्याप्तेः, गोत्वाधिकरणनिरूपितवृत्तित्वाभावस्य तत्रापि सत्त्वात् । तस्मिन् विशेषणे दत्ते तु एकशफवत्त्वादौ नातिव्याप्तिः, तस्य गोत्वाधिकरणवृत्तित्वाभावात् ।

लक्ष्यतावच्छेदकसमानाधिकरणत्वं च लक्ष्यतावच्छेदकनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपितवृत्तित्वम् । तत्र लक्ष्यतावच्छेदकनिष्ठाधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा लक्ष्यतावच्छेदकस्य गोत्वस्य कालिकसम्बन्धेन अधिकरणे अश्वे एकशफवत्त्वस्य सत्त्वेन असम्भवग्रस्तधर्मे अव्याप्तलक्षणस्यातिव्याप्तेः । तन्निवेशे तु तादृशसमवायसम्बन्धेन गोत्वाधिकरणं गौरेव, तन्निरूपितवृत्तित्वं एकशफवत्त्वे नास्तीति नातिव्याप्तिरिति । एवं वृत्तित्वे लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा एकशफवत्त्वस्य कालिकसम्बन्धेन गोवृत्तितया पूर्वोक्तदोषापत्तेः । एवं च लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नलक्ष्यतावच्छेदकनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपितलक्षणतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वे सति लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धाव-

---

1. लक्ष्यतावच्छेदकधर्मः येन सम्बन्धेन लक्ष्ये वर्तते स सम्बन्धः लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धः ।

च्छिन्नलक्ष्यतावच्छेदकनिष्ठाधेयतानिरूपिताधिकरणतावन्निरूपितलक्षणतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वाभावः अव्याप्तस्य लक्षणमिति फलितम् । अधिकं **पट्टाभिरामटिप्पण्यादौ** द्रष्टव्यम् ।

**दीपिकायाम् - अलक्ष्ये लक्षणस्य वर्तनमतिव्याप्तिरिति** । अलक्ष्यमित्यस्य लक्ष्यनिष्ठप्रतियोगिताकभेदवदित्यर्थः । सप्तम्याः निरूपितत्वमर्थः । तस्य वर्तनशब्दार्थे आधेयत्वेऽन्वयः । लक्ष्यनिष्ठप्रतियोगिताकभेदवन्निरूपितवृत्तित्वमतिव्याप्तिरित्युक्तं भवति । यथा गोः शृङ्गित्वं लक्षणमुक्तं चेत् इदं लक्षणमतिव्याप्तिदुष्टं भवति, लक्ष्या गौः तन्निष्ठप्रतियोगितानिरूपकभेदवति महिषादौ शृङ्गित्वस्य वर्तनात् । अत्र लक्ष्यनिष्ठप्रतियोगितायां लक्ष्यतावच्छेदकावच्छिन्नत्वं निवेशनीयम् । अन्यथा गोनिष्ठप्रतियोगिताकभेद इत्यनेन श्वेतगोभेदस्यापि ग्रहीतुं शक्यतया तद्वति कपिलगवि कपिलत्वस्य वर्तमानतया अव्याप्तधर्मे अतिव्याप्तलक्षणस्यातिव्याप्तेः । तन्निवेशे तु लक्ष्या गौः, लक्ष्यतावच्छेदकं गोत्वं, तदवच्छिन्नगोनिष्ठप्रतियोगिताकभेदः 'गौर्न' इति प्रतीतिसिद्धः गोसामान्यभेदः तद्वान् कपिलगौर्न भवति, किं तु महिषादिकमेव तद्वृत्तित्वं कपिलत्वे नास्तीति नातिव्याप्तिः ।

एवं वृत्तितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा गोभिन्ने महिषादावपि कालिकसम्बन्धेन कपिलत्वस्य वर्तमानतया पूर्वोक्तदोषापत्तेः । तन्निवेशे तु लक्षणं येन सम्बन्धेन लक्ष्ये वर्तते स एव सम्बन्धः लक्षणतावच्छेदकसम्बन्ध इति प्रकृते समवायस्यैव तादृशतया महिषादिनिरूपितसमवायसम्बन्धावच्छिन्नवृत्तित्वस्य कपिलत्वेऽभावात् न तत्रातिव्याप्तिः । एवमपि असम्भवग्रस्ते एकशफवत्त्वादौ लक्ष्यगोभिन्नाश्ववृत्तित्वसत्त्वात् अतिव्याप्तलक्षणस्यातिव्याप्तिरिति तद्वारणाय लक्ष्यतावच्छेदकसमानाधिकरणत्वे सतीति विशेषणमत्रापि देयम् । एकशफवत्त्वस्य लक्ष्यतावच्छेदकगोत्वाधिकरणवृत्तित्वाभावान्न दोषः । तथा च लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नलक्ष्यतावच्छेदकनिष्ठाधेयतानिरूपिताधिकरण-

तावन्निरूपितलक्षणतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वे सति लक्ष्यताव-च्छेदकावच्छिन्नलक्ष्यनिष्ठप्रतियोगितानिरूपकभेदवन्निरूपितलक्षणता - वच्छेदकसम्बन्धावच्छिन्नवृत्तित्वम् अतिव्याप्तस्य लक्षणमिति फलितम् ।

**लक्ष्यमात्रावृत्तित्वमसम्भव** इति । सर्वत्र लक्ष्ये अवर्तनमसम्भवः । क्वचिल्लक्ष्ये अवर्तनमव्याप्तधर्मेऽप्यस्तीति सर्वत्रेत्युक्तम् । गोः एक-शफवत्त्वम् लक्षणमुक्तं चेत् तत्सर्वासु गोव्यक्तिषु नास्तीति असम्भव-दोषदूषितं भवति । लक्ष्यनिरूपितवृत्तित्वत्वावच्छिन्नप्रतियोगिताका-भावोऽत्र विवक्षितः, न तु लक्ष्यवृत्तित्वप्रतियोगिकोऽभावः । कपिल-त्वाद्यव्याप्तधर्मेऽपि यत्किंचिल्लक्ष्यश्वेतगोवृत्तित्वाभावस्य लक्ष्यवृत्ति-त्वप्रतियोगिकस्य सत्त्वेनातिव्याप्त्यापत्तेः । तद्विवक्षणे तु गोवृत्तित्वं नास्तीति प्रतीतिसिद्धस्य गोवृत्तित्वसामान्याभावस्यैव लक्ष्यनिरूपित-वृत्तित्वत्वावच्छिन्नप्रतियोगिताकतया तस्य कपिलत्वे कपिलगोवृत्तौ विरहात् नातिव्याप्तिरिति सूचनाय कृत्स्नार्थकं मात्रपदम् । एवं लक्ष्य-निरूपितवृत्तित्वे लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वमपि निवेशनी-यम् । अन्यथा एकशफवत्त्वादेरपि कालिकसम्बन्धेन गोवृत्तित्वेन तद्-वृत्तित्वाभावविरहात् असम्भवलक्षणे असम्भवदोषः स्यादिति । तथा च लक्ष्यनिरूपितलक्षणतावच्छेदकसम्बन्धावच्छिन्नवृत्तित्वत्वावच्छिन्न-प्रतियोगिताकाभावः असम्भव इति फलितम् ।सर्वमिदमभिसन्धायाह - **प्रकाशिकायाम् मात्रपदं कृत्स्नार्थक**मिति । **सम्बन्धविशेषे**ति । लक्षण-तावच्छेदकसम्बन्धेत्यर्थः । **लक्ष्यवृत्तित्वसामान्याभावे**ति । लक्ष्यवृत्तित्व-त्वावच्छिन्नप्रतियोगिताकाभावेत्यर्थः ।

ननु असम्भवग्रस्ते एकशफवत्त्वे अलक्ष्याश्ववृत्तित्वसत्त्वेन अति-व्याप्त्याख्यदोषस्यापि सत्त्वात् एकत्र अनेकदोषसाङ्कर्यं प्रसजतीति शङ्कते - **न चात्रेत्यादिना** । शङ्केयं यथाश्रुतातिव्याप्तिलक्षणाभिप्रायेण । लक्ष्यतावच्छेदकसमानाधिकरणत्वे सतीति विशेषणविशिष्टस्य पूर्वो-क्तपरिष्कृतातिव्याप्तिस्वरूपस्य एकशफवत्त्वे विरहात् । दोषभेदात्

दुष्टस्यापि भेदेन भवितव्यमिति शङ्कितुर्भावः । समाधत्ते - **दुष्टसङ्करेऽपीति** । दुष्टस्यैकत्वेऽपि दोषस्य एकत्वं नेत्यर्थः । एकस्मिन् अनेकदोषाणां समावेशसम्भवेन दोषभेदात् तदाश्रयदुष्टभेदापत्तिर्नेति समाधातुराशयः । 'उपधेयसङ्करेऽप्युपाधेरसङ्करः' इति मणिकारवचनस्याप्ययमेवार्थः ।

## दीपिका

### लक्षणलक्षणविचारः

एतद्दूषणत्रयरहितधर्मो लक्षणम् । यथा गोः सास्नादिमत्त्वम् । स एवासाधारणधर्म इत्युच्यते । लक्ष्यतावच्छेदकसमनियतत्वमसाधारणत्वम् । व्यावर्तकस्यैव लक्षणत्वे व्यावृत्तावभिधेयत्वादौ चातिव्याप्तिः अतः तद्वारणाय तद्भिन्नत्वं धर्मविशेषणं देयम् । व्यवहारस्यापि लक्षणप्रयोजनत्वे तु तत् न देयम् । व्यावृत्तेरपि व्यवहारसाधनत्वात् ।

## प्रकाशिका

**एतद्दूषणत्रयरहित** इति । उक्तदूषणाभावत्रयविशिष्ट इत्यर्थः । नन्वसाधारणधर्मो लक्षणमिति हि सिद्धान्तः । तस्मात् कारणात् कथं दूषणत्रयरहितो धर्मो लक्षणमित्यत आह - **स एवेति** । **इत्युच्यत** इति । अभियुक्तैरिति शेषः । ननु साधारण्यस्य लक्ष्यालक्ष्यवृत्तित्वरूपतया तदभावरूपासाधारण्यस्याव्याप्त्यादिदोषग्रस्तधर्मेऽपि सत्त्वात् कथं दोषत्रयरहित एवासाधारणधर्म इत्याशङ्कां परिजिहीर्षुः असाधारणत्वमन्यादृशं निर्वक्ति - **लक्ष्यतावच्छेदकसमनियतत्वमिति** । लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वमित्यर्थः । अव्याप्त्यसम्भवग्रस्तयोर्वारणाय सत्यन्तम् । अतिव्याप्तस्य वारणाय विशेष्यम् । धर्मपदं लक्षणताघटकसम्बन्धेन व्यापकत्वादितात्पर्यग्राहकमिति भावः।

अत्रेदं बोध्यम् - एतद्दोषा असाधारणत्वस्य विघटकाः । अतिव्याप्तौ व्याप्यत्वस्येतरयोश्च व्यापकत्वस्य भङ्गात् । एतेषां दूषकताबीजं लक्षणेन इतरभेदसाधनेऽतिव्याप्तौ व्यभिचारः, इतरयोश्च भागा-

सिद्धिस्वरूपासिद्धी इति । ननु लक्ष्यतावच्छेदकसमनियतत्वस्य लक्षण-लक्षणत्वे लक्षणस्य व्यावृत्तिरेव प्रयोजनमिति मते व्यावर्तकस्यैव लक्षण-लक्षणलक्ष्यतया व्यावृत्त्यादावतिव्याप्तिरित्याशङ्कां तन्मतानुसारेण निराकरोति - **व्यावर्तकस्यैवेति** । इतरभेदानुमितिजनकस्यैवेत्यर्थः । इतरभेदविधेयकानुमितिजनकं तावच्छेदकविषयताविशेषाश्रयस्यैवेति यावत् । एवेन व्यावहारिकव्यवच्छेदः । **लक्षणत्वे** गवादिलक्षणत्वे उक्तलक्षण-लक्षणलक्ष्यत्व इति यावत् । **लक्ष्यत्व** इति पाठेऽप्ययमेवार्थो बोध्यः । **व्यावृत्ताविति** । गवादीतरभेदे गोत्वादिरूपलक्ष्यतावच्छेदकसमनियतत्वस्य अभिधेयत्वप्रमेयत्वादौ पदार्थत्वसमनियतत्वस्य च सत्त्वेनातिव्याप्तिवारणाय व्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च लक्षणलक्षणे निवेशनीयमित्यर्थः । यद्यपि व्यावृत्तेरपि व्यावहारिकत्वस्य वक्ष्यमाणतया तेनैव रूपेण व्यावहारिकत्वेन सर्वेषां सङ्ग्रहसम्भवात् पृथगभिधानमनुचितम् , तथापि हेतुसाध्ययोरैक्ये हेतुमत्तानिश्चयकाले साध्यसंशयरूपपक्षताया असत्त्वेन नानुमितिरिति प्राचीनमते इतरभेदस्य व्यावर्तकत्वाभावेन तत्रातिव्याप्तिः । सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता इति सिद्धान्तिमते तु व्यावृत्तेरपि व्यावर्तकत्वेन लक्ष्यतया तत्र लक्षणसङ्गमनस्येष्टत्वेन नातिव्याप्तिरित्यावेदयितुं पृथक्कथनमिति ध्येयम् ।

ननु किमिदं नाम लक्षणलक्षणलक्ष्यतावच्छेदकं व्यावर्तकत्वम् । न तावत् सामान्यतो भेदानुमापकत्वम् । व्यावृत्त्यभिधेयत्वादेरपि यत्किंचिदुभयत्वावच्छिन्नप्रतियोगिताकभेदानुमापकतया तत्रातिव्याप्तिकथनासङ्गतेः । सर्वेषामपि व्यतिरेकधर्माणां यत्किंचिद्व्यावर्तकतया असाधारण्यादिघटकव्यापकत्वादिवैयर्थ्यापाताच्च । नापि विशिष्य तत्तद्धर्मावच्छिन्नेतरभेदानुमापकत्वम् । तथा सति गोत्वावच्छिन्नेतरभेदानुमापकस्य सास्नादिमत्त्वस्य गोत्वसमनियतत्वं लक्षणम् इत्येवं रीत्या विशिष्य तत्तल्लक्षणस्य वक्तव्यतया गोत्वादिरूपलक्ष्यतावच्छेदकतत्तद्धर्मसमनैयत्यस्य गोत्वावच्छिन्नेतरभेदादिरूपव्यावृत्तौ सत्त्वे-

नातिव्याप्तेः सम्भवेऽप्यभिधेयत्वादावतिव्याप्त्यलग्नकतापत्तेः दुर्वारत्वात् गोत्वादिसमनैयत्यस्य तत्रासत्त्वादिति चेत् -

मैवम् - यतः सास्नादिमत्त्वं पक्षीकृत्य गोत्वावच्छिन्नेतरभेदानुमापकत्वे साध्ये विशेषव्याप्तौ अन्वयदृष्टान्तालाभेन यद्यद्धर्मसमनियतं तत्तद्वच्छिन्नव्यावर्तकमिति रीत्या सामान्यमुखेन व्याप्तेरभ्युपगन्तव्यतया तत्र सिद्धसाधनाप्रसिद्धिभ्यामव्यावर्तकयोर्व्यावृत्त्यभिधेयत्वयोः तत्तद्धर्मसमनैयत्यरूपप्रकृतहेतोस्तत्तुल्यस्य वा हेतोः सत्त्वेन प्रकृतसाध्यस्य तत्तुल्यस्य वा साध्यस्यासत्त्वेन व्यभिचारः स्यात् । अतस्तद्दोषवारणाय तत्तद्धर्मावच्छिन्नेतरभेदरूपव्यावृत्तिभिन्नत्वमभिधेयत्वादिभिन्नत्वं च तादृशलक्षणे निवेशनीयमित्यभिप्रायकोऽयं ग्रन्थ इति न पूर्वोक्तदोषावसरः । अधिकविचारस्तु अन्यत्रानुसन्धेयः ।

ननु लक्षणस्य व्यवहारोऽपि प्रयोजनम् । तेन रूपेण व्यवहर्तव्यज्ञानं विना तद्रूपावच्छिन्नबोधकशब्दरूपव्यवहारासम्भवात् । एवं च व्यावहारिकलक्षणस्यापि लक्ष्यत्वात् तद्भिन्नत्वं विशेषणं न देयमित्याह - **व्यवहारस्यापी**ति । ननु व्यावृत्तावतिव्याप्तिवारणाय तद्भिन्नत्वमावश्यकम् । व्यावृत्तेर्व्यावहारिकत्वाभावादिति भ्रमं वारयति - **व्यावृत्तेरपी**ति । अपिना अभिधेयत्वादिपरिग्रहो दृष्टान्तलाभाय ।

**बालप्रिया**

नन्वेतद्दूषणत्रयरहितधर्मो लक्षणम् इत्यस्य अव्याप्त्यतिव्याप्त्यसम्भवरूपदोषत्रयाभावविशिष्टो धर्मो लक्षणमित्यर्थः । तथा च [1]एकदोषवत्यपि कपिलत्वादौ दोषत्रयं नास्तीति [2]लक्षणत्वापत्तिरित्याशङ्क्य व्याचष्टे - **उक्तदूषणाभावत्रयविशिष्ट** इति । प्रतियोगिनि त्रित्वं न विवक्षितम्, किं तु अभावे इति भावः । एकदोषवति इतरदोषाभावद्वयसत्त्वेऽपि दोषाभावत्रयं नास्तीति न [3]पूर्वोक्तापत्तिरिति ध्येयम् ।

---

1. एकदोषवत्यपीति । अव्याप्तिरूपैकदोषविशिष्टेऽपीत्यर्थः ।
2. लक्षणत्वापत्तिरिति । गोलक्षणत्वप्रसङ्ग इत्यर्थः ।
3. पूर्वोक्तापत्तिरिति । कपिलत्वादेर्गोलक्षणत्वापत्तिरित्यर्थः ।

ननु न साधारणः असाधारण इति कर्मधारयसमासात् असाधारण इत्यस्य साधारणभिन्न इत्यर्थः । साधारण इत्यस्य च लक्ष्यवृत्तित्वे सति अलक्ष्यवृत्तिरित्यर्थः । लक्ष्यवृत्तित्वविशिष्टालक्ष्यवृत्तित्ववानिति यावत् । असाधारण इत्यस्य च लक्ष्यवृत्तित्वविशिष्टालक्ष्यवृत्तित्वाभाववानित्यर्थः । अव्याप्तिग्रस्ते कपिलत्वादौ अलक्ष्यवृत्तित्वरूपविशेष्याभावात् विशिष्टाभावोऽस्ति । असम्भवग्रस्तः एकशफवत्त्वादिः लक्ष्यवृत्तित्वरूपविशेषणाभावात् विशिष्टाभाववान् । तथा च उभयोः असाधारणतया लक्षणत्वापत्तिः, दोषवतोऽपि असाधारणतया दोषत्रयरहित एवासाधारण इत्यसङ्गतिश्च इत्याशङ्क्य असाधारणशब्दार्थः प्रकारान्तरेणोच्यते **दीपिकायामि**त्याह - **ननु साधारण्यस्ये**ति । **अन्यादृशमि**ति । लक्ष्यवृत्तित्वविशिष्टालक्ष्यवृत्तित्वाभावात् अन्यविधमित्यर्थः । **लक्ष्यतावच्छेदकव्यापकत्वे सती**ति । लक्ष्यतावच्छेदकं यत्र यत्र वर्तते तत्र सर्वत्र वर्तमानत्वं लक्ष्यतावच्छेदकव्यापकत्वम् । लक्ष्यतावच्छेदकं यत्र नास्ति तत्रावर्तमानत्वं लक्ष्यतावच्छेदकव्याप्यत्वम् । लक्ष्या गौः, लक्ष्यतावच्छेदकं गोत्वम् , तत् यत्र यत्र गोव्यक्तौ वर्तते तत्र सर्वत्र सास्नादिमत्त्वमस्ति, गोत्वं यत्र नास्ति महिषादौ तत्र सास्नादिमत्त्वं नास्तीति लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वात् सास्नादिमत्त्वं असाधारणधर्मो भवति, अतस्तत् गोः लक्षणमिति भावः । तथा च लक्ष्यतावच्छेदकव्यापकत्वे सति लक्ष्यतावच्छेदकव्याप्यत्वं लक्षणस्य लक्षणमित्युक्तं भवति । सत्यन्तस्य प्रयोजनमाह - **अव्याप्त्यसम्भवग्रस्तयोर्वारणाये**ति । अव्याप्तिग्रस्ते कपिलत्वे लक्षणभिन्ने लक्ष्यतावच्छेदकगोत्वशून्यमहिषाद्यवृत्तित्वरूपं लक्ष्यतावच्छेदकव्याप्यत्वमस्तीति तत्र लक्षणलक्षणस्यातिव्याप्तिः , तद्वारणाय लक्ष्यतावच्छेदकव्यापकत्वे सतीत्युक्तम् । गोत्ववति श्वेतगवि कपिलत्वाभावात् लक्ष्यतावच्छेदकव्यापकत्वं तत्र नास्तीति नातिव्याप्तिः । ननु उक्तरीत्या अव्याप्तिग्रस्तेऽतिव्याप्तिवारणरूपप्रयोजनसम्भवेऽपि असम्भवग्रस्ते तद्वारणरूपं प्रयोजनं न सम्भवति । असम्भवग्रस्तस्य

एकशफवत्त्वादेः लक्ष्यतावच्छेदकगोत्वशून्याश्ववृत्तितया लक्ष्यतावच्छेदकव्याप्यत्वस्याभावात् अतिव्याप्त्यप्रसक्तेरिति चेत् - अत्राहुः । अत्रासम्भवग्रस्तपदं गगनरूपस्यासम्भवग्रस्तस्य तात्पर्येण बोधकम् । गोः गगनं लक्षणमुक्तं चेत् तदसम्भवि । गगनस्य अवृत्तिपदार्थतया कुत्रापि गवि असत्त्वात् । तथा चासम्भवग्रस्ते गगने अवृत्तिपदार्थत्वादेव लक्ष्यतावच्छेदकगोत्वशून्यमहिषाद्यवृत्तित्वमप्यस्तीति लक्ष्यतावच्छेदकव्याप्यत्वमात्रोक्तौ तत्रातिव्याप्तिः स्यादिति तद्वारणाय लक्ष्यतावच्छेदकव्यापकत्वे सतीत्युक्तमिति । **अतिव्याप्तस्य वारणाय विशेष्यमिति** । लक्ष्यतावच्छेदकव्याप्यत्वरूपविशेष्यदलाभावे लक्ष्यतावच्छेदकव्यापकत्वं लक्षणलक्षणं स्यात् । तथा सति अतिव्याप्तिदुष्टस्य शृङ्गित्वस्य गोत्वव्यापकत्वमस्तीति तत्रातिव्याप्तिः स्यात् । तद्वारणाय लक्ष्यतावच्छेदकव्याप्यत्वोपादानम् । शृङ्गित्वस्य गोत्वशून्यमहिषादिवृत्तितया लक्ष्यतावच्छेदकव्याप्यत्वं नास्तीति नातिव्याप्तिरिति भावः ।

अत्रेदं बोध्यम् -- लक्ष्यतावच्छेदकव्यापकत्वं नाम लक्ष्यतावच्छेदकनिष्ठाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावाप्रतियोगित्वम् । तत्राधेयतायां लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेश्यम् । अन्यथा गोत्वस्य कालिकसम्बन्धेन अधिकरणे महिषादौ वर्तमानस्य सास्नादिमत्त्वाभावस्य प्रतियोग्येव सास्नादिमत्त्वमिति लक्षणे सास्नादिमत्त्वादौ असम्भवापत्तेः । एवं प्रतियोगितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा समवायेन गोत्ववति गवि यः संयोगसम्बन्धावच्छिन्नसास्नादिमत्त्वाभावः तत्प्रतियोगित्वस्यैव सास्नादिमत्त्वे सत्त्वेन असंभवापत्तेः । एवं लक्ष्यतावच्छेदकव्याप्यत्वं न लक्ष्यतावच्छेदकाभाववदवृत्तित्वम्, पदार्थस्य अभिधेयत्वं लक्षणमित्यादौ लक्ष्यतावच्छेदकपदार्थत्वाभाववतोऽप्रसिद्ध्या अभिधेयत्वादिरूपे लक्षणे अव्याप्त्यापत्तेः । किं तु स्वव्यापकतत्कत्वम् । स्वं - लक्षणम्, तत् - लक्ष्यतावच्छेदकम् । लक्ष्यता-

वच्छेदकस्य पदार्थत्वस्य लक्षणीभूताभिधेयत्वव्यापकत्वमस्तीति न पूर्वोक्तदोषः । अनयोर्व्यापकत्वव्याप्यत्वयोर्द्विधा निवेशे गौरवात् सकृन्निवेश्य स्वव्यापकलक्ष्यतावच्छेदकव्यापकत्वं लक्ष्यतावच्छेदकसमनियतत्वमिति परिष्कारो युक्तः । स्वव्यापकत्वं च स्वनिष्ठाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावाप्रतियोगित्वम् ।। तत्राधेयतायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा सास्नादिमत्त्वस्य कालिकसम्बन्धेनाधिकरणे महिषादौ वर्तते योऽत्यन्ताभावः गोत्वाभावः तत्प्रतियोगित्वस्यैव गोत्वे सत्त्वेन असम्भवापत्तेः । एवं प्रतियोगितायां लक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा समवायेन सास्नादिमति गवि यः संयोगसम्बन्धावच्छिन्नगोत्वाभावः तत्प्रतियोगित्वस्यैव गोत्वे सत्त्वेन पूर्वोक्तदोषापत्तेः ।

[1]तथा च लक्षणतावच्छेदकसम्बन्धावच्छिन्नस्व (लक्षण) निष्ठाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावनिरूपितलक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाभाववल्लक्ष्यतावच्छेदकनिष्ठलक्ष्यतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावनिरूपितलक्षणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वाभावः लक्ष्यतावच्छेदकसमनियतत्वमिति फलति । एवं च स्वव्यापकतत्कत्वरूपलक्ष्यतावच्छेदकव्याप्यत्वं गगनरूपेऽसंभवग्रस्तेऽपि न भवति गगनाधिकरणस्यैवाप्रसिद्धेः । तथा च अव्याप्त्यसम्भवग्रस्तयोर्वारणायेत्यत्र असम्भवग्रस्तपदं तच्छून्यावृत्तित्वरूपव्याप्यत्वनिवेश-

---

1. तथा चेत्यादि । गोलक्षणे सास्नादिमत्त्वे एवं समन्वयः - लक्षणतावच्छेदकसम्बन्धः समवायः तदवच्छिन्ना या सास्नादिमत्त्वनिष्ठाधेयता तन्निरूपिताधिकरणतावती गौः तन्निष्ठो योऽभावः न समवायेन गोत्वाभावः अपि तु समवायेन घटत्वाभावः तन्निरूपितसमवायसम्बन्धावच्छिन्नप्रतियोगित्वं घटे, तादृशप्रतियोगित्वाभाववत् गोत्वरूपं लक्ष्यतावच्छेदकं तन्निष्ठा या समवायसम्बन्धावच्छिन्ना आधेयता तन्निरूपिताधिकरणतावती गौः तन्निष्ठात्यन्ताभावः न समवायेन सास्नाद्यभावः अपि तु घटत्वाभावः तन्निरूपितसमवायावच्छिन्नप्रतियोगित्वं घटत्वे तादृशप्रतियोगित्वाभावः सास्नादिमत्वेऽस्तीति ।

मभिप्रेत्येत्यवधेयम् । अधिकमन्यतोऽवसेयमिति । सर्वमिदं मनसिकृत्यैव **प्रकाशिकायाम् 'धर्मपदं लक्षणताघटकसम्बन्धेन व्यापकत्वादितात्पर्यग्राहकम्'** इत्युक्तम् ।

दूषणत्रयरहितधर्म एवासाधारणधर्म इत्युच्यत इति कथनात् अन्यतमदोषवान् धर्मः असाधारणो न भवतीति लभ्यते । तेन अतिव्याप्त्यादिदोषाणामसाधारण्याभावप्रयोजकत्वं लभ्यते । तदेवोपपादयति-**अत्रेदं बोध्यमित्यादिना** । **एतद्दोषाः** - अव्याप्त्यतिव्याप्त्यसम्भवाः । **असाधारणत्वस्य विघटकाः** - असाधारणत्वाभावप्रयोजकाः । **अतिव्याप्तौ** सत्यामिति शेषः । **इतरयोश्च** सत्योरिति शेषः । तथा च अतिव्याप्तिरूपदोषे सति लक्ष्यतावच्छेदकव्याप्यत्वं न भवति, अव्याप्तिरूपदोषे असम्भवरूपदोषे वा सति लक्ष्यतावच्छेदकव्यापकत्वं न भवति इति रीत्या दोषाणामसाधारण्यविघटकत्वमिति भावः । दोषास्तावत् लक्षणं दूषयन्ति । कथमिति चेत् - आह - **एतेषां दूषकताबीजं त्विति** । अयमत्राशयः- लक्षणं तावत् लिङ्गविधया लक्ष्ये इतरभेदविधेयकानुमितिं जनयति । यथा गौः इतरभिन्ना सास्नादिमत्त्वादिति । लिङ्गस्य व्याप्तिः पक्षधर्मता चेति रूपद्वयमपेक्षितम् । कस्मिंश्चित् लक्षणे अतिव्याप्तिरूपो दोषोऽस्ति चेत् तेन लक्षणेन इतरभेदः नानुमातुं शक्यते, व्यभिचारदोषेण व्याप्तेर्भङ्गात् । तथा हि - गौः इतरभिन्ना शृङ्गित्वात् इत्यनुमानं प्रयोक्तव्यम् । शृङ्गित्वमतिव्याप्तं गोभिन्नवृत्ति इति ज्ञानदशायां शृङ्गित्वं [1]गवेतरभेदरूपसाध्याभाववद्वृत्ति इति व्यभिचारज्ञानमावश्यकमिति तेन गवेतरभेदाभाववद्वृत्ति शृङ्गित्वं इति व्याप्तिज्ञानं प्रतिबध्यते, तेनानुमितिप्रतिबन्धः । तथा च [2]व्याप्ति-

---

1. गवेतरेत्यादि । गवेतरभेदरूपं यत् साध्यं तदभाववद्वृत्तीत्यर्थः । गवेतरभेदाभावश्च गवेतरत्वरूपः । तथा च गवेतरभेदाभाववद्वृत्ति इत्यस्य गवेतरत्ववद्वृत्ति गोभिन्नवृत्तीत्येवार्थः । तथा चातिव्याप्तत्वज्ञानं व्यभिचारज्ञानरूपमिति भावः ।

2. व्याप्तिविरोधिव्यभिचारेति । व्याप्तिज्ञानप्रतिबन्धकज्ञानविषयो यो व्यभिचारः तत्प्रयोजकतयेत्यर्थः

विरोधिव्यभिचारसम्पादकतया अतिव्याप्तिर्लक्षणं दूषयति । व्यभि-चाराख्यदोषयुक्तं करोतीति यावत् । एवं लक्षणे क्वचिल्लक्ष्यावृत्ति-त्वरूपाव्याप्तिसत्त्वे गौः इतरभिन्ना कपिलत्वादित्यनुमाने हेतोः पक्षै-कदेशावृत्तित्वरूपभागासिद्धिः दोषः, सर्वलक्ष्यावृत्तित्वरूपासंभवसत्त्वे कृत्स्नपक्षावृत्तित्वरूपस्वरूपासिद्धिर्दोषः । ताभ्यां च हेतोः पक्षधर्मता भज्यते । तथा च पक्षधर्मताज्ञानप्रतिबन्धकज्ञानविषयभागासिद्धि-स्वरूपासिद्धिसम्पादकतया अव्याप्त्यसम्भवयोर्लक्षणदूषकत्वमिति ।

**दीपिकायाम् व्यावर्तकस्यैव लक्षणत्वे** इत्यादि । यत् लक्ष्ये इतरभेद-मनुमापयति तत् व्यावर्तकम्, तदेव लक्षणमिति केचित् । यत् न व्यावर्तकम् अपि तु शब्दप्रयोगरूपव्यवहारस्य निमित्तं तदपि लक्षण-मित्यन्ये । तत्र व्यावर्तकमेव लक्षणमिति मते लक्ष्यतावच्छेदकसम-नियतत्वरूपस्य पूर्वोक्तस्य लक्षणलक्षणस्य व्यावर्तकं लक्ष्यं भवति । व्यावर्तकभिन्ना व्यावृत्तिः अभिधेयत्वादिकं चालक्ष्यं भवति । तत्रापि लक्ष्यतावच्छेदकसमनियतत्वसत्त्वात् लक्षणलक्षणस्यातिव्याप्तिर्दोषः । तद्वारणाय लक्षणलक्षणे व्यावृत्तिभिन्नत्वं अभिधेयत्वादिभिन्नत्वं च विशेषणं देयम् । कथं व्यावृत्तौ अभिधेयत्वादौ च लक्ष्यतावच्छेदक-समनियतत्वमस्तीति चेत् - श्रूयताम् - व्यावृत्तिर्नाम इतरभेदः, प्रकृते गवेतरभेदः । सः लक्ष्यतावच्छेदकगोत्वव्यापकः गोत्ववतीषु सर्वासु गोषु गवेतरापेक्षया भेदस्य सत्त्वात् । एवं लक्ष्यतावच्छेदकव्याप्यश्च; गोत्वशून्येषु महिषादिषु गवेतरेषु गवेतरभेदस्यावृत्तेः । एवं अभिधेय-त्वादिकं लक्ष्यतावच्छेदकपदार्थत्वव्यापकम्, पदार्थत्ववत्सु सर्वेषु पदा-र्थेषु अभिधेयत्वादेः सत्त्वात् । एवं पदार्थत्वव्याप्यं च । यद्यपि तच्छून्यावृत्तित्वरूपं पदार्थत्वव्याप्यत्वं न सम्भवति, पदार्थत्वशून्यस्या-प्रसिद्धेः । तथापि स्वव्यापकतत्कत्वरूपं व्याप्यत्वं सम्भवति । स्वम् - अभिधेयत्वम्, तद्व्यापकं - पदार्थत्वं तत्कत्वस्याभिधेयत्वे सद्भावात् । एवं च यदि व्यावर्तकमेव लक्षणलक्षणलक्ष्यं स्यात् तदा अलक्ष्येषु व्या-वृत्तावभिधेयत्वादिषु च लक्ष्यतावच्छेदकसमनियतत्वसत्त्वादतिव्याप्ति-

रिति तद्वारणाय तत्तद्भिन्नत्वं लक्षणे निवेशनीयमिति **दीपिका**ग्रन्थस्य भावः । व्यावर्तकस्येत्यस्य सामान्यतः इतरभेदज्ञानजनकस्येत्यर्थो यदि स्यात् तदा ज्ञानपदेन प्रत्यक्षस्य वा शाब्दबोधस्य वा विवक्षायां तज्जनकत्वं विषयादिविधया व्यावृत्तेरप्यस्तीति तस्याः अलक्ष्यत्वं न स्यादिति पर्यालोच्य **प्रकाशिकायाम् इतरभेदानुमितिजनकस्ये**त्यर्थ उक्तः । सिद्धसाधनदोषेण व्यावृत्तेः इतरभेदानुमितिजनकत्वं नास्तीति पश्चादुपपादयिष्यति ।

ननु व्यावर्तकस्येत्यस्य इतरभेदानुमितिजनकस्येत्यर्थो न सङ्गच्छते, लिङ्गज्ञानमेवानुमितिजनकम्, न तु लिङ्गम् इति मते लक्षणरूपस्य हेतोः अनुमितिजनकत्वाभावात् । न च व्यावर्तकस्येत्यस्य इतरभेदविधेयकानुमितिजनकज्ञानविषयस्येत्यर्थः, तथा च नोक्तदोष इति वाच्यम् । अनुमितिजनके [1]समूहालम्बनपरामर्शे घटादीनामपि विषयतया तेषामपि व्यावर्तकत्वापत्तेः । न चेतरभेदविधेयकानुमितिजनकतावच्छेदकविषयताश्रयस्येत्यर्थः, गवेतरभेदव्याप्यसास्नादिमान् घटश्चेति समूहालम्बनपरामर्शे घटादेः विषयत्वेऽपि घटादिनिष्ठविषयतायाः [2]न जनकतावच्छेदकत्वमिति वाच्यम् । इतरभेदनिष्ठविषयतानिरूपितव्याप्तिनिष्ठविषयतानिरूपितसास्नादिहेतुनिष्ठविषयतानिरूपितगवादिपक्षनिष्ठविषयताशालिज्ञानत्वेन परामर्शस्य जनकतया इतरभेदनिष्ठविषयताया अपि जनकतावच्छेदकतया तदाश्रयस्येतरभेदस्यापि व्यावर्तकत्वापत्तेः । एवं पक्षादीनामपि व्यावर्तकत्वापत्तेश्च । अतो निष्कृष्य व्याचष्टे - **इतरभेदविधेयके**ति । विषयताविशेषपदेन हेतुनिष्ठविषयतैव गृह्यते, तदाश्रयत्वं च साध्यपक्षादेर्नास्तीति न तेषां व्यावर्तकत्वापत्तिरिति हृदयम् । इतरभेदविधेयकानुमितिजनक-

---

1. **गौः गवेतरभेदव्याप्यवान् घटश्चेत्याकारकपरामर्शे इत्यर्थः ।**

2. **न जनकतावच्छेदकत्वमिति । गौरितरभिन्नेत्याकारकानुमितिं प्रति गवेतरभेदनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितसास्नादिनिष्ठप्रकारतानिरूपितगोनिष्ठविशेष्यताशालिज्ञानत्वेनैव कारणतया घटनिष्ठविषयताया कारणतावच्छेदकाघटकतया न कारणतावच्छेदकत्वमिति भावः ।**

तावच्छेदिका या परामर्शीयपक्षनिष्ठविषयतानिरूपितत्वावच्छिन्ना व्याप्तिनिष्ठविषयतानिरूपिता विषयता तदाश्रयः व्यावर्तकपदेन विवक्षित इति तु तत्त्वम् । व्यावर्तकस्यैव गवादिलक्षणत्वेऽपि प्रकृतलक्षणलक्षणे नानुपपत्तिरित्यतो व्याचष्टे - **उक्तलक्षणलक्षणलक्ष्यत्व** इति। उक्तं यत् लक्षणस्य लक्षणं लक्ष्यतावच्छेदकसमनियतत्वरूपं तन्निरूपितलक्ष्यत्व इत्यर्थः । अतियाप्तिमुपपादयति - **गवादीतरभेद** इति ।

ननु लक्षणं हि व्यावर्तकम् व्यावहारिकम् चेति द्विविधम् । तत्र व्यावर्तकलक्षणमेव लक्ष्यमिति पक्षे अलक्ष्ये व्यावहारिकेऽतिव्याप्तिः, तद्वारणाय व्यावहारिकभिन्नत्वं निवेश्यमित्येवोच्यताम् । व्यावहारिकपदेनैव व्यावृत्तेरभिधेयत्वादेश्च सङ्ग्रहात् तयोः पृथक् पृथक् अभिधानस्य व्यर्थत्वात् इत्याशङ्कते - **यद्यपीति** । **वक्ष्यमाणतयेति** । 'व्यावृत्तेरपि व्यवहारसाधनतया' इति ग्रन्थेनेति शेषः । **संग्रहसंभवादि**ति । एकशब्दबोध्यत्वसंभवादित्यर्थः । **पृथगभिधानम्** - भिन्नभिन्नशब्दैर्निर्देशः । समाधत्ते - **तथापीति** । अयमत्राशयः - लक्ष्येतरभेदरूपायाः व्यावृत्तेः लक्ष्योद्देश्यकेतरभेदविधेयकानुमितिजनकत्वं साध्यसंशयः पक्षता इति प्राचीनमते न संभवति । तथा हि - इतरभेदः इतरभेदानुमितिजनक इत्युक्ते साध्यहेत्वोरैक्यं भवति, 'गौः इतरभिन्ना इतरभेदात्' इत्येवानुमानस्य प्रयोक्तव्यत्वात् । तत्र च 'गौः इतरभिन्ना' इत्याकारकानुमितिं प्रति 'गौः इतरभेदव्याप्येतरभेदवती' इत्याकारकपरामर्शः कारणम् । स च परामर्शः गवि इतरभेदमवगाहमानः पक्षविशेष्यकसाध्यनिश्चयरूपो भवति । तत्काले च गौः इतरभेदवती वा न वेति साध्यसंशयरूपा पक्षता न भवितुमर्हति, साध्यसंशयं प्रति साध्यनिश्चयस्य प्रतिबन्धकत्वात् । पक्षताया अभावे चानुमितिर्न भवितुमर्हति । इत्थं च इतरभेदरूपव्यावृत्तेः इतरभेदविधेयकानुमितिजनकत्वरूपव्यावर्तकत्वाभावात् अलक्ष्यतया तत्र पूर्वोक्तरीत्या लक्ष्यतावच्छेदकसमनियतत्वरूपस्य लक्षणलक्षणस्य सत्त्वादतिव्याप्तिः इति । सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता इति नवीनमते तु साध्य-

निश्चयरूपसिद्धिसत्त्वेऽपि'पक्षे साध्यमनुमिनुयाम्'इत्याकारकसिषाधयिषासत्त्वे तद्विरहरूपविशेषणाभावात् विशिष्टाभावरूपपक्षतासत्त्वात् अनुमितिर्भवत्येव। इत्थं च 'गवि इतरभेदं अनुमिनुयाम्' इतीच्छाबलात् 'गौः इतरभेदव्याप्येतरभेदवती' इति परामर्शात्मकसाध्यनिश्चयसत्त्वेऽपि 'गौरितरभिन्ना' इत्यनुमितेरुदयेन इतरभेदानुमितिजनकत्वरूपव्यावर्तकत्वं इतरभेदरूपव्यावृत्तेरस्तीति तस्याः लक्ष्यतया लक्ष्ये लक्षणसत्त्वस्येष्टतया नातिव्याप्तिः इत्यमुं व्यावृत्तावाभिधेयत्वापेक्षया विद्यमानं विशेषं सूचयितुं 'व्यावहारिकेऽतिव्याप्तिः' इत्यनुक्त्वा व्यावृत्तौ अभिधेयत्वादौ चातिव्याप्तिः' इत्युक्तं **दीपिकायामि**ति ।

**ननु किमिदमित्यादि** । अयमत्र प्रघट्टकार्थः - व्यावर्तकस्यैव लक्षणस्य लक्ष्यतावच्छेदकसमनियतत्वं लक्षणमिति पूर्वमुक्तत्वात् व्यावर्तकत्वं लक्षणलक्षणस्य लक्ष्यतावच्छेदकमिति लभ्यते । तत्र किं नाम व्यावर्तकत्वम् ? न तावत् भेदत्वेन सामान्यरूपेण भेदविधेयकानुमितिजनकत्वम् । व्यावृत्त्यभिधेयत्वादेरपि भेदानुमितिजनकत्वेन व्यावर्तकत्वेन लक्ष्यत्वापत्त्या तत्रातिव्याप्तिकथनासङ्गतेः । गौः गोघटोभयभिन्ना गवेतरभेदात्, पदार्थः घटपटोभयभिन्नः अभिधेयत्वात् इत्येवं भेदत्वाक्रान्तयत्किंचिदुभयभेदविधेयकानुमितिजनकत्वस्य व्यावृत्त्यभिधेयत्वादावपि सत्त्वात् । किं च सर्वेषामपि [1]व्यतिरेकिणां अत्यन्ताभावप्रतियोगिनां धर्माणां यत्किंचिद्भेदानुमापकत्वात् अव्याप्तिग्रस्तानां कपिलत्वादिधर्माणामपि कपिलगौः श्वेतगोभिन्ना कपिलत्वात् इत्येवं भेदविधेयकानुमितिजनकत्वेन व्यावर्तकतया लक्ष्यत्वेन [2] तत्रातिव्या-

---

1. व्यतिरेकिणामिति । अयं पटभिन्नः घटत्वादित्यादिरीत्या घटत्वादीनां भेदानुमापकत्वात् इति भावः । केवलान्वयिनां धर्माणां तु यदपेक्षया भेदः साधयितुमिष्यते तत्रापि सत्त्वेन भेदानुमापकत्वं नास्तीति वक्तुं शक्येतापीत्याशयेन व्यतिरेकिणामित्युक्तम् । तथा च कपिलत्वादयोऽपि व्यतिरेकिण इति भेदानुमापकाः भवितुमर्हन्तीति भावः ।

2. अतिव्याप्त्यप्रसक्त्येति । अलक्ष्ये लक्षणसत्त्वं ह्यतिव्याप्तिः, न तु लक्ष्ये इति भावः।

प्त्यप्रसक्त्या तद्वारकस्य समनैयत्यघटकव्यापकत्वविशेषणस्य, अतिव्याप्तस्य शृङ्गित्वादेः 'गौः घटभिन्ना शृङ्गित्वात्' इत्येवं यत्किंचिद्भेदानुमितिजनकत्वेन लक्ष्यतया तत्रातिव्याप्त्यप्रसक्त्या तद्वारकस्य व्याप्यत्वविशेषणस्य च व्यर्थत्वप्रसङ्गात् ।

न च तत्तल्लक्षणलक्ष्यतावच्छेदका ये ये धर्माः तत्तद्धर्मावच्छिन्नेतरभेदत्वेन विशिष्य भेदानुपादाय तद्विधेयकलक्ष्योद्देश्यकानुमितिजनकत्वमेव व्यावर्तकत्वमिह विवक्षितम् । उभयभेदस्य गोत्वावच्छिन्नेतरभेदत्वाभावेन तद्विधेयकानुमितिजनकत्वमादाय व्यावृत्त्यभिधेयत्वादेः [1]न व्यावर्तकत्वापत्तिः । कपिलत्वादेश्च गोत्वावच्छिन्नोद्देश्यकगोत्वावच्छिन्नेतरभेदविधेयकानुमितिजनकत्वं [2]न भवति, 'गौः गवेतरभिन्ना कपिलत्वात्' इत्यनुमाने भागासिद्धेः, 'गौः गवेतरभिन्ना शृङ्गित्वात्' इत्यनुमाने व्यभिचाराच्चेति वाच्यम् । तथा सति गोत्वावच्छिन्नेतरभेदानुमितिजनकस्य सास्नादिमत्त्वस्य गोत्वसमनियतत्वं लक्षणमिति विशिष्य तत्तल्लक्षणलक्षणस्य वक्तव्यतया सास्नादिमत्त्वलक्षणस्य गोत्वसमनियतत्वस्य गवेतरभेदरूपव्यावृत्तौ सत्त्वेन तत्रातिव्याप्तेः सम्भवेऽपि अभिधेयत्वादावतिव्याप्तेरसम्भवात् । अभिधेयत्वे गोत्वशून्यमहिषादिवृत्तितया गोत्वशून्यावृत्तित्वरूपगोत्वव्याप्यत्वाभावेन गोत्वसमनियतत्वस्य अभावात् । तथा चाभिधेयत्वादावतिव्याप्तिकथनमसङ्गतमिति पूर्वपक्षः ।

---

1. न व्यावर्तकत्वापत्तिरिति । विशिष्य निवेशे 'गौः गवेतरभिन्ना गवेतरभेदात्' 'पदार्थः पदार्थेतरभिन्नः अभिधेयत्वात्' इत्येवानुमानप्रयोगो वाच्यः । तत्राद्ये साध्यहेत्वोरैक्यात् तादृशानुमितिर्न भवति । द्वितीये पदार्थेतरस्याप्रसिद्ध्या तादृशानुमितिर्न सम्भवति । अतो व्यावृत्त्यभिधेयत्वादेर्न व्यावर्तकत्वापत्तिः । तथा चालक्ष्यतया तत्रातिव्याप्तिकथनं युज्यत इति विशिष्य भेदानुमापकत्वं व्यावर्तकत्वमिति वक्तुराशयः ।

2. न भवतीति । तथा चालक्ष्यतया तत्रातिव्याप्तिवारणाय समनैयत्यघटकव्यापकत्वादिदलसार्थक्यमिति भावः ।

सिद्धान्तस्तु—लक्षणेन लक्ष्ये इतरभेदः यथा अनुमीयते [1]तथा लक्ष्यतावच्छेदकमप्यनुमीयते । यथा 'घटः पृथिवी गन्धवत्त्वात्' इति घटे गन्धवत्त्वेन लक्षणेन पृथिवीत्वरूपं लक्ष्यतावच्छेदकमनुमीयत इति । प्रकृते सास्नादिमत्त्वं लक्ष्यम् । गोत्वसमनियतत्वं लक्षणम्, गोत्वावच्छिन्नेतरभेदानुमापकत्वरूपं व्यावर्तकत्वं लक्ष्यतावच्छेदकम्, तेनैव रूपेण सास्नादिमत्त्वस्य लक्षणलक्षणलक्ष्यत्वात् । एवं च सास्नादिमत्त्वं पक्षीकृत्य तत्र गोत्वसमनियतत्वेन गोत्वावच्छिन्नेतरभेदानुमापकत्वं साधनीयम् 'सास्नादिमत्त्वं गवेतरभेदानुमापकं, गोत्वसमनियतत्वात्' इति । तत्र चानुमाने 'यत्र गोत्वसमनियतत्वं तत्र गवेतरभेदानुमापकत्वम्' इति विशिष्य व्याप्तिर्वक्तुं न शक्यते, साध्यहेत्वोः पक्षमात्रवृत्तित्वेन पक्षातिरिक्तस्य दृष्टान्तस्य दौर्भिक्ष्यात् । अतः यत्र यद्धर्मसमनियतत्वं तत्र तद्धर्मावच्छिन्नेतरभेदानुमितिजनकत्वमिति सामान्यरूपेण व्याप्तिर्वक्तव्या । पृथिवीत्वसमनियतं पृथिवीत्वावच्छिन्नेतरभेदानुमापकं गन्धवत्त्वं दृष्टान्तः । सामान्यमुखव्याप्तौ च प्रकृतहेतोः प्रकृतहेतुतुल्यस्य हेतोर्वा सत्त्वे प्रकृतसाध्यस्य प्रकृतसाध्यतुल्यस्य वा साध्यस्यासत्त्वे व्यभिचारो दोषः । तथा च गवेतरभेदरूपव्यावृत्तौ गवेतरभेदानुमितिजनकत्वं नास्ति, साध्यहेत्वोरैक्येन पूर्वोक्तरीत्या सिद्धसाधनात् । तथा च गोत्वावच्छिन्नेतरभेदानुमापकत्वरूपं साध्यं तत्र नास्ति । गोत्वसमनियतत्वरूपहेतुरस्तीति तत्र व्यभिचारः स्यात् । अभिधेयत्वादौ प्रकृतहेतुतुल्यः पदार्थत्वसमनियतत्वरूपो हेतुरस्ति, प्रकृतसाध्य-

---

1. तथा लक्ष्यतावच्छेदकमप्यनुमीयत इति । प्रकाशिकायां सास्नादिमत्त्वं पक्षीकृत्य गोत्वावच्छिन्नेतरभेदानुमापकत्वे साध्ये इति कथं संगच्छते ? लक्षणेन हीतरभेदः साध्यते न त्वितरभेदानुमापकत्वम् इत्याशङ्कां मनसि निधायैवमुक्तम् । अथ वा एवं तात्पर्यं वर्णनीयम् लक्षणेन लक्ष्ये लक्ष्यतावच्छेदकावच्छिन्नेतरभेदः किल साधनीयः । प्रकृते गोत्वसमनियतत्वरूपस्य लक्षणलक्षणस्य लक्ष्यतावच्छेदकं गोत्वावच्छिन्नेतरभेदानुमापकत्वम् । तदवच्छिन्नेतरभेदः गोत्वसमनियतत्वेन हेतुना लक्ष्ये सास्नादिमत्त्वे साधनीयः । तदवच्छिन्नेतरभेदश्च गवेतरभेदानुमापकभिन्नभेदः गवेतरभेदानुमापकत्वे पर्यवस्यतीत्याशयेन प्रकाशिकायां गोत्वावच्छिन्नेतरभेदानुमापकत्वे साध्ये इत्युक्तमिति ।

तुल्यं पदार्थत्वावच्छिन्नेतरभेदानुमापकत्वरूपं साध्यं नास्ति पदार्थेतर-स्याप्रसिद्धेरिति व्यभिचारः स्यात् । तद्वारणाय यद्धर्मसमनियतत्व रूप-हेतौ व्यावृत्तिभिन्नत्वे सति अभिधेयत्वादिभिन्नत्वे सति इति विशेषणं दातव्यम् । तेन यत्र व्यावृत्तिभिन्नत्वे सति अभिधेयत्वादिभिन्नत्वे सति यद्धर्मसमनियतत्वं तत्र तद्धर्मावच्छिन्नेतरभेदानुमितिजनकत्वमिति सामान्यमुखी व्याप्तिः पर्यवस्यति तत्र च न कोऽपि दोष इत्यभि-प्रायो **दीपिका**ग्रन्थस्येति ।

अथ क्रमशः पङ्क्तीनामर्थ उच्यते । **सामान्यतो भेदानुमापकत्व-मिति** । प्रतियोगिविशेषनिर्देशमन्तरा भेदत्वेन भेदं निवेश्य केवल-भेदविधेयकानुमितिजनकत्वं व्यावर्तकत्वमिति वक्तुं न शक्यत इत्यर्थः । **व्यावृत्त्यभिधेयत्वादेरपी**ति । 'गौः गोघटोभयभिन्ना गवेतरभेदात्', 'पदार्थः घटपटोभयभिन्नः अभिधेयत्वात्' इत्यनुमाने अत्र विवक्षिते । **अतिव्याप्तिकथनासङ्गते**रिति । लक्ष्ये लक्षणसत्त्वस्येष्टत्वादिति भावः । **व्यतिरेकिधर्माणा**मिति । केवलान्वयिधर्माणामभिधेयत्वादीनां इतर-भेदानुमापकत्वं न सम्भवति, अभिधेयत्वशून्यस्य इतरस्याभावात् 'घटः इतरभिन्नः अभिधेयत्वात्' इत्यादौ व्यभिचारप्रसङ्गात्, 'पदार्थ इतरभिन्नः अभिधेयत्वात्' इत्यपि प्रयोक्तुं न शक्यते, पदार्थेतरस्यैवा-प्रसिद्धेरिति भावः । **असाधारण्यघटके**ति । लक्ष्यतावच्छेदकसमनियतत्व-रूपासाधारण्यघटकं यत् व्यापकत्वं व्याप्यत्वं च तयोर्वैयर्थ्यप्रसङ्गात् इत्यर्थः । **नापि विशिष्येति** । विशिष्येत्यस्य भेदेऽन्वयः । अत्र लक्ष्यताव-च्छेदकगोत्वाद्यवच्छिन्ने इत्यध्याहृत्य गोत्वाद्यवच्छिन्नोद्देश्यकगोत्वा-द्यवच्छिन्नेतरभेदविधेयकानुमितिजनकत्वमिति व्याख्यातव्यम् । अन्य-था 'कपिलगौः गवेतरभिन्ना कपिलत्वात्' इत्यनुमानसम्भवेन पूर्वोक्त-दोषसत्त्वेनास्य पक्षान्तरत्वानुपपत्तेः । **तादृशलक्षणे निवेशनीयमिति** । तादृशलक्षणरूपे हेतौ निवेशनीयमित्यर्थः ।

**ननु लक्षणस्य व्यवहारोऽपीत्यादि** । यथा लक्षणस्य इतरभेदानु-मितिः प्रयोजनं तथा शब्दप्रयोगरूपो व्यवहारोऽपि प्रयोजनम् । **कथ-**

मिति चेत् - इत्थम्। पुरोवर्ति गोव्यक्तौ 'इयं गौः' इत्याकारकगो-त्वावच्छिन्नवाचकशब्दप्रयोगं प्रति 'इयं गौः' इत्याकारकं गोत्व-प्रकारकं गोविशेष्यकं ज्ञानं कारणम् । तद्धर्मावच्छिन्नबोधकशब्द-प्रयोगरूपव्यवहारं प्रति तद्धर्मप्रकारकव्यवहर्तव्यविशेष्यकज्ञानस्य कारणत्वात् । 'इयं गौः' इत्याकारकं ज्ञानं च गोत्वपरिचायकलक्षण-ज्ञानं विना न सम्भवतीति लक्षणस्य स्वविषयकज्ञानजन्यव्यवहर्तव्य-विषयकज्ञानद्वारा व्यवहारः प्रयोजनम् । तथा च लक्षणं व्यावहारि-कमपि भवतीति व्यावहारिकलक्षणस्यापि लक्ष्यतावच्छेदकसमनियतत्वं लक्षणमिति व्यावहारिकमपि लक्ष्यमिति व्यावृत्त्यभिधेयत्वादेरपि लक्ष्यत्वात् तत्र लक्षणसत्त्वस्येष्टतया अतिव्याप्त्यभावात् तद्भिन्नत्व-रूपं विशेषणं न देयमिति भावः । **तेन रूपेण व्यवहर्तव्यज्ञानमिति ।** तद्धर्मप्रकारकव्यवहर्तव्यविशेष्यकज्ञानमित्यर्थः । गोत्वादिप्रकारक-गवादिविशेष्यकज्ञानमिति यावत्। **व्यावहारिकलक्षणस्यापि** - व्यवहार-प्रयोजनकव्यावृत्त्यभिधेयत्वादिरूपलक्षणस्यापि । **लक्ष्यत्वात्** – लक्षण-लक्षणलक्ष्यत्वात् । **तद्भिन्नत्वम्** – व्यावृत्त्यभिधेयत्वादिभिन्नत्वम् । **दृष्टान्तलाभायेति** । यथा अभिधेयत्वादिकं व्यवहारजनकं तथा व्यावृत्ति-रपि व्यवहारजनिका इति ज्ञापनाय इति भावः ।।



## दीपिका

### गुणवत्त्वस्य द्रव्यलक्षणत्वस्थापनम्

ननु गुणवत्त्वं न द्रव्यलक्षणम्, आद्यक्षणावच्छिन्नद्रव्ये उत्पन्न-विनष्टद्रव्ये चाव्याप्तेरिति चेत् - न । गुणसमानाधिकरणसत्ताभिन्न-जातिमत्त्वस्य विवक्षितत्वात् ।

नन्वेवमपि 'एकं रूपं रसात् पृथक्' इति व्यवहारात् रूपादाव-तिव्याप्तिरिति चेत् - न । एकार्थसमवायादेव तादृशव्यवहारोपपत्तौ गुणे गुणानङ्गीकारात् ।

### प्रकाशिका

ननु आद्यक्षणावच्छिन्ने द्रव्ये गुणवत्त्वस्यासत्त्वेऽपि कालान्तरावच्छिन्ने तत्र तत्सत्त्वमक्षतम् । एवं च गुणाश्रयत्वलक्षणं साध्वित्यत आह - **उत्पन्नविनष्टे**ति । यादृशद्रव्यारम्भकसंयोगजनकक्रियोत्पत्तेः तृतीयक्षणेऽवयवान्तरे तादृशसंयोगनाशिका क्रिया जाता तादृशद्रव्य इत्यर्थः। नवीनाः पुनः असमवायिकारणस्य कार्यसहभावेन कारणतामवलम्ब्योत्पन्नविनष्टं नाङ्गीकुर्वन्ति । गुणादावतिव्याप्तिवारणाय **गुणसमानाधिकरणे**ति जातिविशेषणम् । सत्तामादायातिव्याप्तिवारणाय **सत्ताभिन्ने**ति । द्रव्यगुणान्यतरत्वमादायातिव्याप्तिवारणाय **जाती**ति । समवायेन तादृशधर्मवत्त्वतात्पर्यग्राहकम् । अतः कालिकादिसम्बन्धेन तद्वत्त्वमादाय नातिव्याप्तिरिति भावः ।

**एवमपी**ति । उक्तविवक्षया अव्याप्तिवारणेऽपि । **एकार्थसमवाया-देवे**ति । एकस्मिन्नर्थे समवायेन सत्त्वादेवेत्यर्थः । **गुणानङ्गीकारादि**ति । तथा च क्लृप्तेन समवायघटितसामानाधिकरण्येनैव गुणवत्ताव्यवहारोपपत्तौ तत्राक्लृप्तगुणवत्त्वकल्पनं न सम्भवति **गौरवादि**ति भावः ।

### बालप्रिया

द्रव्यत्वजातिमत्त्वं गुणवत्त्वं वा द्रव्यलक्षणमिति पूर्वमुक्तम् । तत्र गुणवत्त्वं लक्षणम् न भवितुमर्हति, उत्पत्तिक्षणावच्छिन्ने घटे 'उत्पन्नं द्रव्यं क्षणमगुणं अक्रियं च तिष्ठति' इति न्यायेन गुणवत्त्वाभावेन अव्याप्तिदोषात् । एवं यः घटः प्रथमक्षणे उत्पन्नः द्वितीयक्षणे च विनष्टः, तत्र प्रथमक्षणे 'उत्पन्नं द्रव्यं क्षणमगुणम्' इति न्यायेन गुणो नास्ति, द्वितीयक्षणे च गुणिनः घटस्य विनाशात् न गुणः इति उत्पन्नविनष्टघटेऽव्याप्तेश्च इत्याशङ्कितं **दीपिकायाम् - ननु गुणवत्त्वं न द्रव्यलक्षणमि**त्यादिना । तत्र द्वितीयस्थलानुधावने बीजमाह - **नन्वाद्यक्षणावच्छिन्ने द्रव्य** इति । **कालान्तरावच्छिन्न** इति । द्वितीयादिक्षणावच्छिन्न इत्यर्थः । **तत्र तत्सत्त्वम्** - द्रव्य

गुणसत्त्वम् । **गुणाश्रयत्वमि**ति । गुणाधारत्वमित्यर्थः । समवायेन गुणः लक्षणमित्युक्ते यद्यप्यव्याप्तिरस्ति, तथापि गुणाश्रयत्वमित्युक्ते नाव्याप्तिरिति भावः । **यादृशद्रव्यारम्भके**त्यादि । क्रिया, क्रियातो विभागः, विभागात् पूर्वदेशसंयोगनाशः, ततः उत्तरदेशसंयोगः, ततः द्रव्योत्पत्तिरिति क्रमः । अत्र विभागः संयोगश्च अवयवानां पूर्वोत्तरदेशानां च । घटोत्पादकः यः चतुर्थक्षणोत्पन्नः उत्तरदेशसंयोगः तज्जनिका क्रिया प्रथमक्षणोत्पन्ना तस्याः तृतीयक्षणः पूर्वदेशसंयोगनाशक्षणः तदानीं आरम्भकसंयोगनाशजनकक्रिया जायते चेत् उत्पत्त्यनन्तरक्षणे द्रव्यस्य नाशो भवति । तथा चायं क्रमः - प्रथमक्षणे घटोत्पादकक्रिया, द्वितीयक्षणे विभागः, तृतीयक्षणे पूर्वदेशसंयोगनाशः उत्तरदेशसंयोगनाशकक्रिया च, चतुर्थक्षणे उत्तरदेशसंयोगः विभागश्च, पञ्चमक्षणे घटोत्पत्तिः पूर्वदेशसंयोगनाशश्च, षष्ठक्षणे घटनाशः उत्तरदेशसंयोगश्चेति भावः ।

**नवीनाः पुनरि**ति। तथा च एतन्मते चतुर्थक्षणे एव घटोऽपि उत्तरदेशसंयोगात्मकेन असमवायिकारणेन सह उत्पद्यते । घटनाशश्च तत्तृतीयक्षण एवेति घटोत्पत्तिद्वितीयक्षणे घटनाशाभावात् उत्पन्नविनष्टघटोऽप्रामाणिक इति भावः ।

**दीपिकायाम् - गुणसमानाधिकरणे**ति । गुणसमानाधिकरणा गुणाधिकरणवृत्तिः या सत्तान्या जातिः तद्वत्त्वं द्रव्यस्य लक्षणम् । भवति हि द्रव्यत्वरूपा जातिः गुणाधिकरणपृथिव्यादिवृत्तिः सत्तातोऽन्या चेति तद्वत्त्वमादाय द्रव्ये लक्षणसमन्वयः । आद्यक्षणावच्छिन्नघटे उत्पन्नविनष्टघटे च गुणाभावेऽपि तत्समानाधिकरणद्रव्यत्वजातिसत्त्वात् नाव्याप्तिः । जातौ गुणसमानाधिकरणेति विशेषणानुपादाने सत्ताभिन्नगुणत्वजातिमत्त्वस्य गुणे सत्त्वात् तत्रातिव्याप्तिः । गुणसमानाधिकरणेति विशेषणे उपात्ते तु गुणे गुणानङ्गीकारात् गुणाधिकरणं न गुणः, किं तु द्रव्यमेव तद्वृत्तित्वं गुणत्वे नास्तीति जातिपदेन गुणत्व-

ग्रहणासम्भवात् नातिव्याप्तिः । गुणाधिकरणद्रव्यवृत्तिः या सत्ताजातिः तद्वत्त्वस्य गुणेऽपि सत्त्वादतिव्याप्तिः । तद्वारणाय जातौ सत्ताभिन्नेति विशेषणम् । जातिपदस्थाने धर्मपदं निक्षिप्य गुणसमानाधिकरण-सत्ताभिन्नधर्मवत्त्वं द्रव्यलक्षणमित्युक्ते द्रव्यगुणान्यतरत्वरूपो धर्मोऽपि गुणाधिकरणद्रव्यवृत्तिः सत्ताभिन्नश्चेति तद्वत्त्वस्य गुणेऽपि सत्त्वादति-व्याप्तिः । तद्वारणाय जातीत्युक्तम् । अन्यतरत्वं तु न जातिः । ननु जातिपदे उपात्तेऽपि कालिकसम्बन्धेन तादृशद्रव्यत्वरूपजाति-मत्त्वस्य गुणेऽपि सत्त्वादतिव्याप्तिः । समवायसम्बन्धेन तादृशजाति-मत्त्वविवक्षायां तु जातिपदं व्यर्थम् । समवायसम्बन्धेन गुणसमानाधि-करणसत्ताभिन्नधर्मवत्त्वं लक्षणमित्युक्त्यैव सामञ्जस्यात् । द्रव्यगुणा-न्यतरत्वरूपधर्मस्य स्वरूपमेव सम्बन्ध इति समवायेन तद्वत्त्वस्य गुणे विरहादिति चेत् - न । समवायसम्बन्धेन तादृशधर्मवत्त्वमत्र विवक्षितमिति द्योतनायैव जातिपदोपादानादिति । तदाह प्रकाशि-**कायाम् - गुणादावतिव्याप्तिवारणाये**त्यादिना ।

**दीपिकायाम् - नन्वेवमपी**ति । 'एकं रूपम्' इति व्यवहारात् रूपे एकत्वसङ्ख्यारूपो गुणोऽस्तीत्यवगम्यते; 'रूपं रसात् पृथक्' इति व्यवहारात् रूपे पृथक्त्वगुणोऽस्तीत्यवगम्यते । तथा च गुणाधि-करणं रूपं तद्वृत्तिर्या सत्ताभिन्ना जातिः गुणत्वं तद्वत्त्वस्य गुणे सत्त्वात् तत्र द्रव्यलक्षणस्यातिव्याप्तिरिति शङ्कितुराशयः । समा-धत्ते - **एकार्थसमवाया**दिति । एकस्मिन्नर्थे समवायादित्यर्थः । एकत्व-रूपयोः पृथक्त्वरूपयोश्च एकस्मिन्नर्थे घटादौ समवायात् 'एकं रूपम्', 'रूपं रसात् पृथक्' इति व्यवहार उपपद्यते । 'एकं रूपम्' इत्यस्य स्वा-श्रयसमवायसम्बन्धेन रूपम् एकत्ववत् इत्यर्थः, न तु समवायसम्बन्धेन एकत्ववत् इति । एवं च उक्तपरम्परासम्बन्धेन रूपे एकत्वपृथक्त्वविषय-कतयैव तादृशव्यवहारस्योपपत्तेः गुणे समवायसम्बन्धेन गुणो नाङ्गी-क्रियते । गुणसमानाधिकरणेत्यादिलक्षणे च गुणाधिकरणत्वं समवाय-सम्बन्धेन विवक्षितम् । अतो रूपादौ नातिव्याप्तिरिति भावः ।

**प्रकाशिकायाम् - समवायघटितसामानाधिकरण्येनेति** । स्वाश्रयसमवायेनेति यावत् । स्वनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतानिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वं समवायसम्बन्धघटितसामानाधिकरण्यम् । तस्य शोधने स्वाश्रयसमवाय इत्येव पर्यवस्यति । **अक्लृप्तगुणवत्त्वकल्पनमि**ति । अक्लृप्तस्य समवायसम्बन्धेन गुणवत्त्वस्य कल्पनमित्यर्थः ।



## तर्कसङ्ग्रहः

### गुणविभागः

> रूप-रस-गन्ध-स्पर्श-सङ्ख्या-परिमाण-पृथक्त्व-संयोग-विभाग - परत्व-अपरत्व-गुरुत्व-द्रवत्व-स्नेह-शब्द-बुद्धि-सुख - दुःख - इच्छा-द्वेष - प्रयत्न-धर्म-अधर्म-संस्काराः चतुर्विंशतिर्गुणाः ।

## दीपिका

गुणान् विभजते - **रूपे**ति । द्रव्यकर्मभिन्नत्वे सति सामान्यवान् गुणः । गुणत्वजातिमान्वा ।

ननु लघुत्व-कठिनत्व-मृदुत्वादीनां विद्यमानत्वात् कथं चतुर्विंशतिर्गुणाः इति चेत् - न । लघुत्वस्य गुरुत्वाभावरूपत्वात् मृदुत्व-कठिनत्वयोः अवयवसंयोगविशेषरूपत्वात् ।

## प्रकाशिका

**सामान्यवानि**ति । समवायेन सामान्यवत्त्वं बोध्यम् । तेन कालिकादिसम्बन्धेन तद्वति ध्वंसे नातिव्याप्तिः । गुण इति **लक्ष्यनिर्देशः** । लाघवादाह - **गुणत्वजातिमान्वे**ति । यद्यपि लक्षणलक्ष्यतावच्छेदकयोरभेदः तथापि लक्षणेनेतरभेदे साध्ये हेतौ साध्यसामानाधिकरण्यनिश्चयेऽपि हेतुधर्मितावच्छेदककसाध्यनिश्चयस्य अनियतत्वाभिप्रायेणेदं लक्षणमिति सङ्क्षेपः । एवमग्रेऽपि बोध्यम् । गुणत्वजातिसिद्धिस्तु गुणपदशक्यतावच्छेदकतयेति गुणदीधितौ **भट्टाचार्याः** । न चैवं विभुपद-

शक्यतावच्छेदकतया विभुत्वजातिः सिध्येदिति वाच्यम् । भूतत्वसङ्क-
रस्य बाधकस्य सत्त्वेन तस्य जातित्वासम्भवात् जातित्वाभिमतसङ्क-
रस्यैव जातित्वबाधकत्वात् । तथा चोक्तम् **द्रव्यकिरणावल्याम् उदय-
नाचार्यैः**-

> "व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः ।
> रूपहानिरसम्बन्धो जातिबाधकसङ्ग्रहः ॥ "

इति । व्यक्तेरभेदः स्वाश्रयव्यक्तेरैक्यं आकाशत्वादेर्जातित्वे बाधकम् ।
व्यक्तेस्तुल्यत्वं अन्यूनानतिरिक्तव्यक्तिकत्वं घटत्वकलशत्वाद्योर्भिन्न-
जातित्वे । सङ्करः परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र
समावेशः भूतत्वमूर्तत्वादेर्जातित्वे । अनवस्थितिः - अनावस्था जातेः
जातिमत्त्वे । रूपहानिः स्वतोव्यावर्तकत्वात्मकरूपहानिः विशेषस्य
जातिमत्त्वे । असम्बन्धः असमवेतत्वम् अभावादेर्जातिमत्त्वे इति संक्षेपः ।

लघुत्वादीनां प्रामाणिकत्वेऽपि क्लृप्तेष्वन्तर्भावो न्याय्य इति
समाधत्ते—**लघुत्वस्येति** ।

## बालप्रिया

**तद्वति ध्वंस** इति । सामान्यविशेषसमवायानां प्रागभावान्योन्या-
भावात्यन्ताभावानां चाजन्यत्वात् जन्यमात्रस्यैव कालोपाधितया तेषु
कालिकसम्बन्धेन सामान्यवत्त्वासम्भवात् अतिव्याप्तिर्न शक्यते वक्तु-
मित्यालोच्य ध्वंसेऽतिव्याप्तिरुक्ता । **यद्यपि लक्षणलक्ष्यतावच्छेदकयोर-
भेद** इति । गुणस्य गुणत्वजातिमत्त्वं यदि लक्षणं तदा गुणत्वं लक्षणम्,
लक्ष्यतावच्छेदकमपि तदेवेति लक्षणलक्ष्यतावच्छेदकयोरभेदः स्यात् ।
अस्तु को दोष इति चेत् - उच्यते । लक्षणं हि व्यावर्तकम् । लक्ष्य-
विशेष्यकलक्ष्येतरभेदविधेयकानुमितिजनकम् । तथा च गुणत्वस्य गुण-
लक्षणत्वे 'गुणः इतरभिन्नः गुणत्वात्' इत्यनुमानप्रयोगः कर्तव्यः । तत्र
गुणत्वव्यापकेतरभेदसमानाधिकरणगुणत्ववान् गुण इति परामर्शो

वाच्यः । तत्र गुणत्वे इतरभेदसामानाधिकरण्ये भासमाने [1]तुल्यवित्तिवेद्यतया कदाचित् इतरभेदे गुणत्वसामानाधिकरण्यमपि भासितुमर्हति । तथा च गुणत्वरूपपक्षतावच्छेदकसामानाधिकरण्यस्य इतरभेदरूपसाध्ये भानात् अनुमितिविषयस्य साध्ये पक्षतावच्छेदकसामानाधिकरण्यस्य परामर्शेनैव विषयीकृततया सिद्धसाधनं दोषः प्रसजतीति शङ्कितुराशयः । समाधत्ते - **तथापी**ति । हेतौ साध्यसामानाधिकरण्ये भासमाने नियमेन साध्ये हेतुसामानाधिकरण्यभानं न सम्भवति । अतो न सिद्धसाधनप्रसक्तिरिति गुणत्वजातिमत्त्वं गुणलक्षणं भवितुमर्हतीति भावः ।

**गुणपदशक्यतावच्छेदकतये**ति । 'गुणनिष्ठा गुणपदशक्यता किंचिद्धर्मावच्छिन्ना शक्यतात्वात् घटनिष्ठघटपदशक्यतावत्' इत्यनुमानेन गुणत्वजातिः सिध्यतीति भावः । **भूतत्वसङ्करस्ये**ति । भूतत्वेन साकमेकत्र समावेशस्येत्यर्थः । ननु भूतत्वस्यापि जातित्वाभावात् कथं तत्सङ्करः विभुत्वस्य जातित्वे बाधक इत्याशङ्क्य न जातिसङ्करः जातित्वबाधकः, किं तु जातित्वाभिमतधर्मसङ्कर एव तथा । भूतत्वस्य जातित्वाभावेऽपि जातित्वाभिमानविषयत्वमस्तीति तत्सङ्करो जातित्वबाधक इति समाधत्ते - **जातित्वाभिमतसङ्करस्यैवे**ति । व्यक्तेरभेदः तुल्यत्वं सङ्करश्च जातित्वे बाधकानि । अनवस्था रूपहानिः असम्बन्धश्च जातित्वे बाधकाः । जातिबाधकसङ्ग्रह इत्यस्य जातित्वजातिमत्त्वान्यतरविषयकज्ञानप्रतिबन्धकज्ञानविषयविषयकसङ्क्षिप्तशब्दः इत्यर्थः ।

जातिमत्त्वे

व्यक्तेरभेदः इत्यस्य स्वाश्रयैकव्यक्तिकत्वमित्यर्थः । स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदविशिष्टान्यत्वमिति यावत् । यस्याश्रयभूता व्यक्तयः अनेकाः स उक्तोभयसम्बन्धेन भेदविशिष्टो भवति यथा घटत्वं नीलघटभेदविशिष्टम् । स्वं नीलघटभेदः, स्वप्रतियोगी नीलघटः, तद्वृत्तित्वं घटत्वे, एवं स्वं नीलघटभेदः,

1. **तुल्यवित्तिवेद्यतये**ति । **एकज्ञानविषयतये**त्यर्थः ।

तदनुयोगी रक्तघटः तद्वृत्तित्वं च घटत्वे इति घटत्वम् उक्तोभयसम्बन्धेन नीलघटभेदविशिष्टम् । आकाशत्वं तु न तथा । भेदपदेन आकाश-भेदोपादाने स्वप्रतियोगी आकाशः, तद्वृत्तित्वं यद्यप्याकाशेऽस्ति, तथापि आकाशभेदानुयोगिघटादिवृत्तित्वं नास्ति । घटभेदोपादाने स्वानुयोग्याकाशवृत्तित्वं यद्यप्यकाशत्वेऽस्ति, तथापि स्वप्रतियोगि-घटवृत्तित्वं नास्तीति । तथा च आकाशत्वमुक्तोभयसम्बन्धेन भेद-विशिष्टान्यदिति तत् स्वाश्रयैकव्यक्तिकम्, अतस्तत् न जातिः । जातित्वं हि नित्यत्वे सत्यनेकसमवेतत्वम् । अनेकसमवेतत्वं च उक्तो-भयसम्बन्धेन भेदविशिष्टत्वम् । अत्र च आकाशत्वं जातिः (उक्तो-भयसम्बन्धेन भेदविशिष्टम्) इति बुद्धिं प्रति आकाशत्वं स्वाश्रयैक-व्यक्तिकम् (उक्तोभयसम्बन्धेन भेदविशिष्टान्यत्) इति ज्ञानस्य तद्वत्ताबुद्धिं प्रति तदभाववत्ताज्ञानं प्रतिबन्धकमिति रीत्या प्रतिबन्ध-कत्वात् जातित्वविषयकज्ञानप्रतिबन्धकज्ञानविषयत्वस्य व्यक्तेरभेदे सत्त्वात् जातिबाधकत्वमित्यवधेयम् ।

**व्यक्तेस्तुल्यत्वम् अन्यूनानतिरिक्तव्यक्तिकत्वमिति** । अन्यूनानति-रिक्ताश्रयकत्वमित्यर्थः । घटत्वकलशत्वयोरीदृशतुल्यत्वसत्त्वात् तयो-र्न भिन्नजातित्वम् । वस्तुतस्तु स्वभिन्नजात्याश्रयव्यक्तिनिष्ठसङ्ख्या-न्यूनानतिरिक्तसङ्ख्याकव्यक्तिकत्वं स्वसमानाधिकरणान्योन्याभाव-प्रतियोगितानवच्छेदकस्वभिन्नजातिसमानाधिकरणान्योन्याभावप्रति-योगितानवच्छेदकत्वरूपम् तुल्यत्वमित्यर्थः । इदं कम्बुग्रीवादिमत्त्वस्य जातित्वे बाधकम् । स्वम् - कम्बुग्रीवादिमत्त्वं, तत्समानाधिकरणा-न्योन्याभावप्रतियोगितानवच्छेदिका स्वभिन्नजातिः घटत्वजातिः तत्स-मानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वं कम्बुग्रीवादिमत्त्वे अस्ति । यत्रैतादृशं तुल्यत्वमस्ति [1]तत्र जातित्वं नास्ति । एवं चैता-

1. तत्र जातित्वं नास्तीति । यथा पृथिव्यादिमनोऽन्तान्यतमत्वे । इदं पृथिव्यादिमनो-न्तान्यतमत्वं, तद्भिन्ना जातिः द्रव्यत्वं तत्समनियतत्वं पृथिव्यादिमनोन्तान्यतम-त्वेऽस्तीति तन्न जातिः । तथा च स्वभिन्नजातिसमनियतत्वं तुल्यत्वम् । स्वभिन्न-

दृशतुल्यत्वज्ञानस्य जातित्वाभावव्याप्यवत्ताज्ञानविधया जातित्वज्ञान-प्रतिबन्धकत्वम् ।

सङ्करो नाम परस्परं विहाय वर्तमानयोर्धर्मयोरेकत्र वृत्तिः । परस्परात्यन्ताभावसमानाधिकरणयोर्धर्मयोरेकत्र वृत्तिरिति यावत् । अयं भूतत्वमूर्तत्वयोर्जातित्वे बाधकः, भूतत्वं विहाय मूर्तत्वं मनसि, मूर्तत्वं विहाय भूतत्वं आकाशे, उभयोः पृथिव्यादिचतुष्टये समावेश इति द्वयोः सङ्करात् न जातित्वम् । [1]स्वाधिकरणवृत्तित्व-स्वाभाववद्वृत्तित्व - स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्व- एतत्त्रितयसम्बन्धेन किंचिद्धर्मविशिष्टत्वं सङ्कर इति फलितम् । एतादृशसाङ्कर्यस्य कथं जातित्वबाधकत्वमिति चेत् - उच्यते । लिङ्गविधयैव तस्य जातित्व-बाधकत्वम् । तथा हि - भूतत्वं न जातिः उक्तत्रितयसम्बन्धेन मूर्तत्ववत्त्वात् यत् उक्तत्रितयसम्बन्धेन मूर्तत्ववत् तन्न जातिः यथा [2]गगनमनस्संयोग इत्यनुमानात् भूतत्वस्य जातित्वाभावसिद्धौ बाध-ज्ञानविधया जातित्वज्ञानप्रतिबन्धिका या निरुक्तानुमितिः तज्जनक-व्याप्त्यादिज्ञाने निरुक्तसाङ्कर्यस्य विषयत्वात् साक्षात्प्रतिबन्धकज्ञान-विषयस्येव प्रतिबन्धकज्ञानजनकज्ञानविषयस्यापि जातिबाधकपदार्थ-

---

जातिसमनियतत्वं च स्वसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकस्वभि-न्नजातिसमानाधिकरणान्योन्याभावप्रतियोगितानवच्छेदकत्वमिति भावः ।

1. स्वाधिकरणेत्यादि । स्वं भूतत्वं स्वाधिकरणं पृथिव्यादिचतुष्टयं तद्वृत्तित्वं मूर्तत्वे-ऽस्ति । एवं स्वं भूतत्वं स्वाभावः भूतत्वाभावः तद्वत् मनः तद्वृत्तित्वं मूर्तत्वे-ऽस्ति । एवं स्वं भूतत्वं तदधिकरणमाकाशं तद्वृत्तिर्योऽत्यन्ताभावः मूर्तत्वाभावः तत्प्रतियोगित्वं मूर्तत्वेऽस्ति । एवं चोक्तत्रितयसम्बन्धेन भूतत्वविशिष्टत्वं यत् मूर्तत्वस्य तदेव संकर इत्यर्थः ।

2. गगनमनस्संयोग इति । गगनमनस्संयोगस्य मूर्तत्वाधिकरणमनोवृत्तित्वात् मूर्त-त्वाभावाधिकरणगगनवृत्तित्वात् मूर्तत्वाधिकरणपृथिव्यादिचतुष्टयवृत्तिः यः गगन-मनस्संयोगाभावः तत्प्रतियोगित्वाच्च उक्तत्रितयसम्बन्धेन मूर्तत्ववैशिष्ट्यमिति हेतुरस्ति जातित्वाभावरूपसाध्यं चास्तीति गगनमनस्संयोगस्य दृष्टान्तत्वम् ।

त्वेन [1]तस्य साङ्कर्येऽक्षतत्वात् । अथ वा [2]जातित्वाभावानुमितिजनक-जातित्वाभावव्याप्यनिरुक्तत्रितयसम्बन्धेन मूर्तत्वपरामर्शस्य तदभाव-व्याप्यवत्तानिश्चयत्वेन जातित्वप्रकारकज्ञानप्रतिबन्धकत्वात् निरुक्त-साङ्कर्यस्य तद्विषयत्वेन साक्षाज्जातित्वज्ञानप्रतिबन्धकज्ञानविषयत्व-मक्षतमित्याहुः ।

अनवस्था - अप्रामाणिकोत्तरोत्तरकल्पनायाः विश्रान्त्यभावः । इयं जातेः जातिमत्त्वे बाधिका । [3] तर्कविधया बाधकत्वमस्याः ।

रूपहानिः - [4]स्वतोव्यावर्तकत्वरूपलक्षणस्य भङ्गः । इयं विशे-षस्य जातिमत्त्वे बाधिका । विशेषो हि स्वतोव्यावर्तकत्वेन लक्षितः । विशेषो यदि जातिमान् स्यात् तर्हि जातेरेव विशेषस्येतरव्यावृत्ति-हेतुत्वसम्भवात् स्वतोव्यावर्तकत्वरूपं लक्षणं भग्नं स्यात् । अतो विशेषो न जातिमान् । एवं च रूपहानिरपि तर्कविधयैव जातिमत्त्व-बाधिका ।

असम्बन्धः - प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन समवाय-शून्यत्वम् । अयं च समवायाभावयोर्जातिमत्त्वे बाधकः । यत्र यत्र जातिमत्त्वं वर्तते तत्र प्रतियोगित्वानुयोगित्वान्यतरसम्बन्धेन [5]सम-

---

1. तस्येति । प्रतिबन्धकज्ञानजनकज्ञानविषयत्वस्येत्यर्थः ।

2 जातित्वाभावानुमितीति । भूतत्वं न जातिरित्याकारिका या जातित्वाभावानुमितिः तज्जनकः य. परामर्शः भूतत्वं जातित्वाभावव्याप्यमूर्तत्ववत् इत्याकारकः तस्ये-त्यर्थः । तथा चोक्तत्रितयसम्बन्धेन मूर्तत्ववत्त्वरूपस्य संकरस्य जातित्वानुमिति-प्रतिबन्धकपरामर्शविषयतया जातित्वविषयकज्ञानप्रतिबन्धकज्ञानविषयत्वरूपं जातिबाधकत्वमिति भावः ।

3. तर्कविधयेति । यदि जातिर्जातिमती स्यात् तर्हि उत्तरोत्तरजातिकल्पनायाः विश्रान्तिर्न स्यादिति तर्कोऽत्र विवक्षितः ।

4. स्वतोव्यावर्तकत्वं च स्वभिन्नलिङ्गकस्वविशेष्यकस्वसजातीयेतरभेदानुमित्यविषय-त्वम् ।

5. समवायोऽस्तीति । यथा घटे जातिमत्त्वमस्ति, तत्र प्रतियोगित्वसम्बन्धेन घटसम-वायोऽस्ति कपाले यो घटसमवायः तत्प्रतियोगित्वात् घटस्य, एवम् अनुयोगिता-सम्बन्धेन घटत्वसमवायोऽस्ति घटे यो घटत्वसमवायः तदनुयोगित्वात् घटस्येति ।

वायोऽस्ति । समवाये अभावे च [1]तदभावात् न जातिमत्त्वं तयोः । उक्तान्यतरसम्बन्धेन समवायाभावः जातिमत्त्वाभावव्याप्यः । अतः असम्बन्धज्ञानं तदभावव्याप्यवत्ताज्ञानविधया जातिमत्त्वज्ञानप्रतिबन्धकम् ।



## तर्कसङ्ग्रहः

**कर्मविभागः**

उत्क्षेपण - अपक्षेपण - आकुञ्चन - प्रसारण - गमनानि पञ्च-कर्माणि ।

## दीपिका

कर्म विभजते - **उत्क्षेपणे**ति । संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्म कर्मत्वजातिमद्वा । ननु भ्रमणादेरप्यतिरिक्तस्य कर्मणः सत्त्वात् पञ्चेत्यनुपपन्नमिति चेत् - न । भ्रमणादीनामपि गमनेऽन्तर्भावात् न पञ्चत्वविरोधः ।

## प्रकाशिका

संयोगासमवायिकारणे संयोगेऽतिव्याप्तिवारणाय **संयोगभिन्नत्वे सती**ति । संयोगसमवायिकारण द्रव्येऽतिव्याप्तिवारणाय **असमवायी**ति ।

**भ्रमणादीनाम्** इत्यादिना रेचनस्यन्दनोर्ध्वज्वलनतिर्यग्गमनानां संग्रहः । **गमनेऽन्तर्भावादि**ति । न चोत्क्षेपणादीनामपि गमनेऽन्तर्भावोऽस्त्विति शङ्क्यम् । स्वतन्त्रेच्छस्य नियोगपर्यनुयोगानर्हस्य मुनेः संमतत्वादिति भावः ।

---

1. तद्भावादिति । समवायोऽभावो वान्यत्र समवायसम्बन्धेन नास्ति, अतः प्रतियोगितासम्बन्धेन समवायवत्त्वं समवायाभावयोर्न भवति । एवं समवायेऽभावे वा अन्यत् किमपि समवायसम्बन्धेन नास्ति, अतः अनुयोगितासम्बन्धेन समवायवत्त्वं तयोर्न भवतीति भावः ।

### बालप्रिया

संयोगभिन्नत्वे सति संयोगासमवायिकारणं कर्मेति कर्मणो लक्षणमुक्तम् । संयोगभिन्नत्वे सतीत्यनुक्तौ संयोगस्य संयोगोऽप्य-समवायिकारणम्; कायपुस्तकसंयोगं प्रति हस्तपुस्तकसंयोगस्यासम-वायिकारणत्वात्; अतः संयोगेऽतिव्याप्तिः । तद्वारणाय **संयोगभिन्नत्वे सतीत्युक्तम्** । संयोगकारणमित्येतावन्मात्रोक्तौ संयोगसमवायिकारणे द्रव्येऽतिव्याप्तिः, तद्वारणाय कारणे **असमवायी**ति विशेषणम् । तदाह-**संयोगासमवायिकारण** इति ।

**स्वतन्त्रेच्छस्ये**ति । स्वतन्त्रेच्छो मुनिः नियोगपर्यनुयोगानर्हं इति सर्वसंमत इत्यर्थः । **नियोगः** - आज्ञा । **पर्यनुयोगः** - प्रश्नः ।



### तर्कसङ्ग्रहः

**सामान्यविभागः**

| सामान्यं द्विविधम् - परम् अपरम् चेति । |
|---|

### दीपिका

सामान्यं विभजते - **परमि**ति । परम् - अधिकदेशवृत्ति । अपरम् - न्यूनदेशवृत्ति । सामान्यादिचतुष्टये जातिर्नास्ति ।

### प्रकाशिका

**परमित्यादि** । सामान्यलक्षणं अग्रे मूलकृतैव वक्ष्यत इति न न्यूनतेति ध्येयम् । सत्ताया द्रव्यत्वाद्यपेक्षया अधिकदेशवृत्तित्वेन पर-त्वमेव । घटत्वादीनां न्यूनदेशवृत्तित्वेन अपरत्वमेव । द्रव्यत्वादीनां सत्तातोऽपरत्वम् घटत्वादितः परत्वमिति विवेकः ।



### तर्कसङ्ग्रहः

**विशेषविभागः**

नित्यद्रव्यवृत्तयो विशेषास्त्वनन्ता एव ।

## दीपिका

विशेषं विभजते - **नित्येति** । पृथिव्यादिचतुष्टयपरमाणवः आकाशादिपञ्चकं च नित्यद्रव्याणि ।



## तर्कसङ्ग्रहः

**समवायलक्षणम्**

| समवायस्तु एक एव । |
|---|

## दीपिका

समवायस्य भेदो नास्तीत्याह - **समवायस्तु** इति ।

## प्रकाशिका

**समवायस्य भेदो नास्तीति** । न च समवायस्याभेदे स्पर्शसमवायवति वायौ रूपवत्ताप्रतीतिः स्यादिति शङ्क्यम् । रूपसमवायसत्त्वेऽपि रूपाभावेन तथा प्रतीतेरभावादिति दिक् ।

## बालप्रिया

**रूपवत्ताप्रतीतिः स्यादिति** । स्पर्शसमवायसत्त्वेन तदभिन्नस्य रूपसमवायस्यापि सत्त्वात् रूपसमवायस्यैव रूपवत्ताप्रतीतिनियामकत्वादिति भावः । रूपसमवायो न रूपवत्ताप्रतीतिनियामकः, अपि तु समवायसम्बन्धेन रूपम् । वायौ तु न रूपमस्ति, अतो न रूपवत्ताप्रतीतिप्रसङ्ग इत्याशयेन समाधत्ते - **रूपसमवायसत्त्वेऽपीति** । ननु वायौ रूपसमवायसत्त्वे रूपं नास्तीति वक्तुं न शक्यते सम्बन्धसत्तायाः सम्बन्धिसत्ताव्याप्यत्वादित्याशङ्क्याह - **दिगिति** । अयमाशयः - वाय्वनुयोगिकत्वविशिष्टः रूपप्रतियोगिकत्वविशिष्टश्च समवायः वायौ रूपवत्ताप्रतीतिनियामकः । वाय्वनुयोगिकत्वविशिष्टसमवाये रूपप्रतियोगिकत्वाभावात् वायू रूपवानिति प्रतीतिः नापादयितुं शक्य इति । अधिकं मुक्तावलीमञ्जूषादौ द्रष्टव्यम् ।

## तर्कसङ्ग्रहः

अभावविभागः

| अभावः चतुर्विधः - प्रागभावः, प्रध्वंसाभावः, अत्यन्ताभावः, अन्योन्याभावश्चेति । |
|---|

## दीपिका

अभावं विभजते - **अभाव** इति ।



## तर्कसङ्ग्रहः

पृथिवीनिरूपणम्

| तत्र गन्धवती पृथिवी । |
|---|

## दीपिका

तत्रोद्देशक्रमानुसारात् प्रथमं पृथिव्याः लक्षणमाह - **तत्रे**ति । नाम्ना पदार्थसङ्कीर्तनमुद्देशः । उद्देशक्रमे च सर्वत्र इच्छैव नियामिका ।

ननु सुरभ्यसुरभ्यवयवारब्धे द्रव्ये परस्परविरोधेन गन्धानुत्पादादव्याप्तिः । न च तत्र गन्धप्रतीत्यनुपपत्तिरिति वाच्यम् । अवयवगन्धस्यैव तत्र प्रतीतिसम्भवेन चित्रगन्धानङ्गीकारात् । किं चोत्पन्नविनष्टघटादावव्याप्तिरिति चेत् - न । गन्धसमानाधिकरणद्रव्यत्वापरजातिमत्त्वस्य विवक्षितत्वात् ।

ननु जलादावपि गन्धप्रतीतेरतिव्याप्तिरिति चेत् - न । अन्वयव्यतिरेकाभ्यां पृथिवीगन्धस्यैव तत्र भानाङ्गीकारात् । ननु तथापि कालस्य सर्वाधारतया सर्वेषां लक्षणानां कालेऽतिव्याप्तिरिति चेत् - न । सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धेन लक्षणस्य विवक्षितत्वात् ।

## प्रकाशिका

पृथिवीलक्षणस्य प्राथम्ये बीजमाह - **तत्रे**ति । पृथिव्यादिषु मध्य इत्यर्थः । गन्धसमवायिकारणतावच्छेदकतया पृथिवीत्वजाति-

सिद्धिरिति बोध्यम् । **नाम्नेति** । तृतीयार्थः अभेदः । सङ्कीर्तनपदार्थे प्रतिपादकशब्देऽन्वेति । तथा च वस्तुप्रतिपादकनाममात्रमुद्देश इति लक्षणं पर्यवस्यति । अत्र घट इति पदेऽतिव्याप्तिवारणाय वस्तुपदं लक्षणीयवस्तुपरम् । लक्षणीयस्य पृथिव्यादेः सामान्यतः प्रतिपादक-प्रमेयपदेऽतिव्याप्तिवारणाय नामपदं लक्ष्यतावच्छेदकावच्छिन्नपरम् । लक्षणवाक्ये नामसत्त्वात् अतिव्याप्तिवारणाय मात्रपदमिति ध्येयम् ।

**आरब्धे** - जन्ये । **परस्परविरोधेनेति** । सुरभिगन्धं प्रति असुर-भिगन्धस्य असुरभिगन्धं प्रति सुरभिगन्धस्य प्रतिबन्धकत्वेनेत्यर्थः । **प्रती-त्यनुपपत्तिरिति** । अतश्चित्रगन्ध एवाप्रतिबध्यः स्वीकार्य इति भावः । **अवयवगन्धस्यैवेति** । स्वाश्रयसमवेतत्वसम्बन्धेनेत्यादिः । तुष्यतु दुर्जन इति न्यायेनाङ्गीकृत्याह - **किं चेति** । जलत्वादिकमादाय अतिव्याप्ति-वारणाय **गन्धसमानाधिकरणेति** । सत्तावारणाय **द्रव्यत्वापरेति** द्रव्य-त्वन्यूनवृत्तीत्यर्थकम् । तेन द्रव्यत्वव्युदासः ।

**गन्धप्रतीतेरिति** । सुरभि जलमित्यादिप्रतीतेरित्यर्थः । **पृथिवी-गन्धस्यैवेति** । स्वाश्रयसंयुक्तत्वसम्बन्धेनेत्यादिः । **तत्र** - जलादौ । यथा-श्रुतग्राही शङ्कते - **नन्विति** । अनुगतरूपेण लक्षणताघटकसम्बन्धान् निवेश्य कालादावतिव्याप्तिं वारयति - **सर्वाधारेति** । वस्तुतस्तु सम-वायादीनां समवायत्वादिनैव संसर्गतया तेनैव रूपेण तत्तत्सम्बन्धस्य तत्तल्लक्षणघटकत्वं बोध्यम् ।

## बालप्रिया

**गन्धसमवायिकारणतावच्छेदकतयेति** । 'समवायसम्बन्धावच्छिन्न-गन्धत्वावच्छिन्नगन्धनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नपृ-थिवीनिष्ठकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात् कपालनिष्ठ-घटकारणतावत्' इत्यनुमानप्रयोगोऽत्र विवक्षितः । **नाम्ना पदार्थसङ्कीर्तन-मुद्देश** इति मूलम् । पदार्थस्य सङ्कीर्तनं पदार्थसङ्कीर्तनम् । सङ्कीर्तन-शब्दस्य प्रतिपादकशब्द इत्यर्थः । पदार्थविषयकज्ञानजनकशब्दः पदार्थ-

सङ्कीर्तनमिति यावत् । पदार्थशब्दो वस्तुपरः । नाम्नेति तृतीयार्थस्य अभेदस्य शब्देऽन्वयात् नामाभिन्नः वस्तुविषयकज्ञानजनकशब्दः उद्देशः इति फलति। पृथिव्यप्तेजोवाय्वाकाशकालदिगात्ममनांसीत्यत्र पृथिव्यादिशब्दानां पृथिव्यादिवस्तुप्रतिपादकत्वात् नामत्वाच्च उद्देशलक्षणसमन्वयः । घट इति पदस्यापि वस्तुप्रतिपादकत्वात् नामत्वाच्च तत्रोद्देशलक्षणस्यातिव्याप्तिः । तद्वारणाय वस्तुपदं लक्षणीयवस्तुपरं वक्तव्यम् । घटादिपदं च न तादृशमिति नातिव्याप्तिः । प्रमेयमिति पदस्यापि लक्षणीयपृथिव्यादिप्रतिपादकत्वात् तत्रातिव्याप्तिः । तद्वारणाय वस्तुपदं लक्ष्यतावच्छेदकावच्छिन्नवस्तुपरं वाच्यम् । प्रमेयपदस्य प्रमेयत्वावच्छिन्नपृथिव्यादिबोधकत्वेऽपि लक्ष्यतावच्छेदकपृथिवीत्वाद्यवच्छिन्नपृथिव्यादिबोधकत्वाभावान्नातिव्याप्तिः । 'तत्र गन्धवती पृथिवी' इत्यादिलक्षणवाक्यघटकपृथिवीपदस्यापि पृथिवीत्वावच्छिन्नबोधकत्वात् नामत्वाच्च तस्योद्देशत्वापत्तिः । तद्वारणाय नाममात्रमित्यपि वक्तव्यम् । मात्रपदेन लक्षणादिवाचकपदासमभिव्याहृतत्वमुच्यते । तथा च लक्ष्यतावच्छेदकप्रकारकलक्ष्यविशेष्यकज्ञानजनक - लक्षणादिवाचकपदासमभिव्याहृतनामाभिन्नः शब्दः उद्देशः इति निष्कर्षः । तदाह - **तृतीयार्थोऽभेद** इत्यादिना । **सङ्कीर्तने** इत्यस्य विवरणं **प्रतिपादकशब्दे** इति । **सामान्यत** इति । प्रमेयत्वरूपसामान्यधर्मेणेत्यर्थः । तृतीयायाः प्रतिपत्त्यन्वयि [1]प्रकारत्वमर्थः ।

गन्धवत्त्वस्य पृथिवीलक्षणत्वे सुरभिगन्धयुक्तावयवासुरभिगन्धयुक्तावयवाभ्यामुत्पन्ने द्रव्ये कस्यापि गन्धस्यानुत्पादादव्याप्तिः । न च अवयवगतगन्धरूपस्यासमवायिकारणस्य सत्त्वात् कुतो गन्धो नोत्पद्यत इति शङ्कनीयम् । सुरभिगन्धस्य असुरभिगन्धं प्रति असुरभिगन्धस्य सुरभिगन्धं प्रति प्रतिबन्धकत्वेन कस्यापि गन्धस्य तत्रोत्पत्त्यसम्भवात् । न च यदि तत्र गन्धो नोत्पद्यते, तर्हि कथं तत्र

---

1. **प्रकारत्वमर्थ इति । तथा च प्रमेयत्वरूपसामान्यधर्मप्रकारकपृथिव्यादिविशेष्यकज्ञानजनके प्रमेयपदे इत्यर्थः ।**

गन्धः प्रतीयेत, अतस्तत्र परस्परं प्रतिबन्धात् सुरभिगन्धः असुरभिगन्धो वा नोत्पद्यताम्, चित्रगन्ध उत्पद्यताम्, तेन गन्धप्रतीतिरुपपद्यते, गन्धवत्तासत्त्वादव्याप्तिश्च नेति वाच्यम् । अवयवगतगन्धस्यैव स्वाश्रयसमवेतत्वसम्बन्धेन अवयविनि प्रतीतिसम्भवे चित्रगन्धस्यानङ्गीकारात् । तथा च तत्राव्याप्तितादवस्थ्यम् । किं च यो घटः प्रथमक्षणे उत्पन्नः अथ द्वितीयक्षणे विनष्टः तस्मिन् घटे अव्याप्तिः, प्रथमक्षणे 'उत्पन्नं द्रव्यं क्षणमगुणम्' इति न्यायेन गन्धविरहात् । द्वितीयक्षणे धर्मिण एव नाशात् इत्याशयेन शङ्कते - **दीपिकायाम् ननु सुरभ्यसुरभीति** ।

**गन्धसमानाधिकरणे**ति । गन्धाधिकरणवृत्तिः द्रव्यत्वव्याप्या च या जातिः तद्वत्त्वं पृथिव्याः लक्षणम् । गन्धाधिकरणं पुष्पादि तद्वृत्तिः द्रव्यत्वव्याप्या जातिः पृथिवीत्वजातिः तद्वत्त्वं सुरभ्यसुरभ्यवयवारब्धे द्रव्ये उत्पन्नविनष्टघटे चास्तीति नाव्याप्तिः । द्रव्यत्वव्याप्यजातिमत्त्वमात्रोक्तौ द्रव्यत्वव्याप्या या जलत्वजातिः तद्वत्त्वस्य जले सत्त्वात् तत्रातिव्याप्तिः । अतो **गन्धसमानाधिकरणे**ति । जलत्वस्य गन्धाधिकरणवृत्तित्वाभावात् न दोषः । गन्धसमानाधिकरणजातिमत्त्वमात्रोक्तौ गन्धाधिकरणपृथिवीवृत्तिः या सत्ताजातिः तद्वत्त्वस्य जलादौ सत्त्वात् अतिव्याप्तिः । तद्वारणाय द्रव्यत्वव्याप्येति जातिविशेषणम् । ननु द्रव्यत्वव्याप्येति विशेषणे दत्तेऽपि द्रव्यत्वजातिमादाय जलादिष्वतिव्याप्तिः दुर्वारा । द्रव्यत्वस्य गन्धाधिकरणपृथिवीवृत्तित्वात् द्रव्यत्वशून्यावृत्तित्वाच्चेति चेत् - न । प्रकृते द्रव्यत्वव्याप्यत्वं न द्रव्यत्वशून्यावृत्तित्वम् किं तु द्रव्यत्वन्यूनवृत्तित्वरूपम् । द्रव्यत्वं च न द्रव्यत्वन्यूनवृत्ति इत्याशयात् । द्रव्यत्वन्यूनवृत्तित्वं च [1]द्रव्यत्व-

---

1. द्रव्यत्वसमानाधिकरणेति । द्रव्यत्वाधिकरणं जलं तद्वृत्तिर्यो भेदः पृथिवीभेदः तत्प्रतियोगितावच्छेदकत्वात् पृथिवीत्वस्य द्रव्यत्वन्यूनवृत्तित्वम् । द्रव्यत्वं तु न द्रव्यत्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकं द्रव्यभेदस्य द्रव्यत्वाधिकरणावृत्तित्वादिति द्रव्यत्वं न द्रव्यत्वन्यूनवृत्तीति भावः ।

समानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् । तदाह - **प्रकाशिकायाम् जलत्वादिकमादायेत्यादि** ।

**दीपिकायाम् ननु जलादावपि गन्धप्रतीतेरिति** । तथा च गन्धवत्त्वरूपस्य पृथिवीलक्षणस्य जलादौ अतिव्याप्तिरिति भावः । **अन्वयव्यतिरेकाभ्यामिति** । जलादौ गन्धवत्पृथिवीसंयोगसत्त्वे गन्धप्रतीतिः तदभावे तदभाव इत्यन्वयव्यतिरेकाभ्यामित्यर्थः ।

**प्रकाशिकायाम् स्वाश्रयसंयुक्तत्वसम्बन्धेनेति** । स्वं पृथिवीगन्धः, स्वाश्रयः पृथिवी, तत्संयुक्तत्वं जलादौ । **यथाश्रुतग्राही** - सम्बन्धविशेषानवच्छिन्नं गन्धवत्त्वमेव लक्षणमित्यभिमानवान् । **अनुगतरूपेण**-सर्वाधारताप्रयोजकसम्बन्धभिन्नसम्बन्धत्वेनेत्यर्थः । कालिकादिसम्बन्धः सर्वाधारताप्रयोजकः तद्भिन्नसम्बन्धत्वं समवायादौ । **लक्षणताघटकसम्बन्धान्** लक्षणतावच्छेदकसम्बन्धान् समवायादीन् । **समवायादीनां समवायत्वादिनैव संसर्गतयेति** । स्पष्टं चेदम् **व्यधिकरणगादाधर्याम्** ।



## तर्कसङ्ग्रहः

### पृथिवीविभागः

सा द्विविधा - नित्या अनित्या चेति । नित्या परमाणुरूपा । अनित्या कार्यरूपा । पुनस्त्रिविधा - शरीर-इन्द्रिय-विषयभेदात् । शरीरं अस्मदादीनाम् । इन्द्रियं गन्धग्राहकं घ्राणम् । तच्च नासाग्रवर्ति । विषयो मृत्पाषाणादिः ।

## दीपिका

पृथिवीं विभजते - **सा द्विविधेति** । नित्यत्वं ध्वंसाप्रतियोगित्वम् । अनित्यत्वम् ध्वंसप्रतियोगित्वम् । प्रकारान्तरेण विभजते - **पुनरिति** । आत्मनो भोगायतनं शरीरम् । यदवच्छिन्नात्मनि भोगो जायते तद्भोगायतनम् । सुखदुःखान्यतरसाक्षात्कारो भोगः । शब्देतरोद्भूत-

विशेषगुणानाश्रयत्वे सति ज्ञानकारणमनस्संयोगाश्रयत्वं इन्द्रियत्वम् । शरीरेन्द्रियभिन्नो विषयः । एवं च गन्धवच्छरीरं पार्थिवशरीरम्, गन्धवदिन्द्रियं पार्थिवेन्द्रियम्, गन्धवान् विषयः पार्थिवविषय इति तत्तल्लक्षणं बोध्यम् । पार्थिवशरीरं दर्शयति-**शरीरमिति** । पार्थिवेन्द्रियं दर्शयति - **इन्द्रियमिति** । गन्धग्राहकमिति प्रयोजनकथनम् । घ्राणमिति संज्ञा । नासाग्रेत्याश्रयोक्तिः । एवमुत्तरत्र ज्ञेयम् । पार्थिवविषयं दर्शयति - **मृत्पाषाणादि** इति ।

## प्रकाशिका

नित्यपृथिवीत्वादिरूपलक्षणगतं नित्यत्वादि दर्शयति - **नित्यत्वमिति** । **प्रकारान्तरेणेति** । पृथिवीमित्यनुषज्यते । अत्र नित्यपृथिव्याः शरीरेन्द्रियभिन्नत्वरूपविषयलक्षणाक्रान्तत्वेन विषयान्तर्गतत्वमिति पृथिव्यास्त्रिविधत्वम् । अत एव मूले पुनस्त्रिविधेत्युक्तिः सङ्गच्छते इति ध्येयम् ।

केचित्तु - अनित्यपृथिव्या एव त्रैविध्यं वर्णयन्ति । उद्देशक्रमानुसारेण प्रथमं शरीरलक्षणमाह - **आत्मन** इति । **आयतनं** अवच्छेदकम् । तथा च मिलितं यादृशं लक्षणं सम्पन्नं तादृशमाह - **यदवच्छिन्नेति** । सुखदुःखान्यतरसाक्षात्कारावच्छेदकम् इति यावत् । अत्र अन्त्यावयवित्वे सतीति विशेषणं देयम् । तेन पादादीनां अवच्छेदकत्वेऽपि तत्र न अतिव्याप्तिः । यथा शरीरत्वं न जातिः, पृथिवीत्वादिना सङ्करात् तथा इन्द्रियत्वं न जातिरित्याशयेनाह - **शब्देतरोद्भूतेति** । आत्मादावतिव्याप्तिवारणाय सत्यन्तम् । श्रोत्रेऽव्याप्तिवारणाय **शब्देतरेति** । चक्षुरादौ विशेषगुणस्यानुद्भूतरूपादेः सत्त्वेनाव्याप्तिवारणाय **उद्भूतेति** । उद्भूतत्वं न जातिः शुक्लत्वादिना सांकर्यात् । न च शुक्लत्वादिव्याप्यं नानैवोद्भूतत्वमिति वाच्यम् । चाक्षुषादौ उद्भूतरूपत्वादिना कारणत्वानुपपत्तेः । किं तु शुक्लत्वादिव्याप्यं अनुद्भूतत्वं नाना तदभावकूटवत्त्वमुद्भूतत्वम् । तच्च संयोगादावपि । तथा च शब्दे-

तरोद्भूतगुणं संयोगमादाय असम्भववारणाय **विशेषे**ति। कालादावति-व्याप्तिवारणाय विशेष्यदलम् ; तत्रैव अतिव्याप्तिवारणाय **ज्ञानकारणे**ति । प्राचीनमते विषयावयवेन्द्रियावयवसंयोगस्य प्रत्यक्षकारणतया तदाश्रयस्य इन्द्रियावयवस्य, नवीनमते कालादौ रूपाभावप्रत्यक्षे सन्निकर्षघटकतया कारणीभूतचक्षुस्संयोगाश्रयस्य कालादेश्च वारणाय मनः पदम् । न च आत्मान्यत्वे सति इत्यनेनैव आत्मनि अतिव्याप्तिवारणसम्भवे किं गुरुतरशब्देतरोद्भूतेत्यादिविशेषणेनेति वाच्यम् । तथा सति चर्ममनस्संयोगस्य ज्ञानमात्रं प्रति हेतुत्वमते तत्रातिव्याप्तेरित्यलं विस्तरेण । **एवं चे**ति । तत्तदर्थस्य शरीरादिसामान्यलक्षणत्वे चेत्यर्थः । ननु गन्धवत्त्वप्रवेशेनैव तल्लक्षणस्य सामञ्जस्ये गन्धग्राहकत्वनिवेशनमनुचितम् । एवं च इन्द्रियं गन्धग्राहकम् इति मूलमनुचितं इत्याशङ्कां परिजिहीर्षुः तन्मूलं तत्प्रयोजनकथनपरतया व्याचष्टे-**गन्धग्राहकमि**ति । **उत्तरत्र** इन्द्रियं रसग्राहकम् इत्यादौ ।

**बालप्रिया**

ननु 'पुनः त्रिविधा शरीरेन्द्रियविषयभेदात्' इति ग्रन्थेन किं पृथिवीसामान्यस्य त्रेधा विभाग उच्यते किं वा अनित्यपृथिव्याः । नाद्यः, पृथिवीसामान्यस्य यद्ययं विभागः स्यात् तर्हि नित्यपृथिव्या अपि शरीरेन्द्रियविषयेषु क्वचिदन्तर्भावो वाच्यः । स च न सम्भवति । तथा हि - न तावत् नित्यपृथिव्याः शरीरेऽन्तर्भावः सम्भवति, नापि इन्द्रिये । तयोरुभयोरप्यनित्यत्वात् । नापि विषये, मृत्पाषाणादिरूपस्य विषयस्य नित्यत्वाभावात् । न द्वितीयः, पुनस्त्रिविधेति पुनःशब्देन पूर्वं विभक्तस्यैव विभागान्तरं क्रियत इति सूचनात् इत्याशङ्क्य आह - **अत्र नित्यपृथिव्या** इत्यादिना । एवं च पृथिवीसामान्यस्यैव पुनस्त्रेधा विभागः । नित्यपृथिव्याः शरीरेन्द्रियभिन्नत्वात् विषये अन्तर्भाव इति नानुपपत्तिरिति भावः ।

ननु कथंचिदत्र निर्वाहेऽपि तेजः प्रकरणे पुनस्त्रिविधमिति न सङ्गच्छते । नित्यतेजसः परमाणुरूपस्य भौमदिव्योदर्याकरजेषु चतुर्षु

विषयेष्वन्तर्भावासम्भवात् । जन्यत्वघटितभौमत्वादेः नित्यतेजस्यसंभवात् । अतः अनित्यपृथिव्या एवायं विभागः । पुनःशब्दश्च वाक्यालङ्कार इति नानुपपत्तिरित्याशयानानां मतमाह - **केचित्तु** इति । केचिदित्यस्वरसोद्भावनम् । तद्बीजं तु पुनःशब्दास्वारस्यात् नानित्यपृथिव्या अयं विभागः । न च स वाक्यालङ्कार इति वाच्यम् । वाक्यादौ प्रयुक्तस्य पुनःशब्दस्य वाक्यालङ्कारतायाः कुत्राप्यदृष्टचरत्वात् । यत्किंचित्पदोत्तरं प्रयुज्यमानस्यैव पुनःशब्दस्य वाक्यालङ्कारतायास्तत्र तत्र दृष्टत्वात् । किं च पुनश्शब्दस्य प्रकारान्तरपरत्वमेव अन्नम्भट्टस्यापि संमतम् । **'प्रकारान्तरेण विभजते - पुनस्त्रिविधेति'** इत्यवतरणिकादानात् । न च पृथिवीसामान्यस्यात्र विभाग इति कथंचित् उपपादनेऽपि तेजःप्रकरणेऽनुपपत्तिरिति वाच्यम् । तत्र भौमादिशब्दानां भूमिसम्बन्धि इत्याद्येवार्थः, न तु भूमिजन्यमिति । तथा च परमाणुरूपतेजसोऽपि भूमिसम्बन्धित्वादेरक्षततया विषयान्तर्भावो युज्यत इति ।

आत्मनो भोगायतनं शरीरमिति शरीरलक्षणम् । आत्मपदोत्तरषष्ठ्याः समवेतत्वमर्थः । तस्य भोगेऽन्वयः । भोगो नाम सुखदुःखान्यतरसाक्षात्कारः । आयतनमवच्छेदकम् । तथा च आत्मसमवेतसुखदुःखान्यतरसाक्षत्कारावच्छेदकं शरीरमित्युक्तं भवति । इदं लक्षणं हस्तपादादौ शरीरावयवेऽतिव्याप्तम् । हस्तपादाद्यवच्छेदेनापि आत्मनि सुखदुःखान्यतरसाक्षात्कारस्योत्पादात् । अतः अन्त्यावयवित्वे सतीति विशेषणं देयम् । अन्त्यावयवित्वं नाम द्रव्यानारम्भकत्वे सति अवयवित्वम् । हस्तादेः शरीरारम्भकतया सत्यन्ताभावात् नातिव्याप्तिः । तदाह - **सुखदुःखान्यतरसाक्षात्कारावच्छेदकमिति यावदित्यादिना** · **पृथिवीत्वादिना सङ्करादिति** । शरीरत्वं विहाय पृथिवीत्वं घटादौ, पृथिवीत्वं विहाय शरीरत्वं जलीयादिशरीरे । उभयोः पार्थिवशरीरे समावेशात् सङ्कर इति भावः । **तथा इन्द्रियत्वं न जातिरिति** । पृथिवीत्वं विहाय इन्द्रियत्वं रसनादौ । इन्द्रियत्वं विहाय

पृथिवीत्वं घटादौ, उभयोः समावेशः घ्राणेन्द्रिये इत्येवं पृथिवीत्वादिना सङ्करात् इन्द्रियत्वं न जातिरिति भावः । **आत्मादावतिव्याप्तिवारणाय सत्यन्तमिति** । ज्ञानकारणमनस्संयोगाश्रयत्वमिन्द्रियत्वमित्येतावन्मात्रोक्तौ ज्ञानकारणीभूतो यः मनस्संयोगः आत्ममनस्संयोगः तदाश्रयत्वं आत्मन्यप्यस्तीति तत्रातिव्याप्तिः स्यात् । तद्वारणाय सत्यन्तम् । तन्निवेशे च शब्देतरो यः उद्भूतविशेषगुणः ज्ञानसुखादिः तदाश्रयत्वस्यैवात्मनि सत्त्वात् नातिव्याप्तिः इत्यर्थः । उद्भूतविशेषगुणे शब्देतर इति विशेषणादाने शब्दरूपः यः उद्भूतविशेषगुणः तदाश्रयत्वमेव श्रोत्रेन्द्रियेऽस्ति न तदनाश्रयत्वमित्यव्याप्तिः स्यात् । तद्वारणाय शब्देतरेति विशेषणम् । विशेषगुणे उद्भूतेति विशेषणादाने चक्षुरादौ शब्देतरः यः विशेषगुणः अनुद्भूतरूपादिः तदाश्रयत्वमेवास्तीत्यव्याप्तिः स्यात् । तद्वारणाय उद्भूतेति विशेषणम् । विशेषपदमनुपादाय शब्देतरोद्भूतगुणानाश्रयत्वमित्येतावन्मात्रोक्तौ शब्देतरः यः संयोगाख्यः सामान्यगुणः तदाश्रयत्वस्यैव सत्त्वात् चक्षुरादीन्द्रियेष्वसम्भवः स्यात्; तद्वारणाय विशेषपदम् ।

ननु विशेषपदानुपादानेऽपि संयोगो नोपादातुं शक्यते । तस्योद्भूतत्वाभावात् उद्भूतपदेनैव तद्वारणात् इत्याशङ्क्याह - **उद्भूतत्वं न जातिरि**त्यादिना । उद्भूतत्वं विहाय शुक्लत्वं अनुद्भूतशुक्ले, शुक्लत्वं विहाय उद्भूतत्वं उद्भूतनीले, उभयोः उद्भूतत्वशुक्लत्वयोः उद्भूतशुक्ले समावेश इति सांकर्यात् उद्भूतत्वं न जातिः । न च शुक्लत्वव्याप्यम् उद्भूतत्वमन्यत् नीलत्वव्याप्यमुद्भूतत्वमन्यत् इत्येवं शुक्लत्वादिव्याप्यं उद्भूतत्वं नानैव । तथा च शुक्लत्वं विहाय उद्भूतत्वं नास्तीति न संकर इति वाच्यम् । उद्भूतत्वस्य नानात्वे चाक्षुषादिप्रत्यक्षं प्रति उद्भूतरूपं कारणमित्येवमनुगतकार्यकारणभावस्य भङ्गप्रसङ्गात् । अतः शुक्लादिभेदेन तद्वृत्ति अनुद्भूतत्वं नाना । अनुद्भूतत्वाभावकूटवत्त्वमेव चोद्भूतत्वम् । तदेव च लक्षणे निवेशितम् । तच्च संयोगेऽप्यस्ति । संयोगो हि नानुद्भूत इति अनु-

द्भूतत्वाभावकूटवत्त्वस्य तत्र सत्त्वात् । तथा च [1]निरुक्तोद्भूतत्वाश्रयसंयोगाश्रयत्वमेवेन्द्रियेष्वस्तीत्यसंभववारणाय विशेषपदमिति भावः ।

**कालादावतिव्याप्तिवारणाय विशेष्यदलमिति** । ज्ञानकारणमनस्संयोगाश्रयत्वमिति विशेष्यदलस्यानुपादाने काले कस्यापि विशेषगुणस्याभावात् शब्देतरोद्भूतविशेषगुणानाश्रयत्वमस्तीति अतिव्याप्तिः स्यात् । विशेष्यदले उपात्ते तु ज्ञानकारणीभूतो यः मनस्संयोगः आत्ममनस्संयोगः मनइन्द्रियसंयोगो वा तदाश्रयत्वं काले नास्तीति नातिव्याप्तिः इति भावः । मनस्संयोगे ज्ञानकारणेति विशेषणस्य प्रयोजनमाह - **तत्रैवेति** । कालस्य विभुतया विभुत्वस्य सर्वमूर्तद्रव्यसंयोगित्वरूपतया मनस्संयोगाश्रयत्वमस्तीति काले अतिव्याप्तिवारणाय ज्ञानकारणेत्युक्तम् । कालानुयोगिकस्य मनस्संयोगस्य ज्ञानकारणत्वाभावात् नातिव्याप्तिरिति भावः ।

मनःपदस्य मतभेदेन प्रयोजनमाह - **प्राचीनमत** इति । मनःपदमनुपादाय ज्ञानकारणसंयोगाश्रयत्वमित्येतावन्मात्रोक्तौ प्राचीनमते विषयस्य इन्द्रियावयवस्य च यः संयोगः तस्यापि ज्ञानकारणतया तदाश्रयत्वस्य इन्द्रियावयवे सत्त्वात् तत्र अतिव्याप्तिः । नवीनमते विषयेन्द्रियसंयोगस्यैव ज्ञानकारणत्वमिति यद्यपि इन्द्रियावयवेऽतिव्याप्तिः न सम्भवति । तथापि काले रूपं नास्तीति कालविशेषणकरूपाभावविशेष्यकप्रत्यक्षे चक्षुस्संयुक्तकालनिरूपितविशेष्यतायाः संनिकर्षविधया कारणत्वात् तद्घटकचक्षुस्संयोगस्यापि कारणत्वात् ज्ञानकारणीभूतो यः चक्षुस्संयोगः तदाश्रयत्वं कालेऽस्तीत्यतिव्याप्तिः स्यात्। तद्वारणाय मनःपदम् । तथा सति विषयेन्द्रियावयवसंयोगस्य वा कालचक्षुस्संयोगस्य वा मनस्संयोगत्वं नास्तीती न तावादाय पूर्वोक्तातिव्याप्तिरिति भावः । पूर्वं सत्यन्तानुपादाने आत्मनि अतिव्याप्ति-

ति

1. निरुक्तोद्भूतत्वेति । अनुद्भूतत्वाभावकूटवत्त्वरूपं यत् उद्भूतत्वं तदाश्रयेत्यर्थः ।

रित्युक्तम् । सा च अतिव्याप्तिः आत्मान्यत्वे सतीति विशेषणदानेऽपि वारयितुं शक्येति किमर्थं शब्देतरेत्यादिगुरुतरविशेषणमिति शङ्कते - **न चेति**। समाधत्ते - **तथा सतीति** । आत्मान्यत्वे सति ज्ञानकारणमनस्सं-योगाश्रयत्वमित्युक्तौ चर्मणः आत्मान्यत्वात् ज्ञानकारणीभूतः यः चर्म-मनस्संयोगः तदाश्रयत्वाच्च चर्मण्यतिव्याप्तिः स्यात् । तद्वारणाय शब्देतरेत्यादिगुरुतरं विशेषणं देयमित्यर्थः ।



## तर्कसङ्ग्रहः

### जलनिरूपणम्

शीतस्पर्शवत्य आपः । ताश्च द्विविधाः । नित्या अनित्याश्चेति । नित्याः परमाणुरूपाः । अनित्याः कार्यरूपाः । पुनस्त्रिविधाः - शरीर-इन्द्रिय - विषयभेदात् । शरीरं वरुणलोके । इन्द्रियं रसग्राहकं रस-नम् । तच्च जिह्वाग्रवर्ति । विषयः सरित्समुद्रादिः ।

## दीपिका

अपां लक्षणमाह - **शीतेति**। उत्पन्नविनष्टजलेऽव्याप्तिवारणाय शीतस्पर्शसमानाधिकरणद्रव्यत्वापरजातिमत्त्वं विवक्षितम् । 'शीतं शिलातलम्' इत्यादौ जलसम्बन्धादेव शीतस्पर्शभानमिति नातिव्या-प्तिः । अन्यत्सर्वं पूर्वरीत्या व्याख्येयम् ।

## प्रकाशिका

**शीतस्पर्शसमानाधिकरणेति** । तत्र विशेषणप्रयोजनं पूर्वोक्तरीत्या ऊह्यम् । जलत्वजातिसिद्धिस्तु स्नेहजनकतावच्छेदकतयेति ध्येयम् । **अन्यत्सर्वं पूर्वरीत्येति** । नित्यत्वादिकं शरीरादिलक्षणं च गन्धवत्त्व-स्थाने शीतस्पर्शवत्त्वं निवेश्य पृथिवीनिरूपणोक्तरीत्यर्थः । एवमग्रेऽप्यू-ह्यम् ।

## बालप्रिया

**पूर्वोक्तरीत्या ऊह्यमिति** । द्रव्यत्वव्याप्यजातिमत्त्वमात्रोक्तौ द्रव्यत्वव्याप्यपृथिवीत्वजातिमत्यां पृथिव्यामतिव्याप्तिः । तद्वारणाय शीतस्पर्शसमानाधिकरणेति जातिविशेषणम्। शीतस्पर्शवज्जलवृत्तिसत्ताजातिमादाय पृथिव्यादावतिव्याप्तिवारणाय द्रव्यत्वव्याप्येति । द्रव्यत्वव्याप्यत्वं च द्रव्यत्वन्यूनवृत्तित्वम् न तु तच्छून्यावृत्तित्वम् । अतो द्रव्यत्वजातिमादाय नोक्तदोष इति भावः । **स्नेहजनकतावच्छेदकतयेति** । 'समवायसम्बन्धावच्छिन्नस्नेहत्वावच्छिन्नस्नेहनिष्ठकार्यतानिरूपिततादात्म्यसम्बन्धावच्छिन्नजलनिष्ठकारणता किंचिद्धर्मावच्छिन्ना कारणतात्वात्' इत्यनुमानेन जलत्वजातिसिद्धिरित्यर्थः ।



## तर्कसङ्ग्रहः

### तेजोनिरूपणम्

उष्णस्पर्शवत् तेजः । तत् द्विविधम् - नित्यम् अनित्यम् चेति । नित्यं परमाणुरूपम् । अनित्यं कार्यरूपम् । पुनस्त्रिविधम् - शरीर-इन्द्रिय - विषयभेदात् । शरीरमादित्यलोके । इन्द्रियं रूपग्राहकं चक्षुः । तच्च कृष्णताराग्रवर्ति । विषयश्चतुर्विधः - भौम-दिव्य-उदर्य-आकरज-भेदात् । भौमं वह्न्यादि । दिव्यमबिन्धनं विद्युदादि । भुक्तस्य परिणामहेतुरुदर्यम् । आकरजं सुवर्णादि ।

## दीपिका

तेजसो लक्षणमाह - **उष्णस्पर्शवदिति** । 'उष्णं जलम्' इत्यादिप्रतीतेः तेजस्संयोगानुविधायित्वात् नातिव्याप्तिः । विषयं विभजते - **भौमेति** ।

### सुवर्णतैजसत्ववादः

ननु सुवर्णं पार्थिवं पीतत्वात् गुरुत्वात् हरिद्रावत् इति चेत् - न । अत्यन्तानलसंयोगे सति घृतादौ द्रवत्वनाशदर्शनेन, जलमध्यस्थघृतादौ तन्नाशादर्शनेन च असति प्रतिबन्धके पार्थिवद्रवत्वना-

शाग्निसंयोगयोः कार्यकारणभावावधारणात् सुवर्णस्य अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वेन पार्थिवत्वानुपपत्तेः पीतद्रव्यद्रवत्वनाशप्रतिबन्धकतया द्रवद्रव्यान्तरसिद्धौ नैमित्तिकद्रवत्वाधिकरणतया जलत्वानुपपत्तेः रूपवत्तया वाय्वादिषु अनन्तर्भावात् तैजसत्वसिद्धिः । तस्योष्णस्पर्शभास्वररूपयोः उपष्टम्भकपार्थिवरूपस्पर्शाभ्यां प्रतिबन्धादनुपलब्धिः । तस्मात् सुवर्णं तैजसमिति सिद्धम् ।

## प्रकाशिका

**मूले अबिन्धनमि**ति । अद्भिः इन्धनं दीपनं यस्य तदित्यर्थः । **भुक्तस्ये**ति । भुक्तस्यौदनादेः परिणामः परिपाकः, तत्र हेतुरित्यर्थः । **आकरज**मिति । आकरः खनिः तत्र जातमित्यर्थः ।

सुवर्णस्य तैजसत्वं व्यवस्थापयितुं शङ्कते - **दीपिकायाम् नन्वि**ति । पार्थिवत्वसाधकं पीतत्वहेतुमुक्त्वा तैजसत्वाभावसाधकं हेतुमाह - **गुरुत्वा**दिति । एतेन सुवर्णरूपतेजसि विजातीयपीतरूपं स्वीक्रियते । 'पीतं सुवर्णं' इत्यबाधितप्रत्यक्षप्रतीतिबलात् । एवं च तैजसत्वस्य निर्बाधतया पृथिवीत्वं न सिध्यतीति कस्यचित् भ्रान्तिर्निरस्ता । गुरुत्वस्याप्रत्यक्षत्वेन तथा वक्तुमशक्यत्वादिति दिक् । सुवर्णस्य पीतिमगुरुत्वाश्रयतोऽतिरिक्तत्वं व्यवस्थापयितुं अनुमाने अप्रयोजकशङ्कावारणाय कार्यकारणभावमनुकूलतर्कं व्यवस्थापयति - **अत्यन्तानले**ति । **सुवर्णस्ये-त्यादिः** । अनुमानप्रयोगस्तु इत्थमवसेयः - सुवर्णं अपार्थिवम् असति प्रतिबन्धके अत्यन्तानलसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वात् यन्नैवं तन्नैवम् । यथा पृथिवी । जलमध्यस्थघृतादौ व्यभिचारवारणाय **असति प्रतिबन्धक** इति । अग्निसंयोगासमानाधिकरणद्रवत्ववति घृतादौ व्यभिचारवारणाय अत्यन्तानलसंयोगे सति इति । **द्रवद्रव्यान्तरसिद्धा**विति । 'अत्यन्तानलसंयोगी पीतिमाश्रयः द्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्यन्तानलसंयोगेऽपि अनुच्छिद्यमानद्रवत्वाधिकरणत्वे सति गुरुत्वात् जलमध्यस्थघृतादिवत्' इत्यनुमानेन तत्सिद्धिर्द्रष्टव्या । जलादिक्रमादायानुमानपर्यवसानं वारयति - **नैमित्तिके**ति ।

ननु उष्णस्पर्शभास्वररूपयोः उपलब्ध्यभावेन सुवर्णस्य तैजसत्वं अनुपपन्नं इत्यत आह - **तस्येति** । **प्रतिबन्धादिति** । दोषविधयेत्यादिः ।

## बालप्रिया

**सुवर्णं पार्थिवं पीतत्वात् गुरुत्वात् हरिद्रावत्** इति मूले पीतत्वगुरुत्वाभ्यां द्वाभ्यां हेतुभ्यां सुवर्णस्य पार्थिवत्वं पूर्वपक्षिणा साधितम् । तत्र पीतत्वरूपेण एकेन हेतुनैव पृथिवीत्वसाधनसम्भवात् गुरुत्वरूपद्वितीयहेतूपन्यासो व्यर्थ इत्याशङ्क्याह - **पार्थिवत्वसाधकमिति** । तथा च पीतत्वं पार्थिवत्वसाधकम् । गुरुत्वं तु तेजोभिन्नत्वसाधकम् । न च द्वितीयानुमानं व्यर्थमिति वाच्यम् । परमतनिराकरणपूर्वकं स्वसिद्धान्तस्य कथनीयतया पराभिमततैजसत्वनिराकरणाय द्वितीयानुमानस्य आवश्यकत्वादिति भावः ।

ननु सुवर्णस्य पार्थिवत्वसाधनेनैव अर्थात् तैजसत्वाभावनिर्णये अनुमानान्तरप्रणयनवैयर्थ्यम् । एकेनैव पीतत्वहेतुना पार्थिवत्वतैजसभिन्नत्वयोः साधनसम्भवादिति चेत् - अत्राहुः । 'सुवर्णं पार्थिवम्' इत्याद्यनुमाने सुवर्णत्वं न पक्षतावच्छेदकम् । तथा सति रजतस्य पक्षतावच्छेदकानाक्रान्ततया तत्र पार्थिवत्वासिद्धिप्रसङ्गात् । तदर्थमनुमानान्तरप्रणयने गौरवाच्च । नापि रजतसाधारणं हिरण्यत्वं पक्षतावच्छेदकम् । तथा सति पक्षतावच्छेदकाश्रयरजते पीतत्वरूपहेत्वभावेन भागासिद्धिप्रसङ्गात् । तस्मात् गुरुत्वहेत्वनुसरणम् । गुरुत्वं तु रजतेऽप्यस्तीति न भागासिद्धिरिति ।

वस्तुतस्तु अत्र पूर्वपक्षिणः सुवर्णस्य पार्थिवत्वसाधने न निर्भरः । सुवर्णे पार्थिवत्वाभावस्य केनाप्यनुक्ततया तदभावरूपपृथिवीत्वमेवास्तु इति पूर्वपक्षस्याप्रसरात् । 'आकरजं सुवर्णादि' इति ग्रन्थकृता पूर्वं सुवर्णस्य तेजस्त्वकथनात् तदुपरि सुवर्णं तेजो न भवतीति पूर्वपक्षस्यैव युक्तत्वात् । अत एव 'तस्मात् सुवर्णं तैजसम्' इति सिद्धान्ते उपसंहारोऽपि सङ्गच्छते । एवं च सुवर्णस्य तेजोभिन्नत्वमप्यत्र पूर्वपक्षिणा सिषाधयि-

षितम् । सुवर्णस्य तेजोभिन्नत्वं तु पीतत्वेन हेतुना न साधयितुं शक्यते 'सुवर्णं पीतम्' इत्याकारकाबाधितप्रत्यक्षबलात् सुवर्णस्य तेजस्त्वेऽपि तत्र पीतत्वस्योपपत्तेः । अतो गुरुत्वादिति द्वितीयहेतूपन्यासः । 'सुवर्णं गुरु' इति प्रत्यक्षाभावेन सुवर्णस्य तेजस्त्वेऽपि गुरुत्वमुपपद्यत इति वक्तुमशक्यम् । अतो गुरुत्वं तेजोभिन्नत्वसाधने समर्थमिति भावोऽत्र प्रतीयते । स्पष्टीकृतश्च अयं भावः '**एतेन' इत्यादिग्रन्थेने**ति ।

**दीपिकायाम् - अत्यन्तानलसंयोगे स**तीत्यादि । अयमर्थः - घृतादिपृथिव्यां यत् द्रवत्वं तस्यात्यन्ताग्निसंयोगे सति नाशो भवति । तेन पार्थिवगतद्रवत्वनाशं प्रति अत्यन्ताग्निसंयोगः कारणमिति कार्यकारणभावो लभ्यते । परं तु जलमध्यस्थघृतद्रवत्वस्य अत्यन्ताग्निसंयोगे सत्यपि नाशो न भवतीत्यन्वयव्यभिचारशङ्कावारणाय उक्तकार्यकारणभावे 'असति प्रतिबन्धके' इति विशेषणं देयम् । तेन प्रतिबन्धकासमवधानकालीनः अत्यन्ताग्निसंयोगः पार्थिवद्रवत्वनाशस्य हेतुः इति कार्यकारणभावः फलति । जलमध्यस्थघृते तु जलस्य प्रतिबन्धकत्वात् न द्रवत्वनाशः । तथा च प्रतिबन्धकासमवहिताग्निसंयोगरूपकारणाभावात् तत्र द्रवत्वनाशरूपकार्याभाव इति न पूर्वोक्तान्वयव्यभिचारः । सुवर्णे तु अत्यन्ताग्निसंयोगे सत्यपि तत्र विद्यमानपार्थिवभागस्य यत् द्रवत्वं तन्नाशो न भवति । अतः तद्द्रवत्वनाशप्रतिबन्धकं किंचित् द्रव्यं सुवर्णेऽस्तीति वक्तव्यम् । तदेव तेजः । तथा च सुवर्णे पृथिव्यसाधारणानुभूयमानपीतरूपगुरुत्वयोराश्रयभूतः पार्थिवभागः तद्गतद्रवत्वप्रतिबन्धकतेजोभाग इति भागद्वयमङ्गीकार्यम् । तथा अनङ्गीकारे सुवर्णस्य कृत्स्नस्यापि पार्थिवत्वे तद्गतद्रवत्वं नश्येत् । एवं च अत्यन्ताग्निसंयोगी पीतिमाश्रयभागः द्रवत्वनाशप्रतिबन्धकद्रवद्रव्यान्तरसंयुक्तः अत्यन्तानलसंयोगे सत्यपि अविनाशिद्रवत्ववत्त्वात् जलमध्यस्थघृतवत् इत्यनुमानेन प्रतिबन्धकद्रवद्रव्यान्तरसिद्धौ 'तत् द्रव्यम् न पार्थिवम् असति प्रतिबन्धकेऽत्यन्ताग्निसंयोगे सति अनुच्छिद्यमान-

द्रवत्ववत्त्वात् यन्नैवं तन्नैवं यथा पृथिवी' इत्यनुमानेन तादृशद्रव्यान्तरस्य पृथिवीभिन्नत्वे सिद्धे तस्य 'तादृशद्रव्यान्तरं न जलम् नैमित्तिकद्रवत्ववत्त्वात्' इत्यनुमानेन जलत्वाभावे सिद्धे 'तादृशद्रव्यान्तरं न वाय्वादिकम् रूपवत्त्वात्' इत्यनुमानेन वाय्वादित्वाभावे च सति तादृशद्रव्यं तैजसं पृथिव्याद्यष्टकान्यत्वे सति द्रव्यत्वात् इति परिशेषानुमानेन तस्य तैजसत्वं सिध्यतीति । न च तादृशद्रव्यस्य रूपवत्त्वमसिद्धमिति कथं तेन हेतुना वाय्वादिभेदः साध्य इति वाच्यम् । तस्य रूपशून्यत्वे वाय्वादिवत् द्रवत्वनाशप्रतिबन्धकत्वानुपपत्त्या रूपवत्त्वस्वीकारस्य आवश्यकत्वात् इत्याशयात् । वस्तुतो नैमित्तिकद्रवत्ववत्त्वेनैव हेतुना वाय्वादिभेदोऽपि शक्यः साधयितुम् । तथा च तेजस्त्वेन निर्णीतं प्रतिबन्धकं द्रव्यमेव सुवर्णं हिरण्यमित्यादिभिः विशेषशब्दैः सामान्यशब्दैश्च व्यवह्रियत इति सिध्यति ।

अत्रेदं तत्त्वम् - प्रतिबन्धकाभावविशिष्टः अत्यन्ताग्निसंयोगः पार्थिवद्रवत्वनाशं प्रति हेतुरिति कार्यकारणभावः आवश्यकः । तत्र सुवर्णस्थपार्थिवभागगतद्रवत्वनाशरूपकार्याभावः प्रतिबन्धकाभावविशिष्टात्यन्ताग्निसंयोगरूपकारणाभावप्रयुक्त इति निर्विवादम् । तत्र तादृशविशिष्टाभावरूपः कारणाभावः न विशेष्याभावात्, अत्यन्ताग्निसंयोगरूपस्य विशेष्यस्य तत्र सत्त्वात् । किं तु प्रतिबन्धकाभावरूपस्य विशेषणस्याभावादेव वक्तव्य इति प्रतिबन्धकं किंचित् द्रवद्रव्यान्तरं तत्रास्तीति वक्तव्यम् । तस्यापि पृथिवीत्वे तद्द्रवत्वनाशप्रतिबन्धकं द्रव्यान्तरं तस्यापि तथेत्यनवस्था स्यात् । अतः प्रतिबन्धकान्तरं विना अविनश्यद्द्रवत्वादेव तन्न पृथिवी इति । अयं **दीपिका**ग्रन्थः पार्थिवभागस्यापि द्रवत्वं तेजोभागस्यापि द्रवत्वमित्यङ्गीकृत्य प्रवृत्त इति प्रतीयते 'पीतद्रव्यद्रवत्वनाश' 'द्रवद्रव्यान्तर' इति पदयोः स्वारस्यात् । **मुक्तावल्यां** तु 'जलमध्यस्थमषीक्षोदवत् तस्याद्रुतत्वात्' इति ग्रन्थेन पार्थिवभागस्य द्रवत्वाभाव एव प्रतिपादितः । तन्मते सुवर्णस्य तैजसत्वसाधकानुमानमन्यदेवेति ।

प्रकाशिकायाम् - **सुवर्णस्य पीतिमगुरुत्वाश्रयतोऽतिरिक्तत्वमिति** । सुवर्णशब्दवाच्यस्य भागविशेषस्य पृथिवीभागादतिरिक्तत्वमित्यर्थः । **अनुमानेऽप्रयोजकशङ्कावारणायेति** । सुवर्णशब्दवाच्यस्य भागविशेषस्य पृथिव्यतिरिक्तत्वसाधके 'सुवर्णम् अपार्थिवम् अत्यन्ताग्निसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वात्' इत्यनुमाने अत्यन्ताग्निसंयोगे सति अनुच्छिद्यमानद्रवत्वाधिकरणत्वरूपहेतुरस्तु अपार्थिवत्वरूपसाध्यं मास्तु इत्यप्रयोजकशङ्कायां तद्वारणाय यदि सुवर्णस्य पार्थिवत्वं स्यात् तर्हि अत्यन्ताग्निसंयोगे सति उच्छिद्यमानद्रवत्वाधिकरणमेव स्यात्; पार्थिवद्रवत्वनाशं प्रति अत्यन्ताग्निसंयोगस्य कारणत्वात् इत्येवंरूपमनुकूलतर्कमाहेत्यर्थः । **असति प्रतिबन्धके** इत्यस्य प्रतिबन्धकाभावविशिष्टमित्यर्थः । तस्य द्रवत्वेऽन्वयः । वैशिष्टयं च संयोगसमवायघटितएककालावच्छिन्नैकाधिकरणवृत्तित्वरूपसामानाधिकरण्यसम्बन्धेन । अत्यन्तानलसंयोगे सति इत्यस्यापि समवायघटितोक्तसामानाधिकरण्यसम्बन्धेन अत्यन्ताग्निसंयोगविशिष्टमित्यर्थः । अन्वयश्च तस्य द्रवत्वे एव । **जलमध्यस्थघृतादौ व्यभिचारवारणायेति** । अपार्थिवत्वरूपसाध्याभाववति तत्र अनुच्छिद्यमानद्रवत्वरूपहेतुसत्त्वादिति भावः । **अग्निसंयोगासमानाधिकरणद्रवत्ववति घृतादाविति** । शिक्यस्थघृतादौ इत्यर्थः ।

**अत्यन्तानलसंयोगी**त्यादि । पीतिमाश्रयत्वमात्रस्य पक्षतावच्छेदकत्वे तदवच्छेदेन च अनुमितेरुद्देश्यत्वे अग्निसंयोगरहितस्यापि पीतिमाश्रयस्य पक्षतावच्छेदकाक्रान्ततया तत्राग्निसंयोगघटितस्य हेतोरभावात् भागासिद्धिः स्यात् इति तद्वारणाय अत्यन्तानलसंयोगीति पक्षविशेषणम् । अत्यन्तानलसंयोगिनः तैजसभागस्य साध्यशून्यत्वात् बाधः स्यात् इति तद्वारणाय पीतिमाश्रय इति । द्रवद्रव्यान्तरस्य अप्रतिबन्धकत्वे तत्कल्पनेऽपि प्रकृते नोपयोग इति सूचनाय द्रवत्वनाशप्रतिबन्धकेति साध्यविशेषणम् । जलमध्यस्थघृतादौ पार्थिवद्रवत्वनाशं प्रति द्रवद्रव्यस्यैव प्रतिबन्धकत्वदर्शनात् प्रकृतेऽपि प्रतिबन्धकं

द्रव्यं द्रवमेव स्यादित्यभिप्रेत्य द्रवेति विशेषणम् । **अनुमानपर्यवसान-मिति** । अजिज्ञासितार्थसिद्धिरूपमर्थान्तरं वारयितुमित्यर्थः ।

ननु यदि सुवर्णं तैजसं भवेत् तर्हि तेजोगुणयोः उष्णस्पर्शभास्वरशुक्लरूपयोः सुवर्णे उपलब्धिः स्यात् । यतः न तयोः सुवर्णे उपलब्धिः अतः सुवर्णं न तैजसमिति शङ्कानिरासार्थः तस्येति ग्रन्थ इत्याह — **ननु उष्णस्पर्शे**ति । वस्तुतः सुवर्णे विद्यमानयोरपि उष्णस्पर्शशुक्लरूपयोः प्रत्यक्षं प्रति पार्थिवगतस्पर्शरूपे प्रतिबन्धके इति **दीपिकायामुक्तम्**। तच्च प्रतिबन्धकत्वं दोषविधया न तु तद्वत्ताबुद्धिं प्रति तदभाववत्ताज्ञानविधयेत्यभिप्रेत्याह— **दोषविधयेत्यादि**रिति ।



## तर्कसङ्ग्रहः

### वायुनिरूपणम्

रूपरहितस्पर्शवान् वायुः । सः द्विविधः । नित्यः अनित्यश्च इति । नित्यः परमाणुरूपः । अनित्यः कार्यरूपः । पुनस्त्रिविधः— शरीर - इन्द्रिय - विषयभेदात् । शरीरम् वायुलोके । इन्द्रियं स्पर्शग्राहकं त्वक् । सर्वशरीरवृत्तिः । विषयो वृक्षादिकम्पनहेतुः वायुः । शरीरान्तस्सञ्चारी वायुः प्राणः । स चैकोऽपि उपाधिभेदात् प्राणापानादिसंज्ञां लभते ।

### दीपिका

वायुं लक्षयति - **रूपरहिते**ति । आकाशादौ अतिव्याप्तिवारणाय **स्पर्शवा**निति । पृथिव्यादौ अतिव्याप्तिवारणाय **रूपरहिते**ति । प्राणस्य कुत्रान्तर्भाव इत्यत आह - **शरीरे**ति । **स चे**ति । एक एव प्राणः स्थानभेदात् प्राणापानादिशब्दैः व्यवह्रियत इत्यर्थः ।

स्पर्शानुमेयो वायुः । तथा हि - योऽयं वायौ वाति सति अनुष्णाशीतस्पर्श उपलभ्यते स क्वचिदाश्रितः गुणत्वात् रूपवत् । न चास्य आश्रयः पृथिवी, उद्भूतस्पर्शवत्पार्थिवस्य उद्भूतरूपवत्त्वनि-

यमात् । न जलतेजसी, अनुष्णाशीतस्पर्शवत्वात् । न विभुचतुष्टयम्, सर्वत्रोपलब्धिप्रसङ्गात् । न मनः, परमाणुस्पर्शस्य अतीन्द्रियत्वात् । तस्मात् यः प्रतीयमानस्पर्शाश्रयः स वायुः (एव) ।

ननु वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् घटवत् इति चेत् - न । उद्भूतरूपवत्त्वस्योपाधित्वात् । 'यत्र द्रव्यत्वे सति बहिरिन्द्रिय-जन्यप्रत्यक्षत्वम्, तत्र उद्भूतरूपवत्त्वम्' इति साध्यव्यापकत्वम् । पक्षे साधनाव्यापकत्वम् । न चैवं तप्तवारिस्थतेजसोऽपि अप्रत्यक्षत्वा-पत्तिः इष्टत्वात् । तस्मात् रूपरहितत्वात् वायुः अप्रत्यक्षः ।

## प्रकाशिका

**शरीरेति** इति । तथा च प्राणस्य विषये अन्तर्भाव इति भावः । **स्थानभेदादि**ति । 'हृदि प्राण' इत्यादिकोशोक्तस्थानभेदादित्यर्थः । मुखनासिकाभ्यां निष्क्रमणप्रवेशनात् प्राणः । मलादीनामधोनयनात् अपानः । आहारेषु पाकार्थं वह्नेः समुन्नयनात् समानः । ऊर्ध्वनयनात् उदानः । नाडीमुखेषु विततनात् व्यानः ।

स्वमतं दर्शयति - **स्पर्शानुमेय** इति । अस्य - उपलभ्यमानस्पर्शस्य आश्रयः पृथिवी न च इत्यन्वयः । **चतुष्टयमि**ति । इदं आकाशादिप्रत्ये-कभेदसाधनाभिप्रायेण । **सर्वत्रोपलब्धिप्रसङ्गा**दिति । स्पर्शस्येत्यादिः । आकाशादीनाँ विभुत्वादिति भावः ।

**प्रत्यक्षः** - बहिरिन्द्रियजन्यप्रत्यक्षविषयः । अनुद्भूतस्पर्शाश्रये त्वगिन्द्रिये व्यभिचारवारणाय **प्रत्यक्षे**ति । **उपाधित्वादि**ति । तथा च हेतौ उपाधिव्यभिचारेण साध्यव्यभिचारोन्नयनसम्भवात् न प्रत्यक्ष-त्वसिद्धिरिति भावः । ननु तादृशप्रत्यक्षत्वस्य गुणादावपि सत्त्वेन तत्रोद्भूतरूपाभावेन साध्याव्यापकत्वात् कथं तस्योपाधित्वमित्यत आह - **यत्रे**ति । तथा च पक्षधर्मावच्छिन्नसाध्यव्यापकोऽयं उपाधिरिति भावः । एवं-प्रत्यक्षस्पर्शाश्रयस्यापि उद्भूतरूपाभावेन प्रत्यक्षत्वानङ्गी-कारे । **अप्रत्यक्षत्वापत्तिरि**ति । उद्भूतरूपाभावादिति भावः ।

**न विभुचतुष्टयम्** इत्यस्य विभुचतुष्टयत्वावच्छिन्नप्रतियोगिताक-भेदवानिति नार्थः; विभावपि प्रत्येकं तच्चतुष्टयभेदसम्भवेनाभिमता-सिद्धेः । अपि तु उपलभ्यमानस्पर्शाश्रयः आकाशाद्यात्मान्तान्यतमभिन्न इति अर्थो विवक्षित इत्याशयेनाह - **इदमाकाशादिप्रत्येकभेदसाधनाभि-प्रायेणे**ति ।

**तथा च हेताविति** । 'प्रत्यक्षस्पर्शाश्रयत्वं प्रत्यक्षत्वव्यभिचारि प्रत्यक्षत्वव्यापकोद्भूतरूपव्यभिचारित्वात्; यत् यद्व्यापकव्यभिचारि तत् तद्व्यभिचारि' इति प्रयोगोऽत्र विवक्षितः । ननु 'वायुः बहिरिन्द्रि-यजन्यप्रत्यक्षविषयः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यनुमाने उद्भूतरूपस्य उपाधित्वं न सम्भवति । उपाधेः उद्भूतरूपस्य साध्यव्यापकत्वा-भावात् बहिरिन्द्रियजन्यप्रत्यक्षविषयत्ववति गुणादौ उद्भूतरूपाभावात् इत्याशङ्कते - **ननु तादृशप्रत्यक्षत्वस्ये**त्यादिना । बहिरिन्द्रियजन्यप्रत्यक्ष-विषयत्वस्येत्यर्थः । **तथा चे**ति । पक्षः वायुः तद्गतधर्मः द्रव्यत्वम् तदवच्छिन्नं सामानाधिकरण्यसम्बन्धेन तद्विशिष्टं साध्यं बहिरिन्द्रिय-जन्यप्रत्यक्षविषयत्वं तद्व्यापक इत्यर्थः । एवं च द्रव्यत्वविशिष्टबहि-रिन्द्रियजन्यप्रत्यक्षविषयत्वं गुणादौ नास्ति तत्र द्रव्यत्वरूपविशेषणा-भावात् । अपि तु द्रव्ये घटादावेवास्ति । तत्र च उद्भूतरूपमस्तीति उद्भूतरूपस्य पक्षधर्मावच्छिन्नसाध्यव्यापकत्वादुपाधित्वमुपपद्यत इति। उपाधिर्हि केवलसाध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साध-नावच्छिन्नसाध्यव्यापक इति त्रिविधः । तत्र मध्यमोऽयमुपाधिरिति भावः । **एवमि**ति व्याख्येयं पदम् । तस्य व्याख्यानं **प्रत्यक्षस्पर्शाश्रयस्या-प्युद्भूतरूपाभावेन प्रत्यक्षत्वानङ्गीकार** इति । उद्भूतरूपस्य साध्यव्याप-कस्य वायावभावेन व्यापकाभावात् व्याप्याभाव इति रीत्या प्रत्यक्ष-त्वाभावस्य सिद्धेरिति भावः ।

## दीपिका

### सृष्टिसंहारप्रक्रिया

इदानीं कार्यरूपपृथिव्यादिचतुष्टयस्य उत्पत्तिविनाशक्रमः कथ्यते। ईश्वरस्य चिकीर्षावशात् परमाणुषु क्रिया जायते। ततः परमाणुद्वय-संयोगे सति द्व्यणुकमुत्पद्यते। त्रिभिरेव द्व्यणुकैः त्र्यणुकं उत्पद्यते। एवं चतुरणुकादिक्रमेण महती पृथिवी, महत्य आपः, महत्तेजः, महा-वायुः उत्पद्यते। एवमुत्पन्नस्य कार्यद्रव्यस्य संजिहीर्षावशात् क्रियया परमाणुद्वयविभागे द्व्यणुकनाश इत्येवं पृथिव्यादिनाशः। असमवायि-कारणनाशात् द्व्यणुकनाशः। समवायिकारणनाशात् त्र्यणुकनाश इति संप्रदायः। सर्वत्रासमवायिकारणनाशात् द्रव्यनाश इति नवीनाः।

किं पुनः परमाणुसद्भावे प्रमाणम्? उच्यते - जालसूर्यमरी-चिस्थं सर्वतः सूक्ष्मतमं यत् द्रव्यं उपलभ्यते तत्सावयवम् चाक्षुषद्रव्य-त्वात् घटवत्। त्र्यणुकावयवोऽपि सावयवः महदारम्भकत्वात् कपाल-वत्। यः द्व्यणुकावयवः स एव परमाणुः। स च नित्यः, तस्यापि कार्यत्वे अनवस्थाप्रसङ्गात्। सृष्टिप्रलयसद्भावे 'धाता यथापूर्वं अकल्पयत्' इत्यादि श्रुतिरेव प्रमाणम्। 'सर्वकार्यद्रव्यध्वंसोऽवान्तर-प्रलयः, सर्वभावकार्यध्वंसो महाप्रलयः' इति विवेकः।

## प्रकाशिका

ननु परमाणुपुञ्जस्यैव घटादिरूपत्वेन अतिरिक्तावयविनः असत्त्वात् पृथिव्यादिचतुष्टयस्य नित्यत्वानित्यत्वाभ्यां विभागकथन-मनुपपन्नं इत्याशङ्कां वारयति – **इदानीमि**ति। पृथिव्यादिचतुष्टयनि-रूपणानन्तरम् इत्यर्थः। **द्व्यणुकनाश** इत्यस्य परमाणुद्वयसंयोगनाशादि-त्यादिः। **सर्वत्रे**ति। जन्यद्रव्यसामान्य इत्यर्थः। सर्वत्र एकरीतिरेवोचिता इति भावः।

**चाक्षुषद्रव्यत्वादि**ति। चाक्षुषत्वे सति द्रव्यत्वादित्यर्थः। रूपादौ आत्मनि च व्यभिचारवारणाय विशेष्यविशेषणे। न च इदं अप्रयो-

जकमिति शङ्क्यम् । चाक्षुषं प्रति कारणस्य महत्त्वस्य त्रुटावपेक्षिततया सावयवत्वं विना अवयवसङ्ख्याजन्यस्य तस्य स्वीकर्तुमशक्यत्वादिति सङ्क्षेपः । यत्किंचिज्जन्यद्रव्यध्वंसस्य इदानीमपि सत्त्वात् **सर्वे**ति । नित्यद्रव्याणां ध्वंसासम्भवात् **कार्ये**ति । परमाणुनिष्ठरूपादीनां तदानीमपि सत्त्वात् **द्रव्ये**ति । ध्वंसानां ध्वंसासंभवेन महाप्रलयेऽपि सत्त्वात् भावेतीति दिक् ।

## बालप्रिया

**परमाणुपुञ्जस्यैवे**ति । परमाणुसमूहस्यैवेत्यर्थः । **अतिरिक्तावयविन** इति । परमाणुभिन्नस्य अवयविन इत्यर्थः । **विभागकथनमनुपपन्न**मिति । अनित्यस्य पृथिव्यादिचतुष्टयस्याभावात् इति भावः । **मूले चिकीर्षावशादि**ति । सिसृक्षावशादित्यर्थः । **त्रिभिरेव त्र्यणुकैरि**ति । द्वाभ्यां द्वयणुकाभ्यां त्र्यणुकोत्पत्तिः न भवति । त्र्यणुकमिति [1] त्रित्वसङ्ख्याकाण्ववयवकत्वप्रवृत्तिनिमित्तकत्र्यणुकशब्दानुपपत्तेरिति मत्वा एवमुक्तम् । **कार्यद्रव्यस्य संजिहीर्षावशादि**ति । कार्यद्रव्यविषयकेश्वरकर्तृकसंहारेच्छावशादित्यर्थः । **असमवायिकारणनाशादि**ति । द्वयणुकस्य असमवायिकारणं यः परमाणुद्वयसंयोगः तस्य नाशात् द्वयणुकस्य नाश इत्यर्थः । **समवायिकारणनाशात् त्र्यणुकनाश** इति त्र्यणुकस्य यत् समवायिकारणं द्वयणुकं तस्य नाशात् त्र्यणुकनाश इत्यर्थः । द्वयणुकस्य तु समवायिकारणनाशात् नाशो न वक्तुं शक्यते । समवायिकारणस्य परमाणोः नाशासम्भवादिति भावः । **जालसूर्ये**त्यादि । प्रथमानुमानं द्वयणुकसाधकम् , द्वितीयानुमानं परमाणुसाधकमिति विवेकः ।

चाक्षुषद्रव्यत्वादित्यस्य चाक्षुषं च तत् द्रव्यत्वं चेति समासे घटादौ चाक्षुषं यत् द्रव्यत्वं तस्यैव आत्मनि सत्त्वेन सावयवत्वाभाववति तत्र हेतोः व्यभिचारः स्यात् । अतः चाक्षुषं च तत् द्रव्यं च

---

1. त्रित्वसंख्याकेति । त्रीणि अणूनि यस्य तत् त्र्यणुकमिति विग्रहः । तथा च त्रित्वसंख्याविशिष्टाण्ववयवकत्वं त्र्यणुकशब्दस्य प्रवृत्तिनिमित्तम् । तत् त्रिभिर्द्वयणुकैः त्र्यणुकोत्पत्तावेव संगच्छत इति भावः ।

चाक्षुषद्रव्यं तस्य भावः इति समासोऽत्र विवक्षितः । तेन चाक्षुषत्व-विशिष्टद्रव्यत्वं हेतुरिति फलति । वैशिष्ट्यं च सामानाधिकरण्य-सम्बन्धेन । आत्मनि चाक्षुषत्वरूपविशेषणाभावात् विशिष्टद्रव्यत्व-रूपो हेतुः नास्तीति न व्यभिचार इत्याशयेनाह - **चाक्षुषत्वे सति द्रव्य-त्वादित्यर्थ** इति । चाक्षुषत्वमात्रोक्तौ सावयवत्वरूपसाध्याभाववति रूपादौ चाक्षुषत्वसत्त्वात् व्यभिचार इति तद्वारणाय द्रव्यत्वोपादानम् । द्रव्यत्वमात्रोक्तौ आत्मनि व्यभिचार इति तद्वारणाय चक्षुरिन्द्रिय-जन्यप्रत्यक्षविषयत्वरूपचाक्षुषत्वोपादानम् । **विशेष्यविशेषणे** इति । विशेष्यं द्रव्यत्वम् । विशेषणं चाक्षुषत्वम् ।

**न चेदमप्रयोजकमिति** । चाक्षुषद्रव्यत्वरूपहेतुरस्तु, सावयवत्व-रूपसाध्यं मास्तु इत्याशङ्कायां तद्वारकतर्काभावादित्यर्थः । **अप्रयोजकम्** इत्यस्य व्यभिचारशङ्कानिवर्तकतर्कशून्यमित्यर्थः । त्र्यणुकरूपे पक्षे सावयवत्वं नास्ति चेत् चाक्षुषद्रव्यत्वरूपहेतुरपि न स्यात् । चाक्षुष-प्रत्यक्षं प्रति महत्त्वस्य कारणतया त्र्यणुके महत्त्वं यदि स्यात् तदैव चाक्षुषत्वं तस्य भवेत् । त्र्यणुके महत्त्वं तु अवयवगतबहुत्वसङ्ख्या-जन्यमिति त्र्यणुकं सावयवमिति अङ्गीकार्यम् । तथा च सावयवत्वस्य महत्त्वद्वारा त्र्यणुकचाक्षुषत्वप्रयोजकत्वात् सावयवत्वचाक्षुषत्वयोः प्रयोज्यप्रयोजकभावरूपानुकूलतर्कसद्भावात् नेदमनुमानं अप्रयोजकम् इत्याशयः ।

ननु त्र्यणुकगतमहत्त्वस्य नित्यत्वस्वीकारेण अवयवसङ्ख्याजन्य-त्वस्य अनावश्यकत्वात् सावयवत्वं विनापि चाक्षुषत्वोपपत्तेः अप्रयो-जकमेव द्व्यणुकसाधकत्वेनोपन्यस्तमनुमानम् इत्याशङ्क्याह - **सङ्क्षेप** इति । अणुव्यवहारस्याणुपरिमाणनिबन्धनतया तदाश्रयद्व्यणुकाख्याणु-वस्तुनः अवश्याङ्गीकरणीयत्वादिति भावः ।

**सर्वभावकार्यध्वंसः महाप्रलय** इति । महाप्रलयानन्तरं पुनः सृष्ट्य-नभ्युपगमेनेदम् । तदभ्युपगमे तु पुनः सृष्ट्युपयोगिधर्माधर्मयोरावश्य-

कत्वात् सर्वभावकार्यध्वंसरूपो महाप्रलय एव न स्यात् इत्यवधेयम् । 'धाता यथापूर्वमकल्पयत्' इति श्रुतिस्तु अवान्तरप्रलयानन्तरसृष्टि-विषयेति तेषामाशयः । **महाप्रलयेऽपि सत्त्वादि**ति । तथा च सर्वकार्यान्त-र्गतध्वंसस्य ध्वंसाभावात् सर्वकार्यध्वंसरूपलक्षणासम्भवः स्यात् इति तद्वारणाय भावपदमिति भावः ।



### तर्कसङ्ग्रहः

आकाशनिरूपणम्

| शब्दगुणकमाकाशम् । तच्च एकम्, विभु, नित्यम् च । |
|---|

### दीपिका

आकाशं लक्षयति - **शब्दगुणकमि**ति । ननु आकाशमपि पृथि-व्यादिवन्नाना किं? नेत्याह - **तच्चैकमि**ति । भेदे प्रमाणाभावात् इत्यर्थः । एकत्वादेव सर्वत्र शब्दोपलब्धेः विभुत्वं अङ्गीकर्तव्यमित्याह-**विभ्वि**ति । सर्वमूर्तद्रव्यसंयोगित्वम् विभुत्वम् । मूर्तत्वम् परिच्छिन्नपरिमाणवत्त्वं, क्रियावत्त्वम् वा । विभुत्वादेव आत्मवत् नित्यं इत्याह - **नित्यं चेति**।

### प्रकाशिका

शब्दगुणकमित्यत्र शब्दवदिति वक्तव्ये तथाकथनं'आकाशे शब्द एव विशेषगुण' इति द्योतनाय। घटाकाशो मठाकाश इत्यादिव्यवहार-स्योपाधिकृतत्वेन असाधकत्वात् आकाशस्य अनेकत्वे प्रमाणं नेत्याह - **भेद** इति । **एकत्वादि**ति । आकाशस्येत्यादिः । नन्वेकत्वेऽपि अविभुत्व-मस्तु इत्यत आह - **सर्वत्रे**ति । सर्वदिगवच्छेदेनेत्यर्थः । **परिच्छिन्नपरि-माणवत्त्वमि**ति । यदि परिच्छिन्नत्वस्य अपकर्षाश्रयत्वात्मकतया पर-मणोरणुतरत्वेन द्व्यणुकपरिमाणापेक्षया परमाणुपरिमाणस्य अप-कृष्टत्वाभावात् परमाणुषु अव्याप्तमिदं लक्षणमित्युच्यते तदाप्याह-**क्रियावत्त्वमि**ति । वस्तुतस्तु लाघवमेवोत्तरकल्पानुसरणे बीजम् इति ध्येयम् ।

### बालप्रिया

ननु घटाकाशः मठाकाश इत्यादिव्यवहारात् आकाशेऽपि भेदोऽस्तीत्यवगम्यते । तथा च भेदे प्रमाणाभावादिति दीपिकोक्तिः न सङ्गच्छते । उक्तव्यवहारस्यैव आकाशस्यानेकत्वे प्रमाणत्वात् इत्याशङ्क्य घटमठादिरूपो य आकाशस्य अवच्छेदकः पदार्थः तद्गतं भेदमाश्रित्य घटाकाशो मठाकाश इत्यादिव्यवहारः, न तु आकाशगतं भेदम् । अतः स न भेदे प्रमाणमिति समाधानं अभिप्रयन् आह - **घटाकाश** इति । **उपाधिकृतत्वेने**ति । घटमठादिरूपावच्छेदकगतभेदनिमित्तकत्वेनेत्यर्थः । **असाधकत्वादि**ति । आकाशभेदासाधकत्वादित्यर्थः । **अणुतरत्वेने**ति । उत्कर्षाश्रयाणुपरिमाणवत्त्वेनेत्यर्थः ।

ननु परिच्छिन्नत्वं नापकर्षाश्रयत्वम् । अपि तु परममहत्परिमाणभिन्नत्वम्, आकाशादिचतुष्टयान्यतमासमवेतत्वं वा । तथा च परममहत्परिमाणान्यपरिमाणवत्त्वं आकाशादिचतुष्टयान्यतमासमवेतपरिमाणवत्त्वं वा मूर्तत्वम्, तच्च परमाणुष्वपि वर्तत इति न तत्राव्याप्तिः । अतो द्वितीयलक्षणानुसरणे नाव्याप्तिर्हेतुरित्याशङ्क्याह - **वस्तुतस्तु** इति ।



### तर्कसङ्ग्रहः

#### कालनिरूपणम्

| अतीतादिव्यवहारहेतुः कालः । स च एकः विभुः नित्यश्च । |
|---|

### दीपिका

कालं लक्षयति - **अतीते**ति । सर्वाधारः कालः सर्वकार्यनिमित्तकारणम् ।

### प्रकाशिका

अतीतादिव्यवहारहेतुः काल इति मूले आदिना अनागतादिपरिग्रहः । अतीतत्वं च वर्तमानध्वंसप्रतियोगित्वम् । वर्नमानत्वम् इह

शब्दप्रयोगाधिकरणकालवृत्तित्वम् । भविष्यत्वं च वर्तमानप्रागभाव-प्रतियोगित्वं । अत्र सर्वत्र कालस्य घटकतया शब्दप्रयोगरूपातीतादि-व्यवहारे हेतुत्वं तस्य इति ध्येयम् । न च तादृशव्यवहारः सूर्यपरिस्प-न्दोपाधिमादाय सम्भवतीति वाच्यम् । अनुगतस्य व्यवहारस्य अनु-गतविषयं विना असम्भवेन अतिरिक्तकालस्वीकारादिति दिक् । **सर्वा-धार** इति । कालिकसम्बन्धेनेत्यादिः । अत्र विभिन्नकालिकयोः आधा-राधेयभावविरहात् क्रियादेः सर्वाधारत्वशङ्कैव नावतरतीति भावः ।

**बालप्रिया**

ननु घटः अतीतः वर्तमानः भविष्यन् इत्यादिशब्दप्रयोगः काल-स्य यः उपाधिः अवच्छेदकः सूर्यपरिस्पन्दः तद्धेतुकः । तथा च अतीत इत्यस्य शब्दप्रयोगाधिकरणसूर्यपरिस्पन्दवृत्तिध्वंसप्रतियोगीत्यर्थः । वर्तमान इत्यस्य शब्दप्रयोगाधिकरणसूर्यपरिस्पन्दवृत्तिरित्यर्थः । भवि-ष्यन्नित्यस्य शब्दप्रयोगाधिकरणसूर्यपरिस्पन्दवृत्तिप्रागभावप्रतियो-गीत्यर्थः । तथा च न कालः सिध्यति इत्याशङ्कते - **न च तादृशव्य-वहार** इति । समाधत्ते - **अनुगतस्ये**ति । एकरूपः अतीतः इत्यादिः व्यवहारः एकरूपं विषयं विना न सम्भवति इति एकः कालः स्वी-करणीयः । सूर्यपरिस्पन्दस्तु अनेकः । अतः कालघटनयैव अतीतत्वा-दिकं निर्वाच्यं इति भावः ।

अपि च सूर्यपरिस्पन्दः अतीतादिविषयेषु साक्षात्सम्बन्धेन नास्ति । अतः [1]स्वाश्रयतपनसंयोगिसंयोगादिरूपपरम्परासम्बन्धेनैव सूर्यपरिस्पन्दवृत्तित्वं घटादेर्वक्तव्यम् । तदपेक्षया लाघवात् साक्षात्स-म्बन्धशालिकालस्वीकरणमेवोचितमित्याशयेनाह - **दिगि**ति । विषय-तासम्बन्धेन सर्वाधारत्वं ज्ञानस्याप्यस्ति इत्याशङ्क्य कालिकसम्बन्धे-नेत्यादिरिति कथितम् । सर्वपदार्थनिष्ठकालिकसम्बन्धावच्छिन्नाधेय-तानिरूपिताधिकरणत्वं सर्वाधारत्वमत्र विवक्षितमिति भावः ।

---

1. **स्वाश्रयेति । स्वं सूर्यपरिस्पन्दः तदाश्रयः सूर्यः तत्संयोगी कालः तत्संयोगः घटस्य ।**

ननु क्रियामात्रं कालोपाधिरिति सिद्धान्तात् क्रियायाः कालिकसम्बन्धेन सर्वाधारत्वसत्त्वात् तत्रातिव्याप्तिरित्यत आह - **अत्र विभिन्नकालिकयोरिति** । क्रियायाः तत्समकालवर्तिसकलपदार्थाधारत्वेऽपि तदसमकालवर्तिपदार्थाधारत्वं न संभवति, भिन्नकालिकयोराधाराधेयभावविरहात् । सर्वाधारत्वमित्यत्र सर्वपदं तु सकलकालवर्तिसर्वपदार्थपरम् , अतो न क्रियायामतिव्याप्तिरिति भावः ।



## तर्कसङ्ग्रहः

### दिङ्निरूपणम्

प्राच्यादिव्यवहारहेतुः दिक् । सा च एका विभ्वी नित्या च ।

### दीपिका

दिशो लक्षणमाह - **प्राचीति** । दिगपि कार्यमात्रनिमित्तकारणम् ।

### प्रकाशिका

प्राच्यादिव्यवहारहेतुः इति मूले आदिना प्रतीच्यादिपरिग्रहः । उदयाचलसन्निहितमूर्तावच्छिन्ना दिक् प्राची । अस्ताचलसन्निहितमूर्तावच्छिन्ना दिक् प्रतीची । मेरुसन्निहितमूर्तावच्छिन्ना दिक् उदीची । तद्व्यवहितमूर्तावच्छिन्ना तु दक्षिणा ।



## तर्कसङ्ग्रहः

### आत्मनिरूपणम्

ज्ञानाधिकरणम् आत्मा । सः द्विविधः जीवात्मा परमात्मा चेति ।

### ईश्वरसाधनम्

तत्रेश्वरः सर्वज्ञः परमात्मा एक एव ।

### जीवात्मनिरूपणम्

जीवस्तु प्रतिशरीरं भिन्नः । विभुः नित्यश्च ।

## दीपिका

आत्मनो लक्षणमाह - **ज्ञानेति** । आत्मानं विभजते - **स द्विविध** इति ।

परमात्मनो लक्षणमाह - **तत्रेति** । नित्यज्ञानाधिकरणत्वम् ईश्वरत्वम् । ननु ईश्वरसद्भावे किं प्रमाणम् ? न तावत् प्रत्यक्षम् । तद्धि बाह्यं आन्तरं वा । नाद्यः, अरूपिद्रव्यत्वात् । न द्वितीयः, आत्मसुखदुःखादिव्यतिरिक्तत्वात् । नाप्यनुमानम्, लिङ्गाभावात् । नाप्यागमः, तथाविधागमाभावात् इति चेत् - न । 'अङ्कुरादिकं सकर्तृकं कार्यत्वात्, घटवत्' इत्यनुमानस्यैव प्रमाणत्वात् । उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वं कर्तृत्वम् । उपादानं समवायिकारणम् । सकलपरमाण्वादिसूक्ष्मदर्शित्वात् सर्वज्ञत्वम् । 'यः सर्वज्ञः सर्ववित्' इत्याद्यागमोऽपि तत्र प्रमाणम् ।

जीवस्य लक्षणमाह - **जीव** इति । सुखाद्याश्रयत्वं जीवलक्षणम् । ननु 'मनुष्योऽहम्', 'ब्राह्मणोऽहम्' इत्यादौ सर्वत्र अहंप्रत्यये शरीरस्यैव विषयत्वात् शरीरमेव आत्मा इति चेत् - न । शरीरस्य आत्मत्वे करपादादिनाशे शरीरनाशात् आत्मनोऽपि नाशप्रसङ्गात् । नापि इन्द्रियाणाँ आत्मत्वम् 'योऽहं घटं अद्राक्षम् सोऽहं इदानीं स्पृशामि' इत्यनुसन्धानाभावप्रसङ्गात् । अन्यानुभूतेऽर्थे अन्यस्यानुसन्धानायोगात् । तस्मात् देहेन्द्रियव्यतिरिक्तः जीवः सुखदुःखादिवैचित्र्यात् प्रतिशरीरं भिन्नः । स च न परमाणुः । सर्वशरीरव्यापिसुखाद्यनुपलब्धिप्रसङ्गात् । न मध्यमपरिमाणवान् । तथा सति अनित्यत्वप्रसङ्गेन कृतहान - अकृताभ्यागमप्रसङ्गात् । तस्मात् नित्यः विभुः जीवः ।

## प्रकाशिका

**मूले ज्ञानाधिकरणमिति** । समवायेन ज्ञानवदित्यर्थः । **तत्र** - तयोर्मध्ये । **दीपिकायाम् नित्यज्ञानाधिकरणत्वमिति** । न च '(नित्यं) विज्ञानं आनन्दं ब्रह्म' इति श्रुत्या विरोध इति वाच्यम् । आनन्दपदस्य आन-

न्दवदर्थकताया इव विज्ञानपदस्यापि विज्ञानवदर्थकतास्वीकारेण अवि-रोधात् । न च आनन्दपदस्यैव तादृशार्थकत्वमसिद्धमिति वाच्यम् । अर्शआद्यजन्तत्वाङ्गीकारेण तादृशार्थसिद्धेः । अन्यथा नपुंसकत्वानुप-पत्तेः । अत्र आनन्दः 'भारापगमे सुखी संवृत्तोऽहम्' इतिवत् दुःखाभावे उपचर्यते । नवीनास्तु नित्यसुखमीश्वरस्याङ्गीकुर्वन्ति इत्यलमधिक-जल्पनेन । **अरूपिद्रव्यत्वादि**ति । बाह्यप्रत्यक्षं प्रति उद्भूतरूपस्य हेतु-त्वादिति भावः । **आत्मसुखदुःखादी**ति । विजातीयात्ममनस्संयोगस्य मानसप्रत्यक्षहेतोः ईश्वरेऽभावादिति भावः । **प्रमाणत्वादि**ति । न चेदं अप्रयोजकमिति शङ्क्यम् । कार्यत्वावच्छिन्नं प्रति कृतित्वावच्छिन्नस्य हेतुत्वेन अप्रयोजकत्वाभावादिति दिक् । **उपादाने**ति । यद्यपि कर्तृत्वं कृतिमत्त्वमेव संभवति तथापि अपरोक्षज्ञानादेः चिकीर्षादिकं प्रति कारणत्वप्रदर्शनाय तथोक्तिरिति ध्येयम् । **सर्वविदि**ति । विदधात्वर्थो विशेषरूपेण ज्ञानम् ।

**लक्षणमाहे**ति । स्वरूपमाहेत्यर्थः । **मूले प्रतिशरीरं भिन्न** इति । न चावयवोपचयाभ्यां तत्तच्चैत्रादिशरीराणां विभिन्नत्वेऽपि जीवभेदा-भावात् इदमसङ्गतम् । एवं कायव्यूहस्थलेऽपीति वाच्यम् । समान-कालिकयोगजधर्माजन्यशरीरभेदेन जीवभेदस्यैव विवक्षिततया अदो-षात् । एवं च एतच्छरीरावच्छिन्नभोगवान् समानकालिकयोगजधर्मा-जन्यतच्छरीरावच्छिन्नभोगवद्भिन्न इति रीत्या प्रतिशरीरं जीवभेदः साध्य इत्यलम् ।

**शरीरस्यैवे**ति । अन्यथा मनुष्यत्वादीनां शरीरधर्मत्वेन तथा प्रत्ययस्यैव असङ्गतिरित्यभिमानः । **नाशप्रसङ्गादि**ति । समवायिकारण-नाशस्य द्रव्यनाशकत्वादिति भावः । **योऽहमि**ति । भूतकालिकदर्शनवति वर्तमानकालिकस्पार्शनवत्त्वं प्रत्याय्यते तच्च भवतां मते न सम्भवति चाक्षुषस्पार्शनवतोर्भेदादिति भावः । **अनुसन्धानायोगादि**ति । अन्यथा चैत्रेणानुभूतस्य वस्तुनः मैत्रेण स्मरणापत्तेरिति भावः ।

ननु सर्वशरीरावच्छेदेन आत्मनि सुखादिसाक्षात्कारोपपत्तये सर्वशरीरव्यापित्वं आत्मनोऽस्तु । तथापि विभुत्वाङ्गीकारे प्रयोजनाभाव इत्यत आह - **न मध्यमेति** । **अनित्यत्वप्रसङ्गेनेति** । यन्मध्यमपरिमाणं तदनित्यम् इति व्याप्तेरिति भावः । **कृतेति** । कृतस्य यागादिना सम्पादितस्य धर्मादेर्हानं नाशः, अकृतस्याभ्यागमः प्राप्तिः तत्प्रसङ्गादित्यर्थः । कर्तुः आत्मन उत्तरजन्मनि असत्त्वात् , अकर्तुश्च सत्त्वादिति भावः ।

ननु जीवस्य अणुत्वमेव आस्ताम् , तावता नोक्तदोषः । सूक्ष्मदीपस्य सर्वगृहावच्छेदेनेव अणुरूपस्यापि जीवस्य प्रभाप्रसरणाङ्गीकारात् इति चेत् - न । तथा सति कायव्यूहस्थले सुखादिसाक्षात्कारानुपपत्तेरिति दिक् ।

## बालप्रिया

**समवायेन ज्ञानवदिति** । कालिकसम्बन्धेन ज्ञानवति कालेऽतिव्याप्तिवारणाय समवायेनेति । सम्बन्धविशेषावच्छिन्नाधारतासूचनायैव अधिकरणपदम् । अन्यथा ज्ञानवान् आत्मा इत्येव वदेत् इति भावः । **दीपिकायाम् - बाह्यम्** - बहिरिन्द्रियजन्यम् । **आन्तरम्** - मनोजन्यम् । **अरूपिद्रव्यत्वादिति** । रूपवतो द्रव्यस्यैव बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वादिति भावः । **आत्मसुखदुःखादिव्यतिरिक्तत्वादिति** । यस्य जीवात्मनः स्वीयमनसा संयोगोऽस्ति स तस्यैव जीवात्मनः तत्समवेतसुखादेर्वा मानसप्रत्यक्षं जनयेत् । तज्जीवात्मतदीयसुखादिव्यतिरिक्तं तदीयमनस्संयोगजन्यप्रत्यक्षविषयो न भवति । अतः ईश्वरः जीवात्मतत्सुखातिरिक्तः तदीयमानसप्रत्यक्षविषयो न भवतीत्याशयः । **लिङ्गाभावादिति** । ईश्वरव्याप्यस्य लिङ्गस्याभावादीश्वरे नानुमानं प्रमाणमिति भावः ।

ननु '(नित्यं) विज्ञानमानन्दं ब्रह्म' इति श्रुत्या आत्मनः ज्ञानस्वरूपत्वमात्रावगमात् ज्ञानाधिकरणत्वं न सम्भवतीति शङ्कते - **न च**

**नित्यमि**ति। समाधत्ते - **आनन्दपदस्ये**ति। आनन्दार्थकस्य आनन्दशब्दस्य नित्यपुंल्लिङ्गत्वात् आनन्दमिति नपुंसकत्वानुपपत्तेः आनन्दोऽस्यास्तीत्यर्थे आनन्दशब्दात् 'अर्शआदिभ्योऽच्' इत्यच्प्रत्यये नपुंसक आनन्दशब्दः सम्पद्यते। तथा च आनन्दमित्यस्य आनन्दवदित्यर्थ एव वक्तव्यः। तत्समभिव्याहृतः विज्ञानशब्दः विज्ञानवदर्थक एव युक्तः। तथा च ज्ञानाधिकरणत्वमेव तया श्रुत्या ईश्वरस्य बोध्यत इति भावः। **उपचर्यते** - लक्षणया प्रयुज्यते।

**विजातीयात्ममनस्संयोगस्ये**ति। परात्मव्यावृत्तस्य स्वात्ममात्रावृत्तेः मनस्संयोगस्येत्यर्थ. ।[**न चेदमप्रयोजकमि**ति। कार्यत्वमस्तु कर्तृजन्यत्वं मास्तु इति शङ्कायाः निवर्तकस्तर्को नास्तीति भावः]। **न चेदमप्रयोजकमि**ति। कार्यत्वरूपहेतुरस्तु सकर्तृकत्वरूपसाध्यं मास्तु इति शङ्काया निवारको यस्तर्कः तच्छून्यमित्यर्थः। **कार्यत्वावच्छिन्नं प्रती**ति। ननु सकर्तृकत्वं हि कर्तृजन्यत्वम्। पक्षे तदभावोऽस्तु इति शङ्कायां यदि कर्तृजन्यत्वं न स्यात् तर्हि कार्यत्वमपि न स्यात्, कार्यसामान्यं प्रति कर्तुः कारणत्वादित्येवं कार्यत्वावच्छिन्नं प्रति कर्ता कारणमिति कार्यकारणभावाख्योऽनुकूलतर्क एव वक्तव्यः न तु कार्यत्वावच्छिन्नस्य कृतित्वावच्छिन्नं कारणं इत्येतादृश इति कथमेतदिति चेत् - न। साध्यं सकर्तृकत्वं न कर्तृजन्यत्वरूपम्। तथा सति कर्तृत्वस्यैव जनकतावच्छेदकत्वं स्यात्। कर्तृत्वं च कृतिमत्त्वरूपं कृत्यात्मकमिति अनन्तानां कृतीनां कारणतावच्छेदकत्वे गौरवं स्यात्। अतः कृतिजन्यत्वमेव सकर्तृकत्वम्। कृतित्वमेव जनकतावच्छेदकम्। कृतित्वं तु जातिरूपतया एकमित्याशयेन कार्यत्वावच्छिन्ने कृतित्वावच्छिन्नं कारणम् इत्येतादृशकार्यकारणभावाख्यतर्काभिधानात्।

ननु घटत्वावच्छिन्नं प्रति कुलालकृतित्वावच्छिन्ना हेतुः इति विशिष्यैव कार्यकारणभावादेतादृशसामान्यकार्यकारणभावे प्रमाणाभाव इत्यत्राह - **दिगि**ति। घटत्वपटत्वादिभेदेनानन्तकार्यकारणभावकल्पनापेक्षया कार्यत्वावच्छिन्नं प्रति कृतित्वेन एकहेतुहेतुमद्भावकल्प-

नमेत्र उचितमिति भावः । **दीपिकायाम् उपादानगोचरेति** । उपादानं समवायिकारणं कपालादि तद्विषयकं यत् अपरोक्षज्ञानं, एवं समवायिकारणविषयिणी या चिकीर्षा कपालेन घटं कुर्याम् इत्याकारिका इच्छा, एवं समवायिकारणविषयिणी या कृतिः तद्वत्त्वं कर्तृत्वमित्यर्थः । उपादानगोचरेत्यस्य त्रिष्वप्यन्वयात् । **यद्यपीत्या**दि । 'जानाति', 'इच्छति', 'यतते', 'करोति' इति क्रमात् कार्यसामान्यं प्रति यत्नः कारणम्, यत्ने चिकीर्षा कारणम्, चिकीर्षां प्रति ज्ञानं कारणमिति ज्ञापनाय **दीपिकायां** त्रितयमुक्तम् । साध्यं तु कृतिजन्यत्वमेवेति भावः । ननु 'यः सर्वज्ञः सर्ववित्' इति श्रुतौ सर्वज्ञशब्दसमानार्थकत्वात् सर्ववित्पदस्य पुनरुक्तिरित्याशङ्क्याह - **विदधात्वर्थ** इति । तथा च सर्वज्ञशब्देन सामान्यतः प्रमेयत्वादिना सर्वविषयकज्ञानमुच्यते । सर्ववित्पदेन घटत्वपटत्वादिना विशेषरूपेण सर्वविषयकज्ञानमुच्यते । अतो न पुनरुक्तिरिति भावः।

ननु जीवस्तु 'प्रतिशरीरं भिन्न' इति मूले जीवस्य प्रतिशरीरं भेद एवोच्यते न लक्षणम् । तथा च तस्य मूलस्य 'जीवस्य लक्षणमाह' इत्यवतरणं न युक्तम् इत्यत आह - **स्वरूपमाहेत्यर्थ** इति । शङ्कते - **न चेति** । चैत्रशरीरस्य अवयवोपचयाभ्यां भेदस्यावश्यकतया चैत्रीयबालशरीरापेक्षया तदीययुवशरीरवृद्धशरीरादीनां भेदो वक्तव्यः । तथा च बालयुवादिशरीरभेदे सत्यपि तदवच्छिन्न आत्मा एक एव । एवं सौभरिप्रभृतीनां आत्मन एकत्वेऽपि शरीरसमूहाङ्गीकारात् प्रतिशरीरं जीवभेदाभावात् प्रतिशरीरं जीवो भिन्न इति कथं सङ्गच्छत इति शङ्काग्रन्थस्यार्थः । **कायव्यूहस्थल** इति । एकेन जीवेन अनेकशरीराधिष्ठानस्थल इत्यर्थः ।

समाधत्ते - **समानकालिकेति** । समानकालिकानां योगजधर्माजन्यानां शरीराणां भेदो यत्र तत्र जीवभेद इत्येव मूले विवक्षितम् । चैत्रीयबालयुवादिशरीराणां समानकालिकत्वाभावात् सौभरिप्रभृतिभिः एककाले अधिष्ठितानां शरीराणां योगजधर्मजन्यत्वेन तदजन्यत्वा-

भावात् तादृशशरीराणां भेदः नात्मभेदव्याप्यतया मूलाभिप्रेत इति नानुपपत्तिः । तथा च समानकालिकयोगजधर्माजन्यशरीरभेदव्यापक-भेदप्रतियोगी जीव इति 'जीवस्तु प्रतिशरीरं भिन्नः' इति मूलार्थः । तादृशः शरीरभेदः चैत्रमैत्रादिशरीरेषु तत्रात्मभेदोऽस्तीति भावः ।

**एवं चेत्यादि** । अवच्छेद्यतासम्बन्धेन तच्छरीरभिन्नशरीरवत्त्वा-दिति हेतुः पूरणीयः । **अन्यथेत्यादि** । 'अहं मनुष्य'इत्यादिप्रतीत्यां अहमर्थे आत्मनि मनुष्यत्वादिधर्माः प्रकारतया भासन्ते । शरीर एव मनुष्य-त्वादयः भवन्ति । तस्मात् अहमर्थात्मविशेष्यकमनुष्यत्वादिदेहधर्म-प्रकारकप्रतीतिरियं शरीरमेवात्मा इत्यवगमयति । यदि तु शरीराति-रिक्तः आत्मा तर्हि मनुष्यत्वादिरहिते आत्मनि मनुष्यत्वादिप्रकारिका इयं प्रतीतिः भ्रमरूपा स्यात् न प्रमात्मिकेति भावः । **अन्यथा** - शरीरातिरिक्तस्यात्मनः अहमर्थत्वे। **प्रत्ययस्यैवासङ्गतिरि**ति। तथा प्रतीतेः प्रमात्वानुपपत्तिरित्यर्थः । मनुष्यशब्दस्य मनुष्यशरीरावच्छिन्न इत्य-र्थात् 'अहं मनुष्य' इति प्रतीतिः अहमर्थे मनुष्यशरीरावच्छिन्नत्वमव-गाहते । अतः शरीरात्मत्वसाधिका इयं प्रतीतिर्न भवतीति सिद्धान्तं मनसिकृत्य '**इत्यभिमान**' इत्युक्तम् ।

**भूतकालिके**ति । 'योऽहमद्राक्षं सोऽहमिदानीं स्पृशामि' इति प्रतीत्या भूतकालिकचाक्षुषप्रत्यक्षाश्रयवर्तमानकालिकस्पार्शनप्रत्यक्षा-श्रययोरैक्यमवगम्यते । इन्द्रियात्मवादे चाक्षुषप्रत्यक्षाश्रयः चक्षुः स्पार्शनप्रत्यक्षाश्रयः त्वक् इति तयोर्भेदात् तयोरैक्यावगाहिनी प्रत्यभिज्ञाप्रतीतिर्न घटत इति भावः । **दीपिकायाम् अन्यानुभूत** इति । ननु चक्षुस्त्वचोर्भेदात् तयोरभेदावगाही प्रत्यभिज्ञाप्रत्ययो नोपपद्यत इत्येव वक्तव्यम् । न त्वेवमिति कथमेष ग्रन्थो योजनीय इति चेत् - श्रूयताम् । उक्तप्रत्यभिज्ञा यथा वा चाक्षुषस्पार्शनप्रत्यक्षाश्रययोरैक्य-मवगाहते तथा चाक्षुषप्रत्यक्षविषयस्यैव स्पार्शनप्रत्यक्षविषयत्वमप्य-वगाहते । तत्र चक्षुःकर्तृकचाक्षुषप्रत्यक्षविषयस्य घटस्य त्वक्कर्तृकस्मरण-विषयत्वासम्भवात् तत्स्मरणपूर्वकं तत्र स्पार्शनप्रत्यक्षविषयत्वावगाहिनी

त्वक्कर्तृकप्रत्यभिज्ञा न स्यात् । अत इन्द्रियातिरिक्तः चाक्षुषस्पार्शन-प्रत्यक्षयोराश्रयः एकोऽङ्गीकार्यः । स च स्वात्मनः अभेदं स्वानुभूत-मर्थं च अनुसन्धातुमर्हतीत्याशयेन **दीपिकायाः** प्रवृत्तेरिति । **प्रकाशिकायां हानं नाश** इति । कृतस्य कर्मणो नाशो नाम निष्फलत्वम् । कर्मकर्तुः फलानुभवं विनैव नाशात् । अकृतस्य कर्मणः - कर्मण्यकृतेऽपि अभ्यागमः - फलप्राप्तिः । फलानुभविता कर्मकर्तुरन्य एवेति तस्य कर्मानुष्ठानं विनैव तत्फलप्राप्तिरिति भावः । तदाह - **कर्तुःआत्मन** इति । **प्रभाप्रसरणाङ्गीकारादि**ति । ज्ञानरूपप्रभायाः सर्वशरीरव्याप्त्यङ्गीकारात् इत्यर्थः । **कायव्यूहस्थले** इति । एकेन जीवेन युगपदधिष्ठितानेक शरीर-स्थले यस्मिन् शरीरेऽणुर्जीवः वर्तते तच्छरीरे जीवप्रभायाः ज्ञानस्य प्रसरेऽपि शरीरान्तरेषु तत्प्रसराभावात् तदवच्छेद्यसुखाद्यनुसन्धान-मात्मनो न स्यादिति भावः ।

ननु कायव्यूहस्थलेऽपि यावन्ति शरीराणि जीवेनाधिष्ठितानि तावत्सु तत्प्रभाप्रसरोऽङ्गीक्रियते। अतो नोक्तानुपपत्ति रित्याशङ्क्याह - **दिगि**ति । यथा एकगृहान्तरारोपितदीपस्य प्रभा गृहान्तरे न प्रसरति, तथा एकशरीरान्तःस्थजीवस्य प्रभा शरीरान्तरे न प्रसरेदिति भावः ।



## तर्कसङ्ग्रहः

### मनोनिरूपणम्

सुखाद्युपलब्धिसाधनम् इन्द्रियं मनः । तच्च प्रत्यात्मनियत-त्वात् अनन्तं परमाणुरूपं नित्यं च ।

## दीपिका

मनसो लक्षणमाह - **सुखे**ति । स्पर्शरहितत्वे सति क्रियावत्त्वं मनसो लक्षणम् । तद्विभजते - **तच्चे**ति । एकैकस्यात्मन एकैकं मन आवश्यकम् इत्यात्मनां अनेकत्वात् मनसोऽप्यनेकत्वमित्यर्थः । **परमाणुरूपमि**ति । मध्यमपरिमाणवत्त्वे अनित्यत्वप्रसङ्गादित्यर्थः ।

ननु 'मनो विभु स्पर्शरहितत्वे सति द्रव्यत्वात्, आकाशादिवत्' इति चेत् - न । मनसो विभुत्वे आत्ममनस्संयोगस्य असमवायिकारणस्य अभावात् ज्ञानानुत्पत्तिप्रसङ्गः । न च विभुद्वयसंयोगः अस्त्विति वाच्यम् । तत्संयोगस्य नित्यत्वेन सुषुप्त्यभावप्रसङ्गात्, पुरीतद्व्यतिरिक्तस्थले आत्ममनस्संयोगस्य सर्वदा विद्यमानत्वात् । अणुत्वे तु यदा मनः पुरीतति प्रविशति तदा सुषुप्तिः, यदा निस्सरति तदा ज्ञानोत्पत्तिरित्यणुत्वसिद्धिः ।

### प्रकाशिका

मनस्संयोगाद्यतिव्याप्तिवारकेन्द्रियत्वघटितमूलोक्तलक्षणापेक्षया लघुलक्षणमाह - **स्पर्शरहितत्वे सती**ति । **एकैकं मन** इति । सर्वात्मनां एकस्य मनसः स्वीकारे एकस्य ज्ञानदशायां अपरस्य तदनुपपत्तिः, तस्याणुत्वेन सकलेन्द्रियैरेकदा संयोगाभावादिति भावः । **विभ्विति** । तथा च तस्य परममहत्परिमाणवत्त्वेन पूर्वोक्तदोषानवकाश इति भावः **अभावादि**ति । विभुद्वयसंयोगानभ्युपगमादिति भावः । **ज्ञानानुत्पत्ती**ति । भावकार्यस्यासमवायिकारणजन्यत्वनियमादिति भावः । **विभुद्वयसंयोगोऽस्त्वि**ति । तस्य नित्यत्वेन असमवायिकारणक्रियाद्यसत्त्वेऽपि न क्षतिरिति भावः ।

### बालप्रिया

**तर्कसङ्ग्रहो**क्तं मनोलक्षणं परित्यज्य **दीपिकायां** अन्यस्य मनोलक्षणस्य कथने बीजमाह - **मनस्संयोगादी**ति । 'सुखादिसाक्षात्कारसाधनत्वं मनसो लक्षणम्' इत्येतावन्मात्रोक्तौ आत्ममनस्संयोगेऽतिव्याप्तिः, तस्यापि सुखादिसाक्षात्कारसाधनत्वात् । तद्वारणाय इन्द्रियत्वं निवेशितम् । इन्द्रियत्वं च 'शब्देतरे'त्यादिरूपमिति तद्घटितं मनोलक्षणं अतिगुरु इति पर्यालोच्य लघुलक्षणं **दीपिकायां** उक्तमिति भावः ।

" साधनमित्यस्य करणमित्यर्थः । एतल्लाभायैव इन्द्रियपदमुपात्तम्, न तु तेन रूपेण प्रवेशः गौरवात्" इति तु नृसिंहशास्त्रिणः

प्राहुः । तेषां पक्षे सम्भवतो लक्षणान्तरस्याकथने न्यूनता स्यादिति तद्वारणायैव **दीपिकायां** लक्षणान्तरकरणम् । उक्तं च तैरेव - "न्यूनतापरिहाराय स्वयं मनोलक्षणमाह" इति । ननु विभुद्वयसंयोगः कथं भवेत् ? संयोगं प्रति क्रियायाः संयोगस्य च हेतुत्वात् । विभुनोश्च क्रियाशून्यत्वात् क्रियाजन्यः संयोगो न सम्भवति। अवयवशून्यत्वात् हस्तपुस्तकसंयोगात् कायपुस्तकसंयोगवत् संयोगजसंयोगोऽपि न संभवतीत्यत्राह - **तस्य नित्यत्वेने**ति । क्रियादीत्यत्र आदिशब्देन संयोगो गृह्यते । तथा च जन्यसंयोगं प्रत्येव क्रियादेः हेतुत्वं न त्वजसंयोगे अजत्वविरोधादिति भावः ।



## तर्कसङ्ग्रहः

### रूपनिरूपणम्

चक्षुर्मात्रग्राह्यो गुणो रूपम् । तच्च शुक्ल - नील-पीत - रक्त - हरित - कपिश - चित्रभेदात् सप्तविधम् । पृथिवीजलतेजोवृत्ति । तत्र पृथिव्यां सप्तविधम् । अभास्वरशुक्लं जले । भास्वरशुक्लं तेजसि ।

## दीपिका

रूपं लक्षयति - **चक्षुरि**ति । सङ्ख्यादावतिव्याप्तिवारणाय मात्रपदम् । रूपत्वे अतिव्याप्तिवारणाय गुणपदम् । रूपं विभजते - **तच्चे**ति ।

ननु अव्याप्यवृत्तिनीलादिसमुदाय एव चित्ररूपम् इति चेत् - न । रूपस्य व्याप्यवृत्तित्वनियमात् । ननु चित्रपटे अवयवरूपस्यैव प्रतीतिरस्त्विति चेत् - न । रूपरहितत्वेन पटस्याप्रत्यक्षत्वप्रसङ्गात् । न च रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम्, गौरवात् । तस्मात् पटस्य प्रत्यक्षत्वानुपपत्त्या चित्ररूपसिद्धिः । रूपस्याश्रयमाह - **पृथिवी**ति । आश्रयं विभज्य दर्शयति - **तत्रे**ति ।

## प्रकाशिका

**मात्रपद**मिति । यद्यपि चक्षुर्मात्रग्राह्यत्वं चक्षुरितराग्राह्यत्वे सति चक्षुर्ग्राह्यत्वम्, तच्च न रूपे संभवति; तथापि त्वगिन्द्रियाग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं तदिति ध्येयम् । **गुणपद**मिति । न चैवमपि प्रभाभित्तिसंयोगेऽतिव्याप्तिरिति वाच्यम्, त्वगग्राह्यचक्षुर्ग्राह्यगुणविभाजकधर्मवत्त्वे पर्यवसानेन अदोषात् । अत एव परमाणुरूपादौ नाव्याप्तिरिति बोध्यम् । **समुदाय एवे**ति । एवकारेणातिरिक्तचित्ररूपव्यवच्छेदः । **व्याप्यवृत्तित्वे**ति । दैशिकव्याप्यवृत्तित्वेत्यर्थः ।

इदमुपलक्षणम् - एकैकचित्ररूपस्थले अनेकरूपाणां एकैकतत्तत्प्रागभावादिस्थले च अनेकप्रागभावादीनां कल्पनेन अनेकरूपेषु चित्रः इत्याकारकप्रतीतिविषयत्वकल्पनेन च गौरवमिति । **रूपरहितत्वेने**ति । समवायेनेत्यादिः । **प्रसङ्गा**दिति । द्रव्यचाक्षुषं प्रति समवायेन रूपस्य कारणत्वादिति भावः । **रूपवत्समवेतत्व**मिति । स्वाश्रयसमवेतत्वसम्बन्धेन रूपम् । **प्रत्यक्षत्वप्रयोजक**मिति । प्रत्यक्षविषयत्वप्रयोजकमस्तु इत्यर्थः । **गौरवा**दिति । साक्षात्सम्बन्धेन कारणत्वापेक्षया गौरवादित्यर्थः । चित्रावयवकावयवकपालैः आरब्धपटस्य चाक्षुषत्वानुरोधेन स्वसमवायिसमवेतसमवेतसमवेतत्वसम्बन्धेन रूपस्य तत्प्रयोजकत्वमङ्गीकर्तव्यम् । एवं च त्रुटेः चाक्षुषत्वानुपपत्तिरपि द्रष्टव्या । **प्रत्यक्षत्वानुपपत्त्ये**ति । एतेन चित्ररूपवत् चित्ररसोऽपि सिध्येदिति शङ्का निरस्ता । द्रव्यलौकिकरासनस्य अप्रसिद्ध्या तदनुपपत्त्यभावेन न चित्ररसाङ्गीकार इति सङ्क्षेपः ।

## बालप्रिया

ननु चक्षुर्मात्रग्राह्यत्वं रूपे असम्भवि । चक्षुरितराग्राह्यत्वे सति चक्षुर्ग्राह्यत्वं हि चक्षुर्मात्रग्राह्यत्वम् । ज्ञानसामान्ये मनसः कारणत्वात् चक्षुरितरमनोजन्यप्रत्यक्षविषयत्वस्यैव रूपे सत्त्वेन चक्षुरितराग्राह्यत्वस्य रूपे अभावादिति शङ्कते - **यद्यपी**ति । चक्षुरितराग्राह्यत्वं

चक्षुरितरजन्यप्रत्यक्षाविषयत्वम् । चक्षुर्ग्राह्यत्वं चक्षुरिन्द्रियजन्यप्रत्यक्ष-विषयत्वम् । समाधत्ते - **तथापीति** । चक्षुरितरपदेन त्वगिन्द्रियं विवक्षितम् । तथा च त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वे सति चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वं चक्षुर्मात्रग्राह्यत्वम् । अस्ति चेदं रूपे इति नासम्भव इति भावः । सत्यन्तानुपादाने एकत्वादिसङ्ख्यायामतिव्याप्तिः, तस्या अपि चक्षुरिन्द्रियजन्यप्रत्यक्षविषयत्वात् । तदुपादाने तु सङ्ख्यायाः त्वगिन्द्रियेणापि ग्राह्यतया त्वगिन्द्रियजन्यप्रत्यक्षाविषयत्वं नास्तीति नातिव्याप्तिः । अतीन्द्रिये धर्मादावतिव्याप्तिवारणाय विशेष्यम् । **न चैवमपीति** । प्रभाभित्तिसंयोगस्य त्वगिन्द्रियाग्राह्यत्वात् चक्षुर्ग्राह्यत्वाच्चेति भावः । **त्वगग्राह्येति** । त्वगिन्द्रियजन्यप्रत्यक्षाविषयः चक्षुरिन्द्रियजन्यप्रत्यक्षविषयश्च यः गुणविभाजकधर्मः तद्वत्त्वं रूपस्य लक्षणम् । गुणविभाजकधर्मः रूपत्वजातिः । सा च त्वगग्राह्या चक्षुर्ग्राह्या च, यो गुणः यदिन्द्रियग्राह्यः तन्निष्ठा जातिः तदभावश्च तदिन्द्रियग्राह्यौ इति न्यायात् । रूपत्ववत्त्वं च रूपे अस्तीति लक्षणसमन्वयः । प्रभाभित्तिसंयोगे विद्यमानः गुणविभाजकधर्मः संयोगत्वम् । स च न त्वगग्राह्यो भवति घटपटसंयोगादौ संयोगत्वस्य त्वगिन्द्रियेण ग्रहणात् इति प्रभाभित्तिसंयोगे नातिव्याप्तिरिति भावः । एतादृशजातिघटितलक्षणकरणे प्रभाभित्तिसंयोगे अतिव्याप्तिवारणवत् परमाणुरूपेऽव्याप्तिवारणमपि प्रयोजनमित्याह - **अत एवेति** । परमाणुगतरूपस्य अतीन्द्रियतया तत्र चक्षुर्ग्राह्यत्वाभावात् यथाश्रुतलक्षणे अव्याप्तिः । यथोक्तजातिघटितलक्षणे तु परमाणुरूपे विद्यमानः गुणविभाजकधर्मः रूपत्वम् । स तु घटरूपे चक्षुर्ग्राह्य एव । तथा च चक्षुर्ग्राह्यरूपत्ववत्तया परमाणुरूपे लक्षणसमन्वयात् नाव्याप्तिरिति भावः । ननु उत्पत्तिक्षणे घटादौ रूपाभावेन रूपस्य कालिकाव्याप्यवृत्तितया 'रूपस्य व्याप्यवृत्तित्वनियमात्' इत्यसङ्गतमित्यत आह - **दैशिकव्याप्यवृत्तित्वेति** ।

ननु स्वाश्रयसमवेतत्वसम्बन्धेन पटे तन्तुगतरूपाणां सत्त्वात् रूपरहितत्वेन इत्यसङ्गतम् इत्यत आह - **समवायेनेत्यादिरिति** । विषय-

तासम्बन्धेन प्रत्यक्षं प्रति समवायसम्बन्धेन रूपस्य कारणत्वात् पटे समवायेन रूपं नास्ति चेत् पटस्य प्रत्यक्षविषयत्वं न स्यादिति भावः। ननु प्रत्यक्षत्वं प्रत्यक्षज्ञानवृत्ति। प्रत्यक्षज्ञाने च रूपवत्समवेतत्वाभावात्'रूपवत्समवेतत्वं प्रत्यक्षत्वप्रयोजकम्' इति ग्रन्थः असङ्गत इत्याशङ्क्याह - **प्रत्यक्षविषयत्वप्रयोजकमि**ति। प्रत्यक्षत्वपदमत्र प्रत्यक्षविषयत्वार्थकमिति भावः। विषयतासम्बन्धेन द्रव्यप्रत्यक्षं प्रति स्वाश्रयसमवेतत्वसम्बन्धेन रूपं कारणम्। पटे समवायेन रूपाभावेऽपि [1]स्वाश्रयसमवेतत्वसम्बन्धेन तन्तुरूपं तत्र वर्तते। अतः तस्य प्रत्यक्षविषयत्वं भवति। तस्मात् चित्ररूपं मास्तु इत्याशयः। **स्वसमवायिसमवेतसमेवतसमवेतत्वसम्बन्धेने**ति। स्वं चित्ररूपम् स्वसमवायिनः ये अवयवाः कपालावयवावयवाः, तत्र समवेताः कपालावयवाः, तत्समवेतत्वं कपाले तत्समवेतत्वं घटे। **त्रुटेः चाक्षुषत्वानुपपत्ति**रिति। परमाणुगतरूपस्य त्र्यणुके स्वसमवायिपरमाणुसमवेतद्व्यणुकसमवेतत्वसम्बन्धेन सत्त्वेऽपि स्वसमवायिसमवेतसमवेतसमवेतत्वसम्बन्धेन असत्त्वात्, परमाणोरवयवे सत्येव तद्रूपस्य उक्तसम्बन्धेन त्र्यणुके सम्भवात्। तथा चोक्तसम्बन्धेन त्र्यणुके रूपाभावेन त्र्यणुकस्य चाक्षुषप्रत्यक्षविषयत्वं न स्यादिति भावः। ननु चित्रो रस इति प्रतीत्या अतिरिक्तचित्ररससिद्धिरित्यत आह - **सङ्क्षेप** इति। तादृशप्रतीतेः अवयवगतनानारसैरुपपत्तेः अतिरिक्तचित्ररसतत्प्रागभावध्वंसादिकल्पने गौरवादिति भावः।



## तर्कसङ्ग्रहः

### रसनिरूपणम्

रसनग्राह्यो गुणो रसः। स च मधुर - अम्ल - लवण - कटु - कषाय - तिक्तभेदात् षड्विधः। पृथिवीजलवृत्तिः। तत्र पृथिव्यां षड्विधः। जले मधुर एव।

---

1. स्वाश्रयेति। स्वं तन्तुरूपं तस्याश्रयः तन्तुः तत्समवेतत्वं पटस्य।

### दीपिका

रसं लक्षयति - **रसनेति** । रसत्वेऽतिव्याप्तिवारणाय गुणपदम् । रसस्याश्रयमाह - **पृथिवीति** । आश्रयं विभज्य दर्शयति - **तत्रेति** ।

### प्रकाशिका

**रसत्व** इति । रसनग्राह्यगुणविभाजकोपाधिमत्त्वे तात्पर्यम् । एवं गन्धलक्षणेऽपि ।

### बालप्रिया

ननु रसनाग्राह्यत्वे सति गुणत्वं रसस्य लक्षणम् इत्युक्तावपि परमाणुरसे अव्याप्तिः, तस्य रसनेन्द्रियजन्यप्रत्यक्षविषयत्वाभावात् इत्याशङ्क्याह - **रसनग्राह्येति** । रसनेन्द्रियजन्यप्रत्यक्षविषयो यः गुण-विभाजको धर्मः तद्वत्त्वं रसलक्षणम् । फलादिरसे रसत्वजातिः 'यो गुणः' इत्यादिन्यायेन रसनेन्द्रियजन्यप्रत्यक्षविषयो भवति तादृशर-सत्वजातिमत्त्वस्य परमाणुरसेऽपि सत्त्वात् नाव्याप्तिरिति भावः । **एवं गन्धलक्षणेऽपीति** । घ्राणग्राह्यगुणविभाजकोपाधिमत्त्वं गन्धलक्षण-मिति भावः ।



### तर्कसङ्ग्रहः

#### गन्धनिरूपणम्

घ्राणग्राह्यो गुणो गन्धः । स द्विविधः - सुरभिः असुरभिश्चेति। पृथिवीमात्रवृत्तिः ।

### दीपिका

गन्धं लक्षयति - **घ्राणेति** । गन्धत्वे अतिव्याप्तिवारणाय गुणपदम् ।



### तर्कसङ्ग्रहः

#### स्पर्शनिरूपणम्

त्वगिन्द्रियमात्रग्राह्यो गुणः स्पर्शः । सः त्रिविधः - शीत-उष्ण-अनुष्णाशीतभेदात् । पृथिव्यप्तेजोवायुवृत्तिः । तत्र शीतलं जले । उष्णः तेजसि । अनुष्णाशीतः पृथिवीवाय्वोः ।

### दीपिका

स्पर्शं लक्षयति - **त्वगिति**। स्पर्शत्वे अतिव्याप्तिवारणाय गुण-पदम्। संयोगादावतिव्याप्तिवारणाय मात्रपदम्।

### प्रकाशिका

**मात्रपदमिति**। चक्षुरग्राह्यत्वगिन्द्रियग्राह्यगुणविभाजकोपाधि-मत्त्वमिति फलितोऽर्थः।

### बालप्रिया

ननु त्वगिन्द्रियमात्रग्राह्यत्वे सति गुणत्वं स्पर्शस्य लक्षणमित्यु-क्तावपि परमाणुगतस्पर्शेऽव्याप्तिः। तस्यातीन्द्रियतया त्वगिन्द्रियग्राह्य-त्वाभावादित्याशङ्कयाह - **चक्षुरग्राह्येति**। चक्षुरिन्द्रियजन्यप्रत्यक्षाविषयः त्वगिन्द्रियजन्यप्रत्यक्षविषयश्च यो गुणविभाजको धर्मः तद्वत्त्वं स्पर्शस्य लक्षणम्। घटादिस्पर्शेषु स्पर्शत्वजातिः चक्षुरग्राह्या त्वग्ग्राह्या च भवति तद्वत्त्वं परमाणुगतस्पर्शेऽप्यस्तीति समन्वयः। त्वगिन्द्रियग्राह्यं सङ्ख्यात्वमादाय सङ्ख्यायां अतिव्याप्तिवारणाय चक्षुरग्राह्येत्युक्तम्। चक्षुरग्राह्यं अतीन्द्रियं धर्मत्वाधर्मत्वादिकमादाय धर्माधर्मादिष्वति-व्याप्तिवारणाय त्वगिन्द्रियग्राह्येत्युक्तम्। स्पर्शनिष्ठतया गृह्यमाणं गुणत्वं चक्षुरग्राह्यं त्वग्ग्राह्यं च भवतीति तद्वत्त्वमादाय सङ्ख्यादौ अतिव्याप्तिवारणाय गुणविभाजकेत्युपाधिविशेषणम्। गुणत्वं तु न गुणविभाजकमिति भावः।



### तर्कसङ्ग्रहः

**पाकप्रक्रियानिरूपणम्**

रूपादिचतुष्टयं पृथिव्यां पाकजं अनित्यम्। अन्यत्र अपाकजं नित्यमनित्यं च। नित्यगतं नित्यम्। अनित्यगतमनित्यम्।

### दीपिका

**पाकजमिति**। पाकः तेजस्संयोगः। तेन पूर्वरूपं नश्यति रूपान्तर-मुत्पद्यत इत्यर्थः। तत्र परमाणुष्वेव पाकः न द्व्यणुकादौ। आमनि-

क्षिप्ते घटे परमाणुषु रूपान्तरोत्पत्तौ श्यामघटनाशे पुनः द्व्यणुकादि-क्रमेण रक्तघटोत्पत्तिः। तत्र परमाणवः समवायिकारणम्। तेजस्संयोगः असमवायिकारणम्। अदृष्टादिकं निमित्तकारणम्। द्व्यणुकादिरूपे कारणरूपं असमवायिकारणमिति पीलुपाकवादिनो वैशेषिकाः। पूर्व-घटस्य नाशं विनैव अवयविनि अवयवेषु च परमाणुपर्यन्तेषु युगपत् रूपान्तरोत्पत्तिः इति पिठरपाकवादिनो नैयायिकाः। अत एव पार्थिव-परमाणुरूपादिकं अनित्यमित्यर्थः। **अन्यत्रेति**। जलादावित्यर्थः। **नित्यगतमिति**। परमाणुगतमित्यर्थः। **अनित्यगतमिति**। द्व्यणुकादि-गतमित्यर्थः। रूपादिचतुष्टयं उद्भूतं प्रत्यक्षम्। अनुद्भूतमप्रत्यक्षम्। उद्भूतत्वं प्रत्यक्षत्वप्रयोजको धर्मः। तदभावः अनुद्भूतत्वम्।

## प्रकाशिका

**परमाणुष्वेव पाक** इति। परमाणुष्वेव पूर्वरूपपरावृत्त्यादिजन-कतेजस्संयोग इत्यर्थः। एवकारव्यवच्छेद्यं स्पष्टयति - **न द्व्यणुकादा-विति। आमनिक्षिप्ते घट इति**। घटे आमनिक्षिप्ते सति श्यामघटनाशे परमाणुषु रूपान्तरोत्पत्तावित्यन्वयः। **तत्र** परमाणुरूपे। अवयविनि पाकानङ्गीकारादाह - **कारणरूपमिति**। परमाणुष्वेव पाकं वदतां वैशेषि-काणामयमाशयः - वेगातिशयवता तेजसा परमाणूनामभिघातसंयोगे सति अवश्यं तेषु क्रिया जायते। ततो विभागः, तत आरम्भकसंयोग-नाशे सति अवश्यं यावदवयविनाशः ततः स्वतन्त्रेषु परमाणुषु रूपा-न्तरोत्पत्तौ पुनरदृष्टादिघटितसामग्रीवशात् परमाणुषु क्रियाविभागादि-क्रमेण यथास्थितं अपरावयविपर्यन्तमुत्पत्तिरिति।

अवयविन्यपि पाकं वदतां नैयायिकानां तु अयमाशयः - तेजसा परमाणूनामभिघातसंयोगेऽपि तस्य नियमत आरम्भकसंयोगप्रतिद्व-न्द्विविभागजनकक्रियाजनकत्वे मानाभावेन अवयविन्यपि पाकस्वीकार उचितः। अत एव 'सोऽयं घटः' इति प्रत्यभिज्ञापि सङ्गच्छते। अनन्तावयविनाशाद्यकल्पनेन लाघवं चेति। न चावयविरूपं प्रति अवयवरूपस्य, तन्नाशं प्रति आश्रयनाशस्य च हेतुतायां व्यभिचार

इति वाच्यम्। कार्यतावच्छेदककोटौ वैजात्यनिवेशनेन व्यभिचारवारण-सम्भवात् । **अन्यत्रेति - जलादावित्यर्थ** इति । यद्यपि रूपादिचतुष्टयं जलादौ बाधितम्, तथापि यथायोग्यमन्वये तात्पर्यम् । **उद्भूतत्वमिति** । उद्भूतत्वं जातिः । न च शुक्लत्वादिना साङ्कर्यम् । गुणसाङ्कर्यं न दोष इति नवीनमताभिप्रायकोऽयं ग्रन्थ इति न दोषः ।

केचित्तु - शुक्लत्वादिव्याप्यमनुद्भूतत्वं नाना । तदभावकूट-वत्त्वमेव उद्भूतत्वमित्याहुः ।

**बालप्रिया**

**पूर्वरूपपरावृत्त्यादी**ति । **परावृत्तिः** - नाशः । आदिपदेन रूपान्तरोत्पत्तिः गृह्यते । **तत्रे**ति व्याख्येयं पदम् । तस्य व्याख्यानं **परमाणुरूप** इति । परमाणुगते रूपे इत्यर्थः । ननु द्वचणुकादिगतरूपे विजातीयतेजस्संयोगात्मकपाकस्यैव असमवायिकारणत्वसम्भवात् कारणरूपं असमवायिकारणमित्यसङ्गतमित्याशङ्क्याह - **अवयविनि पाकानङ्गीकारादि**ति । पीलुपाकवादिवैशेषिकमते अवयविनि पाकवशात् पूर्वरूपादिपरावृत्तिरूपान्तरोत्पत्त्योः अनङ्गीकारात् तत्र रूपान्तरं प्रति पाकस्यासमवायिकारणत्वं न सम्भवतीति भावः । **यावदवयविनाश** इति । अन्त्यावयविपर्यन्तं नाश इत्यर्थः । **आरम्भकसंयोगे**त्यादि । द्वचणुकाद्यारम्भको यः परमाणुसंयोगः तत्प्रतिद्वन्द्वी तस्य संयोगस्य विनाशको यो विभागः तज्जनिका या क्रिया तज्जनकत्व इत्यर्थः । **वैजात्यनिवेशनेने**ति । पाकजन्यरूपतद्विनाशयोरवृत्ति यद्वैजात्यं तदवच्छिन्नं प्रति अवयवरूपं आश्रयनाशश्च हेतुरिति भावः ।

'अन्यत्र अपाकजं नित्यमनित्यं च' इति परममूलम् । अन्यत्र इत्यस्य जलादावित्यर्थः । पूर्ववाक्यात् रूपादिचतुष्टयमित्यनुवर्तते । तथा च जलादौ विद्यमानं रूपादिचतुष्टयं अपाकजमित्यर्थो लभ्यते । तदेतदसङ्गतम् । जलादौ रूपादिचतुष्टयाभावात् । जले गन्धरहितस्य रूपादित्रयस्यैव, तेजसि गन्धरसरहितस्य रूपस्पर्शद्विकस्यैव वायौ

स्पर्शस्यैव सत्त्वात् इत्यत आह - **यद्यपीत्यादिना** । **यथायोग्यमन्वय** इति । रूपादिचतुष्टयमित्यस्य रूपादिचतुष्टयघटकमित्यर्थः । तद्घटकं च त्रिकं द्वयं एकं च भवतीति नानुपपत्तिरिति भावः ।



## तर्कसङ्ग्रहः

सङ्ख्यानिरूपणम्

> एकत्वादिव्यवहारहेतुः सङ्ख्या । नवद्रव्यवृत्तिः । एकत्वादि-परार्धपर्यन्ता । एकत्वं नित्यगतं नित्यम् । अनित्यगतमनित्यम् । द्वित्वादिकं तु सर्वत्रानित्यमेव ।

### दीपिका

सङ्ख्यां लक्षयति - **एकेति** ।

### प्रकाशिका

**मूले द्वित्वादिकं तु सर्वत्रानित्यमेवेति** । हेतुभूतापेक्षाबुद्धिनाशेन द्वित्वादिनाशादिति भावः ।



## तर्कसङ्ग्रहः

परिमाणनिरूपणम्

> मानव्यवहारासाधारणं कारणं परिमाणम् । नवद्रव्यवृत्ति । तच्चतुर्विधम् - अणु-महत्-दीर्घं-ह्रस्वं चेति ।

### दीपिका

परिमाणं लक्षयति - **मानेति** । परिमाणं विभजते - **तच्चेति** । भावप्रधानो निर्देशः । अणुत्वं महत्वं दीर्घत्वं ह्रस्वत्वं चेत्यर्थः ।

### प्रकाशिका

परिमाणस्य गुणिबोधकशब्दैः विभजनमसङ्गतम् । अतः **दीपिकायाम् भावप्रधान** इति ।

### बालप्रिया

ननु परिमाणस्य गुणत्वात् तद्विभागोऽपि गुणबोधकैः अणुत्व-महत्वादिशब्दैरेव कर्तव्यः, न तु परिमाणविशेषरूपगुणविशिष्टवाचकैः अणुमहदादिशब्दैः इति शङ्कायां समाधानं उक्तम् - **दीपिकायां भावप्रधानो निर्देश** इति । अणुमहदादयः शब्दाः मूले धर्मप्रधानकाः । तथा च तेषां शब्दानां अणुत्वं महत्त्वमित्यादिपरिमाणरूपगुणा एवार्थ इति नानुपपत्तिः । तदाह - **परिमाणस्ये**ति ।



### तर्कसङ्ग्रहः

**पृथक्त्वनिरूपणम्**

| पृथग्व्यवहारासाधारणं कारणं पृथक्त्वम् । सर्वद्रव्यवृत्ति । |
|---|

### दीपिका

पृथक्त्वं लक्षयति - **पृथगि**ति । 'इदं अस्मात् पृथक्' इति व्यवहारकारणं पृथक्त्वमित्यर्थः ।



### तर्कसङ्ग्रहः

**संयोगनिरूपणम्**

| संयुक्तव्यवहारहेतुः संयोगः । सर्वद्रव्यवृत्तिः । |
|---|

### दीपिका

संयोगं लक्षयति - **संयुक्ते**ति । 'इमौ संयुक्तौ' इति व्यवहारहेतुरित्यर्थः । सङ्ख्यादिलक्षणे सर्वत्र दिक्कालादौ अतिव्याप्तिवारणाय असाधारणेति विशेषणीयम् ।

संयोगो द्विविधः - कर्मजः संयोगजश्चेति । आद्यो हस्तक्रियया हस्तपुस्तकसंयोगः । द्वितीयो हस्तपुस्तक संयोगात् कायपुस्तकसंयोगः । अव्याप्यवृत्तिः संयोगः । स्वात्यन्ताभावसमानाधिकरणत्वं अव्याप्यवृत्तित्वम् ।

## प्रकाशिका

**असाधारणेतीति** । कालादेः साधारणकारणत्वेन तत्र नातिव्याप्तिरिति भावः । **स्वात्यन्ताभावेति** । स्वप्रतियोगित्व - स्वसामानाधिकरण्योभयसम्बन्धेन अभाववत्त्वमिति निष्कर्षः ।

## बालप्रिया

**स्वप्रतियोगित्वेति** । स्वं कपिसंयोगाभावः, तत्प्रतियोगित्वं कपिसंयोगे, तथा स्वं कपिसंयोगाभावः, तदधिकरणवृक्षवृत्तित्वं च कपिसंयोगे । तथा च स्वप्रतियोगित्वस्वाधिकरणवृत्तित्वोभयसम्बन्धेन कपिसंयोगाभावविशिष्टत्वं कपिसंयोगे अस्तीति तस्याव्याप्यवृत्तित्वम् । स्वप्रतियोगित्वसम्बन्धेन घटाभावविशिष्टस्य घटस्याव्याप्यवृत्तित्ववारणाय स्वसामानाधिकरण्यनिवेशः । घटस्य घटात्यन्ताभाव सामानाधिकरण्यं नास्तीति न दोषः । स्वाधिकरणवृत्तित्वसम्बन्धेन घटात्यन्ताभावविशिष्टस्य पटस्याव्याप्यवृत्तित्ववारणाय स्वप्रतियोगित्वनिवेशः । पटस्य घटाभावप्रतियोगित्वात् न दोषः ।



## तर्कसङ्ग्रहः

### विभागनिरूपणम्

| संयोगनाशको गुणः विभागः । सर्वद्रव्यवृत्तिः । |
|---|

## दीपिका

विभागं लक्षयति - **संयोगेति** । कालादौ अतिव्याप्तिवारणाय गुण इति । रूपादौ अतिव्याप्तिवारणाय संयोगनाशक इति ।

विभागोऽपि द्विविधः - कर्मजः, विभागजश्चेति । आद्यः हस्तक्रियया हस्तपुस्तकविभागः । द्वितीयः हस्तपुस्तकविभागात् कायपुस्तकविभागः ।

## प्रकाशिका

**संयोगनाशक** इतीति । न च तथापि संयोगे अतिव्याप्तिः । तस्य प्रतियोगिविधया नाशं प्रति कारणत्वादिति वाच्यम् । प्रति-

योगितासम्बन्धानवच्छिन्ननाशनिष्ठजन्यतानिरूपितजनकत्वविवक्षणे-
नादोषादिति केचित् ।

परे तु संयोगनाशत्वावच्छिन्नकार्यतानिरूपितसमवायसम्बन्धा-
वच्छिन्नकारणत्वम् इति निष्कर्षः । एतत्तात्पर्यग्राहकं गुणपदमित्याहुः ।

**विभाग** इति । अयमप्यव्याप्यवृत्तिरिति बोध्यम् । **आद्येति** ।
आद्यत्वमिह स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालिक-
त्वम् । द्वितीयपतनादीनां प्राथमिकपतनध्वंससमानकालिकत्वात् नि-
रास इति भावः ।

**बालप्रिया**

**न च तथापि संयोग** इति । संयोगनाशकत्वं हि संयोगनाशजन-
कत्वम् । ध्वंसं प्रति प्रतियोगिनः कारणत्वात् संयोगनाशं प्रति संयो-
गोऽपि कारणम् । तथा च संयोगनाशजनकत्वं संयोगेऽस्तीति अति-
व्याप्तिरित्यर्थः । **प्रतियोगिविधयेति** । प्रतियोगित्वेनेत्यर्थः । **प्रतियोगि-
तासम्बन्धानवच्छिन्नेति** । प्रतियोगितासम्बन्धेन नाशं प्रति तादात्म्य-
सम्बन्धेन प्रतियोगी कारणमिति कार्यकारणभावात् संयोगनाशनिष्ठा
या प्रतियोगितासम्बन्धावच्छिन्ना कार्यता तन्निरूपिततादात्म्यसम्ब-
न्धावच्छिन्नकारणतायाः संयोगे सत्त्वेऽपि प्रतियोगितासम्बन्धानव-
च्छिन्नसंयोगनाशनिष्ठजन्यतानिरूपितजनकता नास्तीति न संयोगेऽ-
तिव्याप्तिरिति भावः ।

**परे त्विति** । स्वरूपसम्बन्धेन संयोगनाशं प्रति समवायसम्बन्धेन
विभागः कारणमिति कार्यकारणभावात् तदनुसारेण स्वरूपसम्बन्धा-
वच्छिन्न - संयोगनाशत्वावच्छिन्न - कार्यतानिरूपितसमवायसम्बन्धाव-
च्छिन्नकारणत्वं विभागलक्षणं अत्र विवक्षितम् । संयोगे तु संयोगनाश-
निष्ठप्रतियोगितासम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धाव-
च्छिन्नकारणतायाः सत्त्वेऽपि उक्तविधकारणत्वाभावात् नातिव्याप्ति-
रिति भावः । **एतत्तात्पर्यग्राहकमिति** । समवायसम्बन्धावच्छिन्नकारण-
तातात्पर्यद्योतकमित्यर्थः ।

**आद्यत्वमिहे**ति । स्वसमानाधिकरणपतनप्रतियोगिकध्वंससमान-कालिकं यत् यत् तद्भिन्नत्वं आद्यत्वमित्यर्थः । स्वं द्वितीयपतनादि तत्समानाधिकरणं यत् आद्यपतनं तद्ध्वंससमानकालिकमेव द्वितीय-पतनादि तद्भिन्नत्वं चाद्यपतने अस्तीति लक्षणसमन्वयः ।



## तर्कसङ्ग्रहः

### परत्वापरत्वनिरूपणम्

परापरव्यवहारासाधारणकारणे परत्वापरत्वे । ते द्विविधे - दिक्कृते कालकृते चेति । दूरस्थे दिक्कृतं परत्वम् । समीपस्थे दिक्कृतं अपरत्वम् । ज्येष्ठे कालकृतं परत्वम् । कनिष्ठे कालकृतं अपरत्वम् ।

## दीपिका

परत्वापरत्वयोः लक्षणमाह - **परापरे**ति । परव्यवहारासाधारण-कारणं परत्वम् । अपरव्यवहारासाधारणकारणं अपरत्वम् इत्यर्थः । ते विभजते - **ते द्विविधे इति** । दिक्कृतयोरुदाहरणमाह - **दूरस्थ** इति । कालकृते उदाहरति - **ज्येष्ठ** इति ।



## तर्कसङ्ग्रहः

### गुरुत्वनिरूपणम्

आद्यपतनासमवायिकारणं गुरुत्वम् । पृथिवीजलवृत्ति ।

### द्रवत्वनिरूपणम्

आद्यस्यन्दनासमवायिकारणं द्रवत्वम् । पृथिवीजलतेजोवृत्ति । तत् द्विविधम् - सांसिद्धिकं नैमित्तिकं चेति । सांसिद्धिकं जले । नैमित्तिकं पृथिवीतेजसोः । पृथिव्यां घृतादौ अग्निसंयोगजं द्रवत्वम् । तेजसि सुवर्णादौ ।

### स्नेहनिरूपणम्

चूर्णादिपिण्डीभावहेतुः गुणः स्नेहः । जलमात्रवृत्तिः ।

### दीपिका

गुरुत्वं लक्षयति - **आद्येति**। द्वितीयादिपतनस्य वेगासमवायिकारणत्वात् वेगे अतिव्याप्तिवारणाय आद्येति ।

द्रवत्वं लक्षयति - **आद्येति** । **स्यन्दनम्** - प्रस्रवणम् । तेजःसंयोगजं नैमित्तिकम्। तद्भिन्नं सांसिद्धिकम् । पृथिव्यां नैमित्तिकमुदाहरति - **घृतादाविति** । तेजसि तदाह - **सुवर्णादाविति** ।

स्नेहं लक्षयति - **चूर्णेति** । कालादौ अतिव्याप्तिवारणाय गुणपदम् । रूपादावतिव्याप्तिवारणाय चूर्णादिपिण्डीभावेति ।

### प्रकाशिका

**तदाहेति** - नैमित्तिकमाह इत्यर्थः ।

**पिण्डीभावेति** - पिण्डीभावः संयोगविशेषः ।



## तर्कसङ्ग्रहः

### शब्दनिरूपणम्

श्रोत्रग्राह्यो गुणः शब्दः । आकाशमात्रवृत्तिः । सः द्विविधः ध्वन्यात्मकः वर्णात्मकश्चेति । ध्वन्यात्मको भेर्यादौ । वर्णात्मकः संस्कृतभाषादिरूपः ।

### दीपिका

शब्दं लक्षयति - **श्रोत्रेति** । शब्दत्वे अतिव्याप्तिवारणाय गुणपदम् । रूपादावतिव्याप्तिवारणाय श्रोत्रेति । शब्दः त्रिविधः - संयोगजः विभागजः शब्दजश्चेति । तत्र आद्यः भेरीदण्डसंयोगजन्यः । द्वितीयो वंशे पाटयमाने दलद्वयविभागजन्यः चटचटशब्दः । भेर्यादिदेशमारभ्य श्रोत्रदेशपर्यन्तं द्वितीयादिशब्दाः शब्दजाः ।

### प्रकाशिका

**भेरीदण्डसंयोगजन्य** इति । आद्ये असमवायिकारणं भेर्याकाशसंयोगः, निमित्तकारणं भेरीदण्डसंयोगः । द्वितीये वंशदलाकाश-

विभागोऽसमवायिकारणम्, दलद्वयविभागो निमित्तकारणम् । तृतीये तु पूर्वपूर्वशब्दः असमवायिकारणम् । पवनादि निमित्तकारणमिति विवेकः ।



## तर्कसङ्ग्रहः

**बुद्धिनिरूपणम्**

| सर्वव्यवहारहेतुः गुणः ज्ञानं बुद्धिः । |
|---|

**बुद्धिविभागः**

सा द्विविधा - स्मृतिः अनुभवश्चेति । संस्कारमात्रजन्यं ज्ञानं स्मृतिः । तद्भिन्नं ज्ञानं अनुभवः । सः द्विविधः - यथार्थः अयथार्थश्चेति ।

## दीपिका

बुद्धेः लक्षणमाह - **सर्वव्यवहारे**ति । कालादौ अतिव्याप्तिवारणाय गुण इति । रूपादौ अतिव्याप्तिवारणाय सर्वव्यवहार इति । 'जानामि' इत्यनुव्यवसायगम्यं ज्ञानत्वमेव लक्षणं इति भावः ।

बुद्धिं विभजते - **से**ति । स्मृतेः लक्षणमाह - **संस्कारे**ति । भावनाख्यः संस्कारः । संस्कारध्वंसे अतिव्याप्तिवारणाय ज्ञानमिति । अनुभवे अतिव्याप्तिवारणाय संस्कारजन्यमिति । प्रत्यभिज्ञायां अतिव्याप्तिवारणाय मात्रपदम् । अनुभवं लक्षयति । **तद्भिन्नमि**ति । स्मृतिभिन्नं ज्ञानं अनुभव इत्यर्थः । अनुभवं विभजते - **स द्विविध** इति ।

## प्रकाशिका

**जानामीती**ति । ज्ञानत्वमात्रं लक्षणम् । 'जानामि'इत्यनुव्यवसायगम्यत्वं तु ज्ञानत्वस्य प्रमाणसिद्धत्वसूचनाय । तथा हि - 'घटं जानामि' इत्याद्यनुगतानुव्यवसायस्यानुगतधर्ममन्तरानुपपन्नत्वेन तस्य स्वीकर्तव्यत्वेन लाघवात् जातित्वसिद्धिः । इत्थं च मूले सर्वव्यवहारहेतुः इति बुद्धेः स्वरूपकथनमिति भावः ।

संस्कारस्य त्रिविधत्वादाह - **भावनाख्य** इति । **प्रत्यभिज्ञायां अतिव्याप्ती**ति । 'सोऽयं देवदत्तः' इति प्रत्यभिज्ञायां तद्देशकालवृत्तित्वरूपतत्तासंस्कारजन्यत्वस्य सत्त्वेन तत्रातिव्याप्तिरिति भावः ।

**मात्रेती**ति । यद्यपि संस्कारमात्रजन्यत्वं संस्कारेतराजन्यत्वे सति संस्कारजन्यत्वम् । तच्च स्मृतौ असम्भवि । तत्र संस्कारेतरात्मादिजन्यत्वस्य सत्त्वात् । तथापि चक्षुराद्यजन्यत्वे सति संस्कारजन्यत्वे तात्पर्यमवसेयम् ।

### बालप्रिया

ननु ज्ञानत्वजातिमत्त्वस्यैव ज्ञानलक्षणत्वे मूले सर्वव्यवहारहेतुः इति गुरुलक्षणं कुतः प्रोक्तमित्याशङ्क्य मूलं न लक्षणपरम्, किं तु स्वरूपपरम् । अतो नानुपपत्तिरित्याह - **इत्थं चे**ति । **ज्ञानत्वस्यैव** ज्ञानलक्षणत्व इत्यर्थः ।

**तद्देशकालवृत्तित्वे**ति । तद्देशकालवृत्तित्वरूपा या तत्ता तद्विषयकसंस्कारजन्यत्वस्येत्यर्थः । **तथापि चक्षुराद्यजन्यत्व** इति । प्रत्यभिज्ञा तु संस्कारसहकृतचक्षुरादिजन्येति चक्षुराद्यजन्यत्वाभावात् न तत्र अतिव्याप्तिरिति भावः ।



### तर्कसङ्ग्रहः

**यथार्थानुभवलक्षणम्**

| तद्वति तत्प्रकारकानुभवो यथार्थः । सैव प्रमेत्युच्यते । |
|---|

### दीपिका

यथार्थानुभवस्य लक्षणमाह - **तद्वती**ति । ननु 'घटे घटत्वम्' इति प्रमायां अव्याप्तिः । घटत्वे घटाभावादिति चेत् - न । यत्र यत्सम्बन्धोऽस्ति तत्र तत्सम्बन्धानुभवः इत्यर्थात् घटत्वे घटसम्बन्धोऽस्तीति नाव्याप्तिः । **सैवे**ति । यथार्थानुभव एव शास्त्रे प्रमा इत्युच्यत इत्यर्थः ।

### प्रकाशिका

**मूले तद्वति तत्प्रकारकानुभव** इति । सप्तम्यर्थो विशेष्यित्वं आश्रयतासम्बन्धेनानुभवान्वयी । तथा च तद्वद्विशेष्यक - तत्प्रकारकानु-

भवत्वं यथार्थानुभवस्य लक्षणम् । तत्पदार्थः प्रकारः, तद्वत्त्वं प्रकारतावच्छेदकसम्बन्धेन ग्राह्यम् । तेन कालिकसम्बन्धेन शुक्त्यादौ रजतत्वसत्त्वेऽपि 'इदम् रजतम्' इति भ्रमे नातिव्याप्तिः । न च तथापि रङ्गत्वेन रजतावगाहिनि, रजतत्वेन च रङ्गावगाहिनि 'इमे रङ्गरजते' इत्याकारकसमूहालम्बनभ्रमेऽतिव्याप्तिः । तत्र रङ्गविशेष्यकत्व-रङ्गत्वप्रकारकत्वयोः रजतविशेष्यकत्व-रजतत्वप्रकारकत्वयोश्च सत्त्वादिति वाच्यम् । तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वविशिष्टानुभवत्वरूपार्थविवक्षणेन अदोषात् । तथा हि - ययोः विषयतयोः निरूप्यनिरूपकभावः तन्निरूपितविषयितयोः अवच्छेद्यावच्छेदकभाव इति सिद्धान्तः । दर्शितभ्रमे रङ्गत्वप्रकारतायां रङ्गविशेष्यतानिरूपितत्वस्य, रजतत्वप्रकारतायां रजतविशेष्यतानिरूपितत्वस्य च अभावेन रङ्गविशेष्यकत्वावच्छिन्नरङ्गत्वप्रकारकत्व- रजतविशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वयोश्च असत्त्वात् नातिव्याप्तिः । स्मृतिव्यावृत्तये अनुभवत्वनिवेशः । एतत्फलं अनुपदमेव स्फुटीभविष्यति ।

ननु 'तद्वति' इत्यस्य 'अधिकरणे' इत्यर्थकतया 'घटे घटत्वम्' इति प्रमायामव्याप्तिः । आधेयताया वृत्त्यनियामकतया तेन सम्बन्धेन घटरूपप्रकाराधिकरणाप्रसिद्धेः इत्याशयेन शङ्कते - **ननु घटे घटत्वमिति** इति । 'तद्वति' इत्यस्य तत्सम्बन्धिनीत्यर्थः । एवं च घटत्वस्यापि घटसम्बन्धितया तादृशप्रमायां आधेयतया घटसम्बन्धिघटत्वविशेष्यकत्वावच्छिन्नघटप्रकारकत्वस्य सत्त्वात् नाव्याप्तिरिति समाधत्ते-**यत्रे**ति। **यथार्थानुभव एवे**ति । एवकारेण यथार्थस्मृतिव्यवच्छेदः । यथार्थज्ञानमात्रस्य प्रमात्वे स्मृतिकरणस्य प्रमाणान्तरतापत्तेः इति भावः ।

## बालप्रिया

**सप्तम्यर्थो विशेष्यित्वमिति** । 'तद्वति' इत्यत्र तच्छब्दः प्रकारीभूतधर्मपरः । सप्तम्यर्थो विशेष्यित्वम्। तत्र प्रकृत्यर्थस्य तद्वत्पदार्थस्य निरूपितत्वसम्बन्धेन अन्वयः । विशेष्यित्वस्य आश्रयतासम्बन्धेन अनुभवे

ऽन्वयः । तथा च तद्वन्निरूपितविशेष्यित्वाश्रयः तन्निष्ठप्रकारतानिरूपकः अनुभवः यथार्थः । तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वं यथार्थानुभवस्य लक्षणम् । 'अयं घट' इति प्रमायां घटत्ववद्घटनिष्ठविशेष्यतानिरूपकत्वं घटत्वनिष्ठप्रकारतानिरूपकत्वम् अनुभवत्वं च अस्तीति लक्षणसमन्वयः । स्मृतौ अतिव्याप्तिवारणाय अनुभवत्वनिवेशः । शुक्तिरजतभ्रमे रजतत्वनिष्ठप्रकारतानिरूपकत्वे सति अनुभवत्वस्य सत्त्वात् अतिव्याप्तिः स्यात् इति तद्वारणाय तद्वन्निष्ठविशेष्यतानिरूपकत्वनिवेशः । शुक्तिरजतभ्रमे तु रजतत्वाभाववच्छुक्तिनिष्ठविशेष्यताकत्वमेवास्ति, न तु रजतत्ववद्रजतविशेष्यकत्वमिति नातिव्याप्तिः । तद्वद्विशेष्यकत्वे सति अनुभवत्वमात्रोक्तौ शुक्तौ 'इदं रजतम्' इत्ययथार्थानुभवे अतिव्याप्तिः । तत्प्रकारकत्वदलाभावे तत्पदेन प्रकार एव ग्राह्य इति नियमालाभेन तच्छब्देन शुक्तित्वे गृहीते शुक्तित्ववद्विशेष्यकत्वानुभवत्वयोः तत्र सत्त्वात् । तद्वारणाय तत्प्रकारकत्वपदम् । तन्निवेशे च एकत्र उच्चरितयोः तच्छब्दयोः एकार्थबोधकत्वमिति नियमेन प्रथमगृहीततत्पदार्थस्यैव द्वितीयतत्पदेनापि ग्राह्यतया प्रथमतत्पदगृहीतशुक्तित्वप्रकारकत्वस्य निरुक्तानुभवे अभावात् न अतिव्याप्तिः इति केचित् । वस्तुतस्तु रजत एव द्रव्यं इति ज्ञाने [1]रजतत्वप्रमात्वापत्तिः, अतः तत्प्रकारकत्वनिवेशः । स्पष्टं चेदं दिनकर्यादौ ।

ननु शुक्तेरपि कालिकसम्बन्धेन रजतत्ववत्त्वात् रजतत्ववच्छुक्तिविशष्यकत्वरजतत्वप्रकारकत्वयोः 'इदं रजतम्' इति भ्रमेऽपि सत्त्वात् तत्रातिव्याप्तिरित्यत आह - **तद्वत्त्वं प्रकारतावच्छेदकसम्बन्धेन ग्राह्यमिति**। प्रकृते समवायसम्बन्धः प्रकारतावच्छेदकसम्बन्धः । तेन सम्बन्धेन रजतत्ववत् रजतमेव, न तु शुक्तिः । रजतविशेष्यकत्वं च रजतभ्रमे नास्तीति नातिव्याप्तिरिति भावः ।

---

1. रजतत्वप्रमात्वापत्तिरिति । रजतत्ववद्विशेष्यकत्वादिति भावः ।

**न च तथार्थत्या**दि । पुरतः अवस्थितयोः रजतरङ्गयोः इन्द्रिय-सन्निकृष्टयोः सतोः रजते रङ्गत्वं रङ्गे रजतत्वं चावगाहमानः 'इमे रङ्गरजते' इत्याकारकः यः समूहालम्बनभ्रमः तत्रातिव्याप्तिः । तस्मिन् भ्रमे रङ्गं रजतं च उभयं विशेष्यम् । रङ्गत्वं रजतत्वं च उभयं प्रकारः । तथा च रङ्गत्ववद्रङ्गविशेष्यकत्वस्य रजतत्ववद्रजतविशेष्य-कत्वस्य रङ्गत्वप्रकारकत्वस्य रजतत्वप्रकारकत्वस्य च सत्त्वात् इति शङ्कितुराशयः । नानामुख्यविशेष्यकं ज्ञानं समूहालम्बनमित्युच्यते ।

समाधत्ते - **तद्वद्विशेष्यकत्वावच्छिन्नेत्या**दिना । तद्वद्विशेष्यकत्वा-वच्छिन्नं यत् तत्प्रकारकत्वं तदाश्रयानुभवत्वं यथार्थानुभवत्वम् । विशेष्यताप्रकारतयोः निरूप्यनिरूपकभावे सत्येव विशेष्यित्वप्रकारि-त्वयोः अवच्छेद्यावच्छेदकभावो भवति । उक्तसमूहालम्बनभ्रमे यद्यपि रङ्गत्वं रजतत्वं उभयं प्रकारः, तथापि रङ्गत्वं रजतांशे प्रकारः रज-तत्वं रङ्गांशे प्रकार इति रङ्गत्वनिष्ठप्रकारता रजतनिष्ठविशेष्यतानि-रूपिता न तु रङ्गत्ववद्रङ्गनिष्ठविशेष्यतानिरूपिता । एवं रजतत्व-निष्ठप्रकारता रङ्गनिष्ठविशेष्यतानिरूपिता न तु रजतत्ववद्रजतनि-ष्ठविशेष्यतानिरूपिता । तथा च रङ्गत्वनिष्ठप्रकारतारङ्गनिष्ठ-विशेष्यतयोः निरूप्यनिरूपकाभावात्, रजतत्वनिष्ठप्रकारतारजत-निष्ठविशेष्यतयोः तदभावाच्च रङ्गत्वनिरूपितप्रकारित्व - रङ्गनि-रूपितविशेष्यितयोः रजतत्वनिरूपितप्रकारित्वरजतनिरूपितविशेष्यि-त्वयोश्च अवच्छेद्यावच्छेदकभावाभावात् रङ्गत्वप्रकारकत्वावच्छिन्न-रङ्गविशेष्यकत्वस्य रजतत्वप्रकारकत्वावच्छिन्नरजतविशेष्यकत्वस्य च उक्तसमूहालम्बनभ्रमे अभावात् नातिव्याप्तिरिति भावः । **अनु-पदमेव स्फुटीभविष्यती**ति । 'यथार्थानुभव एव शास्त्रे प्रमा इत्युच्यत' इति **दीपिका**ग्रन्थव्याख्यानावसर इत्यर्थः ।

**अधिकरणे इत्यर्थकतये**ति । तथा च प्रकारतावच्छेदकसम्बन्धेन प्रकाराधिकरणविशेष्यकानुभवः यथार्थ इति लभ्यते। 'घटे घटत्वम्' इति

प्रमायां घटत्वं विशेष्यम्, तत्र आधेयतासम्बन्धेन घटः प्रकारः। प्रकारतावच्छेदकसम्बन्धः आधेयता। आधेयत्वं वृत्त्यनियामकम् (आधेयत्वानियामकम्)। अतः आधेयतासम्बन्धेन प्रकारीभूतघटाधिकरणाप्रसिद्ध्या प्रमालक्षणस्य तादृशप्रमायामव्याप्तिरिति शङ्कितुराशयः।

**तद्वतीत्यस्य तत्सम्बन्धिनीत्यर्थ** इति। तत्प्रतियोगिकप्रकारतावच्छेदकसम्बन्धानुयोगिनीत्यर्थ इति भावः। तथा च 'तद्वति' इत्यस्य यदि तन्निष्ठप्रकारतावच्छेदकसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावानित्यर्थः स्यात्, तदा आधेयताया वृत्त्यनियामकतया घटनिष्ठाधेयतासम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वाप्रसिद्ध्या अव्याप्तिः स्यात्। सोऽर्थस्तु प्रकृते न विवक्षितः। आधेयतासम्बन्धेन घटसम्बन्धि घटत्वं भवतीति [1]घटसम्बन्धिघटत्वविशेष्यकत्वावच्छिन्नघटप्रकारकत्वस्य 'घटे घटत्वम्' इति प्रमायां सत्त्वात् नाव्याप्तिरिति समाधातुराशयः।

**यथार्थज्ञानमात्रस्य प्रमात्व** इति। यदि अनुभवत्वमनिवेश्य यथार्थज्ञानत्वं प्रमात्वं इत्युच्यते तर्हि स्मृतेरपि यथार्थज्ञानत्वात् प्रमात्वं प्रसज्येत। न चेष्टापत्तिः। प्रत्यक्षादिप्रमितिविलक्षणस्मृतिरूपप्रमाकरणस्य विलक्षणस्य पञ्चमप्रमाणस्य आवश्यकतया प्रमाणानि चत्वारीति सूत्रकारोक्त्यसांगत्यापत्तेरिति भावः।



## तर्कसङ्ग्रहः

**अयथार्थानुभवलक्षणम्**

तदभाववति तत्प्रकारकानुभवोऽयथार्थः। सैव अप्रमा इत्युच्यते। (स एव भ्रम इत्युच्यते)।

## दीपिका

अयथार्थानुभवं लक्षयति - **तदभाववतीति**। ननु 'इदं संयोगी'ति प्रमायामतिव्याप्तिरिति चेत् - न। यदवच्छेदेन यत्सम्बन्धाभावः तद-

1. घटसम्बन्धीति। घटप्रतियोगिकाधेयतासम्बन्धानुयोगीत्यर्थः।

वच्छेदेन तत्सम्बन्धज्ञानस्य विवक्षितत्वात् । संयोगाभावावच्छेदेन संयोगज्ञानस्य भ्रमत्वात् संयोगावच्छेदेन संयोगसम्बन्धस्य सत्त्वात् नातिव्याप्तिः ।

## प्रकाशिका

**अतिव्याप्तिरि**ति । संयोगाभाववति संयोगप्रकारकत्वस्य सत्त्वादिति भावः । **यदवच्छेदेने**ति । यदवच्छेदेन यत्सम्बन्धावच्छिन्नप्रतियोगिताकयदभावः तदवच्छेदेन तत्सम्बन्धेन तत्प्रकारकानुभवस्य विवक्षितत्वादित्यर्थः। **संयोगाभावावच्छेदेने**ति। संयोगाभावावच्छेदकावच्छेदेनेत्यर्थः। **संयोगावच्छेदेने**ति । संयोगावच्छेदकावच्छेदेनेत्यर्थः। **संयोगसम्बन्धस्ये**ति । समवायसम्बन्धेन संयोगस्येत्यर्थः ।

अत्रेदमवधेयम् - इदं अव्याप्यवृत्तिसंयोगादिप्रकारकभ्रमानुरोधेन । व्याप्यवृत्तिरजतत्वादिप्रकारकभ्रमलक्षणं तु - तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववान् यः तद्विशेष्यकत्वावच्छिन्न-तत्सम्बन्धावच्छिन्न - तत्प्रकारकत्वविशिष्टानुभवत्वम् । प्रतियोगितायां प्रकारतावच्छेदक - सम्बन्धावच्छिन्नत्वनिवेशात् 'पर्वतो वह्निमान्' इति प्रमायां समवायावच्छिन्नवह्न्यभाववत्पर्वतविशेष्यकत्वस्य सत्त्वेऽपि नातिव्याप्तिः । विशेष्यित्वप्रकारित्वयोरवच्छेद्यावच्छेदकभावविवक्षणेन 'इमे रङ्गरजते' इत्याकारकप्रमायां रङ्गत्वाद्यभाववद्रजतादिविशेष्यकत्वरङ्गत्वादिप्रकारकयोः सत्त्वेऽपि नातिव्याप्तिः इत्यलं अतिविस्तरेण ॥

## बालप्रिया

**संयोगाभाववती**ति । संयोगस्याव्याप्यवृत्तित्वात् संयोगवत्यपि संयोगाभावस्य सत्त्वात् 'इदं संयोगि' इति प्रमायां संयोगाभाववति संयोगप्रकारकत्वसत्त्वात् तदभाववति तत्प्रकारकत्वरूपभ्रमलक्षणातिव्याप्तिरिति भावः । **यदवच्छेदेने**त्यादि । मूलावच्छेदेन समवायसम्बन्धावच्छिन्नकपिसंयोगाभावः वृक्षे वर्तते तदवच्छेदेन चेत् कपि-

संयोगावगाहि ज्ञानं भवति तर्हि तज्ज्ञानं भ्रमः । अग्रावच्छेदेन कपिसंयोगज्ञानं तु प्रमैव, तदवच्छेदेन कपिसंयोगाभावविरहात् । अग्रावच्छेदेन कपिसंयोगवति वृक्षे तदवच्छेदेनैव समवायातिरिक्तसम्बन्धावच्छिन्नकपिसंयोगाभावसत्त्वात् अग्रे वृक्षः कपिसंयोगीति प्रमायाः भ्रमत्वापत्तिः । तद्वारणाय **यत्सम्बन्धावच्छिन्नेति** । मूलावच्छेदेन समवायसम्बन्धावच्छिन्न - कपिसंयोगाभाववति वृक्षे कालिकसम्बन्धेन कपिसंयोगप्रकारकप्रमायामतिव्याप्तिवारणाय तत्सम्बन्धेनेत्युक्तम् । ननु 'संयोगाभावावच्छेदेन संयोगज्ञानस्य' इति **दीपिको**क्तिरयुक्ता; मूले वृक्षः कपिसंयोगीति भ्रमात्मकज्ञानस्य मूलावच्छेदेन कपिसंयोगावगाहित्वेऽपि संयोगाभावावच्छेदेन संयोगावगाहित्वाभावात्। न हि संयोगस्य संयोगाभावोऽवच्छेदकः, [1]तथा अप्रतीतेः इत्यतो व्याचष्टे - **संयोगाभावावच्छेदकावच्छेदेने**त्यर्थ इति । संयोगाभावस्यावच्छेदको यः मूलादिः तदवच्छेदेनेत्यर्थः । **संयोगावच्छेदकावच्छेदेने**ति । संयोगस्य अवच्छेदकः यः अग्रादिः तदवच्छेदेनेत्यर्थः ।

ननु अव्याप्यवृत्तिपदार्थप्रकारकभ्रमस्य सावच्छिन्नविषयकत्वेऽपि व्याप्यवृत्तिरजतत्वादिप्रकारकभ्रमस्य तदभावात् यदवच्छेदेनेत्यादिनिरुक्तभ्रमलक्षणं सर्वभ्रमानुयायि न भवतीत्यत आह - **अत्रेदमवधेयमिति**। **तत्सम्बन्धावच्छिन्ने**त्यादि । शुक्तौ इन्द्रियसन्निकृष्टायां यः 'इदं रजतम्' इति भ्रमः तत्र समन्वयः क्रियते । समवायसम्बन्धावच्छिन्न प्रतियोगिताकरजतत्वाभाववान् पुरोवर्तिशुक्तिरूपपदार्थः । तद्विशेष्यकत्वे सति रजतत्वप्रकारकत्वं उक्तभ्रमेऽस्ति इति । प्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वं यदि प्रतियोगितायां न निवेश्यते तदा यत्किंचित्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववान् यः तद्विशेष्यकत्वावच्छिन्न-तत्प्रकारकत्वविशिष्टानुभवत्वं भ्रमस्य लक्षणं स्यात् । तथा सति 'पर्वतो वह्निमान्' इति प्रमायामतिव्याप्तिः । तथा हि - तत्पदेन वह्निरूपः प्रकारः गृहीतश्चेत् तस्य संयोगेन पर्वते सत्त्वेऽपि समवायेन सत्ता

---

1. तथा अप्रतीतेरिति । संयोगावच्छेदकतया संयोगाभावस्याप्रतीतेरित्यर्थः ।

नास्ति । अतः समवायसम्बन्धावच्छिन्नवह्न्यभाववान् यः पर्वतः तद्विशेष्यकत्वे सति वह्निप्रकारकत्वं 'पर्वतो वह्निमान्' इति प्रमायामस्तीति। प्रकारतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तु संयोगसम्बन्धस्यैव प्रकारतावच्छेदकतया तदवच्छिन्नप्रतियोगिताकवह्न्यभाववान् विशेष्यः पर्वतो न भवतीति प्रकारतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकतदभाववद्विशेष्यकत्वं 'पर्वतो वह्निमान्' इति प्रमायां नास्तीति नातिव्याप्तिरिति भावः ।

**विशेष्यित्वप्रकारित्वयोरि**ति । तथा च विशेष्यित्वप्रकारित्वयो अवच्छेद्यावच्छेदकभावाविवक्षणे तदभाववद्विशेष्यकः तत्प्रकारकः अनुभवः भ्रम इत्येतावन्मात्रोक्तौ रङ्गे रङ्गत्वं रजते रजतत्वं चावगाहमानः यः 'इमे रङ्गरजते' इति प्रमात्मकानुभवः तत्र रङ्गं रजतं च विशेष्यम्, रङ्गत्वं रजतत्वं च प्रकार इति तत्पदेन रङ्गत्वग्रहणे तदभाववत् रजतं उक्तप्रमायां विशेष्यं भवति रङ्गत्वं च प्रकारो भवतीति रङ्गत्वाभाववद्रजतविशेष्यकत्वं रङ्गत्वप्रकारकत्वं चास्ति, एवं रजतत्वाभाववद्रङ्गविशेष्यकत्वं रजतत्वप्रकारकत्वं चास्तीत्यतिव्याप्तिः स्यात्। अतस्तयोः अवच्छेद्यावच्छेदकाभावविवक्षा । तथा च तदभाववद्विशेष्यकत्वावच्छिन्नं यत् तत्प्रकारकत्वं तद्विशिष्टानुभवः भ्रम इति लक्षणं भवति । उक्तसमूहालम्बनप्रमायां रङ्गत्वनिष्ठप्रकारता रङ्गत्ववद्रङ्गनिष्ठविशेष्यतानिरूपिता, न तु रङ्गत्वाभाववद्रजतनिष्ठविशेष्यतानिरूपिता, रजते रङ्गत्वस्याप्रकारत्वात्। एवं च रङ्गत्वनिष्ठप्रकारतारजतनिष्ठविशेष्यतयोर्निरूप्य निरूपकभावाभावात रङ्गत्वप्रकारकत्वरङ्गत्वाभाववद्रजतविशेष्यकत्वयोः अवच्छेद्यावच्छेदकभावो नास्ति । ययोर्विषयतयोः निरूप्यनिरूपकभावः तन्निरूपितविषयितयोरेव अवच्छेद्यावच्छेदकभाव इति नियमात्। एवं च रङ्गत्वाभाववद्विशेष्यकत्वावच्छिन्नरङ्गत्वप्रकारकत्वस्य रजतत्वाभाववद्विशेष्यकत्वावच्छिन्नरजतत्वप्रकारकत्वस्य चोक्तसमूहालम्बनप्रमायां

अभावान्नातिव्याप्तिरिति भावः । प्रकारताविशिष्टविशेष्यतानिरूपकत्वे सत्यनुभवत्वं भ्रमस्य लक्षणम् । विशेष्यतायां प्रकारतावैशिष्ट्यं च [1]स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकस्वाश्रयाभाववन्निष्ठत्वस्वनिरूपितत्वोभयसम्बन्धेनेति निष्कर्षः ।



## तर्कसङ्ग्रहः

**यथार्थानुभवविभागः**

यथार्थानुभवः चतुर्विधः - प्रत्यक्ष - अनुमिति - उपमिति - शाब्दभेदात् । तत्करणमपि चतुर्विधम् - प्रत्यक्ष - अनुमान - उपमान - शब्दभेदात् ।

### दीपिका

यथार्थानुभवं विभजते । **यथार्थे**ति । प्रसङ्गात् प्रमाकरणं विभजते - **तत्करणमपी**ति । प्रमाकरणमित्यर्थः । प्रमायाः करणं प्रमाणम् इति प्रमाणसामान्यलक्षणम् ।

### प्रकाशिका

**प्रसङ्गादि**ति । स्मृतस्य उपेक्षानर्हत्वं प्रसङ्गः तस्मादित्यर्थः । सामान्यतोऽवगतस्यैव विशेषरूपेण प्रतिपादनं संभवतीति सामान्यलक्षणं स्फुटयति - **प्रमायाः करणं प्रमाणमि**ति ।

### बालप्रिया

**स्मृतस्ये**ति । प्रमायाः लक्षणे उक्ते तत्करणं स्मृतं भवतीति तस्य उपेक्षा न युक्तेति भावः ।



---

1. स्वावच्छेदकेति । शुक्ताविदं रजतमिति भ्रमे एवं समन्वयः - स्वं रजतत्वनिष्ठप्रकारता तदवच्छेदकसम्बन्धः समवायसम्बन्धः तदवच्छिन्नप्रतियोगिताकः स्वाश्रयस्य प्रकारताश्रयस्य रजतत्वस्य अभावः तद्वच्छुक्तिनिष्ठत्वं विशेष्यतायाम्; एवं स्वं रजतत्वनिष्ठप्रकारता तन्निरूपितत्वं च शुक्तिनिष्ठविशेष्यतायाम् । तथा च उक्तोभयसम्बन्धेन रजतत्वनिष्ठप्रकारताविशिष्टा या शुक्तिनिष्ठा विशेष्यता तन्निरूपकत्वे सति अनुभवत्वं इदं रजतमिति भ्रमेऽस्तीति ।

करणलक्षणम्

| (व्यापारवत्) असाधारणकारणं करणम् । |
|---|

## दीपिका

करणलक्षणमाह - **असाधारणे**ति । साधारणकारणे दिक्कालादौ अतिव्याप्तिवारणाय असाधारणेति ।

## प्रकाशिका

**असाधारणेती**ति । दिक्कालादृष्टादेः कार्यत्वावच्छिन्नं प्रत्येव कारणत्वात् अनुभवत्वव्याप्यधर्मावच्छिन्नप्रमावृत्तिकार्यतानिरूपित-कारणत्वरूपासाधारणकारणत्वस्य तत्र असत्त्वात् नातिव्याप्तिः ।

प्राचीनास्तु-'व्यापारवत्त्वे सति' इत्यपि वक्तव्यम् । अतः चक्षुः-संयोगादौ नातिव्याप्तिः । श्रोत्रमनस्संयोगः शब्दो वा व्यापारः संभव-त्येवेति न श्रोत्रेन्द्रिये करणलक्षणाव्याप्तिः-इति वदन्ति ।

"यद्विलम्बात् प्रकृतकार्यानुत्पादः तत्कारणत्वस्यैवासाधारणका-रणत्वात्मकतया कालादिषु तादृशकारणत्वाभावात् न अतिव्याप्तिः । व्यापारत्वेनाभिमतेन्द्रियसंयोगादिकमेव करणम् । एतच्च 'लिङ्ग-परामर्श एवानुमानम्' इति मूले एव स्फुटीभविष्यति । अत एव **मणिकृद्भिः** उक्तम् - 'तच्च लिङ्गपरामर्शः' इति ग्रन्थेन" इति तु नव्याः । अधिकम् **अस्मदीयचिन्तामणिप्रभायां** अनुसन्धेयम् ।

## बालप्रिया

**दिक्कालादृष्टादे**रिति । प्रमानिरूपितासाधारणकारणत्वं प्रमाणस्य लक्षणम् । प्रमानिष्ठा या अनुभवत्वव्याप्यधर्मावच्छिन्ना कार्यता तन्नि-रूपितकारणत्वमिति यावत् । अनुभवत्वव्याप्यधर्मः प्रमात्वम्,कार्यतायां अनुभवत्वव्याप्यधर्मावच्छिन्नत्वस्यानिवेशे कार्यसामान्यं प्रति दिक्काला-दृष्टादेः कारणत्वात् प्रमां प्रत्यपि कारणत्वमस्तीति प्रमाणलक्षणस्य

दिक्कालादावतिव्याप्तिः स्यात् । तन्निवेशे तु प्रमानिष्ठकार्यत्वावच्छिन्नकार्यतानिरूपितकारणतायाः दिक्कालादौ सत्त्वेऽपि प्रमानिष्ठप्रमात्वावच्छिन्नकार्यतानिरूपितकारणत्वं नास्तीति नातिव्याप्तिः । चक्षुरादेरिव तत्सन्निकर्षादेरपि प्रत्यक्षप्रमाहेतुत्वात् प्रमाणलक्षणस्य व्यापारेषु सन्निकर्षादिषु अतिव्याप्तिवारणाय व्यापारद्वारकं कारणत्वं लक्षणे निवेशनीयम् । न च श्रोत्रेन्द्रिये अव्याप्तिः, श्रोत्रसमवायरूपसंनिकर्षस्य नित्यत्वेन तज्जन्यत्वघटितव्यापारलक्षणाभावात् व्यापारद्वारककारणत्वरूपस्य प्रमाणलक्षणस्य श्रोत्रेन्द्रियेऽभावादिति वाच्यम् । श्रोत्रमनस्संयोगस्य शब्दस्य वा श्रोत्रव्यापारत्वात् तद्द्वारकप्रत्यक्षकारणत्वस्य श्रोत्रेऽपि सत्त्वात् - इति प्राचीनमतम् ।

नवीनमतमाह - **यद्विलम्बादि**त्यादिना । न व्यापारवत्कारणत्वमसाधारणकारणत्वम् । अपि तु यद्विलम्बात् प्रकृतकार्यानुत्पादः तत्त्व न्। कालादिषु एतादृशासाधारणकारणत्वाभावात् नातिव्याप्तिः । व्यापारत्वेन प्राचीनाभिमतेषु संनिकर्षादिष्वेव ईदृशं कारणत्वमस्तीति सन्निकर्षपरामर्शादीनामेव प्रमाणत्वमिति नवीनमतम् ।



### तर्कसङ्ग्रहः

कारणलक्षणम्

| (अनन्यथासिद्धत्वे सति) कार्यनियतपूर्ववृत्ति कारणम् । |
|---|

### दीपिका

कारणलक्षणमाह - **कार्ये**ति । 'पूर्ववृत्ति कारणं' इत्युक्ते रासभादौ अतिव्याप्तिः स्यात् , अतः **नियते**ति । तावन्मात्रे कृते कार्ये अतिव्याप्तिः, अतः पूर्ववृत्ति इति ।

### प्रकाशिका

**नियते**ति । नियतत्वं हि व्यापकत्वम् । तच्च रासभादेः न संभवतीति तत्र न घटकारणत्वातिप्रसक्तिरिति भावः । **पूर्ववृत्ती**ति ।

स्वव्यापकत्वस्य स्वस्मिन् सत्त्वेऽपि स्वपूर्वकालवृत्तित्वस्य असत्त्वेन नातिप्रसङ्ग इति भावः । कार्यतावच्छेदकसम्बन्धेन कार्याधिकरणे कार्याव्यवहितप्राक्क्षणावच्छेदेन विद्यमानात्यन्ताभावप्रतियोगितान-वच्छेदकतद्धर्मवत्त्वं तेन रूपेण कारणत्वमिति समुदिताऽर्थो बोध्यः ।

**बालप्रिया**

कार्यनियतत्वे सति कार्यपूर्ववृत्तित्वं कारणस्य लक्षणम् । कार्य-नियतत्वं च कार्यव्यापकत्वम् । कार्यपूर्ववृत्तित्वमात्रोक्तौ रासभादेरपि कदाचित् घटपूर्ववर्तित्वमस्तीति घटकारणत्वापत्तिः । तद्वारणाय कार्यव्यापकत्वनिवेशः । कार्यस्यापि कार्यव्यापकत्वात् तत्रातिव्याप्ति-वारणाय कार्यपूर्ववर्तित्वनिवेशः । तदाह-**नियतत्वं ही**त्यादीना । कार्य-व्यापकत्वशरीर एव कार्यपूर्ववर्तित्वमपि निवेश्य परिष्करोति - **कार्य-तावच्छेदकसम्बन्धेने**त्यादिना । कार्यतावच्छेदकसम्बन्धेन संयोगेन कार्या-धिकरणे घटाधिकरणे प्रदेशे घटपूर्वक्षणावच्छेदेन वर्तमानो योऽभावः न दण्डचक्राद्यभावः, अपि तु रासभाद्यभावः तत्प्रतियोगितावच्छेदकं रासभत्वादि प्रतियोगितानवच्छेदकं दण्डत्वादि, तद्वत्त्वं दण्डादिष्व-स्तीति लक्षणसमन्वयः । कार्यतावच्छेदकसम्बन्धेनेत्यनुक्तौ कालिक-सम्बन्धेन घटाधिकरणं यत्र घटो नोत्पद्यते स प्रदेशोऽपि भवति तद्वृ-त्तिर्योऽभावः दण्डाद्यभावः, तत्प्रतियोगितावच्छेदकधर्मवत्त्वमेव दण्डा-दावस्ति न तदनवच्छेदकधर्मवत्त्वमित्यसम्भवः स्यात् । तद्वारणाय-**कार्य-तावच्छेदकसम्बन्धेने**ति । कार्याधिकरणवृत्त्यभावाप्रतियोगित्वमात्रोक्तौ संयोगसम्बन्धेन घटाधिकरणे वर्तते योऽभावः दण्डतन्तूभयाभावः तत्प्रतियोगित्वमेव दण्डे अस्तीति रीत्या उभयाभावमादाय असम्भवः स्यात् । तद्वारणाय प्रतियोगितानवच्छेदकधर्मवत्त्वनिवेशः । यद्धर्म-पुरस्कारेण कारणत्वं विवक्षितं तस्मिन् धर्मे प्रतियोगितानवच्छेदकत्वं विवक्षितम् । दण्डत्वचक्रत्वादिना दण्डचक्रादीनां कारणत्वं विवक्षितम् दण्डत्वादेस्तु तादृशप्रतियोगितानवच्छेदकत्वमस्त्येव इति लक्षण-समन्वयः । नातः प्रमेयत्वमादाय रासभादावतिव्याप्तिः ।

## दीपिका

### अन्यथासिद्धिनिरूपणम्

ननु तन्तुरूपमपि पटं प्रति कारणं स्यात् इति चेत् - न । **'अनन्यथासिद्धत्वे सति'** इति विशेषणात् । **अनन्यथासिद्धत्वम्** अन्यथासिद्धिरहितत्वम् । अन्यथासिद्धिः त्रिविधा - **येन सहैव** यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तेन तदन्यथासिद्धम् । यथा तन्तुना तन्तुरूपं तन्तुत्वं च पटं प्रति । अन्यं प्रति पूर्ववृत्तित्वे ज्ञात एव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते तं प्रति तदन्यथासिद्धम् । यथा शब्दं प्रति पूर्ववृत्तित्वे ज्ञात एव पटं प्रति आकाशस्य । अन्यत्र क्लृप्तनियतपूर्ववर्तिन एव कार्यसम्भवे तत्सहभूतं अन्यथासिद्धम् । यथा पाकजस्थले गन्धं प्रति रूपप्रागभावस्य । एवं च अनन्यथासिद्धनियतपूर्ववृत्तित्वं कारणत्वम् ।

## प्रकाशिका

**कारणं स्यादि**ति । तस्य नियतपूर्ववृत्तित्वादिति भावः । निबन्धान्तरेषु अन्यथासिद्धेः पञ्चविधत्वेऽपि **मणिकारमता**भिप्रायेणाह - **त्रिविधे**ति । **येन सहैवे**त्यादि । येन तन्तुना सहैव यस्य तन्तुरूपस्य तन्तुत्वस्य च यं पटं प्रति पूर्ववृत्तित्वमवगम्यते तं पटं प्रति तन्तन्तुरूपं तन्तुत्वं च तेन तन्तुना अन्यथासिद्धमित्यर्थः । अत्र सहितत्वम् एकज्ञानविषयत्वं बोध्यम् । तन्तुरूपस्य पटपूर्ववृत्तित्वज्ञाने अनतिप्रसक्ततन्तुरूपत्वेनैव विषयता वाच्या । तथा च तन्तुरूपं अन्यथासिद्धमिति । एवं तन्तुत्वस्य पूर्ववृत्तित्वज्ञानमपि तन्तुविषयकमेवेति तदप्यन्यथासिद्धमिति भावः । अत्र'येन'इत्यस्य'स्वतन्त्रान्वयव्यतिरेकशालिना' इति 'यस्य' इत्यस्य च'स्वतन्त्रान्वयव्यतिरेकशून्यस्य'इति विशेषणं बोध्यम् । तेन न अतथाभूतेन तन्तुत्वेन तन्तोरन्यथासिद्धिः, न वा तन्तुसंयोगस्य तन्तुना अन्यथासिद्धिरिति सङ्क्षेपः । ''इतरान्वयव्यतिरेकप्रयुक्तान्वयव्यतिरेकशालि यत् तत् अन्यथासिद्धम्'' इति तु **परे** । **शब्दं प्रती**ति । आकाशत्वं हि शब्दसमवायिकारणत्वम् । तथा च शब्दकारणत्वम-

गृहीत्वा आकाशस्य आकाशत्वेन घटपूर्ववृत्तित्वं ग्रहीतुम् अशक्यं इत्याकाशोऽन्यथासिद्ध इत्यर्थः । **अन्यत्र क्लृप्तेति** । अपाकजस्थले गन्धं प्रति क्लृप्तनियतपूर्ववृत्तिना गन्धप्रागभावेनैव पाकजस्थलेऽपि तत्सम्भवे रूपप्रागभावोऽन्यथासिद्ध इत्यर्थः । अथ एवं नियतपदं व्यर्थम्, अनियतरासभादेः तृतीयान्यथासिद्धत्वेन सत्यन्तेनैव वारणसम्भवात् इति चेत् - न । घटसामान्यं प्रति अन्यथासिद्ध्यसंभवात् अन्यत्र घटभिन्ने पटादौ क्लृप्तपूर्ववर्तिनः तन्त्वादितः घटोत्पत्त्यसम्भवादिति ।

नवीनाः पुनरेवमाहुः - लघुनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नं अन्यथासिद्धं इत्येकविधमेव अन्यथासिद्धत्वम् । लघुत्वं च शरीरकृतमुपस्थितिकृतं संबन्धकृतम् च । तत्र प्रथमम् - अनेकद्रव्यसमवेतत्वापेक्षया महत्त्वे । द्वितीयम् - गन्धं प्रति रूपप्रागभावापेक्षया गन्धप्रागभावे, गन्धस्य प्रतीयोगिन उपस्थितत्वेन शीघ्रं तदुपस्थितेः । तृतीयम् - दण्डत्वदण्डरूपाद्यपेक्षया दण्डादौ, स्वाश्रयदण्डसंयोगादिरूपपरम्परया गुरुत्वात् । एवं चैतावतैव निर्वाहे अन्यथासिद्धिः त्रिविधा पञ्चविधा चेति प्रपञ्चो व्युत्पत्तिवैचित्र्याय ।

न च अनियतरासभादेः तृतीयान्यथासिद्धत्वेनैव वारणात् नियतपदं व्यर्थमिति वाच्यम् । यतः अन्यथासिद्धत्वस्य अनुगतस्य दुर्वचतया यत्र यत्र प्रामाणिकानां अन्यथासिद्धत्वव्यवहारः तत्तद्भेदकूटं निवेशनीयम् । लघुनियतेत्यादिकं तु भेदप्रतियोगितत्तद्व्यक्तिपरिचायकम् । इत्थं च अनियतानन्तरासभादीनां एकेन नियतत्वविशेषणेनैव वारणात् तत्तद्भेदकूटनिवेशे गौरवम् । नियतानां दण्डत्वादीनां तु अनायत्या तत्तद्भेदवत्त्वं निवेशनीयमित्यभिसन्धिः ।

## बालप्रिया

**निबन्धान्तरेष्विति-कुसुमाञ्जलिव्याख्याने प्रकाशे** वर्धमानोपाध्यायैः पञ्चविधा अन्यथासिद्धयः प्रदर्शिताः, तदनुसारेण **मुक्तवल्यां** च । **मणिकारैस्तु शक्तिवादे** त्रिविधा एवान्यथासिद्धयः प्रदर्शिताः । तदनु-

सारेण **दीपिकायामपि । सहितत्वमेकज्ञानविषयत्वमिति ।** तथा च यस्य पूर्ववृत्तित्वमवगाहमाने ज्ञाने नियमेन तदाश्रयस्यापि भानं भवति तत् अन्यथासिद्धमिति फलति । 'तन्तुरूपं पटपूर्ववृत्ति' इति ज्ञाने तन्तुरूपाश्रयस्य तन्तोरपि विषयत्वात् 'तन्तुत्वं पटपूर्ववृत्ति' इति ज्ञाने विशेष्यतावच्छेदकतया तन्तुत्वत्वस्य भानात् तन्तुत्वत्वस्य तन्त्वितरावृत्तित्वे सति तन्तुवृत्तित्वरूपत्वात् तन्तूनामपि भानाच्च तन्तुरूपं तन्तुत्वं च पटं प्रत्यन्यथासिद्धमित्यर्थः । [1]तत्कार्यनिरूपितनियतपूर्ववृत्तित्वग्रहनिरूपितस्वनिष्ठविशेष्यतावच्छेदकीभूतस्वाश्रयकत्वं प्रथमान्यथासिद्धत्वमिति यावत् ।

ननु 'रूपं पटपूर्ववृत्ति' इत्याकारकं रूपत्वेन तन्तुरूपावगाहिज्ञानमुपगम्यते तत्र तन्तूनामविषयत्वात् तन्तुना सहैव पूर्ववृत्तित्वं नावगम्यत इति कथं तन्तुरूपस्य अन्यथासिद्धत्वमित्याशङ्क्याह - **तन्तुरूपस्येति** । रूपत्वस्य पटपूर्ववृत्तित्वातिप्रसक्ततया तदवच्छेदेन पटपूर्ववृत्तित्वग्रहो न सम्भवति, अन्यूनानतिप्रसक्तधर्मस्यैवावच्छेदकत्वात्। अपि तु अनतिप्रसक्ततन्तुरूपत्वावच्छिन्ने एव पटपूर्ववृत्तित्वं ज्ञायत इति वक्तव्यम् । तस्मिन् ज्ञाने तु तन्तूनामपि [2]विशेष्यतावच्छेदकतया विषयत्वमावश्यकमिति भावः । **तन्तुत्वस्य पूर्ववृत्तित्वज्ञानमपि तन्तुविषयकमेवेति** । 'तन्तुत्वं पटपूर्ववृत्ति' इति ज्ञाने तन्तुत्वस्य विशेष्यत्वात् जातेः यत्र विशेष्यतया भानं तत्र किंचिद्रूपेणैव भानमिति नियमात् तन्तुत्वत्वेन तन्तुत्वभानं वक्तव्यम् । तन्तुत्वत्वं च तन्त्वितरावृत्तित्वे

---

1. तत्कार्यनिरूपितेत्यादि । तत्कार्यं पटः तन्निरूपितं यत् नियतपूर्ववृत्तित्वं तद्विषयकग्रहः 'तन्तुरूपं तन्तुत्वं वा पटनियतपूर्ववृत्ति' इत्याकारको ग्रहः तन्निरूपिता या स्वनिष्ठा विशेष्यता तन्तुरूपनिष्ठा तन्तुत्वनिष्ठा वा विशेष्यता तदवच्छेदकीभूतः यः स्वाश्रयः तन्तुरूपस्य तन्तुत्वस्य वा आश्रयः तन्तुः तत्कत्वं तन्तुरूपे तन्तुत्वे चास्तीति समन्वयः ।

2. विशेष्यतावच्छेदकतयेति । तन्तुरूपमित्यस्य समवायसम्बन्धेन तन्तुविशिष्टं रूपमित्यर्थः । तथा च 'तन्तुरूपं पटपूर्ववृत्ति' इति ज्ञाने विशेष्ये रूपे तन्तूनामपि विशेषणत्वात् विशेष्यतावच्छेदकत्वमावश्यकमिति भावः ।

सति सकलतन्तुवृत्तित्वरूपमिति तन्तुत्वत्वघटकतया तन्तूनामपि भानमवर्जनीयम् । एवं च तन्तुत्वविशेष्यकपूर्ववृत्तित्वज्ञानस्य तन्तुविषयकत्वनैयत्यमित्याशयः । यद्वा यद्विषयकत्वव्याप्यं पूर्ववृत्तित्वप्रकारकज्ञानीयं यद्विशेष्यकत्वं तत् अन्यथासिद्धमिति यावत् ।

ननु प्रथमयत्पदेन तन्तुमुपादाय तद्विषयकत्वव्याप्यत्वं 'तन्तुत्वं पटपूर्ववृत्ति' इति ज्ञानीयतन्तुत्वविशेष्यकत्वेऽस्तीति तन्तुत्वस्यान्यथासिद्धत्वोपपादने, प्रथमयत्पदेन तन्तुत्वमुपादाय तद्विषयकत्वव्याप्यत्वं 'तन्तुः पटपूर्ववर्ती' इति ज्ञानीयतन्तुविशेष्यकत्वेऽस्तीति तन्तुत्वेन तन्तोरप्यन्यथासिद्धत्वं स्यात् । एवं 'तन्तुसंयोगः पटपूर्ववर्ती' इति ज्ञानीयतन्तुसंयोगविशेष्यकत्वे तन्तुविषयकत्वव्याप्यत्वमस्तीति तन्तुना तन्तुसंयोगस्य अन्यथासिद्धत्वं स्यात् इति, अत आह - **अत्र येनेत्यस्येत्यादिना** । तथा च स्वतन्त्रान्वयव्यतिरेकशालि यद्विषयकत्वव्याप्यं पूर्ववृत्तित्वज्ञानीय - स्वतन्त्रान्वयव्यतिरेकशून्ययद्विशेष्यकत्वं तेन तदन्यथासिद्धमिति फलति । तन्तुत्वस्य स्वातन्त्र्येण पटं प्रति अन्वयव्यतिरेकौ न स्तः । किं तु तन्तोरन्वयव्यतिरेकावनुसृत्यैव । अतः प्रथमयत्पदेन तन्तुत्वस्य ग्रहणासम्भवात् न तन्तुत्वेन तन्तोरन्यथासिद्धिरिति भावः । तन्तुवत् तन्तुसंयोगस्य स्वतन्त्रान्वयव्यतिरेकौ स्तः, असमवायिकारणत्वात् । अतः प्रथमयत्पदेन तन्तुं गृहीत्वा तद्विषयकत्वव्याप्यत्वस्य 'तन्तुसंयोगः पटपूर्ववृत्ति' इति ज्ञानीय तन्तुसंयोगविशेष्यकत्वे सत्त्वेऽपि तन्तुसंयोगे स्वतन्त्रान्वयव्यतिरेकशून्यत्वाभावात् न द्वितीययत्पदेन तस्य ग्रहणं शक्यमिति न तस्यान्यथासिद्धिरिति भावः । तथा च प्रथमयत्पदार्थे स्वतन्त्रान्वयव्यतिरेकशालीति विशेषणस्य प्रयोजनमाह - **तेन न अतथाभूतेने**ति । स्वतन्त्रान्वयव्यतिरेकशून्येनेत्यर्थः । द्वितीययत्पदार्थे स्वतन्त्रान्वयव्यतिरेकशून्यत्वनिवेशफलमाह - **न वे**ति । लाघवादाह- **इतरान्वयव्यतिरेकप्रयुक्ते**ति । **आकाशत्वं ही**त्यादि । आकाशस्य घटनियतपूर्ववृत्तित्वेऽपि घटकारणत्वं नाङ्गीक्रियते, अन्यथासिद्धत्वात् । तस्य तु अन्यं प्रतीत्यादि द्वितीयान्यथासिद्धत्वम् । घटं प्रति आकाशस्य

पूर्ववृत्तित्वं आकाशत्वेन ग्राह्यम् । आकाशत्वं च शब्दसमवायिकारणत्वम् । तथा च शब्दं प्रति पूर्ववृत्तित्वं गृहीत्वैव आकाशस्य घटं प्रति पूर्ववृत्तित्वं ग्राह्यमिति आकाशं अन्यथासिद्धमिति भावः । **अपाकजस्थल** इत्यादि । यत्र घटादौ विजातीयतेजस्संयोगरूपपाकवशात् पूर्वरूपरसगन्धस्पर्शनाशपूर्वकं रूपान्तररसान्तरादीनामुत्पत्तिः तत्र रूपान्तराद्युत्पत्तेः प्राक् चतुर्णामपि रूपरसादिप्रागभावानां नियमेन सत्त्वात् पाकजगन्धं प्रति गन्धप्रागभाववत् रूपप्रागभावोऽपि कारणं भवतु इति शङ्का गन्धं प्रति रूपप्रागभावस्यान्यथासिद्धत्वात् वारणीया । तस्य 'अन्यत्र क्लृप्ते'त्यादिनोक्तं तृतीयान्यथासिद्धत्वं भवति । अन्यत्र - पाकजादन्यस्मिन् अपाकजे गन्धे नियतपूर्ववृत्तित्वेन क्लृप्तात् गन्धप्रागभावादेव पाकजगन्धस्यापि सम्भवेन तद्भिन्नः रूपप्रागभावः अन्यथासिद्ध इति भावः[1] । **अथैवमिति** । 'अन्यत्र क्लृप्ते'त्यादिरूपेण तृतीयान्यथासिद्धवर्णन इत्यर्थः । **नियतपदं व्यर्थमिति** । 'कार्यनियतपूर्ववृत्ति' इति कारणलक्षणे कार्यपूर्ववृत्ति इत्येतावन्मात्रोक्तौ यद्घटोत्पत्तेः पूर्वं यदृच्छया रासभोऽपि वर्तते, तत्र रासभस्यापि तद्घटपूर्ववृत्तित्वात् घटकारणत्वापत्तिरिति तद्वारणाय नियतपदमुपात्तम् । तदुपादाने च घटव्यापकत्वं रासभे नास्तीति नातिव्याप्तिः । परं तु तद्घटादन्यस्मिन् घटान्तरे क्लृप्तनियतपूर्ववर्तिभिः दण्डचक्रादिभिरेव तद्घटस्यापि सम्भवे तद्भिन्नरासभस्यान्यथासिद्धत्वात् अनन्यथासिद्धत्वदलेनैव रासभवारणसम्भवात् नियतपदं व्यर्थमिति शङ्कितुराशयः । **सत्यन्तेनैवेति** । अनन्यथासिद्धत्वे सतीत्यनेनैवेत्यर्थः । समाधत्ते - **घटसामान्यं प्रतीति** । तद्घटत्वावच्छिन्नं प्रति रासभस्य

---

1. एतत् पीलुपाकवादिनां मतमनुसृत्य । तन्मते परमाणुगन्धस्यैव पाकजन्यत्वात् द्व्यणुकाद्यवयविगन्धस्य अवयवगतगन्धजन्यत्वाङ्गीकारेण अपाकजगन्धपदेन द्व्यणुकादिगन्धस्य ग्रहीतुं शक्यत्वात् । पिठरपाकवादिनां मते तु अवयविगन्धस्यापि पाकजन्यत्वात् अपाकजः पार्थिवगन्धः अप्रसिद्धः । जले तु गन्धस्यैवाभावात् अपाकजगन्धपदेन जलीयगन्धस्योपादानासंभवात् । तन्मतानुसारेण पाकजरूपं प्रति गन्धप्रागभावस्य रसप्रागभावस्य वा कारणत्वं भवतु इति शङ्का, अन्यथासिद्धत्वेन समाधानं च वक्तव्यम् ।

पूर्वोक्तरीत्या अन्यथासिद्धत्वेऽपि घटत्वावच्छिन्नं प्रत्यन्यथासिद्धत्वं न सम्भवति । तदा हि 'अन्यत्र' इत्यस्य घटत्वावच्छिन्नात् अन्यस्मिन् इत्यर्थः । तथा च घटसामान्यभिन्ने पटादौ क्लृप्तनियतपूर्ववर्तिभिः तन्त्वादिभिः घटस्यासंभवात् अन्यथासिद्धलक्षणं रासभे नास्तीति अनन्यथासिद्धे तत्रातिव्याप्तिवारणाय नियतपदमावश्यकमिति भावः ।

त्रयाणामन्यथासिद्धानां संग्राहकमेकं लक्षणं वदतां नवीनानां मतमाह - **नवीनाः पुनरि**ति । लघु यत् कार्यनियतपूर्ववृत्ति तत एव कार्यसम्भवे तद्भिन्नं अन्यथासिद्धम् । लघुत्वं शरीरतः उपस्थित्या सम्बन्धेनेति त्रिविधम् । प्रत्यक्षं प्रति अनेकद्रव्यसमवेतत्वं कारणं वा महत्त्वं कारणं वेति सन्देहे अनेकद्रव्यसमवेतत्वापेक्षया शरीरतो लाघवं महत्त्वे अस्तीति लघुनियतपूर्ववृत्तिना महत्त्वेनैव प्रत्यक्षसम्भवे तद्भिन्नं अनेकसमवेतत्वं अन्यथासिद्धम् । अतो न तत्प्रत्यक्षकारणम् । गन्धं प्रति गन्धप्रागभावः कारणं वा रूपप्रागभावो वा इति सन्देहे गन्धरूपप्रतियोगिन्युपस्थिते झटिति गन्धप्रागभाव एवोपस्थितो भवति न रूपप्रागभाव इति शीघ्रोपस्थितिरूपलाघवेन गन्धप्रागभाव एव कारणं रूपप्रागभावस्तु अन्यथासिद्धः । एवं घटं प्रति दण्डः कारणं वा दण्डत्वदण्डरूपादिकं कारणं वा इति सन्देहे उभयोर्नियतपूर्ववृत्तित्वेऽपि दण्डस्य संयोगसंबन्धेन कारणत्वम् । दण्डत्वदण्डरूपादीनां तु स्वाश्रयदण्डसंयोगरूपपरम्परासम्बन्धेन कारणत्वमिति सम्बन्धलाघवं दण्ड एवास्तीति तत एव घटसम्भवे तद्भिन्नं दण्डत्वदण्डरूपादिकं अन्यथासिद्धमित्यर्थः । **व्युत्पत्तिवैचित्र्याये**ति । बुद्धिवैशद्यायेत्यर्थः ।

**अनुगतस्य दुर्वचतये**ति । लघुत्वस्य शरीरकृतसम्बन्धकृतादिभेदेन नानारूपतया अन्यथासिद्धत्वं एकमनुगतं न शक्यते वक्तुम् । एवं लघुत्वविरोधिगुरुत्वस्यापि भिन्नतया तद्भिन्नमित्यस्य गुरुभूतमित्यर्थकतया गुरुत्वमेव अन्यथासिद्धत्वमिति पर्यवसानात् । तस्मात् यत्र यत्र प्रामाणिकानां अन्यथासिद्धत्वव्यवहारः तावत्प्रतियोगिकभेदकूटवत्त्वं कारण-

लक्षणे निवेशनीयम् । तत्र कार्याव्यापकाः ये अनन्ताः रासभादयः तेषां व्यापकत्वार्थकनियतपदेनैव वारणसम्भवात् तावद्भेदानां निवेशः अनावश्यकः । कार्यव्यापकानां दण्डत्वादीनां तु भेदः कारणलक्षणे निवेशनीय इति नियतपदं अनन्यथासिद्धत्वं च कारणलक्षणे निवेशितवतो ग्रन्थकारस्याशय इति भावः ।



**तर्कसङ्ग्रहः**

| कार्यंप्रागभावप्रतियोगि । |
|---|

**दीपिका**

कार्यलक्षणमाह - **कार्यमिति** ।



**तर्कसङ्ग्रहः**

**कारणविभागः**

कारणं त्रिविधम् - समवायि-असमवायि-निमित्तभेदात् । यत्समवेतं कार्यमुत्पद्यते तत्समवायिकारणम् । यथा तन्तवः पटस्य, पटश्च स्वगतरूपादेः । कार्येण कारणेन वा सह एकस्मिन् अर्थे समवेतं सत्कारणं असमवायिकारणम् । यथा तन्तुसंयोगः पटस्य, तन्तुरूपं पटगतरूपस्य च । तदुभयभिन्नं कारणं निमित्तकारणम् । यथा तुरीवेमादिकं पटस्य । तदेतत्त्रिविधकारणमध्ये यदसाधारणं कारणं तदेव करणम् ।

**दीपिका**

कारणं विभजते - **कारणमिति** । समवायिकारणस्य लक्षणमाह - **यत्समवेतमिति** । यस्मिन् समवेतमित्यर्थः । असमवायिकारणं लक्षयति- **कार्येणेति** । 'कार्येण' इत्येतदुदाहरति - **तन्तुसंयोग** इति । कार्येण पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुसंयोगः पटस्यासमवायिकारणमित्यर्थः । 'कारणेन' इत्येतत् उदाहरति - **तन्तुरूपमिति** । कारणेन पटेन सह एकस्मिन् तन्तौ समवेतत्वात् तन्तुरूपं पटरूपस्यासमवायिकारण-

मित्यर्थः । निमित्तकारणं लक्षयति - **तदुभयेति** । समवाय्यसमवायिभिन्नकारणं निमित्तकारणमित्यर्थः । करणलक्षणमुपसंहरति - **तदेतदिति** ।

## प्रकाशिका

**यस्मिन् समवेतमित्यर्थ** इति । यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्ने समवायेनोत्पद्यते, तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणमिति परमार्थः । **कारणेन पटेनेति** । स्वकार्य-समवायिकारणेन पटेन इत्यर्थः । स्वं तन्तुरूपम् । पटादिकं प्रति तुरीतन्तुसंयोगादीनां असमवायिकारणत्ववारणाय तत्तदसमवायिकारणलक्षणे तत्तद्भिन्नत्वं देयमिति दिक् ।

## बालप्रिया

**यद्धर्मावच्छिन्नमिति** । समवायसम्बन्धावच्छिन्नघटत्वावच्छिन्न - कार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्नकारणत्वं घटसमवायिकारणस्य लक्षणम् । समवायेन कार्यसामान्यं प्रति तादात्म्येन द्रव्यं कारणमिति सामान्यकार्यकारणभावोऽप्रामाणिक इत्यभिप्रेत्यैवमुक्तम् । तादृशकार्यकारणभावस्य प्रामाणिकत्वे तु समवायसम्वन्धावच्छिन्न-कार्यतानिरूपित-तादात्म्यसम्बन्धावच्छिन्न-कारणत्वमिति सामान्य-लक्षणमपि भवितुमर्हति । कार्यतायां समवायसम्बन्धावच्छिन्नत्वानिवेशे विषयतासम्बन्धेन घटप्रत्यक्षं प्रति तादात्म्यसम्बन्धेन घटस्य निमित्तकारणतया विषयतासम्बन्धावच्छिन्न-घटप्रत्यक्षनिष्ठकार्यता-निरूपित-तादात्म्यसम्बन्धावच्छिन्न-कारणतावति घटे अतिव्याप्तिः अतः तन्निवेशः । कारणतायां तादात्म्यसम्बन्धावच्छिन्नत्वानिवेशे समवायसम्बन्धेन घटं प्रति कपालसंयोगस्य समवायसम्बन्धेन कारणतया समवायसम्बन्धावच्छिन्न-घटनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्नकारणतावति घटासमवायिकारणे कपालद्वयसंयोगे अतिव्याप्तिः । तद्वारणाय तन्निवेशः । एवं समवायसम्बन्धावच्छिन्न - कार्यतानिरूपित-समवाय-स्वसमवायिसमवेतत्वान्यतरसम्बन्धावच्छिन्न-कारणत्वं असमवायिकारणत्वम् । तत्र कार्यतायां समवायसम्बन्धाव-

च्छिन्नत्वानिवेशे विषयतासम्बन्धावच्छिन्न - घटप्रत्यक्षनिष्ठकार्यतानिरूपितसमवायसम्बन्धावच्छिन्न - निमित्तकारणतावति घटरूपे अतिव्याप्तिः। कारणतायां समवायसम्बन्धावच्छिन्नत्वानिवेशे तादात्म्यसम्बन्धावच्छिन्नकारणतावति समवायिकारणेऽतिव्याप्तिः। समवायसम्बन्धावच्छिन्नत्वमात्रस्य कारणतायां निवेशे पटरूपं प्रत्यसमवायिकारणे तन्तुरूपेऽव्याप्तिः। समवायेन पटरूपं प्रति तन्तुरूपस्य समवायेन अकारणत्वात्। अतः स्वसमवायिसमवेतत्वसम्बन्धावच्छिन्नत्वनिवेशः। तावन्मात्रनिवेशे पटं प्रति असमवायिकारणे तन्तुसंयोगेऽव्याप्तिः। अतः अन्यतरसम्बन्धनिवेशः। अधिकमन्यत्र।



## तर्कसङ्ग्रहः

प्रत्यक्षलक्षणम्

> तत्र प्रत्यक्षज्ञानकरणं प्रत्यक्षम्। इन्द्रियार्थसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्।

तद्विभागः

तद्द्विविधम् - निर्विकल्पकं सविकल्पकं चेति। निष्प्रकारकं ज्ञानं निर्विकल्पकम्। सप्रकारकं ज्ञानं सविकल्पकम्। यथा 'डित्थः अयम्', 'ब्राह्मणः अयम्,' 'श्यामः अयम्,' 'पाचकः अयम्' इति।

## दीपिका

प्रत्यक्षप्रमाणलक्षणमाह - **तत्रेति**। प्रमाणचतुष्टयमध्य इत्यर्थः। प्रत्यक्षज्ञानस्य लक्षणमाह - **इन्द्रियेति**। इन्द्रियं चक्षुरादिकम्, अर्थः घटादिः, तयोस्संनिकर्षः संयोगादिः, तज्जन्यं ज्ञानमित्यर्थः।

तद्विभजते - **तद्द्विविधमिति**। निर्विकल्पकस्य लक्षणमाह - **निष्प्रकारकमिति**। विशेषणविशेष्यसम्बन्धानवगाहि ज्ञानमित्यर्थः। ननु निर्विकल्पके किं प्रमाणमिति चेत् - न। 'गौः' इति विशिष्टज्ञानं विशेषणज्ञानजन्यं, विशिष्टज्ञानत्वात्, दण्डीति ज्ञानवत् इत्यनुमानस्य

प्रमाणत्वात् । विशेषणज्ञानस्यापि सविकल्पकत्वे अनवस्थाप्रसङ्गात् निर्विकल्पकसिद्धिः । सविकल्पकं लक्षयति - **सप्रकारकमि**ति । नाम-जात्यादिविशेषणविशेष्यसम्बन्धावगाहि ज्ञानमित्यर्थः । सविकल्पक-मुदाहरति - **यथे**ति ।

## प्रकाशिका

ननु तुरीयविषयतानिरूपकस्य निर्विकल्पकज्ञानस्य निरूपकता-सम्बन्धेन प्रकारताशून्यत्वमिव विशेष्यताशून्यत्वं संसर्गताशून्यत्वमपि लक्षणं भवति, विनिगमनाविरहात् इत्यतः लक्षणत्रयं दर्शयति - **विशेषणविशेष्ये**ति । विशेष्यादिविधया विशेष्याद्यनवगाहिज्ञानमित्यर्थः। तथा च ज्ञानत्वघटितं विशेष्यताशून्यत्वम्, विशेषणताशून्यत्वं संसर्ग-ताशून्यत्वं चेति लक्षणत्रयं पर्यवसितमिति भावः ।

केचित्तु - ननु निष्प्रकारकत्वं प्रकारताशून्यत्वम् । प्रकारता च भासमानवैशिष्ट्यप्रतियोगित्वम् । संसर्गविच्छिन्नविषयतेति यावत् । तथा च संसर्गानवगाहिज्ञानत्वमेव संसर्गताशून्यज्ञानत्वमेव वा लक्षण-मास्तां लाघवादित्यतः तथैव मूलार्थमाह-विशेषणविशेष्येतीति-इत्याहुः । तच्चिन्त्यम् - सिद्धान्ते संसर्गताया इव प्रकारताया अपि विलक्षण-विषयतात्मकत्वेन निष्प्रकारकत्वरूपलक्षणे गौरवानवकाशादिति दिक् ।

निर्विकल्पकज्ञानस्य अतीन्द्रियतया तत्र प्रत्यक्षप्रमाणासम्भवात् अनुमानं प्रमाणयति - **गौरि**ति । **विशिष्टज्ञानत्वादि**ति । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणत्वात् नाप्रयोजकताशङ्केति भावः । **अनव-स्थाप्रसङ्गादि**ति । सविकल्पकस्य विशिष्टबुद्धित्वेन विशेषणज्ञान-जन्यत्वनियमादिति भावः । **विशेषणविशेष्यसम्बन्धावगाही**ति । अत्रा-प्युक्तरीत्या लक्षणत्रयं बोध्यम् ।

## बालप्रिया

**तुरीयविषयतानिरूपकस्ये**ति । प्रकारता - विशेष्यता संसर्गतात्रया-तिरिक्तचतुर्थविषयतानिरूपकस्येत्यर्थः । **विशेष्यादिविधये**ति । विशेष्य-

त्वादिप्रकारेणेत्यर्थः । निर्विकल्पके घटः घटत्वं सम्बन्धश्च भासते । परन्तु विशेष्यत्व - विशेषणत्व-संसर्गत्वैः घटादिकं न भासते । तथा च मूले प्रकारशब्दः विशेष्यत्व-विशेषणत्व-संसर्गत्वरूपप्रकारपरः । निष्प्रकारकमित्यस्य तादृशविशेष्यत्वादिप्रकारशून्यमित्यर्थ इति भावः । **अत्राप्युक्तरीत्या लक्षणत्रयमि**ति । प्रकारतानिरूपकत्वं विशेष्यतानिरूपकत्वं संसर्गतानिरूपकत्वमिति लक्षणत्रयमित्यर्थः ।



## तर्कसङ्ग्रहः

### सन्निकर्षविभागः

प्रत्यक्षज्ञानहेतुः इन्द्रियार्थसन्निकर्षः षड्विधः । संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति । चक्षुषा घटप्रत्यक्षजनने संयोगः सन्निकर्षः । घटरूपप्रत्यक्षे संयुक्तसमवायः । चक्षुस्संयुक्ते घटे रूपस्य समवायात् । रूपत्वसामान्यप्रत्यक्षे संयुक्तसमवेतसमवायः । चक्षुस्संयुक्ते घटे रूपं समवेतम् । तत्र रूपत्वस्य समवायात् । श्रोत्रेण शब्दसाक्षात्कारे समवायः सन्निकर्षः । कर्णविवरवृत्त्याकाशस्य श्रोत्रत्वात् । शब्दस्य आकाशगुणत्वात् । गुणगुणिनोः समवायात् । शब्दत्वसाक्षात्कारे समवेतसमवायः सन्निकर्षः । श्रोत्रसमवेते शब्दे शब्दत्वस्य समवायात् । अभावप्रत्यक्षे विशेषणविशेष्यभावः सन्निकर्षः । भूतलं घटाभाववत् इत्यत्र चक्षुस्संयुक्ते भूतले घटाभावस्य विशेषणत्वात् ।

## दीपिका

इन्द्रियार्थसन्निकर्षं विभजते - **प्रत्यक्षे**ति । संयोगसन्निकर्षमुदाहरति - **चक्षुषे**ति । द्रव्यप्रत्यक्षे सर्वत्र संयोगः सन्निकर्षः । आत्मा

मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेन, ततः प्रत्यक्षज्ञानमुत्पद्यते इत्यर्थः । संयुक्तसमवायमुदाहरति - **घटरूपेति** । तत्र युक्तिमाह - **चक्षुस्संयुक्त** इति । संयुक्तसमवेतसमवायमुदाहरति - **रूपत्वेति** । समवायमुदाहरति - **श्रोत्रेणेति** । तदुपपादयति - **कर्णेति** । ननु दूरस्थशब्दस्य कथं श्रोत्रसम्बन्ध इति चेत् - न । वीचीतरङ्गन्यायेन कदम्बमुकुलन्यायेन वा शब्दात् शब्दान्तरोत्पत्तिक्रमेण श्रोत्रदेशे जातस्य श्रोत्रेण सम्बन्धात् प्रत्यक्षत्वसम्भवात् । समवेतसमवायमुदाहरति - **शब्दत्वेति** । विशेषणविशेष्यभावमुदाहरति - **अभावेति** । तदुपपादयति - **घटाभाववदिति** । भूतलं विशेष्यम्, घटाभावो विशेषणम् । भूतले घटो नास्तीत्यत्र अभावस्य विशेष्यत्वं द्रष्टव्यम् ।

## प्रकाशिका

**मन इन्द्रियेणेति** । संयुज्यते इत्यनेनान्वयः । एवमग्रेऽपि । आत्मप्रत्यक्षसङ्ग्रहस्तु आत्मा मनसा संयुज्यते, ततः प्रत्यक्षज्ञानं उत्पद्यते इति योजनान्तरेण । **कथं श्रोत्रसम्बन्ध** इति । न च श्रोत्रस्य नभोरूपत्वेन तत्समवायः दूरस्थशब्देऽप्यक्षत इति शङ्क्यम् । अतिप्रसङ्गभङ्गाय कर्णविवरावच्छिन्ननभोऽनुयोगिकत्वविशिष्टसमवायस्यैव प्रत्यक्षहेतुत्वाङ्गीकारेण तादृशसम्बन्धस्य दूरस्थशब्देऽभावादिति भावः । प्रथमतः भेरीदण्डसंयोगेन नभसि शब्द उत्पद्यते, तेन शब्दाः, तैश्च पुनः शब्दाः इत्येवं क्रमेण निखिलदिगवच्छेदेन शब्दोत्पत्तेरङ्गीकरणीयतया तदंशेऽपि साम्यनिर्वाहाय आह - **कदम्बेति** । **द्रष्टव्यमिति** ।

अत्रेदमवधेयम् - विशेषणतानां संयुक्तविशेषणतात्वादिरूपेण बहुविधत्वेऽपि विशेषणतात्वेनैव परिगणनात् न षड्विधत्वहानिः । न चैवं समवायत्वेनैव संयुक्तसमवायादीनामनुगमः कुतो न कृत इति वाच्यम्; स्वतन्त्रेच्छस्येत्यादिन्यायानुसारेण अदोषादिति ।

बालप्रिया

**एवमग्रेऽपीति** । 'इन्द्रियमर्थेन' इत्यस्यापि'संयुज्यत' इत्यनेनान्वय इति भावः । **अतिप्रसङ्गभङ्गायेति** । सर्वेषामपि शब्दानां प्रत्यक्षप्रसङ्ग-वारणायेत्यर्थः । यथा आद्यवीची समीपदेशे तरङ्गान्तरं जनयति तत्तरङ्गः समीपदेशे तरङ्गान्तरं जनयति, एवं भेर्याद्यसमवायिकारण-काद्यशब्दोऽपि समीपदेशावच्छेदेन शब्दान्तरं जनयति, सोऽपि शब्दः स्वसन्निहितदेशावच्छेदेन शब्दान्तरं जनयतीति रीत्या कर्णविवराव-च्छेदेन उत्पन्नशब्दो गृह्यते इति वीचीतरङ्गन्यायेन शब्दोत्पत्तिक्रमः । यथा प्रथमतः उत्पन्नं कदम्बमुकुलं सर्वदिगवच्छेदेन एकदैवानेकमुकु-लानि जनयति एवं भेर्याद्याकाशसंयोगासमवायिकारणकाद्यशब्दोऽपि सर्वदिगवच्छेदेन एकदैवानेकशब्दान् जनयति । परं तु यद्दिगभिमुखो वायुः तद्दिगवच्छेदेन अधिकशब्दान् जनयतीति कदम्बमुकुलन्यायेन शब्दोत्पत्तिक्रम इति **नृसिंहप्रकाशिकाकाराः** प्राहुः ।

**अत्रेदमवधेयमित्यादि** । विशेषणविशेष्यभावो नाम नैकः सन्नि-कर्षः । अपि तु विशेषणत्वं विशेष्यत्वं चेति सम्बन्धद्वयम् । तत्राभाव-विशेषणकप्रत्यक्षे विशेषणत्वं संनिकर्षः । अभावविशेष्यकप्रत्यक्षे विशे-ष्यत्वं संनिकर्षः । विशेषणत्वं पञ्चविधम् - संयुक्तविशेषणत्वम् , सं-युक्तसमवेतविशेषणत्वम् , संयुक्तसमवेतसमवेतविशेषणत्वम्, समवेत-विशेषणत्वम् , समवेतसमवेतविशेषणत्वम् चेति । एवं विशेष्यत्वमपि संयुक्तविशेष्यत्वम् , संयुक्तसमवेतविशेष्यत्वम् , संयुक्तसमवेतसमवेत-विशेष्यत्वम् , समवेतविशेष्यत्वम् , समवेतसमवेतविशेष्यत्वम् चेति पञ्चविधम् । आहृत्य विशेषणविशेष्यभावो दशविध इति **न्यायभूषणे** प्रत्यपादि ।

तेषां क्रमेण उदाहरणानि - [1]भूतलं घटाभाववत्, [2]तोयस्पर्शः उष्णत्वाभाववान्, [3]नीलत्वं शुक्लत्वाभाववत्, [4]वीणाशब्दः तीव्रत्वाभाववान्, [5]शब्दत्वं भेदाभाववत्, [6]भूतले घटाभावः, [7]तोयस्पर्शे उष्णत्वाभावः, [8]नीलत्वे शुक्लत्वाभावः, [9]वीणाशब्दे तीव्रत्वाभावः, [10]शब्दत्वे भेदाभावः इति । न चैवं विशेष्यविशेषणभावस्य बहुविधत्वे षोढा सन्निकर्ष इति कथमिति वाच्यम् । विशेषणतात्वेन पञ्चविधविशेषणतानां विशेष्यतात्वेन पञ्चविधविशेष्यतानामनुगमं कृत्वा विशेषणताविशेष्यतान्यतरत्वेन दशानामपि परिगणनात् षड्विधत्वस्याहानेः । न च समवायरूपाणां संयुक्तसमवाय - संयुक्तसमवेतसमवाय - समवाय - समवेतसमवायानां चतुर्णामपि समवायत्वेन एकवर्गीकरणं विधाय संयोगः, समवायः, विशेष्यविशेषणभावश्चेति त्रिधैव सन्निकर्षः कुतो न व्यभाजीति वाच्यम् । स्वतन्त्रेच्छेन मुनिना कृते षोढा विभागे नियोगपर्यनुयोगयोः कर्तुमशक्यत्वात् । नियोगः आज्ञा, पर्यनुयोगः प्रश्नः ।

---

1. चक्षुस्संयुक्तं भूतलं तद्विशेषणत्वं घटाभावस्य ।
2. चक्षुस्संयुक्तं तोयं तत्समवेतः स्पर्शः तद्विशेषणत्वम् उष्णत्वाभावस्य ।
3. चक्षुस्संयुक्तो घटः तत्समवेतो नीलः तत्समवेतं नीलत्वं तद्विशेषणत्वं शुक्लत्वाभावस्य ।
4. श्रोत्रसमवेतः वीणाशब्दः तद्विशेषणत्वं तीव्रत्वाभावस्य ।
5. श्रोत्रसमवेतः शब्दः तत्समवेतं शब्दत्वं तद्विशेषणत्वं भेदाभावस्य ।
6. चक्षुस्संयुक्तं भूतलं तन्निरूपितविशेष्यता घटाभावस्य ।
7. चक्षुस्संयुक्तं तोयं तत्समवेतः स्पर्शः तन्निरूपितविशेष्यता उष्णत्वाभावस्य ।
8. चक्षुस्संयुक्तो घटः तत्समवेतो नीलः तत्समवेतं नीलत्वं तन्निरूपितविशेष्यता शुक्लत्वाभावस्य ।
9. श्रोत्रसमवेतो वीणाशब्दः तन्निरूपितविशेष्यता तीव्रत्वाभावस्य ।
10. श्रोत्रसमवेतः शब्दः तत्समवेतं शब्दत्वं तन्निरूपितविशेष्यता भेदाभावस्य ।

मणिकारास्तु - केवलविशेषणता इन्द्रियसम्बद्धविशेषणता चेति विशेषणता द्विविधा। इन्द्रियसम्बद्धविशेषणता, पूर्वोक्तरीत्या पञ्चविधा। केवलविशेषणतायाः उदाहरणं आकाशं शब्दाभाववत् इति शब्दाभावप्रत्यक्षम् - इत्यभिप्रयन्ति। 'विशेषणतया शब्दाभावस्य, इन्द्रियसम्बद्धविशेषणतया समवायघटाभावादेर्ग्रहः' इति संनिकर्षवादे तैः कथनात्॥



### तर्कसङ्ग्रहः

एवं सन्निकर्षजन्यज्ञानम् प्रत्यक्षम्। तत्करणं इन्द्रियम्। तस्मादिन्द्रियं प्रत्यक्षप्रमाणम् इति सिद्धम्॥

**इति तर्कसङ्ग्रहे प्रत्यक्षपरिच्छेदः**

### दीपिका

**अनुपलब्धेः प्रमाणान्तरत्वनिराकरणम्**

एतेन अनुपलब्धेः प्रमाणान्तरत्वं निरस्तम्। यदि अत्र घटः अभविष्यत् तर्हि भूतलमिव अद्रक्ष्यत, दर्शनाभावात् नास्तीति तर्कितप्रतियोगिसत्त्वविरोध्यनुपलब्धिसहकृतेन्द्रियेणैव अभावज्ञानोपपत्तौ अनुपलब्धेः प्रमाणान्तरत्वासम्भवात्। अधिकरणज्ञानार्थमपेक्षणीयेन्द्रियस्यैव करणत्वोपपत्तौ अनुपलब्धेः करणत्वायोगात्। विशेषणविशेष्यभावः विशेषणविशेष्यस्वरूपमेव, नातिरिक्तः सम्बन्धः।

प्रत्यक्षज्ञानमुपसंहरन् तस्य करणमाह - **एवमिति**। असाधारणकारणत्वात् इन्द्रियं प्रत्यक्षज्ञानकरणमित्यर्थः। प्रत्यक्षप्रमाणमुपसंहरति - **तस्मादिति**॥

**इति दीपिकायां प्रत्यक्षपरिच्छेदः**

## प्रकाशिका

**एतेन** - अभावप्रमाया विशेषणविशेष्यभावसंनिकर्षजन्यत्वप्रदर्शनेन । **प्रमाणान्तरत्वम्** - प्रत्यक्षाद्यतिरिक्तप्रमाणत्वम् । ननु अनुपलब्धेः प्रमाणान्तरत्वानङ्गीकारे घटोपलब्धिदशायां तदभावप्रत्यक्षापत्तिः, मम मते तु - अनुपलब्ध्यात्मकप्रमाणान्तराभावात् नापत्तिरिति भाट्टशङ्कां परिजिहीर्षुः योग्यानुपलब्धेः इन्द्रियसहकारित्वमात्रेणैव निर्वाहे अतिरिक्तप्रमाणत्वं न संभवतीत्याह - **यद्यत्रे**त्यादिना । **अत्र** - चक्षुस्संयोगादिमद्भूतले तर्कस्यापादकाभावसाधकविपर्ययप्रतियोग्यापाद्यकत्वरूपविपर्यये तत्कोटिपर्यवसायित्वं दर्शयति - **दर्शनाभावात् नास्ती**ति । तद्दर्शनाभावात् तन्नास्तीत्यर्थः । **तर्किते**त्यादि । तर्किता आपादिता प्रतियोगिनो घटादेः सत्त्वस्य सत्त्वप्रसक्तेः विरोधिनी या उपलब्धिः तत्प्रतियोगिकः अभाव अनुपलब्धिः तत्सहकृतेनेत्यर्थः । विरोधित्वविशेषणं उपलब्धेः अनाहार्यत्वसूचनाय । प्रतियोगिसत्तापादनापादितोपलम्भप्रतियोगिकत्वरूपयोग्यताविशिष्टानुपलब्धिसहकृतेनेति तु परमार्थः । आलोकसंयोगाद्यसत्त्वदशायां यद्यत्र घटः स्यात् तर्हि उपलभ्येत इत्यापादनासम्भवेन योग्यानुपलब्ध्यभावात् न तत्र घटाभावप्रत्यक्षमिति संक्षेपः ।

केचित्तु - **तर्किते**त्यादि । तर्कितं आरोपितं यत् प्रतियोगिसत्त्वम्, तद्विरोधिनी या अनुपलब्धिः तत्सहकृतेनेत्यर्थः । एतावता प्रतियोगिसत्त्वरूप-कारणाभाव-प्रयोज्योपलब्ध्यभावः अभावप्रत्यक्षे कारणम्, न तु इतरकारणविरहप्रयोज्योपलब्ध्यभावः इति सूचितम् । अत एवान्धकारे उपलम्भाभावसत्त्वेऽपि न घटाभावप्रत्यक्षम् - इत्याहुः ।

ननु अभावप्रमायां इन्द्रियस्य करणत्वं अनुपलब्धेः सहकारित्वं च त्वया कल्पनीयम् । तदपेक्षया अनुपलब्धेरेव करणत्वकल्पनं वरम् इत्याशङ्क्य अभावाधिकरणभूतलप्रत्यक्षे इन्द्रियस्य अवश्यमपेक्षणीय-

तया क्लृप्तेनैव इन्द्रियकरणत्वेनाभावप्रत्यक्षोपपत्तौ अनुपलब्धेर्विजातीयप्रमितिकरणत्वकल्पनमयुक्तमित्याह - **अधिकरणे**ति । ननु विशेषण-विशेष्यभावाख्यः अतिरिक्तसम्बन्धः कल्पनीयः त्वयेत्यत आह - **विशेषणविशेष्यभाव इ**ति ।

अत्रेदं बोध्यम् - प्रत्यक्षं द्विविधम् लौकिकम् अलौकिकं चेति । लौकिकत्वं च विषयिताविशेषः । लौकिके षोढा संनिकर्षः कारणम् । अलौकिके तु सामान्यलक्षणा, ज्ञानलक्षणा, योगजधर्मश्चेति त्रिविधा प्रत्यासत्तिः । तत्र सामान्यलक्षणा धूमत्वादिरूपा तज्ज्ञानरूपा वा । सामान्यं लक्षणं स्वरूपं विषयो वा यस्या इति व्युत्पत्तेः । सा चाश्रयाणां निखिलधूमादीनां अलौकिकप्रत्यक्षे उपयुज्यते । अतीतानागत-धूमादिषु चक्षुस्संयोगादेरसम्भवात् इन्द्रियाणां असन्निकृष्टानां प्रत्यक्षाजनकत्वात् । ज्ञानलक्षणा तु सुरभि चन्दनमिति चाक्षुषोपनीतभाने सौरभेण चक्षुषो योग्यसन्निकर्षाभावात् । एवं योगिनां देशकाल-विप्रकृष्टपदार्थप्रत्यक्षे योगजधर्मः प्रत्यासत्तिः कारणम् इति संक्षेपः ॥

## इति प्रकाशिकायां प्रत्यक्षपरिच्छेदः

## बालप्रिया

**नन्वनुपलब्धेरि**त्यादि । अनुपलब्धिर्नाम प्रतियोगिविषयकप्रत्यक्षाभावः । 'भूतलं घटाभाववत्' इत्याकारकघटाद्यभावविषयकप्रमां प्रति घटोपलब्ध्यभावः कारणम् । 'भूतलं घटवत्' इति घटोपलम्भकाले घटाभावप्रमित्यनुदयात् । यदि अभावप्रमां प्रति अनुपलब्धिः न कारणम् तर्हि प्रतियोगिनो घटादेरुपलम्भकालेऽपि घटाद्यभावप्रमायाः आपत्तिः अतः अनुपलब्धिः अभावप्रमां प्रति कारणतया पृथक्प्रमाण-मिति भाट्टाः । नैयायिकास्तु अनुपलब्धिसहकृतेन्द्रियलिङ्गादिभि-

रेव अभावविषयकप्रत्यक्षानुमित्यादेरुपपत्त्या अभावविषयकप्रमा न प्रत्यक्षादिप्रमितिविलक्षणा, तथा तत्साधनमपि न प्रत्यक्षादिप्रमाणविलक्षणम्, अपि तु अभावप्रमाजनकेन्द्रियादेः अनुपलब्धिः सहकारिकारणमात्रमित्याशेरते । **तर्कस्ये**त्यादि ।

'व्याप्तिस्तर्काप्रतिहतिरवसानं विपर्यये ।
अनिष्टाननुकूलत्वे इति तर्काङ्गपञ्चकम् ॥'

इत्युक्तरीत्या तर्कस्य पञ्च अङ्गानि अपेक्षितानि । व्याप्तिः आपादकस्य अग्न्यभावादेः आपाद्यस्य धूमाभावादेश्च व्याप्यव्यापकभावः । तर्काप्रतिहतिः- प्रतिकूलतर्काभावः । विपर्यये पर्यवसानम् - यदि वह्न्यभावः स्यात् तर्हि धूमाभावः स्यात् इत्यापादनस्य हि धूमसत्त्वाद्वह्निरेव युक्त इत्येवंरूपे तद्विपर्यये पर्यवसानं भवति । अनिष्टत्वम् - आपाद्यस्य धूमाभावादेः अनिष्टत्वं प्रष्टुः । अननुकूलत्वं प्रतिवादिपक्षसाधकत्वाभावः । तत्र विपर्यये पर्यवसानं परिष्कृत्याह - **आपादकाभावे**ति । आपादकः वह्न्यभावः तस्याभावः वह्न्यभावाभावः वह्निरूपः तस्य साधकः यः विपर्ययः आपाद्यस्य धूमाभावस्याभावः धूमरूपः तस्य प्रतियोगी धूमाभावः आपाद्यः यस्य तर्कस्य तत्त्वं विपर्यये पर्यवसानमित्यर्थः । प्रकृते 'यद्यत्र घटः स्यात् तर्हि भूतलमिव घटोऽद्रक्ष्यत' इत्याकारके तर्के आपादको घटः तस्याभावः घटाभावः तस्य साधको विपर्ययः दर्शनाभावः तस्य प्रतियोगि दर्शनमेव आपाद्यमिति आपादकाभावसाधकविपर्ययप्रतियोग्यापाद्यकत्वं तर्कस्य । तथा च यस्मिंस्तर्के आपादकाभावसाधकाभावप्रतियोगि आपाद्यं भवति तादृशस्थले आपाद्याभावेन हेतुना आपादकाभावे एव पर्यवसानं भवति इति दर्शनाभावात् नास्तीत्यनेन दर्शितम् । दर्शनाभावादित्यस्य घटदर्शनाभावादित्यर्थः, नास्तीत्यस्य घटाभाव इत्यर्थः । केव-

लानुपलब्धेः अभावप्रत्यक्षकारणत्वे आलोकसंयोगाद्यसत्त्वदशायां घटानुपलब्धेः सत्त्वेन घटाभावप्रत्यक्षापत्तिः । अतः योग्यताविशिष्टानुपलब्धेः कारणत्वं वक्तव्यम् । योग्यता च तर्कितप्रतियोगिसत्त्वविरोध्युपलब्धिप्रतियोगिकत्वरूपा । तद्घटकतर्कस्य विपर्यये पर्यवसानं 'यद्यत्र' इत्यादिग्रन्थेन प्रदर्शितमिति भावः। तर्कितेत्यादिमूलं व्याचष्टे - **तर्किता आपादिता** इत्यादिना । यथाश्रुते प्रतियोगिसत्त्वस्य प्रतियोग्युपलब्धिः विरोधिनीति प्रतीयते । तदसङ्गतम् - घटोपलब्धेः घटसत्त्वविरोधित्वाभावात् । अतः **सत्त्वस्य सत्त्वप्रसक्तेरि**ति व्याख्यातम् । घटसत्त्वारोपरूपप्रसक्तेः घटोपलब्धिः विरोधिनी । न हि घटे उपलभ्यमाने 'यद्यत्र घटः स्यात्' इति घटसत्तां कश्चित् प्रसञ्जयेदिति भावः । **अनाहार्यत्वसूचनाये**ति । अनाहार्यज्ञानस्यैव विरोधित्वादिति भावः । सत्त्वस्य सत्त्वप्रसक्तेरिति व्याख्यानेऽपि आपादितत्वरूपं तर्कितत्वं प्रतियोगिसत्त्वस्यैव न तु तत्प्रसक्तेः । किं च यत्र आपादकं आपाद्यं उभयमपि प्रसज्यते तत्रैव विपर्यये पर्यवसानं दृश्यते । मूलात्तु प्रतियोगिसत्त्वरूपापादकस्यैव प्रसञ्जितत्वं लभ्यते, न त्वापाद्याया उपलब्धेः । अतः तात्पर्यार्थमाह - **प्रतियोगिसत्तापादने**ति । प्रतियोगिनः घटादेः सत्त्वस्य आपादनेन प्रसञ्जनेन 'यद्यत्र घटः स्यात्' इत्येवंरूपेण आपादितः प्रसञ्जितः यः उपलम्भः 'तर्ह्युपलभ्येत' इत्येवंरूपप्रसञ्जनविषयः उपलम्भः स प्रतियोगी यस्या अनुपलब्धेः तत्कत्वरूपयोग्यताविशिष्टा अनुपलब्धिरित्यर्थः । योग्यताविशेषणप्रयोजनमाह - **आलोकसंयोगे**ति । **आपादनासम्भवेने**ति । तथा च प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताविरहात् अनुपलब्धेः योग्यानुपलब्धिस्तत्र नास्ति । अतो न घटाभावप्रत्यक्षमिति भावः ।ननु यत्र प्रतियोगिसत्त्वस्य उपलब्धेश्चापादानं विनैव भूतलचक्षुस्संयोगानन्तरं घटो नास्तीति प्रत्यक्षं तत्रापादनघटितयोग्यताविरहात् तत्प्रत्यक्षानुपपत्तिरित्याशङ्क्याह - **संक्षेप** इति । प्रतियोगिसत्तापादनापादितत्वं च प्रतियोगिसत्तापादकापत्तियोग्यत्वम् । अतो नानुपपत्तिरिति भावः ।

**अत एवान्धकार** इति । अन्धकारे यो घटोपलम्भाभावः स न घटसत्त्वाभावप्रयोज्यः अपि तु आलोकसंयोगरूपकारणान्तराभाव-प्रयोज्यः । तथा च प्रतियोगिसत्त्वाभावप्रयोज्योपलब्ध्यभावरूपायाः योग्यानुपलब्धेः तत्राभावात् न घटाभावप्रत्यक्षमिति भावः ।

**धूमत्वादिरूपे**त्यादि । आदौ लक्षणशब्दः स्वरूपबोधकः । द्वितीये तु विषयबोधकः । प्रथमपक्षे धूमत्वाद्यविदुषोऽपि स्वरूपसद्धूम-त्वप्रत्यासत्त्या धूमा इत्येवं यावद्धूमप्रत्यक्षापत्तिरित्यस्वारस्यात् द्वितीय-पक्षानुधावनम् । **चाक्षुषोपनीतभाने** इति । चाक्षुषं यत् स्मृतसौर-भविषयकं ज्ञानमित्यर्थः ॥

**इति तर्कसङ्ग्रहदीपिकाप्रकाशिकाव्याख्यायां**
**बालप्रियायां प्रत्यक्षपरिच्छेदः**



# अनुमानपरिच्छेदः

## तर्कसङ्ग्रहः

**अनुमानलक्षणम्**

| अनुमितिकरणम् अनुमानम् । |
|---|

## दीपिका

अनुमानं लक्षयति - **अनुमितिकरणमिति** ।

## प्रकाशिका

**अनुमानं लक्षयतीति** । प्रत्यक्षोपजीवकसङ्गत्या अनुमानं निरूपयतीत्यर्थः ।

## बालप्रिया

**प्रत्यक्षोपजीवकसङ्गत्येति** । प्रत्यक्षकार्यत्वरूपया सङ्गत्या इत्यर्थः । इन्द्रियेण महानसादौ व्याप्तिप्रत्यक्षादेव अनुमानं भवति । व्याप्तिस्मरणरूपानुमानं प्रति व्याप्तिप्रत्यक्षस्य अनुभवविधया कारणत्वात् । तथा च कार्यकारणभावरूपसङ्गत्या प्रत्यक्षानन्तरमनुमाननिरूपणमिति भावः । अनेन प्रमाणयोः कार्यकारणभाव उक्तः । अनुमित्यात्मकप्रमितेः परामर्शात्मकमानसप्रत्यक्षकार्यत्वात् प्रमित्योः कार्यकारणभावः ज्ञेयः ।



## तर्कसङ्ग्रहः

**अनुमितिलक्षणम्**

| परामर्शजन्यं ज्ञानं अनुमितिः । |
|---|

## दीपिका

अनुमितिं लक्षयति - **परामर्शेति** । ननु संशयोत्तरप्रत्यक्षे अतिव्याप्तिः स्थाणुपुरुषसंशयानन्तरं 'पुरुषत्वव्याप्यकरादिमान् अयम्' इति परामर्शे सति 'पुरुष एव' इति प्रत्यक्षजननात् । न च तत्रानुमितिरेव

इति वाच्यम् । 'पुरुषं साक्षात्करोमि' इत्यनुव्यवसायविरोधादिति चेत्, न-पक्षतासहकृतपरामर्शजन्यत्वस्य विवक्षितत्वात् ।

### प्रकाशिका

**परामर्शेती**ति । तथा च प्रत्यक्षप्रमित्यपेक्षया अनुमितेः विलक्षणप्रमात्वात् अनुमानस्य प्रमाणान्तरत्वं सिध्यतीति भावः । विपरीतज्ञानोत्तरप्रत्यक्षं प्रति विशेषदर्शनस्य हेतुत्वमङ्गीकुर्वतां मतमवलम्ब्य शङ्कते - **नन्वि**ति । **स्थाणुपुरुषसंशये**ति । इदं विरुद्धभावद्वयकोटिकसंशयाङ्गीकारेण । परे तु - **स्थाणुपुरुषे**ति । स्थाणुत्वतदभावपुरुषत्वतदभावकोटिकेत्यर्थः - इत्याहुः । **पुरुष एवे**ति निर्णयसूचनाय । **तत्र** - संशयोत्तरप्रत्यक्षस्थले । **अनुव्यवसायविरोधादि**ति । इदमुपलक्षणम् - 'पुरुषं अनुमिनोमि' इत्यनुव्यवसायाभावेन प्रमाणाभावादित्यपि द्रष्टव्यम् ।

संशयोत्तरप्रत्यक्षे जननीये पक्षतायाः परामर्शसहकारित्वे प्रयोजनाभावेन पक्षतासहकृतपरामर्शजन्यत्वविवक्षणात् नातिव्याप्तिः इत्याह - **पक्षते**ति । एतेन 'वह्निव्याप्यधूमवत्पर्वतवानयं देशः' इति विशिष्टवैशिष्ट्यावगाहिबुद्धिं प्रति विशेषणतावच्छेदकप्रकारकनिर्णयविधया 'वह्निव्याप्यधूमवान् पर्वतः' इति परामर्शस्य कारणत्वेऽपि न तत्रातिव्याप्तिः । पक्षतासहकृतपरामर्शजन्यत्वस्य असत्त्वेन अतिव्याप्तेरभावात् इति सङ्क्षेपः ।

### बालप्रिया

**विलक्षणप्रमात्वादि**ति । प्रत्यक्षप्रमितेः यत् करणं इन्द्रियं तदपेक्षया विलक्षणेन परामर्शात्मकेन कारणेन जन्यत्वात् अनुमितेर्विलक्षणप्रमात्वमिति भावः । **प्रमाणान्तरत्वमि**ति । प्रत्यक्षापेक्षया अतिरिक्तप्रमाणत्वमित्यर्थः । **दीपिकायाम् नन्वि**त्यादिना ग्रन्थेन यत्र दूरे ऊर्ध्वव्यक्तिदर्शनानन्तरं'स्थाणुर्वा पुरुषो वा'इति संशयः ततः'पुरुषत्वव्याप्यकरादिमान्' इति व्याप्यधर्मवत्ताज्ञानरूपः परामर्शः ततः'अयं पुरुषः' इति प्रत्यक्षम्, तस्मिन् प्रत्यक्षे परामर्शजन्यत्वविशिष्टज्ञानत्वरूपस्यानु-

मितिलक्षणस्यातिव्याप्तिः आशङ्किता । तदिदं न सङ्गच्छते । संशयरूप-विपरीतज्ञानानन्तरं 'अयं पुरुषः' इति प्रत्यक्षस्यैव असंभवात् । तद्वत्ता-बुद्धिं प्रति तदभाववत्ताज्ञानस्य प्रतिबन्धकत्वादिति शङ्कायां सत्यपि विपरीतज्ञाने यदि विशेषदर्शनं स्यात् तर्हि तस्य विशेषदर्शनस्य प्रत्यक्ष-जनकत्वं भवतीति [1]मताभिप्रायेण शङ्कत्याह **प्रकाशिकायां विपरीत-ज्ञाने**ति । विपरीतज्ञानपदेनात्र संशयः तदभावनिश्चयरूपो भ्रमश्च विव-क्षितः । तथा च 'अयं स्थाणुर्वा पुरुषो वा' इति संशयानन्तरं जायमानं 'अयं न पुरुषः' इति भ्रमात्मकज्ञानोत्तरं जायमानं च 'अयं पुरुषः' इति प्रत्यक्षं प्रतीत्यर्थः । **विशेषदर्शनस्ये**ति । व्याप्यधर्मदर्शनस्येत्यर्थः । प्रकृते 'पुरुषत्वव्याप्यकरादिमान् अयम्' इति परामर्शो विवक्षितः । **भावद्वय-कोटिके**ति । स्थाणुत्वपुरुषत्वाख्यं यत् भावरूपं धर्मद्वयं तत्प्रकारक-संशयेत्यर्थः । **स्थाणुत्वतदभावे**ति । स्थाणुत्वं तदभावः पुरुषत्वं तदभाव-श्चेति चतुष्प्रकारकसंशयेत्यर्थः । 'स्थाणुर्वा न वा, पुरुषो वा न वा' इति संशयस्याकारः । [2]द्विकोटिकसंशयद्वयं वात्र विवक्षितम् । **प्रमाणाभावा-दि**ति । तत्रानुमितिरेव जायत इत्यत्र प्रमाणाभावादित्यर्थः । तथा च 'अयं पुरुषः' इति निश्चयस्यानुमितित्वे'पुरुषं साक्षात्करोमि' इति साक्षा-त्कारत्वावगाही अनुव्यवसायो नोपपद्यते । अनुमितित्वावगाही 'पुरुष-मनुमिनोमि' इति अनुव्यवसाय एव स्यात् । अतो नानुमितित्वं तस्य निश्चयस्य, अपि तु प्रत्यक्षत्वमेवेति अलक्ष्ये तत्र लक्षणसत्त्वात् अनु-मितिलक्षणस्यातिव्याप्तिरिति भावः । **दीपिकायां पक्षतासहकृते**ति । तथा च परामर्शजन्यत्वमात्रं नानुमितेर्लक्षणम् । अपि तु पक्षतासह-

---

1. अनेन मतान्तरमप्यस्तीति दर्शितम् । तथा हि - संशयोत्तरप्रत्यक्षमात्रे विशेषदर्शनं न हेतुः, अन्धकारे घटसंशयोत्तरप्रत्यक्षस्य विशेषदर्शनं विनापि आलोकसमवधान-मात्रेणैवोपपत्तेः । तथापि यत्र विशेषादर्शनादिदोषाधीनः संशयः तदुत्तरप्रत्यक्षे तस्य हेतुत्वम् । उक्तस्थले च व्यञ्जकाभावाधीनः संशय इति । अधिकं तत्त्वचिन्ता-मणौ प्रामाण्योत्पत्तिवादे तद्व्याख्याने प्रकाशे च द्रष्टव्यम् ।

2. द्विकोटिकेति । स्थाणुर्वा न वेत्याकारकः एकः संशयः, पुरुषो न वेत्याकारकः अपरः संशय इति संशयद्वयमित्यर्थः ।

कृतो यः परामर्शः तज्जन्यत्वम् । संशयोत्तरप्रत्यक्षे तु परामर्शस्य जनकत्वेऽपि पक्षतायाः नोपयोगित्वम्, प्रमाणाभावात्; सिद्धिसत्त्वेऽपि धारावाहिकप्रत्यक्षोत्पत्त्या सिद्ध्यभावरूपायाः पक्षतायाः प्रत्यक्षहेतुत्वासम्भवाच्च । तथा च पक्षतासहकृतपरामर्शजन्यत्वाभावात् नातिव्याप्तिरिति भावः । तदाह **प्रकाशिकायाम् संशयोत्तरप्रत्यक्षे जननीय** इति । **प्रयोजनाभावेनेति** । पक्षतायाः सहकारित्वानङ्गीकारे अनुपपत्त्यभावेनेत्यर्थः । **एतेनेति** । वक्ष्यमाणहेतुना इत्यर्थः । यदि परामर्शजन्यत्वमात्रम् अनुमितेर्लक्षणं स्यात् तदा 'वह्निव्याप्यधूमवत्पर्वतवानयं देशः' इत्याकारकं वन्हिव्याप्यधूमविशिष्टपर्वतवैशिष्ट्यावगाहिप्रत्यक्षं प्रति 'वह्निव्याप्यधूमवानयं पर्वतः' इत्याकारकपरामर्शस्य विशेषणतावच्छेदकीभूतः यः धूमः तत्प्रकारकनिश्चयत्वेन हेतुतया तादृशविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षेऽपि परामर्शजन्यत्वरूपस्य अनुमितिलक्षणस्य सत्त्वात् अतिव्याप्तिः प्रसक्ता । सापि पक्षतासहकृतपरामर्शजन्यत्वस्य अनुमितिलक्षणत्वात् वारयितुं शक्यत इति भावः । तादृशप्रत्यक्षस्य [1]पक्षताजन्यत्वाभावात् ।

## दीपिका

### पक्षतालक्षणम्

सिषाधयिषाविरहविशिष्टसिद्ध्यभावः पक्षता । साध्यसिद्धिः अनुमितिप्रतिबन्धिका । सिद्धिसत्त्वेऽपि 'अनुमिनुयाम्' इतीच्छायामनुमितिदर्शनात् सिषाधयिषा उत्तेजिका । ततश्च उत्तेजकाभावविशिष्ट-

---

1. यद्यपि व्याप्यपक्षोभयवैशिष्ट्यावगाहिज्ञानत्वरूपं यत् परामर्शत्वं तदवच्छिन्नजनकतानिरूपितजन्यताशालिज्ञानत्वमनुमितेर्लक्षणमित्युक्तावपि उक्तविशिष्टवैशिष्ट्यावगाहिप्रत्यक्षेऽतिव्याप्तिवारणं सम्भवति तादृशबुद्धौ परामर्शस्य विशेषणतावच्छेदकप्रकारकनिर्णयत्वेनैव हेतुत्वेन उक्तपरामर्शत्वेन हेतुत्वाभावात् । तथापि संशयोत्तरप्रत्यक्षे व्याप्यपक्षवैशिष्ट्यावगाहिज्ञानत्वेन व्याप्यदर्शनजन्यत्वसत्त्वात् अतिव्याप्तेः पक्षतासहकृतपरामर्शजन्यत्वविवक्षणेनैव वारणीयतया तेनैव विशिष्टवैशिष्ट्यावगाहिप्रत्यक्षवारणसम्भवात् उक्तपरामर्शत्वावच्छिन्नजनकता न निवेश्येति भावः ।

मण्यभावस्य दाहकारणत्ववत् सिषाधयिषाविरहविशिष्टसिद्ध्यभाव-स्याप्यनुमितिकारणत्वम् ।

यद्यपि साध्यसंशयस्य पक्षतात्वेऽपि साध्यनिश्चयकाले अनुमिति-वारणं सम्भवति, तथापि घनगर्जितेन मेघानुमितौ व्यभिचारः । अतः अन्यादृशीं पक्षतामाह - **सिषाधयिषे**ति । सिषाधयिषायाः साध्यानु-मितीच्छायाः समवायेन यः अभावः स्वरूपसमवायोभयघटितसामाना-धिकरण्यसम्बन्धेन तद्विशिष्टायाः सिद्धेः समवायेन अभाव इत्यर्थः । साध्यसिद्धिः - पक्षतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टसाध्य-वैशिष्ट्यावगाहिनिश्चयः । सिद्धौ सिषाधयिषाविरहवैशिष्ट्यनिवेश-नस्य प्रयोजनं दर्शयति - **सिद्धिसत्त्वेऽपी**ति । अत्र सिद्धिश्च 'पर्वतो वह्निमान् वह्निव्याप्यधूमवांश्च' इति समूहालम्बनरूपा । अतः परा-मर्शसम्पत्तिरिति ध्येयम् ।

## बालप्रिया

'साध्यसंशयः पक्षता' इति प्राचीनोक्त्युपेक्षायाः बीजमाह - **यद्यपी**त्यादिना । साध्यनिश्चयरूपसिद्धिकालेऽनुमितिवारणं हि पक्षतायाः अनुमितिहेतुत्वाङ्गीकारस्य उद्देश्यम् । तत्तु साध्यसंशयस्य पक्षतात्वे-ऽपि निर्वहति । साध्यनिश्चयकाले साध्यसंशयरूपपक्षतायाः अभावादेव नानुमितिः इत्येवंरीत्या अनुमितिवारणसम्भवात् । तथा च साध्य-संशय एव पक्षता अस्तु इति शङ्कितुर्भावः । **तथापी**ति । साध्य-संशयरूपपक्षतायाः नानुमितिहेतुत्वम् । विनापि साध्यसंशयं घन-गर्जनश्रवणेन [1]मेघानुमितेः व्यतिरेकव्यभिचारादिति समाधातु-राशयः । **व्यभिचार** इति । कारणाभावेऽपि कार्योत्पत्तिरूपो व्यति-रेकव्यभिचारोऽत्र विवक्षितः । **अन्यादृशीमि**ति । साध्यसंशयादन्यविधा-मित्यर्थः ।

---

1. अयं प्रदेशः मेघवान् घनगर्जनवत्वादित्यनुमानमत्र विवक्षितम् ।

**दीपिकायाम् सिषाधयिषाविरहविशिष्टेत्यादि** । यत्र साध्यनिश्चयरूपा सिद्धिरस्ति तत्रापि यदि 'पक्षे साध्यं अनुमिनुयाम्' इत्याकारा सिषाधयिषा अस्ति तदानुमितिर्भवति । सिद्धचभावमात्रस्य पक्षतात्वे सा न स्यात्, सिद्धेरेव तत्र सत्त्वात् । अतस्तत्र पक्षतासम्पत्तये सिषाधयिषाविरहविशिष्टेति सिद्धेर्विशेषणं दत्तम् । उक्तस्थले सिषाधयिषायाः सत्त्वेन सिषाधयिषाविरहरूपविशेषणाभावात् सिषाधयिषाविरहविशिष्टसिद्धचभावस्याक्षततया पक्षता निर्वहति । एवं च सिषाधयिषा उत्तेजिकेति फलितम् । उत्तेजकत्वं च प्रतिबन्धकसमवधानकालीनकार्योत्पादकप्रयोजकत्वम् । सिद्धिरूपप्रतिबन्धकसत्ताकालेऽपि सिषाधयिषायाः अनुमितिरूपकार्योत्पादप्रयोजकत्वात् उत्तेजकत्वम्, यथा मणिरूपप्रतिबन्धकाले दाहोत्पत्तिप्रयोजकत्वात् मन्त्रादेरुत्तेजकत्वम् । उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य कार्योत्पत्तिं प्रति हेतुत्वात् सिषाधयिषाविरहविशिष्टसिद्धचभावस्य अनुमितिहेतुत्वमिति भावः । सिषाधयिषा नाम साध्यानुमितिविषयकेच्छा ।

सिषाधयिषाविरहः सिषाधयिषानिष्ठप्रतियोगितानिरूपकोऽभावः । तत्र प्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वं निवेशनीयम् । अन्यथा यत्र सिद्धिः सिषाधयिषा चास्ति तत्र सिषाधयिषायाः संयोगसम्बन्धेनाभावात् सिषाधयिषानिष्ठसंयोगसम्बन्धावच्छिन्नप्रतियोगिताकाभावविशिष्टसिद्धेरेव सत्त्वेन तदभावरूपपक्षता न स्यात् । तन्निवेशे च तत्र समवायसम्बन्धेन सिषाधयिषायाः सत्त्वेन तत्सम्बन्धावच्छिन्नसिषाधयिषानिष्ठप्रतियोगिताकाभावरूपविशेषणाभावात् विशिष्टाभावरूपा पक्षता निर्वहतीति । एवं सिषाधयिषाविरहवैशिष्ट्यं सिद्धौ सामानाधिकरण्यसम्बन्धेन । अन्यथा स्वरूपसम्बन्धेन सिषाधयिषाविरहवैशिष्ट्यनिवेशे सिषाधयिषासत्त्वेऽपि सिद्धौ सिषाधयिषाभावस्य स्वरूपसम्बन्धेन सत्त्वात् सिषाधयिषाविरहविशिष्टसिद्धेरेव सत्त्वेन तदभावरूपपक्षतायाः अनुपपत्तिः अतः सामानाधिकरण्यसम्बन्धेन वैशिष्ट्यं निवेशनीयम् । सामानाधिकरण्यं च स्वा-

धिकरणवृत्तित्वम् । स्वाधिकरणत्वं स्वरूपसंबन्धेन, स्वाधिकरणनि-रूपितवृत्तित्वं समवायसम्बन्धेन । तथा च स्वनिष्ठस्वरूपसम्बन्धा-वच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितसमवायसम्बन्धावच्छि -न्नाधेयतासम्बन्धेन सिषाधयिषाविरहविशिष्टा या सिद्धिः तदभावः पक्षता । स्वं - सिषाधयिषाविरहः तस्य स्वरूपसंबन्धेन अधिकरणम् आत्मा तत्र समवायसम्बन्धेन वृत्तिमती या सिद्धिः तदभाव इति यावत् । तत्र स्वरूपसम्बन्धानिवेशे सिषाधयिषाकालेऽपि एकज्ञान-विषयत्वसम्बन्धेन सिषाधयिषाविरहाधिकरणे आत्मनि समवायेन वृत्तित्वं सिद्धेरस्तीति तादृशवृत्तित्वसम्बन्धेन सिषाधयिषाविरहवि-शिष्टसिद्धेरेव सत्त्वेन पक्षता नोपपद्येत । स्वरूपसम्बन्धनिवेशे तु तेन सिषाधयिषाभावाधिकरणं सिषाधयिषावानात्मा न भवति, अपि तु अन्य आत्मा तद्वृत्तित्वं एतदात्मगतसिद्धेर्नास्तीति तादृशवृत्ति-त्वरूपसामानाधिकरण्यसम्बन्धेन सिषाधयिषाविरहविशिष्टायाः सिद्धे-रभावस्य सत्त्वात् न पक्षतानुपपत्तिः । एवं वृत्तित्वे समवायसम्बन्धा-वच्छिन्नत्वानिवेशे सिषाधयिषाविरहाधिकरणे आत्मनि सिद्धेः सम-वायेन सत्त्वेऽपि संयोगादिसम्बन्धेनासत्त्वात् समवायातिरिक्तसम्बन्धा-वच्छिन्नवृत्तित्वरूपसामानाधिकरण्यं सिद्धेर्नास्तीति विशिष्टाभाव-रूपा पक्षता प्रसज्येत । अतः समवायसम्बन्धावच्छिन्नत्वस्य सामानाधि-करण्यघटकवृत्तित्वे निवेशः । एवं सिद्ध्यभावः सिद्धिनिष्ठप्रतियोगि-तानिरूपकोऽभावः । तत्र प्रतियोगितायां समवायसम्बन्धावच्छिन्नत्वं निवेश्यम् । अन्यथा सिद्धिकालेऽपि सम्बन्धान्तरावच्छिन्नसिद्ध्यभाव-मादाय पक्षता प्रसज्येत । तदेतत्सर्वमभिसन्धायाह - **प्रकाशिकायाम् - सिषाधयिषायाः साध्यानुमितीच्छाया** इत्यादि । **स्वरूपसमवायोभयघटिते**ति। सामानाधिकरण्यघटकाधिकरणतायां स्वरूपसम्बन्धावच्छिन्नत्वं, वृत्ति-तायां समवायसम्बन्धावच्छिन्नत्वं च निवेशनीयमिति भावः । **सिद्धेः समवायेनाभाव** इति । सिद्धिनिष्ठसमवायसम्बन्धावच्छिन्नप्रतियोगि-ताकाभाव इत्यर्थः । **पक्षतावच्छेदकविशिष्ट** इत्यादि । पक्षतावच्छेदका-

वच्छिन्नपक्षनिष्ठविशेष्यतानिरूपितसाध्यतावच्छेदकावच्छिन्नसाध्यनि - ष्ठप्रकारताशालिनिश्चय इत्यर्थः। द्रव्यत्वेन पर्वतावगाहि 'द्रव्यं वह्निमत्' इत्याकारकनिश्चयदशायां 'पर्वतो वह्निमान्' इत्यनुमित्युत्पत्तेः 'द्रव्यं वह्निमत्'इत्याकारकनिश्चयस्य 'पर्वतो वह्निमान्' इत्यनुमितिप्रतिबन्ध-कत्ववारणाय पक्षनिष्ठविशेष्यतायां पक्षतावच्छेदकावच्छिन्नत्वनि-वेशः । एवं 'पर्वतो द्रव्यवान्' इत्याकारकनिश्चयस्य तादृशानुमिति-प्रतिबन्धकत्ववारणाय प्रकारतायां साध्यतावच्छेदकावच्छिन्नत्वनिवेशः। एवं प्रकारतायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वमपि निवेशनीयम्। अन्यथा 'पर्वतः समवायेन वह्निमान्' इति निश्चयस्यापि 'पर्वतः संयोगेन वह्निमान्' इत्यनुमितिप्रतिबन्धकत्वापत्तेः ।

ननु सिद्धिकाले यदि सिषाधयिषा वर्तते तदानीमपि अनुमितेः उपपादनार्थं हि सिद्धौ सिषाधयिषाविरहविशिष्टेति विशेषणं दत्तम् । तच्च तदैव सार्थकं भवति यदि सिद्धि-सिषाधयिषा-परामर्शानामेक-काले समवधानं स्यात् । तच्च दुर्घटम् । तथा हि-यत्र प्रथमं सिद्धिः अनन्तरं सिषाधयिषा, ततः परामर्शः, ततः अनुमितिः, तत्र परामर्श-क्षणे सिद्धेर्नाशादेव प्रतिबन्धकाभावात् अनुमित्युपपत्तेः व्यर्थं सिषाध-यिषाविरहविशिष्टत्वविशेषणम् । यत्र क्रमेण सिषाधयिषा-सिद्धि-परामर्शाः तत्र परामर्शक्षणे सिषाधयिषायाः नाशात् सिषाधयिषा-विरहविशिष्टसिद्धेरेव सत्त्वात् सिषाधयिषाविरहविशिष्टत्वनिवेशेऽपि पक्षता न निर्वहति । यत्र तु परामर्शसिद्धिसिषाधयिषाः क्रमेण भवन्ति तत्र सिषाधयिषाक्षणे परामर्शनाशात् परामर्शरूपकारणवैकल्यात् ना-नुमितिः । ज्ञानयोर्वा ज्ञानेच्छयोर्वा एकक्षणोत्पत्तिकत्वं तु नाङ्गीक्रियते । तथा च कथं सिषाधयिषाविरहविशिष्टत्वस्य सार्थकत्वमित्याशङ्क्याह - **अत्र सिद्धिश्चेत्यादिना** । पक्षताघटकीभूता सिद्धिश्च वह्निवह्निव्याप्य-धूमोभयावगाहिनी समूहालम्बनरूपा 'पर्वतो वह्निमान् वह्निव्याप्य-धूमवांश्च' इत्याकारिका विवक्षिता । अयमेव साध्यनिश्चयरूपत्वात् साध्यव्याप्यनिश्चयरूपत्वाच्च सिद्ध्यात्मकपरामर्श इति व्यवह्रियते ।

तथा च यत्र आदौ उक्ताकारः सिद्ध्यात्मकपरामर्शः ततः सिषाधयिषा ततोऽनुमितिः तत्र द्वितीयक्षणे सिद्धेः सत्त्वात् सिद्ध्यभावमात्रस्य पक्षतात्वे पक्षता न निर्वहति । अतः सिषाधयिषाविरहविशिष्टत्वं सिद्धेः विशेषणम् । तत्र तु सिषाधयिषासत्त्वेन सिषाधयिषाविरहरूपविशेषणाभावात् विशिष्टाभावरूपा पक्षता निर्वहतीत्येवं तद्विशेषणस्य सार्थक्यमुपपादनीयमिति भावः । **अतः परामर्शसम्पत्तिरि**ति । अनुमित्यव्यवहितपूर्वक्षणे सिद्धिसिषाधयिषापरामर्शानां मेलनमित्यर्थः ।



## तर्कसङ्ग्रहः

### परामर्शलक्षणम्

व्याप्तिविशिष्टपक्षधर्मताज्ञानं परामर्शः । यथा 'वह्निव्याप्यधूमवान् अयं पर्वतः' इति ज्ञानं परामर्शः । तज्जन्यं 'पर्वतो वह्निमान्' इति ज्ञानमनुमितिः ।

## दीपिका

परामर्शं लक्षयति - **व्याप्तीति** । व्याप्तिविषयकं यत् पक्षधर्मताज्ञानं स परामर्श इत्यर्थः । परामर्शमभिनीय दर्शयति - **यथेति** । अनुमितिमभिनीय दर्शयति - **तज्जन्यमिति** । परामर्शजन्यमित्यर्थः ।

## प्रकाशिका

'व्याप्तिविशिष्टपक्षधर्मताज्ञानम्' इत्यत्र व्याप्तिविशिष्टे पक्षधर्मता व्याप्तिविशिष्टपक्षधर्मता तज्ज्ञानमिति सप्तमीतत्पुरुषाङ्गीकारे व्यभिचारिलिङ्गकानुमितौ व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वाभावेन अव्याप्तिः; अतः व्याप्तिविशिष्टपदस्य व्याप्तिविषयकेत्यर्थमवलम्ब्य ज्ञानान्तपदेन कर्मधारयमङ्गीकरोति - **व्याप्तिविषयकमिति** । व्याप्यवच्छिन्न-प्रकारतानिरूपित- पक्षतावच्छेदकावच्छिन्न-विशेष्यताशालिनिश्चयः परामर्श इति तु निर्गलितार्थः । **अभिनीय** - अभिलापकशब्दमुच्चार्य ।

**व्याप्तिविशिष्टपक्षधर्मताज्ञानमित्यत्रे**त्यादि । यत्र लिङ्गं साध्यव्यभिचारि भवति तत्रापि व्याप्त्यंशे भ्रमात्मकात् 'धूमव्याप्यवह्निमानयं पर्वतः' इति परामर्शात् 'पर्वतो धूमवान्' इत्यनुमितिः जायते । यदि तु वस्तुतो व्याप्तिविशिष्टे पक्षधर्मत्वावगाहि ज्ञानं परामर्शः तज्जन्यत्वं अनुमितेर्लक्षणमुच्येत तर्हि उक्तपरामर्शस्य व्याप्तिविशिष्टे तदवगाहित्वाभावेन परामर्शत्वाभावात् तज्जन्यज्ञानस्य अनुमितित्वं न स्यात् । अतः व्याप्तिविषयकं यत् पक्षधर्मत्वावगाहि ज्ञानं तत् परामर्शः । उक्तभ्रमात्मकज्ञानस्य व्याप्तिविषयकत्वमक्षतमिति परामर्शरूपता, अत एव तज्जन्यज्ञानस्य परामर्शजन्यत्वरूपानुमितिलक्षणाक्रान्ततया अनुमितित्वमप्युपपद्यत इति भावः ।

ननु व्याप्तिविषयकं पक्षसम्बन्धावगाहि च ज्ञानं परामर्श इति परामर्शलक्षणकथनेऽपि 'धूमो वह्निव्याप्यः धूमवांश्च पर्वतः' इत्याकारकसमूहालम्बनज्ञानस्यापि व्याप्तिविषयकत्वात् पक्षसम्बन्धविषयकत्वाच्च परामर्शत्वापत्तिरित्यत आह - **व्याप्यवच्छिन्ने**ति । व्याप्यवच्छिन्ना या हेतुनिष्ठा प्रकारता तन्निरूपिता या पक्षतावच्छेदकावच्छिन्ना पक्षनिष्ठा विशेष्यता तन्निरूपको निश्चयः परामर्श इत्यर्थः । भवति च 'वह्निव्याप्यधूमवान् पर्वत' इति निश्चयः तादृशः । पर्वतनिष्ठविशेष्यतानिरूपितायाः धूमनिष्ठायाः प्रकारतायाः व्याप्यवच्छिन्नत्वात् । व्याप्यवच्छिन्नत्वं च साध्यनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितत्वम् । तेन'व्याप्यधूमवान् पर्वतः' इति ज्ञाने नातिव्याप्तिः । 'धूमो वह्निव्याप्यः धूमवांश्च पर्वतः' इति समूहालम्बनज्ञानीयधूमनिष्ठप्रकारतायां व्याप्तिनिष्ठप्रकारतानिरूपितत्वं नास्ति, धूमांशे व्याप्तेः प्रकारतया अभानात् । अतो न तत्रातिव्याप्तिरिति भावः । तथा च साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नहेतुनिष्ठप्रकारतानिरूपित - पक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यताशालिनिश्चयः परामर्श इति

निष्कर्षः । तेन 'द्रव्यव्याप्यधूमवान् पर्वतः', 'वह्निव्याप्यद्रव्यवान् पर्वतः' 'वह्निव्याप्यधूमवद्द्रव्यम्' इत्यादिनिश्चयानां 'पर्वतो वह्निमान्' इत्यनुमितिहेतुभूतपरामर्शत्वं न प्रसज्यत इत्यवधेयम् । **निर्गलितार्थ** इति । निष्कृष्टार्थ इत्यर्थः । **अभिलापकशब्दमुच्चार्ये**ति । आकारप्रदर्शकशब्दमुच्चार्येत्यर्थः । कायिकचेष्टारूपस्याभिनयस्यात्रासम्भवात् ।



## तर्कसङ्ग्रहः

**व्याप्तिलक्षणम्**

| यत्र धूमः तत्र अग्निः इति साहचर्यनियमः व्याप्तिः । |
|---|

## दीपिका

व्याप्तिलक्षणमाह - **यत्रे**ति । यत्र धूमस्तत्राग्निरिति व्याप्तेरभिनयः । साहचर्यनियमः इति लक्षणम् । साहचर्यं सामानाधिकरण्यम्, तस्य नियमः । हेतुसमानाधिकरणात्यन्ताभावाप्रतियोगिसाध्यसामानाधिकरण्यं व्याप्तिरित्यर्थः ।

## प्रकाशिका

नियतसामानाधिकरण्यं साध्याभाववदवृत्तित्वादिरूपं न सम्भवति; 'इदं वाच्यम् ज्ञेयत्वात्' इत्यादौ अव्याप्तेः । साध्याभावाप्रसिद्धेरित्यालोच्याह - **हेतुसमानाधिकरणे**ति । 'वह्निमान् धूमात्' इत्यादौ धूमसमानाधिकरणो योऽत्यन्ताभावः घटात्यन्ताभावः, तदप्रतियोगी वह्निः तत्सामानाधिकरण्यं धूमे अस्तीति लक्षणसमन्वयः । 'धूमवान् वह्नेः' इत्यादौ तु धूमसामान्याभावस्यापि हेतुसमानाधिकरणतया तत्प्रतियोग्येव धूम इति नातिव्याप्तिः । न च 'वह्निमान् धूमात्' इत्यादौ तत्तद्वह्न्यभावस्य चालिनीन्यायेन धूमसमानाधिकरणतया तादृशाभावाप्रतियोगित्वं न कस्यापि वह्नेरित्यतिव्याप्तिरिति वाच्यम्, अप्रतियोगिसाध्येत्यस्य प्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्नेत्यर्थतात्पर्यकतयाऽदोषात् । प्रतियोगितायां साध्यतावच्छे-

दकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । तेन 'वह्निमान् धूमात्' इत्यादौ समवायेन वह्नित्वावच्छिन्न-प्रतियोगिताकाभावस्य धूमसमानाधिकरणत्वेऽपि न क्षतिः । हेतुपदं हेतुतावच्छेदकावच्छिन्नपरम् । अतः 'द्रव्यम् विशिष्टसत्त्वात्' इत्यादौ विशिष्टस्य शुद्धानतिरेकितया हेत्वधिकरणगुणादिनिष्ठत्वेऽपि द्रव्यत्वाभावस्य नाव्याप्तिः । हेत्वधिकरणता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्या । तेन 'वह्निमान् धूमात्' इत्यादौ वह्निसामान्याभावस्य धूमसमवायिनिष्ठत्वेऽपि नाव्याप्तिः । न चैवमपि 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादौ अव्याप्तिः, साध्यस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकावच्छिन्नत्वादिति वाच्यम् । हेतुसमानाधिकरणात्यन्ताभावे प्रतियोगिवैयधिकरण्यस्य निवेशनीयत्वात् । केवलान्वयिसाध्यके तादृशस्य घटाभावादेः प्रसिद्धत्वात् नाव्याप्तिरिति । अधिकं अस्मदीय-मणिदीधितिव्याख्यायां बुद्धिकुशलैरनुसन्धेयम् ।

## बालप्रिया

**साध्याभावाप्रसिद्धेरि**ति । साध्यस्य वाच्यत्वस्य केवलान्वयित्वेन सर्वत्र विद्यमानतया तदभावस्याप्रसिद्धेः साध्याभाववदवृत्तित्वरूप-[1]व्याप्तलक्षणस्य केवलान्वयिसाध्यकसद्धेतावव्याप्तिरित्यर्थः । **इत्यर्थतात्पर्यकतयाऽदोषादि**ति । तथा च हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः । 'पर्वतो वह्निमान् धूमात्' इत्यादौ हेतुः धूमः, तदधिकरणं पर्वतः, तद्वृत्तिर्योऽत्यन्ताभावः घटाद्यभावः महानसीयवह्न्यभावश्च तत्प्रतियोगितावच्छेदकं घटत्व-महानसीयवह्नित्वादिकम् । तत्प्रतियोगितानवच्छेदकं वह्नित्वरूपं साध्यतावच्छेदकम्, तदवच्छिन्न-वह्निसामानाधिकरण्यस्य तादृशवह्न्यधिकरणपर्वतादिवृत्तित्वरूपस्य धूमे सत्त्वात् लक्षणसमन्वयः । पर्वतो धूमवान् वह्नेः इत्यादौ हेतुः वह्निः तदधि-

---

1. व्याप्तेः स्वरूपं व्याप्तस्य लक्षणमिति भावः ।

करणम् अयोगोलकम् तद्वृत्तिर्योऽत्यन्ताभावः धूमाभावः तत्प्रतियोगितावच्छेदकमेव धूमत्वरूपं साध्यतावच्छेदकमिति साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकत्वाभावात् नातिव्याप्तिरिति भावः । **प्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीय**मित्यादि । 'पर्वतो वह्निमान् धूमात्' इत्यत्र धूमाधिकरणे पर्वते वर्तते योऽत्यन्ताभावः समवायेन वह्निर्नास्तीत्याकारकप्रतीतिसिद्धः समवायसम्बन्धावच्छिन्नवह्नित्वावच्छिन्नप्रतियोगिताकोऽभावः तत्प्रतियोगितायां अवच्छेदकमेव वह्नित्वं इत्यव्याप्तिः स्यात् । तद्वारणाय हेत्वधिकरणवृत्त्यभावीयप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । निवेशे च हेत्वधिकरणवृत्त्यभाव इत्यनेन यस्याभावस्योपादाने तदीयप्रतियोगितायाः साध्यतावच्छेदकसंयोगसम्बन्धावच्छिन्नत्वं भवेत् स एवोपादेयः इति संयोगसम्बन्धेन घटाद्यभाव एव तादृशः, न तु समवायेन वह्न्यभावः तदीयप्रतियोगितायाः संयोगसम्बन्धावच्छिन्नत्वासम्भवात्। तथा च हेत्वधिकरणवृत्तिघटाद्यभावीयसंयोगसम्बन्धावच्छिन्नप्रतियोगितायामवच्छेदकं घटत्वादि अनवच्छेदकं च वह्नित्वं भवतीति नाव्याप्तिरिति भावः । **न क्षतिरि**ति । नाव्याप्तिरित्यर्थः । तथा च हेत्वधिकरणवृत्त्यत्यन्ताभावनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदक - साध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरित्येतावता फलितम् । **हेतुपदं हेतुतावच्छेदकावच्छिन्नपरमित्यादि** ।'घटो द्रव्यम् गुणकर्मान्यत्वविशिष्टसत्त्वात्'इत्यत्र सद्धेतौ हेतुः शुद्धसत्तापि विशिष्टशुद्धयोरनतिरेकात् । हेतोरधिकरणं गुणकर्मणी अपि ; तत्र वर्तते योऽत्यन्ताभावः द्रव्यत्वाभावोऽपि तत्प्रतियोगितावच्छेदकमेव द्रव्यत्वत्वमिति साध्यतावच्छेदके द्रव्यत्वत्वे प्रतियोगितानवच्छेदकत्वाभावात् अव्याप्तिः । तद्वारणाय हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणत्वं निवेशनीयम् । गुणे कर्मणि च सत्तात्वावच्छिन्नसत्ताधिकरणत्वसद्भावेऽपि हेतुतावच्छेदकं यत् गुणकर्मान्यत्वविशिष्ट-

सत्तात्वं तदवच्छिन्नाधिकरणत्वं न सम्भवति । गुणः कर्म च गुणकर्मान्यत्वविशिष्टसत्तावदिति प्रतीत्यभावात् । अतः गुणकर्मान्यत्वविशिष्टसत्तात्वावच्छिन्नाधिकरणं द्रव्यमेव तद्वृत्तिर्योऽभावः न द्रव्यत्वाभावः अपि तु गुणत्वाद्यभावः तत्प्रतियोगितावच्छेदकं गुणत्वत्वादि अनवच्छेदकं द्रव्यत्वत्वमिति नाव्याप्तिरिति भावः । तथा च [1]हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणवृत्त्यत्यन्ताभावनिरूपित-साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः ।

**हेत्वधिकरणता हेतुतावच्छेदकसम्बन्धावच्छिन्ना ग्राह्ये**ति । 'वह्निमान् धूमात्' इत्यादौ हेतोः धूमस्य समवायसम्बन्धेनाधिकरणं धूमावयवः तद्वृत्तिर्योऽत्यन्ताभावः संयोगेन वह्न्यभावः तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकं वह्नित्वमित्यव्याप्तिः । तद्वारणाय हेतुनिष्ठाधेयतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वं निवेशनीयम् । प्रकृते च हेतुतावच्छेदकसम्बन्धः संयोगः तदवच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणतावान् धूमावयवो न भवति, समवायसम्बन्धावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणताया [2]एव तत्र सत्त्वात् । अपि तु पर्वतादिरेव तन्निष्ठोऽभावः न वह्न्यभावः अपि तु घटाद्यभावः तत्प्रतियोगितावच्छेदकं वह्नित्वं भवतीति नाव्याप्तिरिति भावः । **वह्निसामान्याभावस्य** - वह्नित्वावच्छिन्नप्रतियोगिताकाभावस्य । **धूमसमवायिनिष्ठत्वेऽपि** - समवायसम्बन्धेन धूमाधिकरणधूमावयववृत्तित्वेऽपि । तथा च हेतुतावच्छेदकधर्मावच्छिन्नहेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिः ।

---

1. हेतुतावच्छेदकावच्छिन्नहेत्वधिकरणेत्यस्य हेतुतावच्छेदकावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावदित्यर्थः ।
2. एवकारेण संयोगसम्बन्धावच्छिन्नधूमनिष्ठाधेयतानिरूपिताधिकरणता व्यवच्छिद्यते ।

**न चैवमपी**ति । 'अयं वृक्षः कपिसंयोगी एतद्वृक्षत्वात्' इत्यत्र हेतुः एतद्वृक्षत्वं तदधिकरणमेतद्वृक्षः तत्र वर्तते योऽभावः कपिसंयोगाभावोऽपि, एतद्वृक्षे अग्रभागावच्छेदेन कपिसंयोगस्य सत्त्वेऽपि मूलभागावच्छेदेन कपिसंयोगस्याभावात् । तथा च हेत्वधिकरणवृत्तेः कपिसंयोगाभावस्य प्रतियोगितावच्छेदकमेव कपिसंयोगत्वरूपं साध्यतावच्छेदकमित्यव्याप्तिरिति भावः । **प्रतियोगिवैयधिकरण्यस्य निवेशनीयत्वादि**ति । तथा च वृक्षवृत्तिः कपिसंयोगाभावः प्रतियोगिनः कपिसंयोगस्याधिकरणे वृक्षे वर्तमानतया प्रतियोगिसमानाधिकरणो न प्रतियोगिव्यधिकरणः । घटाद्यभाव एव [1]तादृशः तत्प्रतियोगितानवच्छेदकं कपिसंयोगत्वं भवतीति नाव्याप्तिरिति भावः । साध्याभाववदवृत्तित्वस्य व्याप्तित्वे 'इदं वाच्यं ज्ञेयत्वात्' इत्यत्रोक्ता अव्याप्तिः, प्रकृतसिद्धान्तव्याप्तिलक्षणे न प्रसजतीत्याह - **केवलान्वयिसाध्यक** इति । तथा च हेतोः ज्ञेयत्वस्याधिकरणं भूतलादिः तद्वृत्तिर्योऽभावः घटाद्यभावः तत्प्रतियोगितावच्छेदकं घटत्वादि अनवच्छेदकं वाच्यत्वत्वरूपं साध्यतावच्छेदकं तदवच्छिन्नवाच्यत्वरूपसाध्यसामानाधिकरण्यं ज्ञेयत्वेऽस्तीति नाव्याप्तिरिति भावः ।

एवं प्रतियोगिव्यधिकरणत्वं प्रतियोग्यनधिकरणवृत्तित्वम्, न तु प्रतियोग्यधिकरणावृत्तित्वम्,'संयोगी सत्त्वादित्'इत्यत्रातिव्याप्त्यापत्तेः[2]

---

1. तादृश इति । प्रतियोगिव्यधिकरण इत्यर्थः ।

2. अतिव्याप्त्यापत्तेरिति । संयोगाभाववति गुणादौ सत्तायाः सत्त्वात् अयं हेतुर्व्यभिचारी । अत्र हेत्वधिकरणं सत्ताधिकरणं गुणादि तन्निष्ठो योऽभावः संयोगाभावः तत्प्रतियोगितावच्छेदकमेव संयोगत्वरूपं साध्यतावच्छेदकमित्यतिव्याप्तिर्वारणीया । यदि तु प्रतियोगिव्यधिकरणत्वं प्रतियोग्यधिकरणावृत्तित्वं तदा संयोगाभावस्याव्याप्यवृत्तित्वेन संयोगाधिकरणे द्रव्ये वर्तमानतया प्रतियोग्यधिकरणावृत्तिः संयोगाभावो न भवति, अपि तु घटाद्यभाव एव, तत्प्रतियोगितानवच्छेदकत्वं संयोगत्वेऽस्तीत्यतिव्याप्तिः प्रसज्यते । प्रतियोगिव्यधिकरणत्वं प्रतियोग्यनधिकरणवृत्तित्वमित्युक्तौ तु संयोगाभावस्यापि संयोगानधिकरणगुणवृत्तित्वेन लक्षणघटकतया तत्प्रतियोगितावच्छेदकत्वमेव संयोगत्वेऽस्तीति नातिव्याप्तिरिति भावः ।

[1]प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्त्यत्यन्ताभावेत्यादिलक्षणं विवक्षितम् । प्रतियोग्यनधिकरणत्वं च प्रतियोगितावच्छेदकावच्छिन्नानधिकरणत्वम् । यथाश्रुते 'घटः गुणकर्मान्यत्वविशिष्टसत्तावान् जातेः' इत्यत्रातिव्याप्तेः । गुणकर्मान्यत्वविशिष्टसत्ताभाववति गुणे कर्मणि च जातिसत्त्वात् अयं व्यभिचारी हेतुः । अत्र जातेरधिकरणे गुणे वर्तमानस्य गुणकर्मान्यत्वविशिष्टसत्ताभावस्य प्रतियोगिशुद्धसत्ताधिकरणहेत्वधिकरणगुणवृत्तितया प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तित्वाभावात् तादृशमभावान्तरं घटाद्यभावमादाय तत्प्रतियोगितानवच्छेदकत्वस्य विशिष्टसत्तात्वे सत्त्वात् अतिव्याप्तिः प्रसजति । प्रतियोगितावच्छेदकावच्छिन्नेति निवेशे तु विशिष्टसत्तात्वरूपप्रतियोगितावच्छेदकावच्छिन्नानधिकरणं गुणः तद्वृत्तितया विशिष्टसत्ताभावोऽपि लक्षणघटकः, तत्प्रतियोगितावच्छेदकमेव साध्यतावच्छेदकम् विशिष्टसत्तात्वमिति नातिव्याप्तिः । एवं प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोग्यनधिकरणमित्यपि वक्तव्यम् । अन्यथा 'आत्मा ज्ञानवान् द्रव्यत्वात्' इत्यत्रातिव्याप्तेः । ज्ञानाभाववति घटादौ द्रव्यत्वसत्त्वात् अयं व्यभिचारी । अत्र हेतोः द्रव्यत्वस्याधिकरणं घटादि तन्निष्ठः अभावः ज्ञानाभावः यद्यपि, तथापि स प्रतियोग्यनधि-

---

1. ननु प्रतियोगिव्यधिकरणत्वं प्रतियोग्यनधिकरणवृत्तित्वमिति विवक्षायामपि सद्धेतौ 'कपिसंयोगी एतद्वृक्षत्वात्', इत्यादावव्याप्तिः । 'कपिसंयोगाभावो ह्यव्याप्यवृत्तित्वात् हेतोरधिकरणे वृक्षे वर्तते, तथा प्रतियोगिनः कपिसंयोगस्यानधिकरणे गुणे च वर्तत इति प्रतियोगिव्यधिकरणः हेत्वधिकरणवृत्तिश्च योऽभावः कपिसंयोगाभावः तत्प्रतियोगितावच्छेदकत्वमेव साध्यतावच्छेदके कपिसंयोगत्वेऽस्तीति । अतो निष्कृष्टार्थमाह - प्रतियोग्यनधिकरणीभूतेति । प्रतियोगिव्यधिकरणहेत्वधिकरणवृत्तीत्यन्तस्य प्रतियोग्यनधिकरणीभूतहेत्वधिकरणवृत्तीत्यर्थः । संयोगी सत्त्वादित्यत्र प्रतियोगिनः संयोगस्यानधिकरणं हेतोः सत्तायाश्चाधिकरणं गुणः तद्वृत्तिर्योऽभावः संयोगाभावः तत्प्रतियोगितावच्छेदकमेव संयोगत्वमिति नातिव्याप्तिः । कपिसंयोगी एतद्वृक्षत्वात इत्यत्र हेतोः अधिकरणं वृक्षः प्रतियोगिनः संयोगस्याधिकरणमेव भवति इति प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तिरभावः न कपिसंयोगाभावः अपि तु घटाद्यभावः तत्प्रतियोगितानवच्छेदकत्वं कपिसंयोगत्वेऽस्तीति नाव्याप्तिरिति भावः ।

करणहेत्वधिकरणवृत्तिर्न भवति ज्ञानाभावप्रतियोगिनः ज्ञानस्य विषयतासम्बन्धेनाधिकरणमेव घटादिरिति । अतः प्रतियोग्यनधिकरणहेत्वधिकरणवृत्तिरभावः पटाद्यभाव एव तत्प्रतियोगितानवच्छेदकत्वं साध्यतावच्छेदके ज्ञानत्वेऽस्तीत्यनिव्याप्तिः प्रसज्यते । प्रतियोगितावच्छेदकसम्बन्धनिवेशे तु समवायसम्बन्धावच्छिन्नज्ञानाभावस्यैव हेत्वधिकरणवृत्तितया समवायसम्बन्ध एव प्रतियोगितावच्छेदकसम्बन्धः तेन सम्बन्धेन ज्ञानस्य अनधिकरणं घटादि तद्वृत्तिः यो ज्ञानाभावः तत्प्रतियोगितावच्छेदकत्वमेव ज्ञानत्वस्येति नातिव्याप्तिः । तथा च[1]प्रतियोगितावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकधर्मावच्छिन्नप्रतियोगिनिष्ठाधेयतानिरूपिताधिकरणतावद्भिन्न- हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकधर्मावच्छिन्नहेतुनिष्ठाधेयतानिरूपिताधिकरणतावन्निष्ठात्यन्ताभावनिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति फलितम् । तदिदमभिसन्धायाह - **अधिकं अस्मदीयमणिदीधितिव्याख्यायामिति** ।



## तर्कसङ्ग्रहः

**पक्षधर्मतानिरूपणम्**

व्याप्यस्य पर्वतादिवृत्तित्वं पक्षधर्मता ।

**अनुमानविभागः**

अनुमानं द्विविधम्-स्वार्थम्, परार्थम् चेति ।

---

1. प्रतियोगितावच्छेदकसम्बन्धावच्छिन्ना प्रतियोगितावच्छेदकधर्मावच्छिन्ना च या प्रतियोगिनिष्ठा आधेयता तन्निरूपिताधिकरणतावद्भिन्नं अथ च हेतुतावच्छेदकसम्बन्धावच्छिन्ना हेतुतावच्छेदकधर्मावच्छिन्ना च या हेतुनिष्ठाधेयता तन्निरूपिताधिकरणतावत् यत् तन्निष्ठो योऽत्यन्ताभावः तन्निरूपिता या साध्यतावच्छेदकसम्बन्धावच्छिन्ना प्रतियोगिता तदनवच्छेदकं यत् साध्यतावच्छेदकं तदवच्छिन्नं यत् साध्यं तदधिकरणवृत्तित्वं व्याप्तिरित्यर्थः ।

**दीपिका**

पक्षधर्मतास्वरूपमाह - **व्याप्यस्येति** ।

अनुमानं विभजते - **अनुमानमिति** ।



**तर्कसङ्ग्रहः**

**स्वार्थानुमाननिरूपणम्**

स्वार्थं स्वानुमितिहेतुः । तथा हि - स्वयमेव भूयोदर्शनेन यत्र धूमः तत्राग्निरिति महानसादौ व्याप्तिं गृहीत्वा पर्वतसमीपं गतः, तद्गते च पर्वते धूमं पश्यन् अग्नौ सन्दिहानः व्याप्तिं स्मरति 'यत्र धूमस्तत्राग्निः' इति । तदनन्तरं 'वह्निव्याप्यधूमवान् अयं पर्वतः' इति ज्ञानमुत्पद्यते । अयमेव लिङ्गपरामर्श इत्युच्यते । तस्मात् 'पर्वतो वह्निमान्' इत्यनुमितिरुत्पद्यते । तदेतत् स्वार्थानुमानम् ।

**दीपिका**

स्वार्थानुमानं दर्शयति - **स्वयमेवेति** ।

**व्याप्तिग्रहोपायनिरूपणम्**

ननु पार्थिवत्वलोहलेख्यत्वादौ शतशः सहचारदर्शनेऽपि वज्रमणौ व्यभिचारोपलब्धेः भूयोदर्शनेन कथं व्याप्तिग्रह इति चेत्-न । व्यभिचारज्ञानविरहसहकृतसहचारज्ञानस्य व्याप्तिग्राहकत्वात् । व्यभिचारज्ञानं निश्चयः शङ्का च । तद्विरहः क्वचित् तर्कात्, क्वचित् स्वतस्सिद्ध एव । धूमाग्न्योर्व्याप्तिग्रहे कार्यकारणभावभङ्गप्रसङ्गलक्षणः तर्को व्यभिचारशङ्कानिवर्तकः ।

ननु सकलवह्निधूमयोरसन्निकर्षात् कथं व्याप्तिग्रह इति चेत्-न । वह्नित्वधूमत्वरूपसामान्यप्रत्यासत्त्या सकलवह्निधूमज्ञानसम्भवात् । **तस्मादिति** । लिङ्गपरामर्शादित्यर्थः ।

## प्रकाशिका

**स्वार्थानुमानमि**ति । स्वस्यार्थः प्रयोजनं साध्यसंशयनिवृत्तिरूपं यस्मादिति व्युत्पत्त्या स्वीयसंशयनिवृत्तिप्रयोजकानुमानमित्यर्थः । **पश्यन्** इति । एकसम्बन्धिज्ञानं अपरसम्बन्धिस्मारकं इति रीत्या दर्शनस्य स्मृतिहेतुत्वादित्यर्थः । **कथं व्याप्तिग्रह** इतीति । व्यभिचारज्ञानदशायां न कश्चिदपि व्याप्तिनिश्चयं अभ्युपैतीति भूयोदर्शनस्य व्याप्तिनिश्चयहेतुत्वं न सम्भवतीति भावः । इदमुपलक्षणम्-भूयोदर्शनमित्यस्य भूयसां दर्शनानां समाहार इति, भूयसां साध्यहेतूनां दर्शनम् इति, भूयस्सु अधिकरणेषु दर्शनमिति वार्थः । नाद्यः, एकत्रैव सहचारदर्शनधारया व्याप्तिनिश्चयप्रसङ्गात् । न द्वितीयतृतीयौ, 'एतद्रूपवान् एतद्रसात्' इत्यादौ साध्यहेत्वोरधिकरणे च [1]भूयस्त्वाभावेन व्याप्त्यनिश्चयप्रसङ्गादित्यपि बोध्यम् । मणिकारसिद्धान्तमवलम्ब्याह - **व्यभिचारज्ञानविरहे**ति । **व्याप्तिग्राहकत्वादि**ति । व्याप्तिश्च हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्याधिकरणवृत्तिताविशिष्टहेतुतावच्छेदकरूपैव । सामानाधिकरण्यान्तस्य रासभादिसाधारण्यात् । धूमत्वादेः स्वरूपतो व्याप्यतावच्छेदकत्वं तादृशधूमत्वत्वादिरूपेण च व्याप्तित्वमित्यवच्छेद्यावच्छेदकयोरैक्येऽपि न क्षतिः । इत्थं च साध्यतावच्छेदके तथाविधप्रतियोगितानवच्छेदकत्वांशग्रहे साध्यतावच्छेदके तथाविधप्रतियोगितावच्छेदकत्वरूपव्यभिचारग्रहाभावो विपरीतग्रहाभावविधया हेतुः । साध्यसमानाधिकरणवृत्तिहेतुतावच्छेदकांशग्रहे तु विशेषणज्ञानविधया सामानाधिकरण्यज्ञानं हेतुरिति रीत्या व्यभिचारज्ञानाभावसामानाधिकरण्यज्ञानयोः व्याप्तिग्रहहेतुतेति ध्येयम् ।

वस्तुतस्तु हेतुव्यापकसाध्यसामानाधिकरण्यमेव व्याप्तिः । न च व्याप्तेः रासभादिसाधारण्येन प्रमात्मकरासभलिङ्गकपरामर्शात्

---

1. भूयस्त्वाभावेनेति । तत्र साध्यहेत्वोस्तदधिकरणस्य चैकव्यक्तित्वेन बहुतरत्वरूपानेकत्वात्मकभूयस्त्वाभावेनेत्यर्थः ।

भ्रमात्मकवह्नचनुमित्यापत्तिः, प्रमात्मकपरामर्शस्य भ्रमात्मकवह्नचनुमित्यजनकत्वनियमसत्त्वेन इष्टापत्तेरयोगादिति वाच्यम् । यद्धर्मावच्छिन्नव्यापकत्वं व्याप्तिघटकम् तद्धर्मितावच्छेदकव्याप्तिप्रकारकनिश्चयस्यैव अनुमितिहेतुत्वोपगमेनादोषात् । अत एव व्याप्तिशरीरे धूमत्वाप्रवेशेन लाघवमिति दिक् । **शङ्काचेति** । व्यभिचारसंशयस्यापि व्याप्तिग्रहप्रतिबन्धकत्वानुभवात् तत्साधारणव्यभिचारज्ञानत्वावच्छिन्नाभावो हेतुरिति हृदयम् । **तद्विरहः** - व्यभिचारशङ्काविरहः । **क्वचिदिति** । तर्काभावेतरनिखिलकारणसमवधानस्थल इत्यर्थः । **क्वचित् स्वतस्सिद्ध एवेति** । इतरकारणविरहस्थले तादृशकारणविरहप्रयुक्त एवेत्यर्थः । तथा च तत्र तर्कापेक्षा नेति भावः । **धूमाग्न्योरिति** । धूमाग्न्योर्व्याप्तिग्रहे उत्पत्स्यमाने व्यभिचारशङ्कानिवर्तकः कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्क इत्यन्वयः । स च तर्कः 'धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यात्' इत्याकारको बोध्यः ।

ननु महानसीयवह्निधूमयोः सन्निकृष्टत्वेन सहचारग्रहेऽप्यन्येषां वह्निधूमानामसन्निकर्षेण सहचारप्रत्यक्षासम्भवेन निखिलधूमेषु व्याप्तिप्रत्यक्षं न सम्भवति । तथा च पर्वतीयधूमदर्शनेन व्याप्तिस्मरणासम्भवात् परामर्शानुपपत्तिरित्याशयेन आशङ्कते - **नन्विति** । सकलवह्निधूमेषु लौकिकसन्निकर्षाभावेऽपि सामान्यलक्षणप्रत्यासत्त्यात्मकालौकिकसन्निकर्षसद्भावात् वह्नित्वावच्छिन्नसामानाधिकरण्यत्वेन निखिलवह्निधूमसहचारप्रत्यक्षसम्भवात् निखिलधूमेषु व्याप्तिग्रहः सम्भवति । एवं च पर्वतीयधूमेऽपि व्याप्तेर्गृहीतत्वेन धूमदर्शनेन व्याप्तिस्मरणसम्भवात् न परामर्शानुपपत्तिरिति समाधत्ते - **वह्नित्वधूमत्वेति** ।

## बालप्रिया

यद्यपि स्वस्यार्थः अनुमितिरूपं प्रयोजनं यस्मात्तत् स्वार्थानुमानमिति बहुषु ग्रन्थेष्वस्ति, तथापि अनुमितेरपि प्रयोजनं साध्यसंशयनिवृत्तिरिति मत्वा व्याचष्टे—**स्वस्यार्थ इति** । **एकसम्बन्धिज्ञानमिति** ।

व्याप्त्याख्यसम्बन्धस्य सम्बन्धिनौ द्वौ हेतुः साध्यश्च । तयोः एकस्य सम्बन्धिनो हेतोः दर्शनात्मकं ज्ञानं अपरस्य सम्बन्धिनः साध्यस्य स्मृतिं जनयति, साध्यस्य स्मृतौ च साध्यहेत्वोर्व्याप्तिः स्मर्यते इति भावः । वस्तुतस्तु धूमदर्शनं व्याप्तिस्मृतिहेतुसंस्कारोद्बोधनद्वारैव व्याप्तिस्मृतिं जनयति, न तु एकसम्बन्धिज्ञानमिति विधयेति ध्येयम् । व्यभिचारज्ञानाभावसहकृतसहचारज्ञानस्य व्याप्तिग्रहकारणत्वमुपपादयितुं व्याप्तिं परिष्करोति—**व्याप्तिश्चेत्यादिना** । यद्यपि पूर्वं हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्न-साध्यसामानाधिकरण्यं व्याप्तिरित्येवोक्तम्, तथापि तावन्मात्रे उक्ते 'पर्वतो वह्निमान् धूमात्' इत्यत्र रासभस्यापि धूमव्यापकवह्न्यधिकरण-पर्वतवृत्तितया तादृशसामानाधिकरण्याक्रान्तत्वात् वह्निव्याप्यत्वं प्रसज्येत। अतः हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदक-साध्यतावच्छेदकावच्छिन्न- साध्यसामानाधिकरण्यविशिष्टहेतुतावच्छेदकवत्त्वं व्याप्तिरिति परिष्कार्यम् । रासभे वह्निसामानाधिकरण्यसत्त्वेऽपि हेतुतावच्छेदकीभूतधूमत्ववत्त्वाभावात् नातिव्याप्तिः । न च धूमत्व-पर्यन्तं यदि व्याप्तिः तर्हि धूमत्वं व्याप्यवच्छेदकमिति व्यवहारः कथमुपपद्यते अवच्छेद्यायाः व्याप्तेः धूमत्वरूपतया धूमत्वे धूमत्वस्या-वच्छेदकत्वासम्भवात् । अवच्छेद्यावच्छेदकभावस्य भेदनियतत्वादिति वाच्यम् । धूमत्वत्वेन रूपेण धूमत्वं व्याप्तिः स्वरूपतो धूमत्वं व्याप्य-वच्छेदकमित्यदोषात्[1] ।

एतादृशव्याप्तिज्ञाने व्यभिचारज्ञानाभावः कथं हेतुः? कथं च सहचारज्ञानं हेतुरिति चेत्-श्रूयताम् । सामानाधिकरण्यविशिष्टहेतु-तावच्छेदकमित्यस्य समानाधिकरणवृत्तिहेतुतावच्छेदकमित्यर्थः । तथा

---

1. अदोषादिति । यद्यपि धूमत्वमेव व्याप्तिः व्याप्यतावच्छेदकं चेति अवच्छेद्यावच्छेदकयोरैक्यम्, तथापि धूमत्वनिष्ठा अवच्छेद्यता धूमत्वत्वावच्छिन्ना, अवच्छेदकता तु निरवच्छिन्नेति अवच्छेद्यतावच्छेदकतयोर्भेदात् एकस्यैवावच्छेद्यावच्छेदकभाव उपपन्न एवेत्यर्थः ।

च धूमसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्न-वह्न्यधिकरणवृत्तिधूमवृत्तिधूमत्ववान् धूम इति व्याप्तिज्ञानस्य आकारः । धूमसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकवह्नित्वावच्छिन्नसमानाधिकरणधूमवृत्तिधूमत्ववान् धूम इति व्यभिचारज्ञानस्य आकारः । व्याप्तिज्ञाने साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वं भासते, व्यभिचारज्ञाने तु साध्यतावच्छेदके प्रतियोगितावच्छेदकत्वं भासते । तत्र प्रतियोगितानवच्छेदकत्वावगाहिव्याप्तिज्ञानं प्रति प्रतियोगितावच्छेदकत्वावगाहिव्यभिचारज्ञानं तद्वत्ताबुद्धौ तदभाववत्ताज्ञानविधया प्रतिबन्धकमिति व्यभिचारज्ञानाभावः प्रतिबन्धकाभावविधया व्याप्तिज्ञानं प्रति हेतुः । साध्यसामानाधिकरण्यविशिष्टहेतुवृत्तिहेतुतावच्छेदकमित्यंशोऽपि व्याप्तिज्ञाने भासते । साध्यसामानाधिकरण्यग्रह एव सहचारग्रह इत्युच्यते । तादृशसहचारग्रहः साध्यसामानाधिकरण्यविशिष्टो हेतुरितिज्ञानंप्रति विशिष्टबुद्धौ विशेषणज्ञानं कारणमिति रीत्या हेतुरिति ।[1]अधिकमस्मदीयपञ्चलक्षणीव्याख्यायां **बालबोधिन्यां** द्रष्टव्यम् । **साध्याधिकरणवृत्तिताविशिष्टे**ति । हेतुतावच्छेदके साध्याधिकरणवृत्तितावैशिष्ट्यं च सामानाधिकरण्यसम्बन्धेन । धूमत्वस्य वह्न्यधिकरणवृत्तित्वस्य च एकत्र धूमे सत्त्वात् । साध्याधिकरणवृत्तिहेतुनिष्ठहेतुतावच्छेदकरूपेति तु फलितोऽर्थः । **विपरीतग्रहाभावविधये**ति । तदभाववत्ताज्ञानाभावत्वेनेत्यर्थः । अत्र तद्वत्ताबुद्धिः प्रतियोगितानवच्छेदकत्ववत् साध्यतावच्छेदकमिति बुद्धिः । तदभाववत्ताज्ञानं प्रतियोगितानवच्छेदकत्वाभाववत् अर्थात् प्रतियोगितावच्छेदकं साध्यतावच्छेदकमिति बुद्धिः ।

---

1. ननु विशिष्टबुद्धौ विशेषणविषयकज्ञानस्यैव हेतुतया साध्यसामानाधिकरण्यविशिष्टो हेतुरिति बुद्धिं प्रति साध्यसामानाधिकरण्यज्ञानमेव हेतुः, न तु साध्यसामानाधिकरण्यविशिष्टो हेतुरित्याकारकं सहचारज्ञानमपि, हेतुविषयकतायाः विशिष्टबुद्धिकारणतावच्छेदककोटावप्रवेशात् इत्यत आह-अधिकमिति । अयं भावः—[1] साध्यसामानाधिकरण्यविशिष्टहेतुविशिष्टं हेतुतावच्छेदकमित्याकारकं व्याप्तिज्ञानम्-हेतुतावच्छेदके हेतुवैशिष्ट्यं चाधेयतासम्बन्धेन । तादृशव्याप्तिज्ञानं प्रति विशिष्टवैशिष्ट्यावगाहिबुद्धौ विशेषणतावच्छेदकप्रकारकज्ञानविधया सामानाधिकरण्यरूपसहचारग्रहो हेतुरिति ।

साध्यसामानाधिकरण्यं व्याप्तिः इति मूलविरोधो मा भूदित्या-शयेनाह - **वस्तुतस्त्विति** । **न चेति** । धूमव्यापकवह्निसामानाधिकरण्य-रूपायाः व्याप्तेः रासभेऽपि वर्तमानतया धूमव्यापकवह्निसामानाधि-करणरासभवान् पर्वत इत्याकारकस्य परामर्शस्य प्रमात्मकतया ततोऽपि भ्रमात्मकरासभलिङ्गकवह्न्यनुमित्यापत्तिः इत्यर्थः । यद्यपि 'पर्वतो वह्निमान्' इत्यनुमितेः प्रमात्वात् कथमापाद्यमानायाः अनुमिते-र्भ्रमत्वम् इत्याशङ्का भवति, तथापि [1]व्याप्यलिङ्गकानुमितेरेव प्रमात्वं न त्वव्याप्यलिङ्गकानुमितेरित्याशयेनैवमुक्तमिति ध्येयम् । समाधत्ते-**यद्धर्मावच्छिन्नेति** । धूमत्वावच्छिन्नव्यापकत्वं व्याप्तिघटकम्, अतः धूमत्वधर्मितावच्छेदककः व्याप्तिप्रकारकः निश्चयः धूमव्यापकवह्नि-समानाधिकरणधूमवान् पर्वत इति निश्चय एव पर्वतो वह्निमानित्यनु-मितिहेतुः, धूमव्यापकवह्निसमानाधिकरणरासभवानिति परामर्शस्तु रासभत्वधर्मितावच्छेदककः व्याप्तिप्रकारक इति न तस्यानुमितिहेतु-त्वमिति भावः । **अत एवेति** । व्यापकताप्रविष्टहेतुतावच्छेदकधर्मिता-वच्छेदककसामानाधिकरण्यप्रकारकनिश्चयस्यानुमितिहेतुत्वं स्वीकृत्य प्रमात्मकरासभलिङ्गकपरामर्शात् भ्रमात्मकवह्न्यनुमितेः वारणेन व्याप्ते रासभादिसाधारण्येऽपि क्षतिविरहादेवेत्यर्थः ।

**सामान्यलक्षणेत्यादि** । सामान्यं लक्षणं स्वरूपं यस्याः सा सामा-न्यलक्षणा प्रत्यासत्तिः सन्निकर्षः । वह्नित्वधूमत्वात्मकसंनिकर्षेण तदा-श्रयसकलवन्हिधूमानां प्रत्यक्षे सति वन्हित्वावच्छिन्ननिरूपितसामा-नाधिकरण्यत्वेन रूपेण सकलधूमनिष्ठानां सकलवन्हिसामानाधि-करण्यानामपि ग्रहात् पर्वतीयधूमनिष्ठं पर्वतीयवह्निसामानाधिकरण्य-मपि पूर्वं प्रत्यक्षितम् । अतः धूमदर्शनेन पर्वतीयधूमनिष्ठपर्वतीयवह्नि-सामानाधिकरण्यरूपव्याप्तेः स्मरणं भवितुमर्हतीति भावः । एतेन

---

1. व्याप्यलिङ्गकत्वं च व्याप्यं यल्लिङ्गं तद्विषयकज्ञानजन्यत्वम्। अनुमितेर्भ्रमत्वं व्याप्ति-ज्ञानस्य भ्रमत्वात् भवति। व्याप्ते रासभसाधारण्ये च व्याप्तिज्ञानस्य रासभधर्मि-कस्य प्रमात्वात् तज्जन्यवह्न्यनुमितेरपि प्रमात्वमेव स्यात् न तु भ्रमत्वमिति भावः।

वह्नित्वधूमत्वरूपसामान्यलक्षणया सकलवह्निधूमानामुपस्थितावपि वह्निसामानाधिकरण्यरूपायाः व्याप्तेः प्रत्येकविश्रान्ततया पूर्वं महानसे महानसीयधूमनिष्ठसामानाधिकरण्यस्य गृहीतत्वेऽपि पर्वतीयधूमनिष्ठ-सामानाधिकरण्यस्याग्रहणात् कथं तत्स्मृतिरितिशङ्का परास्ता । वह्नित्वावच्छिन्नसामानाधिकरण्यत्वात्मकसामान्यलक्षणप्रत्यासत्त्या पर्वतीयधूमनिष्ठसामानाधिकरण्यस्यापि ग्रहसम्भवात् ।

## तर्कसङ्ग्रहः

### परार्थानुमाननिरूपणम्

यत्तु स्वयमेव धूमादग्निमनुमाय परप्रतिपत्त्यर्थं पञ्चावयव-वाक्यं प्रयुङ्क्ते तत्परार्थानुमानम् ।

## दीपिका

परार्थानुमानमाह - **यत्त्विति** । यच्छब्दस्य 'तत्परार्थानुमानम्' इति तच्छब्देनान्वयः ।

## प्रकाशिका

यद्यपि परार्थानुमानशब्दस्य परस्य मध्यस्थस्य अर्थः प्रयोजनं साध्यानुमितिरूपं यस्मात् इति व्युत्पत्त्या परसमवेतानुमितिकरण-लिङ्गपरामर्शोऽर्थः । अत एव 'स्वर्थानुमितिपरार्थानुमित्योः लिङ्गपरा-मर्श एव करणम्' इत्याद्यग्रिममूलं साधु सङ्गच्छते, तथापि परार्थानु-मानप्रयोजके पञ्चावयववाक्ये परार्थानुमानशब्दस्य औपचारिकः प्रयोग इति मनसि कृत्वा मूलमवतारयति - **परार्थानुमानमाहेति** ।

## बालप्रिया

**परस्य मध्यस्थस्येति** । यद्यपि परशब्दः अन्यपरः, तथा चान्य-समवेतानुमितिकरणमित्येव स्वरसतः परार्थानुमानशब्दार्थः । तथापि न्यायरूपस्य परार्थानुमानस्य वादादिकथायामेव प्रायश उपयोगात् तत्र परशब्दस्य अन्यप्रतिवादिपरत्वे तस्य बाधज्ञानसत्त्वेन वाद्युक्तन्या-

यात् अप्रामाण्यशङ्कारहिता अनुमितिर्न जायते, मध्यस्थस्य तु पक्षद्वयेऽप्याग्रहरहितस्य अनुमितिर्भवितुमर्हतीत्याशयेनैवं व्याख्यानं कृतम् ।

**परार्थानुमानप्रयोजक** इति । **परार्थानुमानस्य** परसमवेतानुमितिकरणस्य लिङ्गपरामर्शस्य, **प्रयोजके** परम्परया कारणभूते पञ्चावयवकमहावाक्यरूपे न्याये । **औपचारिकः** लाक्षणिकः । कारणे कार्योपचारः परार्थानुमानशब्द इति यावत् । कथं लिङ्गपरामर्शरूपपरार्थानुमानप्रयोजकत्वं न्यायस्येति चेत् - इत्थम् । प्रतिज्ञादिभिः पञ्चभिर्वाक्यैः प्रथमतः [2]तत्तद्वाक्यार्थबोधः जायते । ततः एकवाक्यतामापन्नैः पञ्चभिर्वाक्यैरेकमहावाक्यार्थबोधो जायते । ततः तत्सहकृतेन मनसा लिङ्गपरामर्शो जायते, ततोऽनुमितिः इत्येवं अनुमितिजनकलिङ्गपरामर्शजनकमहावाक्यार्थबोधजनकतया परार्थानुमानप्रयोजकत्वं पञ्चावयववाक्यात्मकन्यायस्येति । महावाक्यार्थबोधस्य आकारस्तु - [3]धूमज्ञानज्ञाप्यवह्निमत्पर्वताभिन्नधूमवद्धूमव्यापकवह्निमदभिन्नवह्निव्याप्यधूमवदभिन्नः पर्वतः अबाधितासत्प्रतिपक्षितधूमज्ञानज्ञाप्यवह्निमत्पर्वताभिन्नः इति ।



---

1. कारणं न्यायः कार्यं लिङ्गपरामर्शः । कार्यभूतलिङ्गपरामर्शवाचकस्य परार्थानुमानशब्दस्य कार्ये लिङ्गिपरामर्शे लक्षणया प्रयोग इत्यर्थः ।
2. 'पर्वतः वह्निमदभिन्नः' 'धूमनिष्ठं ज्ञापकत्वम्' इत्याद्याकारकाः प्रतिज्ञादिप्रत्येकवाक्यार्थविषयकाः पञ्च बोधाः जायन्ते ।
3. धूमज्ञानज्ञाप्येत्यादि । उपनयार्थे हेत्वर्थान्वितप्रतिज्ञार्थोदाहरणार्थयोरुद्देश्यतावच्छेदकतया निगमनार्थस्य च विधेयतया अन्वयात् उदाहरणघटकयत्तत्पदयोर्दृष्टान्तबोधकस्य च तात्पर्यग्राहकतयोपयोगस्य स्वीकारात् उक्तविधो महावाक्यार्थबोधो लभ्यते। तथा हि - धूमादिति पञ्चम्यन्तार्थः धूमज्ञाननिरूपितज्ञाप्यत्वम् । तस्याश्रयतासम्बन्धेन प्रतिज्ञाघटकवह्निपदार्थे वह्नावन्वयः। वह्निमत्पदार्थस्याभेदेन पर्वतपदार्थे तस्याभेदसम्बन्धेन उपनयघटकेदंपदार्थे पर्वतेऽन्वयः। उदाहरणे वह्निपदस्य धूमव्यापकवह्नौ लक्षणा। यत्पदतत्पदयथामहानसपदानां तात्पर्यग्राहकता । धूमवतः अभेदेन धूमव्यापकवह्निमत्यन्वयः। तस्यचाभेदेन उपनयस्थेदम्पदार्थेऽन्वयः । अबाधितासत्प्रतिपक्षितधूमज्ञानज्ञाप्य वह्निमान् निगमनार्थः, तस्याभेदसम्बन्धेन उपनयस्थेदम्पदार्थेऽन्वयः । उपनयवाक्यार्थस्तु वह्निव्याप्यधूमवदभिन्नः पर्वतः, तथाशब्दस्य वह्निव्याप्यधूमवदर्थैकत्वात् इदम्पदस्य पर्वतार्थकत्वाच्चेति भावः ।

यथा पर्वतो वह्निमान् धूमवत्त्वात्, यो यो धूमवान् सोऽग्निमान् यथा महानसः, तथा च अयम्, तस्मात् तथा इति । अनेन वाक्येन प्रतिपादितात् लिङ्गात् परोऽप्यग्निं प्रतिपद्यते ।

प्रतिज्ञाहेतूदाहरणोपनयनिगमनानि पञ्चावयवाः । पर्वतो वह्निमान् इति प्रतिज्ञा । धूमवत्त्वात् इति हेतुः । यो यो धूमवान् सोऽग्निमान् यथा महानस इत्युदाहरणम् । । तथा चायं इत्युपनयः । तस्मात् तथेति निगमनम् ।

## दीपिका

पञ्चावयववाक्यमुदाहरति - **यथे**ति । अवयवस्वरूपमाह - **प्रतिज्ञे**ति । उदाहृतवाक्ये प्रतिज्ञादिविभागमाह - **पर्वतो वह्निमानि**ति । साध्यवत्तया पक्षवचनम् प्रतिज्ञा । पञ्चम्यन्तं लिङ्गप्रतिपादकं हेतुः । व्याप्तिप्रतिपादकम् उदाहरणम् । व्याप्तिविशिष्टलिङ्गप्रतिपादकं वचनं उपनयः । हेतुसाध्यवत्तया पक्षप्रतिपादकं वचनं निगमनम् । अबाधितत्वादिकं निगमनप्रयोजनम् ।

## प्रकाशिका

पञ्चावयववाक्यं इत्यनेन पञ्च अवयवा यस्य वाक्यस्य इति व्युत्पत्त्या प्रतिज्ञाद्यवयवपञ्चकसमुदायत्वं न्यायलक्षणं बोध्यम् । **अनेन प्रतिपादिताल्लिङ्गादिति** मूलस्य प्रतिज्ञाद्यवयवपञ्चकसमुदायप्रयोज्यलिङ्गपरामर्शादित्यर्थः । **साध्यवत्तया पक्षवचनमि**ति । साध्यतावच्छेदकावच्छिन्न-साध्यप्रकारक-पक्षतावच्छेदकावच्छिन्न-पक्षविशेष्यक-बोधजनकवाक्यमित्यर्थः । उदाहरणात् हेतुविशिष्टे साध्यतावच्छेदकविशिष्टवैशिष्टयज्ञानम्, न पक्षतावच्छेदकविशिष्टे, उपनयाच्च पक्षतावच्छेदकविशिष्टे हेतुतावच्छेकविशिष्टवैशिष्टयज्ञानम्, न तु साध्यतावच्छेदकविशिष्टवैशिष्ट्यावगाहिज्ञानमिति तयोर्निरासः । वाक्यपदस्य न्यायावयववाक्यपरत्वात् न्यायबहिर्भूतवाक्यव्युदासः । एवम-

ग्रेऽपि। 'अयं न दण्डात् तद्दण्डसंयोगाजन्यद्रव्यत्वात्' इत्यादौ प्रतिज्ञायां पञ्चम्यन्तत्वस्य सत्त्वात् अतिव्याप्तेर्वारणाय **लिङ्गप्रतिपादकमिति**। हेतुप्रतिपादकमित्यर्थः। **व्याप्तिप्रतिपादकमिति**। प्रकृतहेतुमति प्रकृतहेतु-व्यापकसाध्यबोधकवाक्यमित्यर्थः। कथमुदाहरणस्य व्यापकत्वबोधक-तेति चेत् - इत्थम्, साध्यपदस्य हेतुव्यापकत्वविशिष्टे साध्ये निरूढ-लक्षणया। न च द्विरुक्तयत्पदस्य वैयर्थ्यमिति शङ्क्यम्, तादृशतात्प-र्यग्राहकतया सार्थक्यात्। अथ वा प्रथमयत्पदार्थे महानसे द्वितीय-यत्पदार्थे महानसान्यस्मिन् प्रकृतहेतुमत्वस्य, प्रथमतत्पदार्थे महानसे द्वितीयतत्पदार्थे महानसान्यस्मिन् साध्यस्य च शाब्दबोधे जाते उत्तरकाले व्यापकताबोधो मानसः। तथा च व्याप्तिप्रतिपत्तिपर-त्वमुदाहरणस्याक्षतमिति न कश्चिद्दोष इति दिक्। **व्याप्तिविशिष्टलिङ्ग-प्रतिपादकमिति**। पक्षतावच्छेदकविशिष्टविशेष्यकप्रकृतसाध्यव्याप्यहेतु-प्रकारकबोधजनकवाक्यमित्यर्थः। 'पक्षधर्मताज्ञानार्थम् उपनयः' इति पाठे तु 'प्रयुज्यत' इति शेषपूरणेन प्रदर्शितार्थ एव यथाकथञ्चित् सङ्गमनीयः। **हेतुसाध्यवत्तयापक्षप्रतिपादकं वचनमिति**। हेतुज्ञानज्ञाप्य-त्वविशिष्टसाध्यवद्विषयकबोधजनकवाक्यमित्यर्थः। उत्तरकालमबाधि-तासत्प्रतिपक्षितत्वविषयकबोधो मानसो द्रष्टव्यः।

## बालप्रिया

प्रतिज्ञालक्षणं परिष्कृतमाह - **साध्यतावच्छेदकावच्छिन्नेत्यादि**। पर्वतो वन्हिमान् इत्याकारकबोधस्य पक्षतावच्छेदकीभूतपर्वतत्वाव-च्छिन्नविशेष्यकत्वात् साध्यतावच्छेदकीभूतवह्नित्वावच्छिन्नप्रकार-कत्वाच्च तादृशबोधजनके पर्वतो वह्निमानिति वाक्ये लक्षणसम-न्वयः। पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वानिवेशे 'यो यो धूमवान् सोऽग्निमान्' इत्युदाहरणे 'सोऽग्निमान्' इति भागात् 'धूमवान् वह्निमान्' इत्याकारकबोधस्य जायमानतया तस्य वह्नित्वावच्छिन्न-प्रकारकत्वेन तादृशबोधजनके उदाहरणवाक्येऽतिव्याप्तिः। पक्षताव-च्छेदकावच्छिन्नविशेष्यकत्वनिवेशे तु उक्तबोधस्य धूमवत्त्वावच्छिन्न-

विशेष्यकत्वेऽपि पर्वतत्वावच्छिन्नविशेष्यकत्वाभावात् न दोषः। साध्यतावच्छेदकावच्छिन्नप्रकारकत्वमनिवेश्य पक्षतावच्छेदकावच्छिन्नविशेष्यकबोधजनकत्वमित्येतावन्मात्रोक्तौ 'तथा चायम्' इत्युपनयवाक्येऽतिव्याप्तिः। तज्जन्यस्य 'वह्निव्याप्यधूमवान् पर्वतः' इत्याकारकस्य पर्वतत्वावच्छिन्नविशेष्यकत्वात्। साध्यतावच्छेदकावच्छिन्नप्रकारकत्वनिवेशे तु तस्य धूमत्वावच्छिन्नप्रकारकत्वेन वह्नित्वावच्छिन्नप्रकारकत्वाभावात् न दोषः। एवं पक्षविशेष्यकत्वमात्रोक्तौ 'द्रव्यं वह्निमत्' इति वाक्येऽतिव्याप्तिः। तद्वारणाय पक्षतावच्छेदकावच्छिन्नविशेष्यकत्वनिवेशः। 'पर्वतो द्रव्यवान्' इति वाक्ये अतिव्याप्तिवारणाय साध्यविशेष्यकेत्यनुक्त्वा साध्यतावच्छेदकावच्छिन्नविशेष्यकेत्युक्तम्। 'पर्वतो द्रव्यवान्,द्रव्यं वह्निमच्च' इति वाक्यजन्यसमूहालम्बनबोधस्यापि पर्वतत्वावच्छिन्नविशेष्यकत्वात् वह्नित्वावच्छिन्नप्रकारकत्वाच्च तादृशवाक्येऽतिव्याप्तिवारणाय विशेष्यताप्रकारतयोर्निरूप्यनिरूपकभावं निवेश्य साध्यतावच्छेदकावच्छिन्नसाध्यनिष्ठप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नपक्षनिष्ठविशेष्यताशालिबोधजनकं वाक्यं प्रतिज्ञेति वक्तव्यम्। **न्यायबहिर्भूते**ति। पञ्चावयवकन्यायानन्तर्गतस्य उदासीनस्य 'पर्वतो वह्निमान्' इति वाक्यस्य निरासः। **एवमग्रेऽपीति**। हेत्वादिलक्षणघटकवाक्यपदं न्यायावयवरूपवाक्यपरमिति न्यायबहिर्भूते हेत्वादिवाक्यसमानाकारे वाक्ये नातिव्याप्तिरिति ज्ञेयमित्यर्थः। **पञ्चम्यन्तं लिङ्गप्रतिपादकं हेतुरिति दीपिका**। पञ्चम्यन्तत्वे सति लिङ्गविषयकबोधजनकत्वे सति वाक्यत्वमिति तदर्थः। अस्ति च धूमादिति भागस्य तथात्वमिति लक्षणसमन्वयः। पञ्चम्यन्तत्वे सतीत्यनुपादाने उदाहरणादित्रिष्वतिव्याप्तिः। तेषामपि लिङ्गबोधकत्वात्। अतः पञ्चम्यन्तत्वे सतीत्युक्तम्। 'अयं न दण्डात् तद्दण्डसंयोगाजन्यद्रव्यत्वात्' इत्यादौ 'अयं न दण्डात्' इति प्रतिज्ञायामपि पञ्चम्यन्तत्वसत्त्वात् तत्रातिव्याप्तिवारणाय लिङ्गबोधकत्वे सतीत्युक्तम्। प्रकृतसाध्यानुमितिहेतुलिङ्गबोधकत्वं तदर्थ इति न दोषः। वाक्यपदस्य

न्यायावयवत्वपरतया निगमनावयवे तस्मादिति भागे नातिव्याप्तिः। तस्य भागस्य न्यायावयवनिगमनावयवत्वेऽपि न्यायावयवत्वास्वीकारात्। न चैवं सति 'अयं न दण्डात्' इति प्रतिज्ञान्तर्गतस्य दण्डादितिभागस्य प्रतिज्ञावयवत्वेऽति न्यायावयवत्वाभावादेव नातिव्याप्तिरिति लिङ्गप्रतिपादकमिति विशेषणं व्यर्थमिति वाच्यम्। तर्हि न्यायावयवप्रतिज्ञावयवस्यापि न्यायावयवत्वादतिव्याप्तिप्रसक्तेः। न च तर्हि निगमनावयवे तस्मादिति भागेऽतिव्याप्तिरिति वाच्यम्। पञ्चम्यन्तत्वमित्यनेन प्रकृतपक्षविशेषणतापन्नसाध्यान्वितस्वार्थबोधकपञ्चम्यन्तत्वस्य विवक्षितत्वेनादोषादित्याशयात्। ननु **'व्याप्तिप्रतिपादकमुदाहरणम्' इति दीपिकातः** व्याप्तिविषयकबोधजनकवाक्यत्वमुदाहरणस्य लक्षणमित्यवगम्यते। तच्च उपनयनिगमनयोरतिव्याप्तम्। तयोरपि व्याप्तिप्रतिपादकत्वात्। उपनयघटकतथापदस्य वह्निव्याप्यधूमवानित्यर्थकत्वात् निगमनघटकतस्मादितिशब्दस्य वह्निव्याप्यधूमवत्त्वात् इत्यर्थकत्वात् इत्याशङ्क्य व्याचष्टे - **प्रकृतहेतुमतीति**। 'यो यो धूमवान् स सोऽग्निमान्' इत्युदाहरणे अग्निपदस्य धूमव्यापकवह्नौ लक्षणा, वीप्सितयत्पदं तत्पदं च लक्षणातात्पर्यग्राहकम्। तथा च धूमवान् धूमव्यापकवह्निमानित्यर्थः। तेन प्रकृतहेतुमद्विशेष्यकप्रकृतहेतुव्यापकसाध्यप्रकारकबोधजनकवाक्यत्वमुदाहरणस्य लक्षणमिति लभ्यते। उपनयनिगमनयोः ईदृशलक्षणाभावात् नातिव्याप्तिरिति भावः। नन्वेवमपि 'धूमवान् धूमव्यापकवह्निमान्' इत्यादिवाक्यानांमप्युदाहरणत्वापत्तिः। न चेष्टापत्तिः। कथकसम्प्रदायविरोधात् इत्यत आह - **दिगिति**। वीप्सित यत्पदोत्तरहेतुतावच्छेदकविशिष्टहेतुमद्बोधकपद -तत्पदोत्तरसाध्यतावच्छेदकविशिष्टसाध्यवद्बोधकपदसमुदायत्वमेव उदाहरणत्वं विवक्षितम्। अतो न दोष इति भावः। आधिकमन्यत्र।

**पक्षतावच्छेदकविशिष्टेत्यादि**। वह्निव्याप्यधूमवानिति वाक्येऽसिव्याप्तिवारणाय पक्षतावच्छेदकविशिष्टविशेष्यकत्वनिवेशः। पर्वतो

धूमवानिति वाक्येऽतिव्याप्तिवारणाय प्रकृतसाध्यव्याप्यत्वनिवेशः। प्रकृतसाध्यनिष्ठप्रकारतानिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितहेतुनि-ष्ठप्रकारताशालिबोधजनकवाक्यमित्यर्थः। तेन 'पर्वतो धूमवान्' इति वाक्यस्यापि वस्तुतो वह्निव्याप्यो यो धूमस्तत्प्रकारकत्वादतिव्याप्तिरिति शङ्कायाः नावसरः। **हेतुसाध्यवत्तया पक्षप्रतिपादकमिति दीपिकाग्रन्थात्** हेतुमत्तया साध्यवत्तया च पक्षप्रतिपादकत्वं निगमनस्य लक्षणमित्यव-गम्यते। तथा सति निगमनेऽसम्भवः। 'तस्मात् तथा' इति निगमनवा-क्यस्य साध्यवत्तया पक्षबोधकत्वेऽपि हेतुमत्तया पक्षबोधकत्वाभावात्। पञ्चम्यर्थस्य साध्येऽन्वयेन पक्षेऽन्वयाभावात्। एवं 'धूमवान् वह्निमांश्च पर्वतः' इति वाक्येऽतिव्याप्तिश्च। अतो व्याचष्टे - **हेतुज्ञाने**ति। पञ्च-म्याः ज्ञानज्ञाप्यत्वमर्थः। ज्ञाने प्रकृत्यर्थस्य हेतोः विषयतासम्बन्धेनान्वयः। तथाशब्दस्य साध्यवानित्यर्थः। साध्ये पञ्चम्यर्थस्य ज्ञानज्ञाप्यत्वस्याश्रय-तयान्वयः। तथा च हेतुविषयकज्ञानज्ञाप्यत्वाश्रयसाध्यवान् पक्ष इत्या-कारकबोधः निगमनात् जायत इति निगमनवाक्ये लक्षणसमन्वयः। अबाधितत्वादिकं निगमनप्रयोजनमिति कथम्? निगमनवाक्यात् अबा-धितत्वासत्प्रतिपक्षितत्वयोरप्रतिपत्तेरित्याशङ्क्याह - **उत्तरकालमि**ति। तथा च पूर्वोक्तरीत्या शाब्दबोधानन्तरं अयं हेतुरबाधितः असत्प्रति-पक्षश्चेति मानसं ज्ञानमुत्पद्यत इति भावः।



## तर्कसङ्ग्रहः

स्वार्थानुमितिपरार्थानुमित्योः लिङ्गपरामर्श एव करणम्। तस्मात् लिङ्गपरामर्शोऽनुमानम्।

## दीपिका

अनुमितिकरणमाह - **स्वार्थे**ति।

**विशिष्टपरामर्शस्यानुमितिहेतुत्वस्थापनम्**

ननु व्याप्तिस्मृतिपक्षधर्मताज्ञानाभ्यामेव अनुमितिसम्भवे वि-शिष्टपरामर्शः किमर्थमङ्गीकर्तव्य इति चेत्-न। 'वह्निव्याप्यवानयम्'

इति शाब्दपरामर्शस्थले परामर्शस्यावश्यकतया लाघवेन सर्वत्र परामर्शस्यैव कारणत्वात् । लिङ्गं न करणम्, अतीतादौ व्यभिचारात् । 'व्यापारवत् कारणं करणम्' इति मते परामर्शद्वारा व्याप्तिज्ञानं करणम् । तज्जन्यत्वे सति तज्जन्यजनको व्यापारः । अनुमानमुपसंहरति - **तस्मादि**ति ।

## प्रकाशिका

ननु विशिष्टवैशिष्ट्यावगाहिपरामर्शस्य अनुमितिं प्रति हेतुत्वे तत्रानन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोर्द्वयोः कल्पनीयतया गौरवम् । 'वह्निव्याप्यो धूमः, धूमवान् पर्वतः' इति ज्ञानद्वयस्य तव मते विशिष्टपरामर्शं प्रति कारणत्वेन क्लृप्तस्य कारणत्वे तु अनन्यथासिद्धत्वमात्रस्य कल्पनीयतया लाघवमिति प्राभाकरः शङ्कते - **नन्वि**ति। **वह्निव्याप्यवानयमि**ति । अत्र त्वदभिमतकारणस्य असत्त्वेन व्यभिचारात् न ज्ञानद्वयस्य कारणत्वं सम्भवतीति भावः । कथञ्चिदपि व्याप्यतावच्छेदकधूमत्वादेर्भानं परामर्शे न सम्भवतीति स्फोरणाय **शाब्दे**ति । **लाघवेने**ति । कल्पनालाघवेनेत्यर्थः । तथा हि - ज्ञानद्वये अनन्यथासिद्धत्वनियतपूर्ववृत्तित्वयोः कल्पनापेक्षया विशिष्टपरामर्शे तत्कल्पनस्यैव लघीयस्त्वमिति ।

वस्तुतस्तु तद्धर्मावच्छिन्नविशेष्यकव्याप्तिप्रकारकनिश्चयविशिष्टतद्धर्मावच्छिन्नप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यकनिश्चयस्यैव कारणतावच्छेदकत्वं ज्ञानद्वयसाधारण्येन तन्मते मन्तव्यम् । नैयायिकमते तु - व्याप्तिविशिष्टवैशिष्ट्यावगाहिनिश्चयत्वं कारणतावच्छेदकमिति कारणतावच्छेदकलाघवम् अवधेयम् । विनिगमनाविरहेण ज्ञायमानलिङ्गत्वेनापि करणत्वं वदतां **आचार्याणां** मतं निरस्यति - **लिङ्गं न करणमि**ति । **व्यभिचारादि**ति । तत्राप्यनुमितेरनुभवसिद्धत्वेन तदव्यवहितपूर्वं भूतभविष्यद्धूमादेरसत्त्वादिति भावः । **मत इ**ति । 'फलायोगव्यवच्छिन्नं कारणं करणम्' इति मते परामर्श एव करणमिति ध्येयम् । करणे अतिव्याप्तिवारणाय - **तज्जन्यत्वे सती**ति ।

**बालप्रिया**

नैयायिकेनापि आदौ धूमदर्शनम्, ततः व्याप्तिस्मरणम्, ततः वह्निव्याप्यधूमवानयमिति विशिष्टपरामर्शः, ततोऽनुमितिरिति क्रमस्य स्वीकरणीयतया धूमदर्शनव्याप्तिस्मृतिभ्यामेव अनुमितिसम्भवात् मध्ये विशिष्टपरामर्शः किमर्थ इति प्राभाकरेण शङ्कितम्। शङ्केयं नोपपद्यते। विशिष्टपरामर्शादेव अनुमितिसम्भवे ज्ञानद्वयस्य नानुमितिहेतुत्वम् अन्यथासिद्धत्वादिति नैयायिकेन वक्तुं शक्यत्वात्। अतः शङ्कितुराशयमभिव्यनक्ति - **ननु विशिष्टवैशिष्ट्ये**त्यादिना। तथा च विशिष्टपरामर्शस्य अनन्यथासिद्धत्वं नियतपूर्ववृत्तित्वं चेत्युभयं कल्पनीयम्। ज्ञानद्वयस्य तु अनन्यथासिद्धत्वमात्रं कल्पनीयम्, न तु नियतपूर्ववृत्तित्वमपि, क्लृप्तत्वात्। अतो लाघवात् ज्ञानद्वयमेवानुमितिहेतुः न तु विशिष्टपरामर्श इति प्राभाकरस्य भात्र इत्याशयः। यत्र 'वह्निव्याप्यवानयम्'इति शब्दश्रवणात्'अयं वह्निव्याप्यवान्'इति शाब्दबोधात्मको विशिष्टपरामर्शः जातः तत्र तदुत्तरक्षणेऽनुमितेर्जायमानतया ज्ञानद्वयस्य व्यतिरेकव्यभिचारात् नानुमितिहेतुत्वमिति सर्वत्रैव तस्य हेतुत्वमिति रीत्या प्राभाकरमतं **दीपिकायां** खण्डितम्। ननु प्राभाकरमते ज्ञानद्वयस्यापि व्याप्तिज्ञानत्वेन पक्षधर्मताज्ञानत्वेन च कारणत्वमिष्यते। 'वह्निव्याप्यवानयम्' इति शाब्दपरामर्शस्यापि व्याप्तिज्ञानत्वपक्षधर्मताज्ञानत्वरूपकारणतावच्छेदकाक्रान्तत्वात् कारणत्वमिष्यत एवेति न व्यभिचार इत्याशङ्क्याह - **कथंचिदपी**ति। यंअ भावः - व्याप्तिज्ञानपक्षधर्मताज्ञानयोः व्याप्तिज्ञानत्वपक्षधर्मताज्ञानत्वाभ्यां कारणत्वस्वीकारे 'आलोको वह्निव्याप्यः धूमवान् पर्वतः' इति ज्ञानाभ्यामपि 'पर्वतो वह्निमान्' इत्यनुमित्यापत्तिः। अतो व्याप्यतावच्छेदकतया गृहीतधर्मावच्छिन्ने पक्षधर्मतावगाहि ज्ञानत्वेन कारणत्वं वक्तव्यम्। तथा च वह्निव्याप्यवानयमिति ज्ञाने व्याप्यतावच्छेदकधूमत्वादेरभानेन उक्तकारणतावच्छेदकानाक्रान्ततया कारणतावच्छेदकावच्छिन्नं विनापि कार्योत्पत्त्या व्यतिरेकव्यभिचारः प्राभाकरमते

दुर्वार इति । **स्फोरणायेति** । धूमत्वोपस्थापकपदाभावादित्यर्थः । **तथा हा**त्यादि । शाब्दपरामर्शादनुमितिः यत्र भवति तत्र ज्ञानद्वयं विनाऽप्यनुमितेरनुभवसिद्धतया तत्रापि यदि ज्ञानद्वयादेवानुमितिरिति कल्प्यते तर्हि ज्ञानद्वयस्यानन्यथासिद्धत्वं नियतपूर्ववृत्तित्वं चेत्युभय कल्पनीयम् । तत्र विशिष्टपरामर्शस्य नियतपूर्ववृत्तितायाः क्लृप्ततया अनन्यथासिद्धत्वमात्रं कल्पनीयमिति नैयायिकमते लाघवमिति भावः ।

ननु शाब्दपरामर्शस्थले नैयायिकस्य मते लाघवेऽपि यत्र ज्ञानद्वयादेवानुमितिः तत्र पूर्वोक्तरीत्या प्राभाकरमते लाघवमिति साम्यमित्याशङ्क्याह - **वस्तुतस्त्विति** । धूमत्वावच्छिन्नविशेष्यकव्याप्ति प्रकारकनिश्चयः 'धूमो वह्निव्याप्यः' इत्याकारकः एककालावच्छिन्नैकात्मवृत्तित्वसम्बन्धेन तद्विशिष्टः धूमत्वावच्छिन्नप्रकारकपर्वतत्वावच्छिन्नविशेष्यकनिश्चयः 'पर्वतो धूमवान्' इत्याकारकः । तथा चोक्तनिश्चयविशिष्टोक्तनिश्चयत्वं प्राभाकरमते अनुमितिकारणतावच्छेदकम् । नैयायिकमते तु व्याप्तिविशिष्टवैशिष्ट्यावगाहित्वम् । तत्तु धूमत्वानवगाहिनि वह्निव्याप्यवानयमिति शाब्दपरामर्शेऽप्यस्ति । अतः कारणतावच्छेदकलाघवात् नैयायिकमतमेव युक्तमिति भावः । **विनिगमनाविरहेणेति** । ज्ञायमानं लिङ्गं करणम् अथ वा लिङ्गविषयकज्ञानं करणमिति पक्षयोरन्यतरस्य साधुत्वसाधकयुक्त्यभावेनेत्यर्थः । लिङ्गस्य अनुमितिकरणत्वे ज्ञायमानाभ्यामतीतानागताभ्यां लिङ्गाभ्यां अनुमितिः न स्यात् । अनुमितेः अव्यवहितपूर्वं असतोस्तयोः अव्यवहितपूर्ववृत्तित्वघटितकरणत्वासम्भवात् । लिङ्गज्ञानस्य करणत्वे तु अतीतानागतलिङ्गयोरसत्त्वेऽपि तद्विषयकज्ञानसत्त्वादनुमितिरुपपद्यते । तदाह - **तत्राप्यनुमितेरि**रिति । **फलायोगव्यवच्छिन्नमिति** । कार्याव्यवहितपूर्ववृत्तित्वविशिष्टं कारणं करणमिति मते परामर्शस्यैवानुमित्यव्यवहितपूर्ववृत्तितया तदेव करणम्, व्याप्तिज्ञानस्य तु परामर्शव्यवहितत्वात् न करणत्वमिति भावः ।



हेतुविभागः

लिङ्गं त्रिविधम् - अन्वयव्यतिरेकि, केवलान्वयि, केवलव्यतिरेकि चेति ।

अन्वयव्यतिरेकिनिरूपणम्

अन्वयेन व्यतिरेकेण च व्याप्तिमत् अन्वयव्यतिरेकि । यथा वह्नौ साध्ये धूमवत्त्वम् । यत्र धूमस्तत्राग्निः यथा महानसः इत्यन्वयव्याप्तिः । यत्र वह्निर्नास्ति, तत्र धूमोऽपि नास्ति यथा महाह्रदः इति व्यतिरेकव्याप्तिः ।

## दीपिका

लिङ्गं विभजते - **लिङ्गमिति** ।

अन्वयव्यतिरेकिणं लक्षयति - **अन्वयेनेति** । हेतुसाध्ययोः व्याप्तिः अन्वयव्याप्तिः, तदभावयोर्व्याप्तिः व्यतिरेकव्याप्तिः ।

## प्रकाशिका

यद्यप्यनुमाननिरूपणस्यैव प्रतिज्ञातत्वेन तद्विभाग एव उचितः, तथापि लिङ्गस्य त्रैविध्ये प्रदर्शिते तज्ज्ञानस्य त्रैविध्यं फलतीति मनसि कृत्वाह - **लिङ्गं विभजत** इति ।

'अन्वयेन व्यतिरेकेण च व्याप्तिमत्' इति मूलस्य 'अन्वयसहचारग्रहग्राह्यव्याप्तिमत्त्वे सति व्यतिरेकसहचारग्रहग्राह्यव्याप्तिमत्' इत्यर्थं मनसि कृत्वा तादृशव्याप्तिद्वयं प्रकाशयति - **हेतुसाध्ययोरिति** ।

## बालप्रिया

'अन्वयेन व्यतिरेकेण च व्याप्तिमत्' इति यथाश्रुतमूलात् अन्वयव्याप्तिमत्त्वे सति व्यतिरेकव्याप्तिमत्त्वमन्वयव्यतिरेकिणो लक्षणमिति प्रतीयते । तथा सति केवलव्यतिरेकिण्यतिव्याप्तिः, तत्रापि वस्तुतोऽन्वयव्याप्तेरपि सत्त्वात् अतो व्याचष्टे - **अन्वयसहचारग्रह-**

**ग्राह्येति** । साध्यहेत्वोः सामानाधिकरण्यं अन्वयसहचारः तज्ज्ञान-जन्यज्ञानविषयीभूता व्याप्तिः हेतुव्यापकसाध्यसामानाधिकरण्यरूपा अन्वयव्याप्तिः । साध्याभावहेत्वभावयोः सामानाधिकरण्यं व्यतिरेक-सहचारः तज्ज्ञानजन्यज्ञानविषयीभूता व्याप्तिः साध्याभावव्यापकी-भूताभावप्रतियोगित्वरूपा व्यतिरेकव्याप्तिः । अन्वयेनेत्यत्र तृतीयायाः ज्ञानज्ञाप्यत्वमर्थः, अन्वयशब्दः अन्वयसहचारपरः, ज्ञानज्ञाप्यत्वस्य व्याप्तावन्वयः, तेनान्वयसहचारज्ञानज्ञाप्या व्याप्तिरिति मूलाल्लभ्यते । एवं व्यतिरेकशब्दः व्यतिरेकसहचारपरः, तृतीयार्थः ज्ञानज्ञाप्यत्वम्, तेन व्यतिरेकसहचारज्ञानज्ञाप्याव्याप्तिरिति लभ्यत इति भावः[1] ।



## तर्कसङ्ग्रहः

**केवलान्वयिनिरूपणम्**

अन्वयमात्रव्याप्तिकम् केवलान्वयि । यथा घटः अभिधेयः प्रमेयत्वात् पटवत् इति । अत्र प्रमेयत्वाभिधेयत्वयोः व्यतिरेकव्याप्तिः नास्ति, सर्वस्यापि प्रमेयत्वात् अभिधेयत्वाच्च ।

## दीपिका

केवलान्वयिनो लक्षणमाह - **अन्वयेति** । केवलान्वयिसाध्यकं लिङ्गं केवलान्वयि । [वृत्तिमत्] अत्यन्ताभावाप्रतियोगित्वं केवला-न्वयित्वम् । ईश्वरप्रमाविषयत्वं सर्वपदाभिधेयत्वं च सर्वत्र अस्तीति व्यतिरेकाभावः ।

## प्रकाशिका

अन्वयमात्रव्याप्तिकत्वरूपकेवलान्वयिलक्षणे मात्रपदेन व्यति-रेकव्याप्तेर्व्यवच्छेद्यतया सिद्ध्यसिद्धिभ्यां व्याघात इत्यालोच्य प्रका-

---

1. तथा च अन्वयसहचारज्ञानजन्यज्ञानविषयव्याप्तिमत्त्वे सति व्यतिरेकसहचारज्ञान-जन्यज्ञानविषयव्याप्तिमत्त्वं अन्वयव्यतिरेकिणो लक्षणम् । तत्र सत्यन्तानुपादाने केवलव्यतिरेकिण्यतिव्याप्तिः । विशेष्यानुपादाने केवलान्वयिन्यतिव्याप्तिः । व्यति-रेकसहचारेणाप्यन्वयव्याप्तिरेव गृह्यत इति मते अन्वयसहचारज्ञानव्यतिरेक-सहचारज्ञानोभयजन्यज्ञानविषयव्याप्तिमत्त्वं अन्वयव्यतिरेकिणो लक्षणम् ।

रान्तरेण परिष्करोति - **केवलान्वयिसाध्यक**मिति । केवलान्वयिसाध्यकव्यतिरेकिहेतोः सङ्ग्रहाय साध्ये केवलान्वयित्वं निवेशितम् । तदेव निर्वक्ति - **अत्यन्ताभावे**ति । निरवच्छिन्नवृत्तिमदत्यन्ताभावेत्यर्थः । तेन गगनाभावसंयोगाभावादिसाध्यकहेतोः सङ्ग्रहः । घटपदाभिधेयत्वस्य पटादावसत्त्वेन सर्वतः सत्त्वासम्भवादाह - **सर्वपदाभिधेयत्व**मिति ।

## बालप्रिया

ननु 'अन्वयमात्रव्याप्तिकं केवलान्वयी'ति मूलात् व्यतिरेकव्याप्तिशून्यत्वे सति अन्वयव्याप्तिमत्त्वं केवलान्वयिनो लक्षणमिति प्रतीयते । तथा सति केवलान्वयिनि व्यतिरेकव्याप्तेः प्रसिद्धत्वे तच्छून्यत्वं न सम्भवति । तस्याः अप्रसिद्धत्वे सुतरां तच्छून्यत्वाप्रसिद्धिरिति लक्षणमिदं नोपपद्यत इत्याशयेन **दीपिकायां** केवलान्वयिसाध्यकं केवलान्वयि इत्युक्तमित्याह - **अन्वयमात्रे**ति । केवलान्वयिसाध्यकः केवलान्वयी हेतुः 'इदं वाच्यं ज्ञेयत्वात्' इत्यादिः यथा केवलान्वयी, तथा केवलान्वयिसाध्यकः व्यतिरेकी हेतुरपि 'इदं वाच्यं घटत्वात्' इत्यादिः केवलान्वय्येव । तथा चोभयसङ्ग्रहाय हेतौ केवलान्वयित्वमनिवेश्य केवलान्वयिसाध्यकहेतुत्वं केवलान्वयिनो लक्षणं कथितमित्याह - **केवलान्वयिसाध्यके**ति । व्यतिरेकिहेतुः अत्यन्ताभावप्रतियोगी हेतुः । **तदेवे**ति । केवलान्वयित्वमेवेत्यर्थः । ननु अत्यन्ताभावाप्रतियोगित्वं केवलान्वयित्वम्, तत्साध्यकहेतुत्वं केवलान्वयिलिङ्गत्वमित्युक्तौ आकाशाभावसाध्यकस्य घटत्वादिहेतोः सङ्ग्रहो न स्यात् आकाशाभावस्य [1]आकाशरूप-आकाशाभावात्यन्ताभावप्रतियोगित्वेन अत्यन्ताभावाप्रतियोगित्वाभावात् । एवं संयोगाभावसाध्यकहेतोरपि सङ्ग्रहो न स्यात् संयोगाभावस्य [2]संयोगात्मकात्यन्ताभावप्रतियोगित्वात् इत्यत आह - **निरवच्छिन्ने**त्यादि । संयोग-

1. आकाशरूपः यः आकाशाभावात्यन्ताभावः तत्प्रतियोगित्वेनेत्यर्थः । अभावाभावस्य प्रतियोगिस्वरूपत्वादिति भावः ।

2. संयोगरूपः यः संयोगाभावात्यन्तभावः तत्प्रतियोगित्वादित्यर्थः ।

स्याव्याप्यवृत्तितया सावच्छिन्नवृत्तिकत्वात् निरवच्छिन्नवृत्तिमान् अभावः न संयोगात्मकः अभावः, अपि तु घटाद्यभावः तदप्रतियोगित्वं संयोगाभावेऽस्तीति तस्य केवलान्वयित्वोपपत्तिः। गगनरूपोऽभावस्तु न वृत्तिमान् तस्यावृत्तित्वात्, अपि तु वृत्तिमान् घटाद्यभावः तदप्रतियोगित्वं गगनाभावेऽस्तीति तस्यापि केवलान्वयित्वमुपपद्यत इति भावः। एवं च यत् सर्वत्रास्ति, न क्वापि तदभावः तत् केवलान्वयीति लभ्यते। नन्वभिधेयत्वस्य कथं केवलान्वयित्वम्। अभिधेयत्वं हि पदशक्तिमत्त्वम्। तच्च घटपटादिपदभेदेन भिन्नमिति घटपदाभिधेयत्वस्य पटादिनिष्ठात्यन्ताभावप्रतियोगित्वादित्याशङ्कते - **घटपदे**ति। **सर्वपदाभिधेयत्वमि**ति। सर्व इति यत् पदं तदभिधेयत्वं सर्वत्रास्तीति सर्वपदाभिधेयत्वं केवलान्वयि। तथा च 'घटः अभिधेयः प्रमेयत्वात्' इति प्रयोगे सर्वपदाभिधेयत्वं साध्यं इति केवलान्वयित्वमुपपद्यत इति भावः।



## तर्कसङ्ग्रहः

### केवलव्यतिरेकिनिरूपणम्

व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकि। यथा पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्। यत् इतरेभ्यो न भिद्यते न तत् गन्धवत् यथा जलम्। न चेयं तथा। तस्मात् न तथा इति। अत्र यत् गन्धवत् तत् इतरभिन्नम् इत्यन्वयदृष्टान्तः नास्ति, पृथिवीमात्रस्य पक्षत्वात्।

## दीपिका

केवलव्यतिरेकिणो लक्षणमाह - **व्यतिरेके**ति। तदुदाहरति - **यथे**ति। ननु इतरभेदः प्रसिद्धो वा न वा। आद्ये यत्र प्रसिद्धः तत्र हेतुसत्त्वे अन्वयित्वम्, असत्त्वे असाधारण्यम्। द्वितीये साध्यज्ञानाभावात् कथं तद्विशिष्टानुमितिः। विशेषणज्ञानाभावे विशिष्टज्ञानानुदयात् प्रतियोगिज्ञानाभावात् व्यतिरेकव्याप्तिज्ञानमपि न स्यादिति

चेत् - न । जलादित्रयोदशान्योन्याभावानां त्रयोदशसु प्रत्येकं प्रसिद्धानां मेलनं पृथिव्यां साध्यते । तत्र त्रयोदशत्वावच्छिन्नभेदात्मकसाध्यस्यै-काधिकरणवृत्तित्वाभावात् नान्वयित्वासाधारण्ये । प्रत्येकाधिकरण-प्रसिद्ध्या साध्यविशिष्टानुमितिः व्यतिरेकव्याप्तिनिरूपणं चेति ।

## प्रकाशिका

**मूले व्यतिरेकमात्रव्याप्तिकमिति** । निश्चितव्यतिरेकमात्रव्याप्ति-कमित्यर्थः । तेन 'पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यादौ अन्व-यव्याप्तेस्सत्त्वेऽपि न लक्षणासङ्गतिः । **इतरभेदः** - पृथिवीतरत्वाव-च्छिन्नप्रतियोगिताकभेदः। **अन्वयित्वमिति** । अन्वयसहचारग्रहग्राह्यव्या-प्तिमत्त्वं स्यादित्यर्थः । तथा च प्रसिद्धानुमानमिव एतदप्यन्वयव्यति-रेक्येव स्यादित्यर्थः । **असाधारण्यमिति** । सपक्षव्यावृत्तत्वरूपासाधारण-लक्षणाक्रान्तत्वादिति भावः । अप्रसिद्धसाध्यकेऽपि साध्यविशेषणकानु-मितिरेवेत्यभिप्रायेणाह - **साध्येत्यादि** । **व्यतिरेकव्याप्तीति** । साध्याभाव-व्यापकाभावप्रतियोगित्वरूपेत्यर्थः । पृथिवीतरसामान्यभेदो न साध्यते, अपि तु जलादिभेदकूटं साध्यते । तथा च नोक्तदोषावसर इत्याह - **जलादीति** । जलादीनां ये त्रयोदशान्योन्याभावास्तेषां कूटं साध्यत इत्यर्थः । समुदायस्य प्रसिद्ध्यसम्भवादाह - **प्रत्येकमिनि** । **त्रयोदश-त्वावच्छिन्नेति** । अनुमितेः पूर्वं निश्चितसाध्यतावच्छेदकावच्छिन्नवतो धर्मिण एवाप्रसिद्ध्या न तत्र हेतोः सत्त्वासत्त्वनिबन्धने अन्वयित्वा-साधारण्ये इति समुदितार्थः । प्रत्येकं प्रसिद्धौ अपेक्षाबुद्धिविशेषविषय-त्वरूपसमुदायत्वविशिष्टज्ञानं सम्भवति । तथा च विशेषणतावच्छेदक-प्रकारकनिर्णयस्य सद्भावात् साध्यतावच्छेदकविशिष्टवैशिष्ट्याव-गाह्यनुमितिः व्यतिरेकव्याप्तिज्ञानं च सम्भवतीत्याह - **प्रत्येकाधिकरणे**-त्यादिना । यद्यपि जलादि चतुर्दशान्योन्याभावानां चतुर्दशसु प्रत्येक प्रसिद्धानामिति रीत्या वक्तुमुचितम्, तथापि अर्थापत्तेः प्रमाणान्तर-त्वमङ्गीकुर्वन्तं प्राभाकरमाक्षेप्तुं व्यतिरेकव्याप्तेरनुमित्यङ्गत्वस्य

प्रदर्शनीयतया तन्मतसाधारण्येन व्यतिरेकव्याप्तिं प्रदर्शयितुं जलादि-त्रयोदशेत्यादिकथनम् । न च तन्मते चतुर्दशान्योन्याभावाः प्रसिद्धाः । अभावस्याधिकरणात्मकस्य तेनाङ्गीकारादिति ध्येयम् ।

केचित्तु - जलमेवादिः येषां त्रयोदशानामिति विग्रहेण जलादि-प्रतियोगिकानां चतुर्दशानामित्यर्थः । **त्रयोदशस्वि**ति । जलादीत्यादिः । उक्तविग्रहेण चतुर्दशस्वित्यर्थः । अग्रेऽप्येवं बोध्यम् इत्याहुः ।

**बालप्रिया**

ननु व्यतिरेकमात्रव्याप्तिकं केवलव्यतिरेकीत्यस्य अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वं केवलव्यतिरेकिणो लक्षणमित्यर्थः । तथा च 'पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यत्र केवलव्यतिरेकिणि वस्तुतोऽन्वयव्याप्तेरपि सत्त्वादसम्भवः इत्यतो व्याचष्टे - **निश्चितव्यतिरेके**ति । तथा चोक्तस्थले वस्तुतः अन्वयव्याप्तेः सत्त्वेऽपि साध्यस्याप्रसिद्ध्या (अज्ञानेन) हेतुव्यापकसाध्यसामानाधिकरण्यरूपान्वयव्याप्तिनिश्चयो नास्ति, व्यतिरेकव्याप्तिनिश्चयस्त्वस्तीति निश्चितव्यतिरेकमात्रव्याप्तिकत्वस्य सत्त्वात् केवलव्यतिरेकित्वमुपपद्यत इति भावः । यत्किंचिदितरभेदस्य प्रसिद्धत्वात् प्रसिद्धो न वेति विकल्पस्यैव नावसर इत्यतः व्याचष्टे - **पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेद** इति । पृथिवीतरेषां सर्वेषां भेद इत्यर्थः । तथा च यदि पृथिवीतरेषां सर्वेषां भेदः क्वचित् घटादौ ज्ञातः तर्हि तत्र हेतुसत्त्वे साध्यहेत्वोस्तत्रैवान्वयसहचारग्रहात् तद्ग्राह्यान्वयव्याप्तिमत्त्वमस्तीति अन्वयव्यतिरेक्यनुमानमेव भवेत् न केवलव्यतिरेकि । यदि तत्र हेतुर्नास्ति तर्हि हेतोर्निश्चितसाध्यवदवृत्तित्वेन सपक्षव्यावृत्तत्वरूपासाधारणहेत्वाभासलक्षणाक्रान्ततया हेतोरसाधारणत्वापत्तिः । यदि पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेदरूपं साध्यं न ज्ञातम् तर्हि साध्यरूपविशेषणज्ञानाभावात् साध्यविशिष्टपक्षज्ञानरूपा अनुमितिर्न स्यात् विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् । एवं साध्य-

स्याज्ञातत्वे साध्याभावघटितव्यतिरेकव्याप्तिज्ञानमपि न स्यात् । अभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वादिति **दीपिका**स्थशङ्काग्रन्थार्थः ।

ननु अप्रसिद्धसाध्यकस्थले साध्यविशेषणिका पक्षः साध्यवानित्याकारा अनुमितिर्मा भूत् विशेषणज्ञानरूपकारणविरहात् । पृथिव्यामितरभेदः इत्याकारा साध्यविशेष्यिका अनुमितिः भवितुमर्हत्येवेत्याशङ्क्याह **-अप्रसिद्धसाध्यकेऽपी**ति । **साध्यविशेषणकानुमितिरेवे**ति । साध्यविशेषणकानुमितिरेव जायत इति पक्षे विशेषणज्ञानाभावात् सा प्रकृते न सम्भवतीति दूषणम् । साध्यविशेष्यकानुमितिर्जायत इति पक्षे प्रतियोगिज्ञानाभावात् व्यतिरेकव्याप्तिज्ञानरूपकारणाभावात् न सा सम्भवतीति भावो वर्णनीयः । **जलादिभेदकूट**मिति । जलादीनां पृथिव्यतिरिक्तानां चतुर्दशानां प्रत्येकं ये चतुर्दश भेदाः तत्समूह इत्यर्थः । **जलादीनां ये त्रयोदशान्योन्याभावा** इति । ननु जलाद्यष्टद्रव्याणां गुणादिषट्पदार्थानां च भेदः पृथिव्यां साधनीयः । तथा च जलादिचतुर्दशान्योन्याभावेति वक्तव्ये त्रयोदशेत्यभिधानमनुचितमिति चेत्-अत्र केचित्-मीमांसकैरभावस्याधिकरणात्मकत्वस्वीकारेण अतिरिक्तपदार्थत्वानङ्गीकारात् त्रयोदशान्योन्याभाव इति तन्मतानुसारेण कथितम् । अर्थापत्तेरतिरिक्तप्रमाणत्वमङ्गीकुर्वतस्तान् प्रत्येव केवलव्यतिरेक्यनुमानस्य प्रदर्शनीयत्वात् इत्याहुः - तन्न । तादृशत्रयोदशान्योन्याभावानां जलादिषु प्रत्येकं प्रसिद्धानां तन्मते जलादिरूपतया जलादिरूपत्रयोदशभेदस्य पृथिव्यामसत्त्वेन गन्धवत्त्वलिङ्गेन तत्साधनासम्भवात् । पृथिवीनिष्ठस्य तादृशत्रयोदशभेदस्य पृथिवीरूपतया जलादिषु प्रत्येकं प्रसिद्ध्यभावेनाप्रसिद्ध्या उक्तरीत्या व्यतिरेकव्याप्तिज्ञानासम्भवेन तत्साधनासम्भवात् । अतः जलादित्रयोदशान्योन्याभावानामित्यस्य जलमादिर्येषां ते जलादयः, जलादयस्त्रयोदश जलादित्रयोदश तेषामन्योन्याभावा इति विग्रहः । जलादीत्यत्र अतद्गुणसंविज्ञानो बहुव्रीहिः । अतो जलादीनां चतुर्दशानां ये चतुर्दश अन्योन्याभावाः तेषां

लाभ इति व्याख्यातव्यम् । उपरि **प्रकाशिकायां** सर्वमिदं स्पष्टीभविष्यति ।

वस्तुतस्तु जलादीनां चतुर्दशानां ये भेदाः चतुर्दश ते सर्वे जलादिषु न प्रसिद्धाः । तथा हि - जलभेदः तेजःप्रभृतिषु त्रयोदशसु प्रसिद्धः, न तेजसि । एवंरीत्या त्रयोदशसु प्रसिद्धः यः एकैकभेदः तेषां मेलनं पृथिव्यां साध्यते । अर्थात् चतुर्दशभेदसमुदायः पृथिव्यां साध्यते । त्रयोदशत्वावच्छेदेन प्रसिद्धो यः एकैकभेदः तद्घटितचतुर्दशात्मकसमुदायः पृथिव्यां साध्यत इति यावत् । एवं च चतुर्दशत्वविशिष्टभेदस्य कुत्राप्यप्रसिद्धत्वात् नान्वयित्वं न वा असाधारण्यम् । साध्यघटकैकाभावस्य त्रयोदशत्वावच्छेदेन प्रसिद्धतया साध्यरूपविशेषणज्ञानसत्त्वेन साध्यविशिष्टानुमितिरुपपद्यते । एवं साध्यात्मकप्रतियोगिज्ञानसत्त्वेन साध्याभावज्ञानसम्भवात् व्यतिरेकव्याप्तिज्ञानमपि सुलभमिति **नृसिंहशास्त्रिणः** प्राहुः ।

**निश्चितसाध्यतावच्छेदके**ति । साध्यतावच्छेदकं त्रयोदशत्वं चतुर्दशत्वं वा तदवच्छिन्नाः भेदाः तद्वत इत्यर्थः । **प्रत्येकं प्रसिद्धावि**ति । जलभेदादीनां प्रसिद्धत्वात् तत्र अपेक्षाबुद्धिविशेषविषयत्वात्मकं यत् चतुर्दशत्वं तज्ज्ञानं भवति । तेन चतुर्दशत्वात्मकं यत् विशेषणतावच्छेदकं तत्प्रकारकः निर्णयः इमे भेदाः चतुर्दश इत्याकारकः उत्पद्यते। ततः चतुर्दशत्वविशिष्टभेदवती पृथिवी इत्याकारिका विशिष्टवैशिष्ट्यावगाहिनी अनुमितिः सुलभा । चतुर्दशत्वविशिष्टभेदाभावव्यापकीभूताभावप्रतियोगि गन्धवत्त्वमिति व्यतिरेकव्याप्तिज्ञानं च सुलभमिति भावः ।

वस्तुतस्तु केवलव्यतिरेक्यनुमानस्थले साध्यविशेष्यिकैवानुमितिः । अतः पूर्वं साध्यस्याप्रसिद्धावपि न क्षतिः । एवं पृथिवीतरभेदाभावत्वेन रूपेण साध्याभावस्य व्यतिरेकव्याप्तिघटकतया न प्रवेशः, येन प्रतियोग्यप्रसिद्ध्या अभावाप्रसिद्धेः व्यतिरेकव्याप्ति-

ज्ञानस्य दौर्लभ्यं भवेत् । अपि तु पृथिवीतरत्वव्यापकीभूताभावप्रतियोगि गन्धवती पृथिवी इत्येव परामर्शः । अतः **दीपिकाया**माश्रितः प्रयासो विफल इति प्राहुः । [1]पक्षतादीधित्यादौ स्पष्टमेतत् ।

## तर्कसङ्ग्रहः

पक्षलक्षणम्

सन्दिग्धसाध्यवान् पक्षः । यथा धूमवत्त्वे हेतौ पर्वतः ।

## दीपिका

पक्षलक्षणमाह - **सन्दिग्धेति** । ननु श्रवणानन्तरभाविमननस्थले अव्याप्तिः । तत्र वेदवाक्यैरात्मनो निश्चितत्वेन सन्देहाभावात् । किं च प्रत्यक्षेऽपि वह्नौ यत्र इच्छया अनुमितिः तत्र अव्याप्तिरिति चेत्–न । उक्तपक्षताश्रयत्वस्य पक्षलक्षणत्वात् ।

## प्रकाशिका

**मूले सन्दिग्धसाध्यवानिति** । विशेष्यतासम्बन्धेन साध्यप्रकारकसंशयविशिष्ट इत्यर्थः । सपक्षलक्षणादिकमप्येवं परिष्कर्तव्यम् । पक्षलक्षणस्याव्याप्तिमाशङ्कते - **दीपिकायां नन्विति** । संशयविघटकशाब्दबुद्धिस्थलेऽव्याप्तिमुक्त्वा प्रत्यक्षस्थलेऽपि तामाह - **किंचेति** । **उक्तेति** । सिषाधयिषाविरहविशिष्टसिद्धयभावरूपपक्षताश्रयत्वस्य पक्षलक्षणत्वादित्यर्थः ।

## बालप्रिया

**विशेष्यतासम्बन्धेने**ति । 'पर्वतो वह्निमान् न वा' इत्याकारके संशये वह्निः प्रकारः पर्वतो विशेष्य इति साध्यप्रकारकतादृशसंश-

---

1. 'अत एव प्रसिद्धसाध्यकस्थले पक्षविशेष्यिकैवानुमितिरनुभूयते' इति पक्षतायां दीधितिग्रन्थः । अत्र प्रसिद्धसाध्यकस्थले पक्षविशेष्यकानुमितिरिति कथनात् अप्रसिद्धसाध्यकस्थले साध्यविशेष्यकानुमितिरिति सूच्यते । तत्र गदाधरीयव्याख्याने 'किं तु अप्रसिद्धसाध्यकस्थले विशेषणज्ञानादिविरहेण साध्यविशेषणकानुमितेरनुपपत्त्या साध्यविशेष्यकानुमितिरूपेयते' इत्याद्युक्तं द्रष्टव्यम् ।

यस्य विशेष्यतासम्बन्धेन पर्वते सत्त्वात् पर्वतस्य पक्षता । प्रकारता-सम्बन्धेन तादृशसंशयस्य वह्नौ सत्त्वात् वह्नेः पक्षत्ववारणाय विशेष्य-तासम्बन्धेनेत्युक्तम् । **सपक्षलक्षणादिकमप्येवं परिष्कर्तव्यमि**ति । विशेष्य-तासम्बन्धेन साध्यप्रकारकनिर्णयविशिष्टः सपक्षः, विशेष्यतासम्बन्धेन साध्याभावप्रकारकनिर्णयविशिष्टः विपक्षः इति रीत्या परिष्कर्तव्य-मित्यर्थः । **संशयविघटके**ति । आत्मा देहेन्द्रियादिविलक्षणो न वेति सन्देहस्य प्रतिबन्धकः यः वेदवाक्यजन्यः शाब्दबोधः आत्मा देहेन्द्रिया-दिविलक्षणः इत्याकारकः तत्र तादृशशाब्दबोधात्मकश्रवणानन्तरं आत्मा देहेन्द्रियादिविलक्षण इत्याकारकानुमितिरूपं मननं न स्यात् । आत्मनः विशेष्यतासम्बन्धेन साध्यप्रकारकसन्देहवत्त्वरूपपक्षत्वाभावादिति भावः ।



## तर्कसङ्ग्रहः

**सपक्षलक्षणम्**

| निश्चितसाध्यवान् सपक्षः । यथा तत्रैव महानसः । |
|---|

**विपक्षलक्षणम्**

निश्चितसाध्याभाववान् विपक्षः । यथा तत्रैव महाह्रदः ।

**हेत्वाभासनिरूपणम्**

सव्यभिचार-विरुद्ध-सत्प्रतिपक्ष-असिद्ध-बाधिताः पञ्च हेत्वाभासाः ।

## दीपिका

सपक्षलक्षणमाह - **निश्चिते**ति ।

विपक्षलक्षणमाह - **निश्चिते**ति ।

एवं सद्धेतून्निरूप्य असद्धेतून्निरूपयितुं विभजते - **सव्यभिचारे**ति । अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासत्वम् ।

## प्रकाशिका

**सद्धेतून्निरूप्य** - व्याप्त्यादिविशिष्टहेतून्निरूप्येत्यर्थः । सद्धेतु-निरूपणे असद्धेतुस्मरणात् प्रसङ्गसङ्गत्या तन्निरूपणमिति भावः ।

**मूले हेत्वाभासा** इति । हेतुवदाभासन्त इति हेत्वाभासाः। दुष्टहेतवो निरूप्यन्त इत्यर्थः । ननु सामान्यधर्मप्रकारकज्ञानमन्तरा विशेषजिज्ञासानुदयेन सव्यभिचारेत्यादिना विभागोऽनुचित इत्याशङ्कां परिजिहीर्षुः दोषलक्षणेऽभिहिते दोषवत्त्वरूपदुष्टलक्षणस्यातिस्फुटत्वात् लाभो भवतीत्याशयेन दोषसामान्यलक्षणमाह - **अनुमितीति** । **हेत्वाभासत्वमिति** । हेतोराभासाः हेत्वाभासाः हेतुनिष्ठाः दोषाः, तेषां भावः तत्त्वमित्यर्थः । 'ह्रदो वह्निमान्' इत्याद्यनुमितिं प्रति 'वह्न्यभाववान् ह्रद' इत्यादिबाधनिश्चयः प्रतिबन्धकः । प्रमात्मकतादृशनिश्चयविषयत्वं वह्न्यभाववद्ध्रदादौ अक्षतमिति लक्षणसमन्वयः । अत्रानुमितिपदं अजहल्लक्षणया अनुमितितत्करणान्यतरपरम् । तेन व्यभिचारादिज्ञानस्य परामर्शप्रतिबन्धकतयैव निर्वाहात् अनुमित्यप्रतिबन्धकत्वेऽपि व्यभिचारादिषु नाव्याप्तिः । 'पर्वतो निर्वह्निः' इति बाधभ्रमस्य 'पर्वतो वह्निमान्' इत्यनुमितिप्रतिबन्धकत्वात् तद्विषयवह्न्यभावादौ अतिव्याप्तिः अतः **यथार्थेति** । भ्रमाभिन्नेत्यर्थः ।

अथैवमपि वह्न्यभाववद्ध्रदात्मकबाधैकदेशे वह्न्यभावादौ अतिव्याप्तिः । 'वह्न्यभाववान् ह्रदः' इत्याकारकयथार्थज्ञानविषयत्वस्य तत्र सत्त्वादिति चेत्-न । यद्रूपावच्छिन्नविषयकज्ञानसामान्यं अनुमितिप्रतिबन्धकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यर्थपर्यवसानेनादोषात् । वह्न्यभावत्वावच्छिन्नविषयकस्य 'वह्न्यभाववान् ह्रदः' इति ज्ञानस्यानुमितिप्रतिबन्धकत्वेऽपि तादृशज्ञानसामान्यान्तर्गतस्य 'वह्न्यभाव' इत्याकारकज्ञानस्य अप्रतिबन्धकत्वेन वह्न्यभावत्वादेः यद्रूपपदेनोपादानासम्भवात् । न च तर्हि यथार्थपदं व्यर्थम् । 'पर्वतो निर्वह्निः' इति भ्रमविषयेऽपि वह्न्यभावादावतिव्याप्तेः उक्तरीत्यैव वारणादिति वाच्यम् । ज्ञानपदस्य ज्ञानविशेषतात्पर्यग्राहकतया यथार्थपदसार्थक्यात् । एवं च यद्रूपावच्छिन्नविषयकानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयसामान्यं प्रकृतानुमितिप्रतिबन्धकं तद्रूपावच्छिन्नत्वं दोषत्वमित्यर्थः पर्यवसितः । तेन वह्न्यभाववद्ध्रदविषयकस्य आहा-

र्यस्य अप्रामाण्यज्ञानविशिष्टस्य संशयस्य च अनुमित्यप्रतिबन्धकत्वेऽपि नासम्भव इत्यलं पल्लवितेन ।

परे तु - इदं दुष्टानामेव लक्षणम् । परन्तु ज्ञायमानव्यभिचारादेः प्रतिबन्धकत्वमभ्युपेत्य । तदर्थस्तु अनुमितिप्रतिबन्धका ये व्यभिचारादयः एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तत्प्रकारकयथार्थज्ञानविशेष्यत्वम् । 'धूमवान् वह्नेः' इत्यादौ धूमाभाववद्वृत्तित्वविशिष्टवह्निः व्यभिचारः, उक्तसम्बन्धेन ' तद्वान् वह्निः' इत्याकारकयथार्थज्ञानविशेष्यत्वमस्तीति लक्षणसमन्वयः । अनुमितिपदस्य प्रकृतानुमितिपरतया सद्धेतौ अनुमितिप्रतिबन्धकीभूतव्यभिचारादीनामप्रसिद्धत्वात् नातिव्याप्तिः । यथार्थपदानुपादाने दर्शितसम्बन्धेन व्यभिचारप्रकारकभ्रमविशेष्यत्वस्य सद्धेतावपि सत्त्वेनातिव्याप्तिः स्यादिति तन्निवेश इत्याहुः ।

**बालप्रिया**

**व्याप्त्यादिविशिष्टहेतूनि**ति । आदिपदेन पक्षधर्मता गृह्यते । तथा च व्याप्ति-पक्षधर्मताविशिष्टहेतुत्वं सद्धेतोर्लक्षणमिति भावः । **हेतुवदाभासन्त** इति । हेतुत्वप्रकारकभ्रमविषयाः इत्यर्थः । हेतुत्वं च व्याप्तिपक्षधर्मताविशिष्टत्वम् । तथा च व्याप्तिपक्षधर्मताविशिष्टत्वप्रकारकभ्रमविषयत्वं हेत्वाभासत्वम् । तत्तु दुष्टहेतूनामेव भवति, सद्धेतूनां तत्प्रमाविषयत्वादिति हेत्वाभासशब्दः दुष्टहेतुपर इति भावः । **लक्षणसमन्वय** इति । तथा च 'ह्रदो वह्निमान् धूमात्' इत्यत्र वह्न्यभाववद्ध्रदात्मकः बाधः दोषः । तादृशदोषवत्त्वं च हेतोः धूमस्य एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनास्तीति दुष्टत्वम् । 'वह्न्यभाववद्ध्रदः धूमत्वं च' इत्येकज्ञाने बाधस्य धूमत्वस्य च विषयत्वादित्यादिकमूहनीयम् ।

नन्वनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वं यदि दोषलक्षणं तदा बाधसत्प्रतिपक्षयोरेवेदं लक्षणं समन्वियात् । बाधनिश्चयस्य सत्प्रतिपक्षनिश्चयस्य च 'ह्रदो वह्न्यभाववान्' इत्याकारकस्य 'ह्रदो वह्न्य-

भावव्याप्यशैवालवान्' इत्याकारकस्य च तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयविधया तदभावव्याप्यवत्तानिश्चयविधया च प्रतिबन्धकत्वात्, तद्विषयत्वरूपलक्षणसत्त्वात्। व्यभिचारविरोधस्वरूपासिद्धिप्रभृतिषु लक्षणमिदं न समन्वेति। तज्ज्ञानानामनुमितिप्रतिबन्धकत्वाभावात्, अनुमितिकरणपरामर्शप्रतिबन्धकत्वस्यैव व्यभिचारादिज्ञानेषु सत्त्वादित्यत आह - **अत्रानुमितिपदमिति**। तथा च अनुमितितत्करणान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वं हेत्वाभासलक्षणम्। **परामर्शप्रतिबन्धकतयैवेति**। व्यभिचारज्ञानं परामर्शे व्याप्तिभानांशे प्रतिबन्धकम्। विरोधज्ञानं साध्यसामानाधिकरण्यांशभाने प्रतिबन्धकम्। स्वरूपासिद्धिज्ञानं पक्षधर्मत्वभाने प्रतिबन्धकमिति सर्वेषां अनुमितिकरणपरामर्शप्रतिबन्धकसत्त्वात् नाव्याप्तिरिति भावः। **निर्वाहादिति**। लक्षणोपपत्तेरित्यर्थः। यथार्थपदप्रयोजनमाह - **पर्वतो निर्वह्निरिति**। तथा च यथार्थपदानुपादाने पर्वतो वह्न्यभाववानित्याकारकभ्रमस्य 'पर्वतो वह्निमान्' इत्यनुमितिप्रतिबन्धकत्वात् तादृशभ्रमविषयस्य वह्न्यभावस्य दोषत्वं स्यात्। तद्वारणाय यथार्थपदम्। उक्तभ्रमस्य यथार्थत्वाभावात् नातिव्याप्तिरिति भावः। ननु यथार्थपदोपादानेऽपि 'पर्वतो वह्न्यभाववान्' इति भ्रमवारणमशक्यम्। तस्यापि पर्वतत्ववति पर्वतत्वप्रकारकत्वेन वह्न्यभावत्ववति वह्न्यभावत्वप्रकारकत्वेन च तद्वति तत्प्रकारकत्वरूपयथार्थलक्षणाक्रान्तत्वेन यथार्थत्वादित्यत आह - **भ्रमभिन्नेत्यर्थ** इति। तथा चप्रकृतलक्षणघटकं यथार्थपदं तदभाववति तत्प्रकारकभिन्नार्थकम्। 'पर्वतो वह्न्यभाववान्' इति ज्ञानं तु वह्न्यभावाभाववति वह्न्यभावप्रकारकतया भ्रमात्मकम्, तद्भिन्नं न भवतीति न दोष इति भावः। भ्रमभिन्नत्वमेव सर्वांशे प्रमात्वमित्युच्यते। तच्च [1]स्वव्यधिकरणप्रकारावच्छिन्ना या या विशेष्यता तत्त-

---

1. **स्वव्यधिकरणेति। स्वव्यधिकरणेत्यस्य स्वाधिकरणावृत्तीत्यर्थः। शुक्तौ इदं रजतमिति भ्रमीयशुक्तिनिष्ठविशेष्यताया स्वपदेन उपादाने स्वाधिकरणं शुक्तिः तदवृत्तिः यः प्रकारः रजतत्वं तदवच्छिन्ना या विशेष्यता शुक्तिनिष्ठविशेष्यता तन्निरूपकत्वम् इदं रजतमिति भ्रमे तदनिरूपकत्वं इदं रजतमिति प्रमायामिति लक्षणसमन्वयः।**

दनिरूपकत्वम् । [1]स्वनिरूपितत्वस्वाश्रयाभाववद्वृत्तित्वोभयसम्बन्धेन प्रकारताविशिष्टा या विशेष्यता तदनिरूपकत्वमिति यावत् । अधिकमुद्ग्रन्थेषु ।

शङ्कते - **अथैवमपीति** । भ्रमभिन्नार्थकयथार्थपदनिवेशेऽपीत्यर्थः । 'ह्रदो वह्निमान् धूमात्' इत्यत्र 'ह्रदो वह्निमान्' इत्याकारकानुमितिं प्रति 'ह्रदो वह्न्यभाववान्' इति निश्चयस्य प्रतिबन्धकतया तद्विषयत्वं वह्न्यभाववद्ध्र इव वह्न्यभावेऽप्यस्ति। तथा च अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वरूपस्य हेत्वाभासलक्षणस्य बाधानात्मके वह्न्यभावेऽतिव्याप्तिरित्यर्थः । समाधत्ते — **यद्रूपावच्छिन्नेति** । तथा च यद्रूपपदेन वह्न्यभावत्वस्योपादाने तदवच्छिन्नविषयकस्य 'वह्न्यभाववान् ह्रदः' इति ज्ञानस्यानुमितिप्रतिबन्धकत्वेऽपि वह्न्यभावत्वावच्छिन्नविषयकज्ञानसामान्यान्तर्गतस्य 'वह्न्यभावः' इत्याकारकज्ञानस्य 'ह्रदो वह्निमान्' इत्याकारकानुमितिप्रतिबन्धकत्वं नास्ति । अतः वह्न्यभाववद्ध्रदत्वमेव यद्रूपपदेन धर्तव्यम् । तदवच्छिन्नविषयकज्ञानसामान्यस्यानुमितिप्रतिबन्धकत्वात् । तद्रूपावच्छिन्नत्वं च वह्न्यभाववद्ध्रद एवास्ति न वन्ह्यभाव इति नातिव्याप्तिरिति भावः । **न च तर्हीति** । 'पर्वतो वन्ह्यभाववान्' इति भ्रमविषये वन्ह्यभावेऽतिव्याप्तिवारणाय हि यथार्थपदमुपात्तम् । निरुक्तपरिष्कारे तु यद्रूपपदेन न वन्ह्यभावत्वमुपादातुं शक्यते । तदवच्छिन्नविषयकज्ञानसामान्यान्तर्गतस्य वन्ह्यभावः इति ज्ञानस्य 'पर्वतो वन्हिमान्' इत्यनुमितिप्रतिबन्धकत्वाभावात् । तथा च वन्ह्यभावेऽतिव्याप्त्यप्रसक्त्या यथार्थपदं व्यर्थमिति भावः । **ज्ञानविशेषतात्पर्यग्राहकतयेति** । ज्ञानपदेन अनाहार्यमप्रमाण्यज्ञानानास्कन्दितं निश्चयात्मकं च ज्ञानमत्र विवक्षित-

---

1. स्वनिरूपितत्वेति । स्वं इदं रजतमितिभ्रमीया रजतत्वनिष्ठा प्रकारता तन्निरूपितत्वं शुक्तिनिष्ठविशेष्यतायामस्ति । एवं स्वं रजतत्वनिष्ठप्रकारता तदाश्रयः रजतत्वं तद्भाववच्छुक्तिवृत्तित्वं च विशेष्यतायामस्ति । तादृशविशेष्यतानिरूपकत्वं भ्रमे अनिरूपकत्वं प्रमायामिति समन्वयो बोध्यः ।

मिति सूचनाय यथार्थपदमिति भावः । अनाहार्यत्वं बाधकालीनेच्छा-जन्यत्वाभाववत्त्वम् । तदनुपादाने 'ह्रदो वन्हिमान्' इति बाधकज्ञान-काले 'ह्रदे वन्ह्यभावज्ञानं भवतु' इतीच्छया जायमानस्य 'ह्रदो वन्ह्यभाववान्' इति ज्ञानस्यापि वन्ह्यभाववद्ध्रदत्वावच्छिन्नविषय-कज्ञानसामान्यान्तर्गततया तस्य चानुमितिप्रतिबन्धकत्वाभावादव्याप्ति-स्यात् बाधे । तद्वारणाय प्रतिबन्धकज्ञानेऽनाहार्यत्वं निवेशनीयम् । एवं अप्रामाण्यज्ञानानास्कन्दितत्वं सामानाधिकरण्यसम्बन्धेन अप्रामाण्यज्ञानाभावविशिष्टत्वम् । तदनिवेशे 'यत्र ह्रदो वन्ह्यभाव-वान्' इति ज्ञानानन्तरं 'इदं ज्ञानं अप्रमा' इति ज्ञानं तत्र बाधज्ञान-स्यानुमित्यप्रतिबन्धकतया बाधेऽव्याप्तिः । अतः तन्निवेशः । एवं निश्चयात्मकत्वानिवेशे 'ह्रदो वन्हिमान् न वा' इति संशयात्मकज्ञानस्य ज्ञानसामान्यान्तर्गतस्य अप्रतिबन्धकतया अव्याप्तिः स्यात् । अतः तन्निवेशः । तथा च यद्धर्मावच्छिन्नविषयकानाहार्याप्रामाण्यज्ञानाना-स्कन्दितनिश्चयसामान्यं प्रकृतानुमितिप्रतिबन्धकं तद्धर्मावच्छिन्नत्वं हेतुदोषस्य लक्षणमिति पर्यवसन्नम् ।

परे त्वित्यादि । पूर्वस्मिन् कल्पे अनुमितिप्रतिबन्धकं यथार्थः ज्ञानमिति कर्मधारयः । अस्मिन् कल्पे अनुमितिप्रतिबन्धकानां यथार्थ-ज्ञानमिति षष्ठीतत्पुरुषः। 'ह्रदो वह्निमान् धूमात्' इत्यत्र 'ह्रदो वन्हि-मान्' इत्यनुमितिप्रतिबन्धकः वन्ह्यभाववद्ध्रदात्मको बाधः तत्प्रकार-कयथार्थज्ञानं एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन 'वन्ह्य-भाववद्ध्रदवान् धूमः' इत्याकारकं तद्विशेष्यत्वं धूमेऽस्तीति धूमस्य दुष्टत्वम् । 'पर्वतो धूमवान् वन्हेः' इत्यत्र व्यभिचारिणि अनुमिति-प्रतिबन्धकः धूमाभाववद्वृत्तित्वविशिष्टवन्हिरूपो व्यभिचारः तत्प्र-कारकयथार्थज्ञानं उक्तसम्बन्धेन तादृशव्यभिचारवान् वन्हिः इत्या-कारकं, तद्विशेष्यत्वं वन्हावस्तीति लक्षणसमन्वयः । ननु 'पर्वतो वन्हिमान् धूमात्' इत्यत्रातिव्याप्तिः । अनुमितिपदेन 'पर्वतो धूमवान्' इत्यनुमितिमुपादाय तत्प्रतिबन्धको यो व्यभिचारः धूमाभाववद्वृत्ति-

वविशिष्टवन्हिरूपः एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन तत्प्रकारकं यत् यथार्थज्ञानं तादृशवन्हिमान् धूम इत्याकारकं तद्विशेष्यत्वस्य धूमे सत्त्वात् इत्यत आह - **अनुमितिपदस्य प्रकृतानुमितिपरतयेति** । प्रकृतपक्षतावच्छेदकावच्छिन्नोद्देश्यक-प्रकृतसाध्यतावच्छेदकावच्छिन्नविधेयकानुमितिपरतयेत्यर्थः । तथा च 'पर्वतो वन्हिमान्' इत्यनुमितिरेवोपादेयतया तत्प्रतिबन्धकदोषाप्रसिद्ध्या नातिव्याप्तिरिति भावः । **दर्शितसम्बन्धेनेति** । एकज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेत्यर्थः ।



## तर्कसङ्ग्रहः

### सव्यभिचारनिरूपणम्

सव्यभिचारोऽनैकान्तिकः । सः त्रिविधः-साधारण-असाधारण-अनुपसंहारिभेदात् ।

तत्र साध्याभाववद्वृत्तिः साधारणः । यथा पर्वतो वन्हिमान् प्रमेयत्वात् । अत्र प्रमेयत्वस्य वन्ह्यभाववति (साध्याभाववति) ह्रदे विद्यमानत्वात् ।

सर्वसपक्षविपक्षव्यावृत्तोऽसाधारणः । यथा शब्दो नित्यः शब्दत्वात् । अत्र शब्दत्वं सर्वेभ्यः नित्येभ्यः अनित्येभ्यो व्यावृत्तम् शब्दमात्रवृत्ति ।

अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी । यथा सर्वमनित्यं प्रमेयत्वात् । अत्र सर्वस्यापि पक्षत्वात् दृष्टान्तो नास्ति ।

## दीपिका

सव्यभिचारं विभजते—**स त्रिविध** इति ।

साधारणं लक्षयति—**तत्रे**ति । उदाहरति - **यथे**ति ।

असाधारणं लक्षयति—**सर्वेति** ।

अनुपसंहारिणो लक्षणमाह—**अन्वयेति** ।

**प्रकाशिका**

**स त्रिविध इतीति** । सामान्यलक्षणन्तु साधारणाद्यन्यतमत्वं स्फुटम् ।

**मूले तत्रेति** । साधारणादिमध्य इत्यर्थः । **साध्याभाववद्वृत्तिरिति**। साध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रतियोगिताकाभाववन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतावानित्यर्थः । तेन 'वन्हिमान् धूमात्' इत्यादौ हेतुमति पर्वतादौ तत्तत्साध्याभावस्य सम्बन्धान्तरावच्छिन्नसाध्यसामान्याभावस्य च सत्त्वेऽपि साध्याभाववति धूमावयवादौ समवायादिना धूमादेर्वृत्तित्वेऽपि च नातिव्याप्तिः । अत्र च साध्याभाववत्तायां सम्बन्धविशेषावच्छिन्नत्वानिवेशे 'वन्हिमान् धूमात्' इत्यादौ वन्ह्याद्यभावस्य कालिकसम्बन्धेन पर्वतादौ वृत्तेरतिव्याप्तिः। दैशिकविशेषणताविशेषावच्छिन्नत्वनिवेशे घटत्वाभावादिसाध्यकव्यभिचारिणि साध्याभावस्य घटत्वादेः विशेषणताविशेषेणाधिकरणाप्रसिद्ध्याऽव्याप्तिः । अतः साध्यतावच्छेदकसंबन्धेन साध्यवत्ताग्रहं प्रति येन सम्बन्धेन साध्याभाववत्तानिश्चयः प्रतिबन्धकः तेन सम्बन्धेन साध्याभाववत्त्वं विवक्षणीयम् । वन्ह्यादौ साध्ये तादृशसम्बन्धो दैशिकविशेषणता, घटत्वाभावादौ च साध्ये समवायस्तथेति न दोषः । 'कपिसंयोगी एतद्वृक्षत्वात्' इत्यादौ तादृशसम्बन्धो निरवच्छिन्नदैशिकविशेषणतेति दिक् ।

न च विरुद्धेऽतिव्याप्तिरिति भ्रमितव्यम् । उपधेयसङ्करेऽप्युपाधेरसङ्कर इति न्यायात्, तस्य विरुद्धसाधारण्येऽपि क्षतिविरहात् । **मूले सर्वसपक्षव्यावृत्त** इति । सपक्षवृत्तित्वसामान्याभाववानित्यर्थः । सर्वपदं सपक्षवृत्तित्वसामान्याभावनिवेशस्फोरकम् । सपक्षपदं निश्चि-

तसाध्यवदर्थकम् । शब्देऽनित्यत्वसाधकशब्दत्वादिसद्धेतावपि पक्षे साध्यसन्देहदशायामसाधारण्यस्येष्टत्वात् इति संप्रदायविदः ।

नवीनास्तु — सद्धेतावपि पक्षे साध्यसन्देहदशायामसाधारण्यस्य प्रकृतपरामर्शकालिकविरुद्धपरामर्शदशायां सत्प्रतिपक्षस्य च स्वीकारे बाधभ्रमदशायां बाधस्याप्यङ्गीकारापत्तेः । न हि वैषम्ये युक्तिं पश्यामः । एवं चात्र सपक्षपदं केवलसाध्यवत्परम् । 'शब्दो नित्यः शब्दत्वात्' इत्यादिसाध्यवदवृत्तिहेतोरेव लक्ष्यतेति न कोऽपि दोष इति प्राहुः ।

**अन्वयेति** । अन्वयव्यतिरेकदृष्टान्तरहितत्वं च किंचिद्विशेष्यक-निश्चयाविषयसाध्यकत्वे सति किंचिद्विशेष्यकनिश्चयाविषयसाध्या-भावकत्वम् । नवीनमते तु - अत्यन्ताभावाप्रतियोगित्वविशिष्टसाध्या-दिकत्वमेवानुपसंहारित्वम् । तज्ज्ञानस्य व्यतिरेकव्याप्तिज्ञानप्रतिबन्ध-कता ।

## बालप्रिया

**सामान्यलक्षणं त्विति** । सव्यभिचारसामान्यलक्षणं त्वित्यर्थः ।

**साध्यतावच्छेदकसम्बन्धेत्यादि** । साध्यनिष्ठप्रतियोगितायां साध्य-तावच्छेदकधर्मावच्छिन्नत्वानिवेशे 'पर्वतो वन्हिमान्, धूमात्' इत्यत्र धूम-स्यापि साधारणहेत्वाभासत्वापत्तिः । तथा हि - साध्यो वन्हिः तन्निष्ठ-प्रतियोगितानिरूपकोऽभावः महानसीयवन्ह्यभावोऽपि तद्वान् पर्वतः तन्निरूपितवृत्तित्वस्य धूमे सत्त्वादिति । साध्यतावच्छेदकधर्मावच्छिन्न-त्वस्य प्रतियोगितायां निवेशे तु महानसीयवन्ह्यभावो ग्रहीतुं न शक्यते, तस्य महानसीयत्वसहितवन्हित्वावच्छिन्नप्रतियोगिताकत्वेऽपि केवल-वन्हित्वावच्छिन्नप्रतियोगिताकत्वाभावात् । अपि तु वन्हिर्नास्तीति प्रतीतिसिद्धः वन्हिसामान्याभाव एव वन्हित्वावच्छिन्नप्रतियोगिताकः तद्वान् ह्रदादिः तन्निरूपिताधेयत्वं धूमे नास्तीति नातिव्याप्तिः । एवं साध्यनिष्ठप्रतियोगितायां साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे

'पर्वतो वन्हिमान् धूमात्' **इत्यत्रैव समवायेन** वन्हिर्नास्तीति प्रतीतिसिद्धस्य समवायसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रतियोगिताकाभावस्यापि लक्षणघटकतया **तद्वान्** पर्वतोऽपि तत्र संयोगेन वन्हेः सत्वेऽपि समवायेन वन्हेरभावात्, पर्वतनिरूपितवृत्तित्वस्य च धूमे सत्त्वादतिव्याप्तिः। साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशे तु संयोगसम्बन्धावच्छिन्नवन्ह्यभावस्यैव ग्राह्यतया **तद्वान्** ह्रदादिरेव तन्निरूपिताधेयत्वं धूमे नास्तीति नातिव्याप्तिः । आधेयतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे संयोगसम्बन्धावच्छिन्नवन्ह्यभाववान् धूमावयवोऽपि' तन्निरूपिताधेयत्वं धूमेऽस्तीत्यतिव्याप्तिः स्यात्। तन्निवेशे तु धूमावयवनिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वस्य धूमे सत्त्वेऽपि संयोगसम्बन्धावच्छिन्नाधेयत्वं नास्तीति नातिव्याप्तिः। **हेतुमति पर्वतादाविति** । एतच्च हेतोः साध्याभाववन्निरूपिताधेयत्वमेवास्तीति सूचनार्थमुक्तम् । **तत्तत्साध्याभावस्येति** । महानसीयवन्ह्याद्यभावस्येत्यर्थः । **सम्बन्धान्तरावच्छिन्नसाध्यसामान्याभावस्येति** । साध्यतावच्छेदकसंयोगसम्बन्धातिरिक्तसमवायसम्बन्धावच्छिन्नप्रतियोगिताकवन्हित्वावच्छिन्नाभावस्येत्यर्थः ।

**तत्र च साध्याभाववत्तायामित्यादि** । साध्याभाववत्तायां यदि सम्बन्धविशेषावच्छिन्नत्वं न निवेश्यते तर्हि संयोगसम्बन्धावच्छिन्नवन्हित्वावच्छिन्नप्रतियोगिताकाभावस्य कालिकसंबन्धेनाधिकरणं पर्वतोऽपि भवतीति तन्निरूपिताधेयत्वस्य धूमे सत्त्वात् सद्धेतावतिव्याप्तिः । साध्याभावनिष्ठस्वरूपसम्बन्धावच्छिन्नाधेयतानिरूपिताधिकरणत्वं साध्याभाववत्त्वमिति विवक्षणे च यद्यपि वह्न्यभावस्य स्वरूपसम्बन्धेनाधिकरणं न पर्वतः, अपि तु ह्रदादिरेव तन्निरूपिताधेयत्वं धूमे नास्तीति अतिव्याप्तिर्वारयितुं शक्यते, तथापि 'पटः घटत्वाभाववान् द्रव्यत्वात्' इत्यत्र व्यभिचारिण्यतिव्याप्तिः । तथा हि-साध्याभाववति घटत्वाभावाभाववति घटत्ववति घटे द्रव्यत्वसत्त्वात् अयं साधारणव्यभिचारी हेतुः । अत्र

साध्याभावः घटत्वाभावाभावः घटत्वरूपः तस्य स्वरूपसम्बन्धेनाधिकरणमप्रसिद्धम् । भावानां स्वरूपसम्बन्धेन क्वाप्यवृत्तेरित्यव्याप्तिः । अतः साध्यवत्ताग्रहविरोधितानियामकसम्बन्धेन साध्याभाववत्त्वं विवक्षणीयम् । [1]साध्यतावच्छेदकसम्बन्धावच्छिन्न-साध्यतावच्छेदकधर्मावच्छिन्न-साध्यनिष्ठप्रकारतानिरूपित-पक्षतावच्छेदकावच्छिन्न-पक्ष निष्ठविशेष्यताशालिबुद्धित्वावच्छिन्नं प्रति यत्सम्बन्धावच्छिसाध्याभावनिष्ठप्रकारताशालिनिश्चयः प्रतिबन्धकः स सम्बन्धः साध्यवत्ताग्रहविरोधितानियामक इति कथ्यते । 'पर्वतो धूमवान् वन्हेः' इत्यत्र 'पर्वतः संयोगेन धूमवान्'इति बुद्धिं प्रति'पर्वतः स्वरूपसम्बन्धेन धूमाभाववान्'इति निश्चयः प्रतिबन्धकः इति स्वरूपसम्बन्ध एव साध्यवत्ताग्रहविरोधितानियामकः तेन सम्बन्धेन धूमाभाववान् अयोगोलकः तन्निरूपिताधेयत्वं वन्हावस्तीति लक्षणसमन्वयः । 'पर्वतो वन्हिमान् धूमात्' इत्यत्र 'पर्वतः संयोगसम्बन्धेन वन्हिमान्'इति बुद्धिं प्रति वन्ह्यभावस्य स्वरूपसंबन्धेनाधिकरणं पर्वत इति निश्चय एव प्रतिबन्धकः, न तु कालिकसम्बन्धेन वह्न्यभावाधिकरणं पर्वत इति निश्चयोऽपि । तादृशनिश्चयसत्त्वेऽपि 'पर्वतः संयोगेन वह्निमान्' इति बुद्धेरुत्पत्तेः । तथा च स्वरूपसम्बन्धस्यैव साध्यवत्ताग्रहविरोधितानियामकतया तेन सम्बन्धेन वह्न्यभावाधिकरणं ह्रदादिरेव तन्निरूपिताधेयत्वं धूमे नास्तीति नातिव्याप्तिः । 'घटत्वाभाववान् द्रव्यत्वात्'इत्यत्र 'पटो घटत्वाभाववान्' इति साध्यवत्ताबुद्धिं प्रति पटः घटत्वाभावाभाववान् (समवायेन घटत्ववान्) इत्याकारकः निश्चयः प्रतिबन्धक इति समवायः साध्यवत्ताग्रहविरोधितानियामकसम्बन्धः तेन सम्बन्धेन साध्याभावाधिकरणं घटः तन्निरूपिताधेयत्वं द्रव्यत्वेऽस्तीति नाव्याप्तिः । 'अयं वृक्षः कपिसंयोगी एतद्वृक्षत्वात्' इत्यत्र 'वृक्षः कपिसंयोगी'ति

---

1. साध्यतावच्छेदकसम्बन्धेन साध्यतावच्छेदकधर्मेण च साध्यप्रकारकज्ञानं प्रति येन सम्बन्धेन साध्याभावप्रकारकनिश्चयः प्रतिबन्धकः स साध्यवत्ताग्रहविरोधितानियामक इति कथ्यते । तदेव परिष्कृत्याह—साध्यतावच्छेदकसम्बन्धावच्छिन्नेत्यादिना ।

बुद्धिं प्रति 'वृक्षः निरवच्छिन्नदैशिकविशेषणतासम्बन्धेन कपिसंयोगाभाववान्' इति निश्चय एव प्रतिबन्धकः न तु सावच्छिन्नविशेषणतासम्बन्धेन कपिसंयोगाभाववानिति निश्चयः वृक्षः मूलावच्छेदेन कपिसंयोगाभाववानिति निश्चये सत्यपि वृक्षः अग्रे कपिसंयोगवानिति बुद्ध्युत्पत्तेः। तथा च साध्यवत्ताग्रहविरोधितानियामकेन निरवच्छिन्नविशेषणतासम्बन्धेन कपिसंयोगाभाववान् [1]गुणादिरेव तन्निरूपिताधेयत्वं एतद्वृक्षत्वे नास्तीति नातिव्याप्तिः। तथा च साध्यतावच्छेदकावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यनिष्ठप्रतियोगितानिरूपकाभावनिष्ठसाध्यवत्ताग्रहविरोधितानियामकसम्बन्धावच्छिन्नाधेयता-निरूपिताधिकरणतावन्निरूपितहेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतावान् साधारण इति फलितम्।

नन्वेवमपि 'घटः द्रव्यं गुणकर्मान्यत्वविशिष्टसत्त्वात्' इत्यत्र सद्धेतावतिव्याप्तिः, द्रव्यत्वरूपसाध्याभाववति गुणे सत्तायाः सत्त्वेन विशिष्टशुद्धयोरनतिरेकात् गुणकर्मान्यत्वविशिष्टसत्तायामपि साध्याभाववन्निरूपिताधेयतायाः सत्त्वात् इत्यत आह - **दिगि**ति। साध्याभाववन्निरूपिताधेयतावच्छेदकहेतुतावच्छेदकवत्त्वं साधारणत्वमिति-विवक्षितम्। विशिष्टसत्तायाः सत्तात्वेनैव रूपेण गुणवृत्तितया साध्याभाववद्गुणनिरूपिताधेयतावच्छेदकं सत्तात्वमेव न तु गुणकर्मान्यत्व-विशिष्टसत्तात्वरूपं हेतुतावच्छेदकमिति नातिव्याप्तिरिति भावः।

ननु 'शब्दो नित्यः कृतकत्वात्' इत्यत्र विरुद्धेऽपि नित्यत्वरूप-साध्याभाववद्घटवृत्तित्वं कृतकत्वेऽस्तीति साधारणलक्षणस्यातिव्याप्तिरिति शङ्कते - **न च विरुद्ध** इति। **उपधेयसङ्करे**ऽपीति। एकस्मिन् अनेके दोषाः संभवन्तीति भावः। **उपधेयसङ्करे**ऽपि - दुष्टस्य एकत्वेऽपि **उपाधेरसङ्करः** - दोषस्यभिन्नता।

---

1. गुणादिरेवेति। न तु वृक्षः, तत्र मूलाद्यवच्छिन्नविशेषणतासम्बन्धेनैव कपिसंयोगाभावसत्त्वादिति भावः।

असाधारणलक्षणे सपक्षशब्दस्य निश्चितसाध्यवानित्यर्थः । विशेष्यतासम्बन्धेन साध्यप्रकारकनिश्चयवानिति यावत् । सपक्षवृत्तित्वसामान्याभाववान् सपक्षवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभाववान् असाधारण इति फलितम् । तेन [1]सद्धेतोरपि यत्किंचित्सपक्षवृत्तित्वाभावसत्त्वात् असाधारणत्वं स्यादित्याक्षेपस्य नावसरः । शब्दोऽनित्यः शब्दत्वात् इत्यत्र सद्धेतौ पक्षे शब्देऽनित्यत्वरूपसाध्यसन्देहदशायां साध्यप्रकारकनिश्चयवान् शब्दो न भवति अपि तु घटादिरेव, तदवृत्तित्वं शब्दत्वे अस्तीति शब्दत्वस्य असाधारणत्वम् । यदा तु शब्देऽनित्यत्वनिश्चयोऽस्ति तदा शब्दोऽपि साध्यप्रकारकनिश्चयवत्त्वात् सपक्षः तदवृत्तित्वं शब्दत्वे नास्तीति नासाधारण्यम् । तथा चासाधारण्यमनित्यदोष इति **प्राचीनाः । नवीनास्तु** - सद्धेतोः कादाचित्कमसाधारण्यं नेच्छन्ति । तन्मते सपक्षपदं साध्यवन्मात्रपरम् । साध्यवद्वृत्तित्वसामान्याभावः असाधारण्यम् । सद्धेतौ पक्षे साध्यसन्देहदशायामपि पक्षः साध्यवान् भवतीति तदवृत्तित्वं हेतौ नास्तीति नासाधारण्यम् ।

**किंचिद्विशेष्यके**ति । यत्र कुत्रापि साध्यं निश्चितं चेत् तद्विशेष्यकनिश्चयप्रकारीभूतं साध्यं भवेत् । सर्वमभिधेयं प्रमेयत्वादित्यत्र तु सर्वस्य पक्षत्वात् अभिधेयत्वं न क्वापि निश्चितम् । अतः किंचिद्विशेष्यकनिश्चयाप्रकारीभूतं साध्यं भवति तादृशसाध्यकश्च हेतुर्भवति । परं तु अत्र साध्याभावस्याप्रसिद्धतया किंचिद्विशेष्यकनिश्चयाविषयसाध्याभावकत्वमिति दलं न समन्वेति । अतो **नवीनाः** अत्यन्ताभावाप्रतियोगिसाध्यादिकत्वमनुपसंहारित्वम् इत्याहुः । ननु घटोऽभिधेयः

---

1. **सद्धेतोरपीति । शब्दोऽनित्यः शब्दत्वादित्यत्र घटादिरूपसपक्षवृत्तित्वाभावस्य शब्दत्वे सत्त्वादित्यर्थः । शब्देऽनित्यत्वनिश्चयदशायामस्य सद्धेतुत्वात् यत्किंचिन्निश्चितसाध्यवत्पदेन घटादिकमुपादाय तदवृत्तित्वसत्त्वात् अतिव्याप्तिः प्रसक्ता । सामान्याभावनिवेशे च सपक्षभूतशब्दवृत्तित्वसत्त्वेन सपक्षवृत्तित्वत्वावच्छिन्नाभावो नास्तीति नातिव्याप्तिरिति भावः ।**

प्रमेयत्वात् इत्यत्र सद्धेतावपि अत्यन्ताभावाप्रतियोगिसाध्यकत्वसत्त्वादनुपसंहारित्वापत्तिरिति चेत् - न । इष्टापत्तेः । तत्र अनुपसंहारित्वज्ञानेन व्यतिरेकव्याप्तिज्ञानस्य प्रतिबन्धेन व्यतिरेकव्याप्तिज्ञानहेतुकानुमितिर्न जायते । अन्वयव्याप्तिज्ञानमूला अनुमितिस्तु निराबाधैव । कथमनुपसंहारित्वज्ञानस्य व्यतिरेकव्याप्तिज्ञानप्रतिबन्धकत्वमिति चेत्- इत्थम् । साध्यम् अत्यन्ताभावाप्रतियोगि इति ज्ञानकाले साध्यम् अत्यन्ताभावप्रतियोगि इति ज्ञानं यथा न भवति, तथा साध्यप्रतियोगिकः अत्यन्ताभावः इति ज्ञानं च न भवति । तथा च साध्यप्रतियोगिकात्यन्ताभावघटितव्यतिरेकव्याप्तिज्ञानमपि न भवतीति ।



## तर्कसङ्ग्रहः

### विरुद्धनिरूपणम्

साध्याभावव्याप्तो हेतुर्विरुद्धः । यथा शब्दो नित्यः कार्यत्वात् (कृतकत्वात्) घटवत् । (अत्र कृतकत्वम् हि नित्यत्वाभावेनानित्यत्वेन व्याप्तम्) ।

### सत्प्रतिपक्षनिरूपणम्

यस्य साध्याभावसाधकं हेत्वन्तरं विद्यते स सत्प्रतिपक्षः । यथा शब्दः नित्यः श्रावणत्वात्, शब्दः अनित्यः कार्यत्वात् घटवत् ।

### असिद्धनिरूपणम्

असिद्धः त्रिविधः - आश्रयासिद्धः स्वरूपासिद्धः व्याप्यत्वासिद्धश्चेति ।

आश्रयासिद्धो यथा - गगनारविन्दं सुरभि अरविन्दत्वात् सरोजारविन्दवत् । अत्र गगनारविन्दमाश्रयः । स च नास्त्येव ।

स्वरूपासिद्धो यथा - शब्दः गुणः चाक्षुषत्वात् । अत्र चाक्षुषत्वं शब्दे नास्ति, शब्दस्य श्रावणत्वात् ।

सोपाधिकः व्याप्यत्वासिद्धः ।

### दीपिका

विरुद्धं लक्षयति - **साध्येति** ।

सत्प्रतिपक्षं लक्षयति - **यस्येति** ।

असिद्धं विभजते - **असिद्ध इति** ।

आश्रयासिद्धमुदाहरति - **गगनेति** ।

स्वरूपासिद्धमुदाहरति - **यथेति** ।

व्याप्यत्वासिद्धस्य लक्षणमाह - **सोपाधिक इति** ।

### प्रकाशिका

**साध्याभावव्याप्त** इति । साध्याभावव्याप्तिः साध्यवदवृत्तित्वम् । असाधारण्यस्य तु निश्चितसाध्यवदवृत्तित्वरूपतया नाभेदः । **नवीनमते** तु - साध्याभावस्य व्यतिरेकव्याप्तिः साध्यव्यापकाभावप्रतियोगित्वरूपेति नासाधारण्याभेदः । एतादृशव्याप्तिविशिष्टहेतुमत्ताज्ञानं साक्षादनुमितिप्रतिबन्धकमिति ध्येयम् ।

**यस्य साध्याभावे**त्यादि । यत्सम्बन्धि यत्साध्यं तदभावव्याप्यहेत्वन्तरस्य ज्ञानं पक्षेऽस्ति स सत्प्रतिपक्ष इत्यर्थः । प्रकृतसाध्यव्याप्यत्वेन ज्ञायमानो यः प्रकृतहेतुः ततोऽन्यस्मिन् हेतौ साध्याभावव्याप्यत्वज्ञानदशायामेव तस्य सत्प्रतिपक्षतेति सूचनाय हेत्वन्तरमिति इति **प्राञ्चः** । **नवीनाः** पुनरेवं वर्णयन्ति - यत्सम्बन्धिसाध्याभावव्याप्यहेत्वन्तरस्य पक्षे सत्त्वं स तथाविध इत्यर्थ इति ।

**आश्रयासिद्धो यथे**ति । आश्रयासिद्धिश्च पक्षे पक्षतावच्छेदकविरहः, पक्षतावच्छेदकविरहवान् पक्षो वा । **स च नास्त्येवे**ति । अरविन्दस्य प्रसिद्धत्वात् 'सविशेषणेहि' इति न्यायेन अरविन्दे गगनीयत्वं नास्तीति पर्यवसितोऽर्थः ।

स्वरूपासिद्धिश्च पक्षे हेत्वभावः हेत्वभाववान् पक्षो वा ।

ननु सोपाधिकस्य अतिरिक्तस्य सद्भावात् कथं पञ्चहेत्वाभासा इत्यत आह - **सोपाधिक इति** । व्याप्यत्वासिद्धिः व्याप्त्यभावः, तस्याः

**सोपाधिकहेतौ** नियमेन सत्त्वात् सोपाधिको व्याप्यत्वासिद्ध एव न त्वतिरिक्तो हेत्वाभास इति भावः। उपाधेर्दोषत्वमसम्भवीति **दीपिकायां** व्यक्तीभविष्यत्यग्रे।

अत्रेदमवधेयम् - साध्ये साध्यतावच्छेदकाभावः साध्याप्रसिद्धिः। हेतौ हेतुतावच्छेदकाभावः साधनाप्रसिद्धिः। यथा काञ्चनमयवह्निमान् काञ्चनमयधूमात् इत्यादौ। तद्ग्रहदशायां हेतुतावच्छेदकविशिष्टे साध्यतावच्छेदकविशिष्टव्याप्तिग्रहप्रतिबन्धः फलम्। तयोर्व्याप्यत्वासिद्धावन्तर्भावात् न हेत्वाभासाधिक्यमिति।

**बालप्रिया**

**साध्याभावव्याप्तिः साध्यवदवृत्तित्वमिति**। साध्याभावव्याप्तिः, साध्याभावाभाववदवृत्तित्वम्। तच्च साध्यवदवृत्तित्वमेव, साध्याभावाभावस्य साध्यात्मकत्वादिति भावः। असाधारण्यं निश्चितसाध्यवदवृत्तित्वम्, विरुद्धत्वं तु साध्यवदवृत्तित्वमिति तयोर्भेद इति भावः। **नवीनमते** साध्यवदवृत्तित्वमेव असाधारण्यम्, अतः तन्मतानुसारेण असाधारण्यविलक्षणं विरोधपदार्थमाह - **नवीनमते त्विति**। साध्याभावस्य व्यतिरेकव्याप्तिः साध्याभावाभावव्यापकीभूताभावप्रतियोगित्वम् साध्यव्यापकीभूताभावप्रतियोगित्वपर्यवसितम्। शब्दः नित्यः कृतकत्वात् इत्यत्र साध्यं नित्यत्वम्, तद्व्यापकीभूतः अभावः कृतकत्वाभावः तत्प्रतियोगित्वं कृतकत्वेऽस्तीति लक्षणसमन्वयः। **साक्षादनुमितिप्रतिबन्धकमिति**। तद्वत्ताबुद्धिं प्रति तदभावव्याप्यवत्ताज्ञानस्य प्रतिबन्धकत्वात् शब्दः नित्यः इत्यनुमितिं प्रति नित्यत्वाभावनिरूपितव्यतिरेकव्याप्तिमद्धेतुमत्ताज्ञानस्य नित्यत्वव्यापकीभूताभावप्रतियोगिकृतकत्ववान् शब्द इति विरोधज्ञानस्य तदभावव्याप्यवत्ताज्ञानरूपतया प्रतिबन्धकत्वमिति भावः।

विरोधिपरामर्शद्वयकाल एव सत्प्रतिपक्षत्वमिति **प्राञ्चः**। परामर्शाभावकालेऽपि प्रकृतहेतोर्यत्साध्यं तदभावव्याप्यहेत्वन्तरं पक्षेऽस्ति

चेत् सत्प्रतिपक्षत्वं भवत्येवेति **नवीनाः** । तदाह - **यत्सम्बन्धि-यत्साध्यमि-**त्यादि । यत्सम्बन्धीत्यस्य यद्धेतुसम्बन्धीत्यर्थः ।, तथा च यद्धेतुसम्बन्धि यत्साध्यं तदभावव्याप्यहेत्वन्तरस्य ज्ञानं तत्पक्षेऽस्ति स सत्प्रतिपक्षः । यथा शब्दोऽनित्यः कृतकत्वात् इत्यत्र कृतकत्वसम्बन्धि अनित्यत्वरूपं साध्यम्, तादृशानित्यत्वाभावव्याप्यश्रावणत्वरूपं हेत्वन्तर् तज्ज्ञानं शब्दरूपे पक्षेऽस्तीति सः कृतकत्वहेतुः सत्प्रतिपक्षः । यादृशहेतुसाध्यत्वेनाभिमतधर्माभावव्याप्यहेत्वन्तरवत्ताज्ञानविषयः पक्षो भवति तादृशहेतुः सत्प्रतिपक्ष इति यावत् । हेत्वन्तरविशेष्यकप्रकृतसाध्याभावव्याप्यत्वप्रकारकज्ञानकालीनप्रकृतसाध्यव्याप्यत्वप्रकारकज्ञानविशेष्यभूतो हेतुः सत्प्रतिपक्ष इति फलितोऽर्थः । **यत्सम्बन्धिसाध्येत्यादि** । यादृशहेतुसम्बन्धि यत् साध्यं तदभावव्याप्यहेत्वन्तरसत्त्वं पक्षे तादृशो हेतुः सत्प्रतिपक्षः । कृतकत्वसम्बन्धि अनित्यत्वं तदभावः नित्यत्वमं तद्व्याप्यं हेत्वन्तरम् श्रावणत्वम् तत् पक्षे शब्देऽस्तीति कृतकत्वं सत्प्रतिपक्षम् ।

**आश्रयासिद्धिश्च पक्षे पक्षतावच्छेदकविरह** इति । गगनारविन्दं सुरभीत्यत्र गगनीयत्वविशिष्टमरविन्दं पक्षः । तत्र पक्षे अरविन्दे गगनीयत्वं पक्षतावच्छेदकं नास्तीति अरविन्दनिष्ठः गगनीयत्वाभावो वा गगनीयत्वाभावविशिष्टमरविन्दं वा आश्रयासिद्धिरित्यर्थः । **सविशेषणे हीति न्यायेने**ति । 'सविशेषणे हि विधिनिषेधौ सति विशेष्ये बाधे विशेषणमुपसंक्रामतः' इति न्यायः । विशेषणविशिष्टे विधिर्वा निषेधो क्रियमाणः विशेष्ये विधेर्निषेधस्य वा बाधे सति विशेषणे विधिर्वा निषेधो वा संक्रामतीति न्यायस्यार्थः । यथा शिखी ध्वस्त इत्यत्र शिखाविशिष्टपुरुषे विधीयमानः ध्वंसः पुरुषे बाधात् विशेषणभूतां शिखामास्कन्दतीति शिखी ध्वस्त इति वाक्यात् शिखायां ध्वस्तत्वं पर्यवस्यति, तथा गगनारविन्दं नास्तीत्युक्ते अभावरूपो

निषेधः अरविन्दे बाधितत्वात् गगनीयत्वरूपविशेषणमास्कन्दतीति [1]गगनीयत्वाभावे पर्यवस्यतीति भावः ।

ननु सोपाधिके हेतौ उपाधेरेव दोषत्वमस्तु, किं व्याप्यत्वासिद्धेः दोषत्वेनेत्यत्राह - **उपाधेर्दोषत्वमसम्भवीति । व्यक्तीभविष्यतीति ।** 'उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः' इति ग्रन्थेनेति शेषः ।

ननु साध्याप्रसिद्धिसाधनाप्रसिद्ध्योरपि हेत्वाभासत्वात् तयोरकथनेन न्यूनतेत्याशङ्क्य तयोर्व्याप्यत्वासिद्धावन्तर्भावमाह - **अत्रेदमवधेयमिति ।** काञ्चनमयत्वाभाववान् वह्निः इत्याकारकसाध्याप्रसिद्धिज्ञानदशायां काञ्चनमयत्वविशिष्टवह्निज्ञानासम्भवात् 'काञ्चनमयत्वविशिष्टवह्निव्याप्यधूमवान्' इति परामर्शे काञ्चनमयत्वविशिष्टवह्निभानं प्रति साध्याप्रसिद्धिज्ञानं प्रतिबन्धकम् । एवं काञ्चनमयत्वाभाववान् धूम इत्याकारकसाधनाप्रसिद्धिज्ञानदशायां 'वह्निव्याप्यकाञ्चनमयधूमवान् पर्वत' इति परामर्शो न सम्भवति । धूमविशेष्यककाञ्चनमयत्वप्रकारकज्ञानं प्रति धूमविशेष्यककाञ्चनमयत्वाभावप्रकारकज्ञानस्य प्रतिबन्धकत्वात् । तथा च अनुमितिजनकपरामर्शप्रतिबन्धकज्ञानविषयतया साध्याप्रसिद्धिसाधनाप्रसिद्ध्योर्हेत्वाभासत्वम् । कथं व्याप्यत्वासिद्धावनयोरन्तर्भाव इति चेत्-श्रूयताम् । हेतुतावच्छेदकविशिष्टहेतुव्यापकसाध्यतावच्छेदकविशिष्टसाध्यसामानाधिकरण्यं हि व्याप्तिः । साधनाप्रसिद्धिस्थले हेतुतावच्छेदकविशिष्टहेत्वभावात् तादृशहेतुघटितव्याप्त्यभावरूपा व्याप्यत्वासिद्धिः, साध्याप्रसिद्धिस्थले साध्यतावच्छेदकविशिष्टसाध्याभावात् तादृशसाध्यघटितव्याप्त्यभावात् व्याप्यत्वासिद्धिः इत्येवं तयोर्व्याप्यत्वासिद्धावन्तर्भाव इति ।



---

1. **गगनीयत्वाभावे पर्यवस्यतीति । एतेन परममूले 'गगनारविन्दमाश्रयः, स च नास्त्येव' इति वाक्यमसंगतम् । गगनारविन्दमित्यस्य हि गगनीयत्वविशिष्टमरविन्दमित्यर्थः । तत्रारविन्दस्य सत्त्वात् तत्र नास्तित्वबाधात् - इति शङ्का निराकृता अरविन्दे गगनीयत्वाभाव इत्येव 'स च नास्त्येव' इति वाक्यस्यार्थः पर्यवसितः, तत्र चानुपपत्त्यभावादिति ।**

साध्यव्यापकत्वे सति साधनाव्यापकत्वं उपाधित्वम् । साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वं साध्यव्यापकत्वम् । साधनवन्निष्ठात्यन्ताभावप्रतियोगित्वं साधनाव्यापकत्वम् । (यथा) पर्वतः धूमवान् वह्नेः इत्यत्र आर्द्रेन्धनसंयोगः उपाधिः । यत्र धूमः तत्र आर्द्रेन्धनसंयोग इति साध्यव्यापकता । यत्र वह्निः तत्र आर्द्रेन्धनसंयोग इति नास्ति । अयोगोलके आर्द्रेन्धनसंयोगाभावात् । एवं साध्यव्यापकत्वे सति साधनाव्यापकत्वात् आर्द्रेन्धनसंयोग उपाधिः । सोपाधिकत्वात् वह्निमत्त्वं व्याप्यत्वासिद्धम् ।

## दीपिका

उपाधेर्लक्षणमाह - **साध्येति** । उपाधिश्चतुर्विधः - केवल - साध्यव्यापकः, पक्षधर्मावच्छिन्नसाध्यव्यापकः, साधनावच्छिन्नसाध्यव्यापकः, उदासीनधर्मावच्छिन्नसाध्यव्यापकश्चेति । आद्यः आर्द्रेन्धनसंयोगः । द्वितीयो यथा - वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात् इत्यत्र बहिर्द्रव्यत्वावच्छिन्नप्रत्यक्षत्वव्यापकं उद्भूतरूपवत्त्वम् । तृतीयो यथा - प्रागभावो विनाशी जन्यत्वात् इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् । चतुर्थो यथा - प्रागभावो विनाशी प्रमेयत्वात् इत्यत्र जन्यत्वावच्छिन्नानित्यत्वव्यापकं भावत्वम् ।

## प्रकाशिका

**साध्यव्यापकत्व इति** । साध्यव्यापकत्वसाधनाव्यापकत्वे एकरूपेण एकसम्बन्धेन च ग्राह्ये । तेन 'वह्निमान् धूमात्' इत्यादौ तत्तद्वह्नौ वह्नित्वेन साध्यव्यापकत्वस्य तत्तद्वह्नित्वेन साधनाव्यापकत्वस्य च सत्त्वेऽपि नातिव्याप्तिः, न वा संयोगेन साध्यव्यापकस्य वह्नेः समवायेन साधनाव्यापकत्वेऽपि तत्रातिव्याप्तिः । मूलोक्तोपाधि-

लक्षणेऽव्याप्तिं वारयितुं लक्ष्यभेदेन लक्षणभेदं प्रदर्शयति - **उपाधिश्चतुर्विध** इति । यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वं लक्षणे निवेशनीयम् । अन्यथा पर्वतत्वात्मकपक्षधर्मावच्छिन्नसाध्यव्यापकस्य कस्यचित् धूमत्वावच्छिन्नाव्यापकत्वात् अतिव्याप्तिः स्यादिति ध्येयम् । **उदासीनेति** । पक्षधर्मसाधनधर्माभ्यां भिन्नेत्यर्थः । **बहिर्द्रव्यत्वम्** - आत्मान्यद्रव्यत्वम् । इदं केवलप्रत्यक्षत्वस्यैव साध्यत्वानुसारेण । **प्रागभावो विनाशी जन्यत्वादि**ति । अत्र जन्यत्वं पक्षधर्मो न भवतीति साधनावच्छिन्नसाध्यव्यापकत्वघटितलक्षणम् । **अनित्यत्वव्यापकमि**ति । विनाशित्वव्यापकमित्यर्थः । जन्यत्वस्योदासीनत्वं सम्पादयितुं **प्रमेयत्वादि**ति ।

## बालप्रिया

ननु साध्यव्यापकत्वे सति साधनाव्यापकत्वरूपं मूलोक्तमुपाधिलक्षणम् 'पर्वतो वह्निमान् धूमात्' इत्यादिसद्धेतौ तत्तद्वह्नौ (महानसीयादिवह्नौ) अतिव्याप्तम् । महानसीयवह्नेरपि वह्नित्वेन रूपेण वह्निसामान्यरूपसाध्यव्यापकत्वात् महानसीयवह्नित्वेन रूपेण साधनाव्यापकत्वाच्च । साधनवति धूमवति पर्वते महानसीयवह्नित्वेन रूपेण महानसीयवह्नेरभावात् । एवं तत्रैव आलोकस्योपाधित्वापत्तिः । वह्निमति सर्वत्र संयोगसम्बन्धेन आलोकस्य विद्यमानतया संयोगसम्बन्धेन साध्यव्यापकत्वात् । एवं साधनधूमवति पर्वते समवायसम्बन्धेन आलोकस्याविद्यमानतया समवायसम्बन्धेन साधनाव्यापकत्वाच्चेत्याशङ्क्याह - **साध्यव्यापकत्वसाधनाव्यापकत्वे** इति । तथा च येन सम्बन्धेन येन रूपेणचोपाधेः साध्यव्यापकत्वम्, तेनैव सम्बन्धेन तेनैव रूपेण च तस्य साधनाव्यापकत्वं विवक्षितम् । अतो वह्नित्वेन वह्निव्यापकस्य महानसीयादिवह्नेः महानसीयवह्नित्वेन धूमाव्यापकत्वेऽपि वह्नित्वेन धूमाव्यापकत्वं नास्तीति नातिव्याप्तिः । एवं संयोगेन वह्निव्यापकस्य आलोकस्य समवायेन धूमाव्यापकत्वेऽपि

तेनैव संयोगसम्बन्धेन धूमाव्यापकत्वं नास्तीति नातिव्याप्तिरिति भावः । **वह्नित्वेन साध्यव्यापकत्वस्येति** । साध्यवन्निष्ठात्यन्ताभावप्रतियोगितानवच्छेदकवह्नित्ववत्त्वस्येत्यर्थः । **तत्तद्वह्नित्वेन साधनाव्यापकत्वस्येति** । साधनवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकतत्तद्वह्नित्ववत्त्वस्येत्यर्थः । एवं संयोगेन साध्यव्यापकत्वं साध्यवन्निष्ठात्यन्ताभावनिरूपितसंयोगसम्बन्धावच्छिन्नप्रतियोगितानवच्छेदकधर्मवत्त्वम् । समवायेन साधनाव्यापकत्वं साधनवन्निष्ठात्यन्ताभावनिरूपितसमवायसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकधर्मवत्त्वमिति बोध्यम् । **अव्याप्तिं वारयितुमिति** । 'वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वात्' इत्यत्र उद्भूतरूपवत्त्वमुपाधिः । तत्र मूलोक्तं साध्यव्यापकत्वघटितं लक्षणं नास्ति । प्रत्यक्षत्वरूपसाध्यवति आत्मनि उद्भूतरूपाभावादित्यव्याप्तिः प्रसज्यते । तां वारयितुं लक्ष्यभेदेन लक्षणभेदो वक्तव्य इति उपाधिः चतुर्विध इत्यादिदीपिकाया आशय इति भावः । तथा च केवलसाध्यव्यापकस्योपाधेः केवलसाध्यव्यापकत्वे सति साधनाव्यापकत्वं लक्षणम् । पक्षधर्मावच्छिन्नसाध्यव्यापकस्योपाधेः पक्षधर्मावच्छिन्नसाध्यव्यापकत्वे सति तदवच्छिन्नसाधनाव्यापकत्वं लक्षणम् । साधनावच्छिन्नसाध्यव्यापकस्योपाधेः साधनावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वं लक्षणम् । उदासीनधर्मावच्छिन्नसाध्यव्यापकस्योपाधेः उदासीनधर्मावच्छिन्नसाध्यव्यापकत्वे सति तदवच्छिन्नसाधनाव्यापकत्वं लक्षणमिति रीत्या लक्षणभेदो विवक्षित इति भावः। तदाह-**यद्धर्मविशिष्टसाध्येत्यादि**। वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेन । धर्मैक्यविवक्षायाः प्रयोजनमाह - **अन्यथेति** । 'पर्वतो वह्निमान् धूमात्' इत्यत्र पर्वतीयवह्नेः पर्वतत्वात्मको यः पक्षधर्मः तद्विशिष्टवह्निव्यापकत्वमस्ति साधनाव्यापकत्वं चास्ति। धूमवति महानसे पर्वतीयवह्नेरभावात् इति पर्वतीयवह्निरुपाधिः स्यात् । धर्मैक्यविवक्षणे तु पर्वतत्वविशिष्टवह्निव्यापकस्य पर्वतीयवह्नेःपर्वतत्वविशिष्टधूमाव्यापकत्वं नास्ति । पर्वतत्वविशिष्टधूमवति पर्वते पर्वतीयवह्नेः सत्त्वात् । अतो नातिव्याप्तिरिति भावः ।

**दीपिकायां आद्यः आर्द्रेन्धनसंयोग** इति । 'पर्वतो धूमवान् वह्नेः' इत्यत्र आर्द्रेन्धनसंयोग उपाधिः । स च धूमरूपसाध्यव्यापकः वह्निरूप-साधनाव्यापकश्चेति केवलसाध्यव्यापकोऽयमुपाधिरित्यर्थः । **द्वितीयो यथे**ति । पक्षधर्मावच्छिन्नसाध्यव्यापक उपाधिरित्यर्थः । 'वायुः प्रत्यक्ष-विषयः प्रत्यक्षविषयस्पर्शाश्रयत्वात्' इत्यत्र उद्भूतरूपवत्त्वमुपाधिः । स च केवलसाध्यव्यापको न भवति प्रत्यक्षविषयत्वरूपसाध्यवत्यात्मनि उद्भूतरूपवत्त्वाभावात् । अतः पक्षधर्मावच्छिन्नसाध्यव्यापकोऽयमुपा-धिः । पक्षस्य धर्मः पक्षधर्मः तदवच्छिन्नः तद्विशिष्टः तत्समानाधि-करणः यः साध्यः तद्व्यापकः । प्रकृते पक्षः वायुः तद्वृत्तिधर्मः बहि-र्द्रव्यत्वं तद्विशिष्टं यत्प्रत्यक्षविषयत्वं तत् आत्मनि नास्ति, आत्मनो बहिर्द्रव्यत्वरूपविशेषणाभावात् । अतो बहिर्द्रव्यत्वविशिष्टप्रत्यक्षवि-षयत्वं यत्र यत्रास्ति पृथिव्यादौ तत्र सर्वत्र उद्भूतरूपवत्त्वसत्त्वात् उद्भूतरूपवत्त्वं पक्षधर्मावच्छिन्नसाध्यव्यापकम् । तथा बहिर्द्रव्यत्व-विशिष्टप्रत्यक्षस्पर्शाश्रयत्वरूपं पक्षधर्मावच्छिन्नं साधनं यत्रास्ति वायौ तत्र उद्भूतरूपं नास्तीति पक्षधर्मावच्छिन्नसाधनाव्यापकं चोद्भूतरूपवत्त्वं भवतीति लक्षणसमन्वयः । **तृतीयो यथे**ति । साधना-वच्छिन्नसाध्यव्यापक उपाधिरित्यर्थः । साधनावच्छिन्नत्वं च सामा-नाधिकरण्यसम्बन्धेन साधनविशिष्टत्वम् । 'प्रागभावो विनाशी जन्य-त्वात्' इत्यत्र भावत्वमुपाधिरिष्यते । स केवलसाध्यव्यापको न भवति, विनाशित्वरूपसाध्यवति प्रागभावे भावत्वाभावात् । अतः साधनाव-च्छिन्नसाध्यव्यापकोऽयमुपाधिः । जन्यत्वरूपसाधनविशिष्टं विनाशित्वं यत्र यत्रास्ति घटादौ तत्र भावत्वसद्भावादिति भावः । **चतुर्थो यथे**ति । उदासीनधर्मावच्छिन्नसाध्यव्यापक इत्यर्थः । 'प्रागभावो विनाशी प्रमे-यत्वात्' इत्यत्र भावत्वमुपाधिः । पक्षधर्मात् साधनाच्चान्यो धर्म उदा-सीनधर्मः । जन्यत्वं हि पक्षे प्रागभावे नास्तीति न पक्षधर्मः । एवं साध-नात् प्रमेयत्वाच्चान्यत् इति उदासीनधर्मः । तदवच्छिन्नं जन्यत्ववि-शिष्टं विनाशित्वं यत्रास्ति घटादौ तत्र भावत्वसत्त्वात् जन्यत्वविशि-

ष्टप्रमेयत्ववति प्रागभावे भावत्वस्याभावाच्च भावत्वं उदासीनधर्मावच्छिन्नसाध्यव्यापकः उदासीनधर्मावच्छिन्नसाधनाव्यापकञ्चोपाधिरिति भावः । **प्रकाशिकायाम् पक्षधर्मसाधनधर्माभ्यामिति** । पक्षवृत्तिर्धर्मः पक्षधर्मः साधनरूपो धर्मः साधनधर्मः । बहिर्द्रव्यत्वम् इत्यस्य विवरणं **आत्मान्यद्रव्यत्वमिति** । वायुः प्रत्यक्ष इत्यत्र प्रत्यक्षपदस्य बहिरिन्द्रियजन्यप्रत्यक्षविषय इति यद्यर्थः तदोद्भूतरूपवत्त्वं [1]केवलसाध्यव्यापक एवोपाधिः । यदा तु प्रत्यक्षविषयत्वमात्रं साध्यं [2]तदैव पक्षधर्मावच्छिन्नसाध्यव्यापक इत्याशयेनाह - **इदं केवलप्रत्यक्षत्वस्यैवेति** । बहिरिन्द्रियजन्यत्वाघटितप्रत्यक्षविषयत्वमात्रस्येत्यर्थः। **उदासीनत्वं सम्पादयितुमिति** । यदि जन्यत्वमेव हेतुः स्यात् तदा साधनावच्छिन्नसाध्यव्यापकत्वमेवोपाधेर्भवेत् नोदासीनधर्मावच्छिन्नसाध्यव्यापकत्वम् । साधनादन्यस्यैवोदासीनशब्दार्थत्वात् । अतः प्रमेयत्वस्य हेतुत्वानुसरणम् । अधुना तु जन्यत्वं साधनात् प्रमेयत्वादन्यदिति जन्यत्वविशिष्टविनाशित्वं उदासीनधर्मावच्छिन्नसाध्यमिति भावः ।



## तर्कसङ्ग्रहः

**बाधितनिरूपणम्**

यस्य साध्याभावः प्रमाणान्तरेण निश्चितः सः बाधितः । यथा वह्निः अनुष्णः पदार्थत्वात् । अत्र अनुष्णत्वं साध्यम्, तदभाव उष्णत्वं त्वाचप्रत्यक्षेण गृह्यत इति बोध्यम् । व्याख्यातमनुमानम् ।

## इति तर्कसङ्ग्रहे अनुमानपरिच्छेदः

---

1. केवलसाध्यव्यापक इति । बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वं यत्र यत्र घटादौ तत्र उद्भूतरूपवत्त्वसत्त्वादिति भावः ।
2. तदैव पक्षधर्मेति । यत्र यत्र प्रत्यक्षविषयत्वम् आत्मन्यपि, तत्रोद्भूतरूपाभावात् उद्भूतरूपस्य केवलसाध्यव्यापकत्वं न सम्भवति । अतः बहिर्द्रव्यत्वरूपपक्षधर्मविशिष्टप्रत्यक्षविषयत्वरूपसाध्यव्यापकत्वमुपाधेः उद्भूतरूपस्योपपादनीयमिति भावः ।

## दीपिका

बाधितस्य लक्षणमाह - **यस्येति** ।

### दोषाणामनुमितिप्रतिबन्धकत्वप्रकारशोधनम्

अत्र बाधस्य ग्राह्याभावनिश्चयत्वेन, सत्प्रतिपक्षस्य विरोधिज्ञानसामग्रीत्वेन साक्षादनुमितिप्रतिबन्धकत्वम् । इतरेषां तु परामर्शप्रतिबन्धकत्वम् । तत्रापि साधारणस्याव्यभिचाराभावरूपतया, विरुद्धस्य सामानाधिकरण्याभावतया व्याप्यत्वासिद्धस्य विशिष्टव्याप्यभावतया, असाधारणानुपसंहारिणोः व्याप्तिसंशयाधायकत्वेन व्याप्तिज्ञानप्रतिबन्धकत्वम् । आश्रयासिद्धिस्वरूपासिद्ध्योः पक्षधर्मताज्ञानप्रतिबन्धकत्वम् । उपाधिस्तु व्यभिचारज्ञानद्वारा व्याप्तिज्ञानप्रतिबन्धकः । सिद्धसाधनं तु पक्षताविघटकतया आश्रयासिद्धावन्तर्भवतीति प्राञ्चः । निग्रहस्थानान्तरमिति नवीनाः ।

## इति दीपिकायामनुमानपरिच्छेदः

## प्रकाशिका

**बाधस्य** - साध्याभाववत्तानिश्चयस्य ।

**ग्राह्याभावनिश्चयत्वेनेति** । अनुमितिप्रतिबन्धकत्वमित्यनेनान्वयि । **विरोधिज्ञानसामग्रीत्वेनेति** । इदं प्राचीनमते । वस्तुतस्तु विरोधिपरामर्शस्य साध्याभावव्याप्यवत्तानिश्चयत्वेनैव प्रतिबन्धकत्वं लाघवादिति ध्येयम् । **इतरेषाम्** - व्यभिचारादिग्रहाणाम् । **तत्रापि** - व्यभिचारादिग्रहेष्वपि । **साधारणस्येति** । भावप्रधाननिर्देशतया साधारण्यस्येत्यर्थः । **अव्यभिचाराभावरूपतया** । तद्ग्रहस्येति शेषः । व्याप्तिज्ञानप्रतिबन्धकत्वमित्यनेनान्वयः । एवमग्रेऽपि । हेतौ साध्याभाववद्वृत्तित्वस्येव साध्यतावच्छेदके हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वस्यापि व्यभिचारतया तद्ग्रहस्य हेतुसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावरूपो योऽव्यभिचारः तद्ग्रहप्रतिबन्धकतेति भावः। हेतौ साध्याभाववद्वृत्तित्वप्रकारकग्रहस्य व्याप्तिग्रहप्रतिबन्धकत्वं तु मणिमन्त्रादिन्यायेन । **विशिष्टव्याप्यभावतया** - हेतुव्यापकतावच्छेदक-

साध्यतावच्छेदकावच्छिन्नसामानाधिकरण्याभावरूपतया । **व्याप्तिसंशया-धायकत्वेने**ति । हेतावसाधारण्यादिज्ञानदशायां हेतुसाध्ययोः सामानाधिकरण्यनिश्चयासंभवेन पक्षान्तर्भावेन च साध्यसंशयसत्त्वेन व्याप्तिसंशयसम्भवात् न व्याप्तिनिर्णय इति **प्राचीनमत**मभिप्रेत्येदम् । **पक्षधर्मताज्ञानप्रतिबन्धकत्वमि**ति । पक्षे पक्षतावच्छेदकविरहस्य हेतुविरहस्य च निश्चयदशायां हेतौ पक्षतावच्छेदकविशिष्टपक्षवृत्तित्वग्रहासंभवादिति भावः । ननु पञ्चत्वोक्तिरसङ्गता, हेतौ उपाधिग्रहदशायामपि व्याप्तिनिश्चयासंभवेन उपाधिज्ञानस्य व्याप्तिनिश्चयप्रतिबन्धकताया अवश्यं वक्तव्यतया उपाधेरपि हेत्वाभासलक्षणाक्रान्तत्वादत आह - **उपाधिस्त्वि**ति । **व्यभिचारज्ञानद्वारे**ति । तथा च हेत्वाभासलक्षणे साक्षादनुमितितत्करणान्यतरप्रतिबन्धकत्वस्यैव निवेशनीयतया परमुखनिरीक्षकस्योपाधेर्न हेत्वाभासत्वमिति भावः । ननु तथापि सिद्धिसत्त्वेऽनुमित्यनुदयात् तद्विषयस्य साध्यवत्पक्षस्यापि हेत्वाभासत्वमावश्यकमित्याशङ्कां जरन्नैयायिकानां मतमवलम्ब्येष्टापत्त्या परिहरति - **सिद्धसाधनं त्वि**ति । **पक्षताविघटकतये**ति । तन्मते पक्षतायाः साध्यसंशयरूपतया तद्विघटकत्वं साध्यनिश्चयस्याक्षतमिति भावः । **अन्तर्भवती**ति । तथा च न विभागव्याघात इति भावः । दर्शितमतमतिशिथिलमित्यालोच्याह - **निग्रहे**ति । न च सिद्धान्तेऽनुमितिं प्रति सिद्धेः प्रतिबन्धकतया तद्विषयस्य कथं हेत्वाभासता नेति वाच्यम् । सिषाधयिषायाः सिद्धिनिष्ठप्रतिबन्धकतायां उत्तेजकतया केवलं सिषाधयिषासहितसिद्धौ प्रतिबन्धकत्वाभावेन तद्विषये उक्तहेत्वाभासलक्षणासंस्पर्शात् । अधिकं **अस्मदीयाभिनवदीधितिव्याख्यायां** तर्ककर्कशविचारचातुरीधुरीणैरनुसन्धेयम् ॥

## इति प्रकाशिकायामनुमानपरिच्छेदः

## बालप्रिया

**ग्राह्याभावनिश्चयत्वेने**ति । अनुमित्या ग्राह्यं यत् साध्यं तदभावप्रकारकनिश्चयत्वेनेत्यर्थः । तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयवि-

धयेति यावत् । **सत्प्रतिपक्षस्य** - साध्याभावव्याप्यप्रतिहेतुमान् पक्ष इति ज्ञानस्य । **विरोधिज्ञानसामग्रीत्वेन** - साध्यवत्ताज्ञानविरोधि यत् साध्याभाववत्ताज्ञानं तज्जनकत्वेन । तथा च सत्प्रतिपक्षज्ञानं साध्याभाववत्ताज्ञानं जनयति तत् साध्यानुमितिं प्रतिबध्नाति इत्येवमनुमितिप्रतिबन्धकज्ञानोत्पादकतया सत्प्रतिपक्षस्यानुमितिप्रतिबन्धकत्वमिति **प्राचीनाः** । **नवीनास्तु** साध्याभावव्याप्यप्रतिहेतुमान् पक्ष इत्याकारकं सत्प्रतिपक्षज्ञानं 'तद्वत्ताज्ञानं प्रति तदभावव्याप्यवत्ताज्ञानं प्रतिबन्धकम्' इति रीत्या अनुमितिं प्रतिबध्नाति, न तु अनुमितिप्रतिबन्धकज्ञानोत्पादकतया प्रतिबध्नाति, साक्षादेव प्रतिबन्धकत्वसम्भवेन गौरवादित्याहुः ।

**इतरेषामित्यादि** । साध्यव्याप्यहेतुमान् पक्ष इत्याकारके परामर्शे व्याप्तिग्रहांशे साधारण्य-विरोध-व्याप्यत्वासिद्धि-असाधारण्य-अनुपसंहारित्वज्ञानानां प्रतिबन्धकत्वम् । 'हेतुमान् पक्ष' इति पक्षधर्मताज्ञानांशे आश्रयासिद्धिस्वरूपासिद्धिज्ञानयोः प्रतिबन्धकत्वम् । तथा हि - साध्याभाववदवृत्तित्वं हेतोर्व्याप्तिरिति पक्षे हेतोः साध्याभाववद्वृत्तित्वं व्यभिचारः । तथा च 'पर्वतो धूमवान् वह्नेः' इत्यत्र 'धूमाभाववद्वृत्तिर्वह्निः' इत्याकारकं साधारण्यरूपव्यभिचारज्ञानम् 'धूमाभाववदवृत्तिवह्निमान् पर्वतः' इत्याकारकपरामर्शे धूमाभाववदवृत्तिर्वह्निरिति व्याप्तिभानांशे तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयविधया प्रतिबन्धकम् । हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नसाध्यसामानाधिकरण्यं व्याप्तिरिति पक्षे साध्यतावच्छेदके हेत्वधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकत्वस्यैव व्यभिचारतया 'वह्न्यधिकरणवृत्त्यत्यन्ताभावप्रतियोगितावच्छेदकं धूमत्वम्' इत्याकारकं व्यभिचारज्ञानम् 'वह्न्यधिकरणवृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधूमत्वावच्छिन्नधूमसमानाधिकरणवह्निमान् पर्वतः' इत्याकारकपरामर्शे 'प्रतियोगितानवच्छेदकं धूमत्वम्' इत्यंशभानं

प्रति प्रतिबन्धकम् । एतादृशसिद्धान्तव्याप्तिविषयकपरामर्शं प्रति 'साध्याभाववद्वृत्तिः हेतुः' इत्याकारकव्यभिचारज्ञानस्य ग्राह्याभावानवगाहितया नास्ति प्रतिबन्धकत्वम् । तादृशव्यभिचारज्ञान-कालेऽपि यदि सिद्धान्तव्याप्तिज्ञानानुत्पत्तिरनुभवसिद्धा तर्हि तस्य मणिमन्त्रादिन्यायेनैव प्रतिबन्धकता वक्तव्या ।'शब्दो नित्यः कृतकत्वात्' इत्यत्र 'नित्यत्वासमानाधिकरणं कृतकत्वम्' इत्याकारकस्य साध्यासामानाधिकरण्यात्मकविरोधज्ञानस्य 'नित्यत्वसमानाधिकरणं कृतकत्वम्' इत्याकारकव्याप्तिघटकसाध्यसामानाधिकरण्यावगाहिबुद्धिं प्रति प्रतिबन्धकत्वम् । 'साध्यव्याप्यत्वाभाववान् हेतुः' इत्याकारकव्याप्यत्वासिद्धिज्ञानस्य 'साध्यव्याप्यहेतुमान् पक्षः' इति परामर्शे हेतौ साध्यव्याप्यत्वज्ञानांशे प्रतिबन्धकत्वम् । 'अयं हेतुरसाधारणः इति वा अनुपसंहारी इति वा'ज्ञानदशायां पक्षातिरिक्ते साध्यहेत्वोः सामानाधिकरण्यग्रहासंभवेन व्याप्तिग्रहो न संभवति । पक्षे च साध्यसंशयात् हेतौ साध्यसामानाधिकरण्यसंशय एव स्यात् न तु निश्चय इति रीत्या व्याप्तिनिश्चयप्रतिबन्धकत्वमसाधारण्यानुपसंहारित्वज्ञानयोः।'गगनारविन्दं सुरभि अरविन्दत्वात्'इत्यत्र'अरविन्दं गगनीयत्वाभाववत्'इत्याकारकाश्रयासिद्धिज्ञानस्य 'सुरभित्वव्याप्यारविन्दत्ववत् गगनीयारविन्दम्' इत्याकारकपरामर्शे पक्षतावच्छेदकगगनीयत्वप्रकारकारविन्दविशेष्यकज्ञानांशे प्रतिबन्धकत्वम्। एवं 'ह्रदो वह्निमान् धूमात्'इत्यत्र 'धूमाभाववान् ह्रदः' इत्याकारकस्य स्वरूपासिद्धिज्ञानस्य 'वह्निव्याप्यधूमवान् ह्रदः' इति परामर्शे 'धूमवान् ह्रदः' इति पक्षधर्मताभानांशे प्रतिबन्धकत्वमिति । तदेतत्सर्वमभिसन्धायाह - **प्रकाशिकायां हेतौ साध्याभाववद्वृत्तित्वस्येत्यादिना** ।

ननु पञ्चैव हेत्वाभासा इति कथनमयुक्तम् । हेतौ उपाधिज्ञानदशायां व्यभिचारनिश्चयेन व्याप्तिनिश्चयाभावात् अनुमितिकरणव्याप्तिनिश्चयप्रतिबन्धकज्ञानविषयतया उपाधेरपि हेत्वाभासलक्षणा-

क्रान्तत्वेन हेत्वाभासत्वात् षट् हेत्वाभासा इति वक्तव्यत्वादित्याशङ्कते – **ननु पञ्चत्वोक्तिरयुक्तेति** । अनुमितौ वा तत्करणपरामर्शे वा साक्षात् यद्विषयकज्ञानस्य प्रतिबन्धकत्वं तस्यैव हेत्वाभासत्वम् । उपाधिज्ञानं तु व्यभिचारज्ञानोत्पादनद्वारैव परामर्शं प्रतिबध्नाति न साक्षादिति न तस्य हेत्वाभासत्वम् । अतो न पञ्चत्वोक्तिविरोधः । तदाह - **तथा च हेत्वाभासलक्षण** इति । साक्षादित्यस्य प्रतिबन्धकत्वेऽन्वयः । **परमुखनिरीक्षकस्येति** । परामर्शप्रतिबन्धकं व्यभिचारज्ञानं निरीक्षमाणस्येत्यर्थः । अनेन उपाधिज्ञानस्य साक्षात्प्रतिबन्धकत्वाभावः सूच्यते । ननु यथा 'ह्रदो वह्निमात् धूमात्' इत्यादौ वह्न्यभाववद्ध्रदरूपबाधस्य 'ह्रदो वह्निमान्' इत्यनुमितिप्रतिबन्धकं यत् 'ह्रदो वह्न्यभाववान्' इत्याकारकज्ञानं तद्विषयतया हेत्वाभासत्वम्, तथा 'पर्वतो वह्निमान् धूमात्' इत्यादौ 'पर्वतो वह्निमान्' इत्याकारकसाध्यनिश्चयदशायां पर्वतो वह्निमान्नवेति साध्यसंशयानुदयात् साध्यसंशयरूपपक्षताविरहेण 'पर्वतो वह्निमान्' इत्यनुमित्यनुदयात् अनुमितिप्रतिबन्धकसिद्धिविषयस्य वह्निमत्पर्वतस्यापि हेत्वाभासत्वं स्यात्, हेत्वाभासलक्षणाक्रान्तत्वादित्याशङ्कते - **ननु तथापीति** ।

**तन्मत इत्यादि** । तथा च **प्राचीनमते** पक्षतायाः साध्यसंशयरूपतया अनुमितिजनकपक्षताप्रतिबन्धकज्ञानविषयतया हेत्वाभासलक्षणाक्रान्तत्वेन साध्यवत्पक्षस्य हेत्वाभासत्वमिष्टमेव । न च पञ्चधा विभागव्याघात इति वाच्यम् । आश्रयासिद्धेऽन्तर्भावात् । कथमन्तर्भाव इति चेत् – इत्थम् । आश्रयासिद्धिर्द्विविधा धर्मिस्वरूपाप्रसिद्धिः पक्षत्वाप्रसिद्धिश्चेति । तत्र पक्षत्वाप्रसिद्धौ सिद्धसाधनस्यान्तर्भाव इति । तदुक्तं **कुसुमाञ्जलौ** – "मध्यमापि आश्रयस्वरूपाप्रतीत्या तद्विशेषणपक्षत्वाप्रतीत्या चेति द्वयी । तत्र चरमा सिद्धसाधनमिति व्यपदिश्यते । व्याप्तिस्थितौ पक्षत्वस्याहत्य विघटनात्" इति । **दर्शितमतमतिशिथिलमिति** । पक्षतायाः स्वरूपसत्याः पृथक् कारणत्वात् सिद्धेस्तत्प्रति-

बन्धकत्वेऽपि सिद्धसाधनस्थले अनुमितिकरणपरामर्शविघटनं वा अनुमितिविघटनं वा नास्तीति न सिद्धसाधनस्य हेत्वाभासत्वम्। पक्षतारूपहेत्वभावादनुमिति : परं नोत्पद्यते । अतः सिद्धसाधनस्थले न हेत्वाभासोद्भावनम्, अपि तु वादिनो निग्रहमात्रमिति भावः।

ननु नवीनमतेऽपि साध्यनिश्चयदशायामनुमित्यनुदयेन मणिमन्त्रादिन्यायेन सिद्धेरनुमितिप्रतिबन्धकत्वं वाच्यम्। तथा चानुमितिप्रतिबन्धकसिद्धिविषयस्य साध्यवत्पक्षस्य कुतो न हेत्वाभासत्वमिति शङ्कते - **न च सिद्धान्त** इति । यत्सत्त्वे नियमेन यन्नोत्पद्यते, यदभावे च यदुत्पद्यते तस्यैव प्रतिबन्धकत्वम् । सिद्धिसत्त्वेऽपि सा सिद्धिर्यदि सिषाधयिषासहिता भवति तदा अनुमित्युत्पत्त्या सिद्धेर्नानुमितिप्रतिबन्धकत्वम् । अतोऽनुमितिप्रतिबन्धकज्ञानविषयत्वरूपं हेत्वाभासलक्षणं साध्यवत्पक्षे नास्तीति समाधत्ते-**सिषाधयिषाया इत्यादिना**। नन्वेवमपि सिषाधयिषाविरहविशिष्टायाः सिद्धेरनुमितिप्रतिबन्धकतया तद्विषयस्य हेत्वाभासत्वं दुर्वारमित्यत आह - **अधिकमिति**। अयं भावः - प्रत्यक्षितविषयेऽपि संनिकर्षे सति धारावाहिकप्रत्यक्षस्य,प्रतीतार्थकशब्दश्रवणेऽपि पुनर्बोधस्य च संमतत्वात् तद्वदेव सिद्धिविषयस्य परामर्शसत्त्वेऽनुमित्युत्पत्तौ न किंचिद्बाधकम् । अतः सिद्धेर्नानुमितिं प्रति प्रतिबन्धकत्वम् । एवं साध्यसंशयविरहेऽप्यनुमित्युत्पत्त्या न साध्यसंशयरूपपक्षता अनुमितिहेतुः । तथा च सिद्धेः अनुमितिं प्रति वा अनुमितिकारणं प्रति वा प्रतिबन्धकत्वाभावात् न सिद्धिविषयस्य साध्यवत्पक्षस्य हेत्वाभासलक्षणाक्रान्ततेति ।

**इति तर्कसङ्ग्रहदीपिकाप्रकाशिकाव्याख्यायां बालप्रियायां**
**अनुमानपरिच्छेदः**



# उपमानपरिच्छेदः

## तर्कसङ्ग्रहः

उपमितिकरणमुपमानम् । संज्ञासंज्ञिसम्बन्धज्ञानमुपमितिः । तत्करणं सादृश्यज्ञानम् । तथा हि - कश्चित् गवयशब्दार्थमजानन् कुतश्चित् आरण्यकपुरुषात् गोसदृशो गवय इति श्रुत्वा वनं गतः वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति । तदनन्तरं अयं गवयपदवाच्यः इत्युपमितिरुत्पद्यते । व्याख्यातमुपमानम् ।

**इति तर्कसङ्ग्रहे उपमानपरिच्छेदः**

## दीपिका

उपमानं लक्षयति - **उपमितिकरणमिति** ।

**इति दीपिकायां उपमानपरिच्छेदः**

## प्रकाशिका

**उपमानं लक्षयतीति** । अवसरसङ्गत्या उपमानं निरूपयतीत्यर्थः । उपमितिस्वरूपं व्युत्पादयति - **मूले संज्ञेति** । **संज्ञा** - गवयपदम् । **संज्ञी** - गवयः, तयोः सम्बन्धः शक्तिः, तज्ज्ञानमित्यर्थः । लक्षणं तु उपमिनोमि इत्यनुव्यवसायगम्योपमितित्वमेव । **वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यतीति** । एतेन स्मरणं सादृश्यदर्शनजन्यम् उद्बोधकान्तरजन्यं वा । उभयमपि सादृश्यदर्शनसहकारि, न तु सादृश्यदर्शनजन्यमेव स्मरणं सहकारीति सूचितम् ।

**प्राञ्चस्तु** - 'वाक्यार्थं स्मरन्' इत्यत्र वर्तमानसामीप्ये प्रत्ययः । वाक्यार्थं स्मरिष्यन्नित्यर्थः । एवं च वाक्यार्थस्मरणस्य सादृश्यदर्शनजन्यतालाभेन व्यापारतालाभः— इत्याहुः ।

**तदनन्तरमित्यादि** । सादृश्यदर्शनानन्तरम् 'गवयो गवयपदवाच्य' इत्याकारिका गवयत्वरूपलघुधर्मधर्मितावच्छेदककोपमितिरुत्पद्यत इत्यर्थः । इदमुपलक्षणम् - वैधर्म्यदर्शनेनाप्युपमितिरिति ध्येयम् ।

**वैशेषिकास्तु** - पदवाच्यत्वव्याप्यसादृश्यादिपरामर्शात् पदवाच्यत्वस्यानुमितिरेव, अतो नोपमानं प्रमाणान्तरम् - इत्याहुः। तच्चिन्त्यम्-व्याप्तिज्ञानमन्तरेणापि पदवाच्यत्वप्रमितेरनुभवसिद्धत्वात् इत्यन्यत्र विस्तरः ।

## इति प्रकाशिकायाम् उपमानपरिच्छेदः

## बालप्रिया

**अवसरसङ्गत्येति** । प्रतिबन्धकजिज्ञासानिवृत्तौ अवश्यवक्तव्यत्वमवसरः । अनुमानस्य बहुवादिसंमतत्वेन निरसनीयाल्पवादिविप्रतिपत्तिकतया प्रथममनुमान एव व्युत्पित्सोर्जिज्ञासा जायते, न तूपमाने, तस्याल्पवादिसंमतत्वेन निरसनीयबहुवादिविप्रतिपत्तिकत्वात् । तथा चानुमाने प्रथममुत्पन्नायाः [1]प्रतिबन्धकीभूतशिष्यजिज्ञासायाः तन्निरूपणेन निवृत्तौ अवश्यवक्तव्यत्वरूपावसरसंगतया अनुमानानन्तरं उपमाननिरूपणमिति भावः । संज्ञा - वाचकः शब्दः, गवयादिपदम् । संज्ञी - वाच्योऽर्थः गवयादिः । तयोः यः सम्बन्धः शक्त्याख्यः तद्विषयकज्ञानमुपमितिः । 'गवयो गवयपदवाच्यः' इत्याद्याकारकं शक्तिज्ञानमुपमितिरिति यावत् । सादृश्यज्ञानकरणकं ज्ञानमुपमितिरिति ग्रन्थान्तरेषु कथनात् सादृश्यज्ञानकरणकत्वस्य उपमितिलक्षणत्वसम्भवेऽपि तदपेक्षया लाघवात् उपमितित्वजातिमत्त्वं लक्षणमुचितमित्यभिप्रेत्याह - **लक्षणं त्विति** ।

---

1. प्रतिबन्धकीभूतेति । उपमाननिरूपण इति शेषः ।

ननु 'वाक्यार्थं स्मरन् गोसदृशं पिण्डं पश्यति' इति मूलात् आदौ [1]अतिदेशवाक्यार्थस्मरणं ततः [2]गोसदृशपिण्डदर्शनमिति क्रमो लभ्यते, तदयुक्तम् । गोसदृशपिण्डदर्शनानन्तरमेव अतिदेशवाक्यार्थ-स्मरणात् इत्याशङ्क्याह - **एतेनेति । वर्तमानसामीप्य** इति । 'वर्तमान-सामीप्ये वर्तमानवद्वा' इत्यनुशासनेन भविष्यति लटि शतृप्रत्ययेन स्मरन्निति रूपम् । स्मरन् इत्यस्य स्मरिष्यन् इत्यर्थः । एवं चादौ सादृश्यविशिष्टगवयपिण्डदर्शनं तत अतिदेशवाक्यार्थस्मरणं तत उप-मितिरिति क्रमस्यैव मूलतो लाभात् वाक्यार्थस्मरणव्यापारकसादृश्य-दर्शनस्य उपमितिकरणत्वं युज्यत इति भावः ।

ननु 'गोसदृशो गवयपदवाच्यः' इत्याकारिकैवोपमितिरस्तु । न चेष्टापत्तिः, गवयत्वस्य गवयपदशक्यतावच्छेदकत्वासिद्ध्यापत्तेरित्य-त्राह - **गवयो गवयपदवाच्य इत्याकारिके**ति । उपमितेः 'गोसदृशो गव-यपदवाच्यः' इत्याकारकत्वे गोसादृश्यं धर्मितावच्छेदकं वाच्यम् । गोसादृश्यं गवयत्वापेक्षया गुरु इति ज्ञानदशायां गोसादृश्यावच्छेदेन गवयपदवाच्यत्वज्ञानं भवितुं नार्हतीति 'गवयो गवयपदवाच्यः' इत्याका-रकतैवोपमितेर्युक्तेति भावः । इदमुपलक्षणम् । तत्प्रकारकशाब्दबोधे तदवच्छेदेन शक्तिज्ञानस्य हेतुत्वात् गवयपदात् गोसादृश्यप्रकारक एव गवयबोधः स्यात्, न तु गवयत्वप्रकारकः । अनुभूयते च गवयपदात् गवयत्वप्रकारक एव शाब्दबोधः । अतः गवयत्वावच्छेदेन गवयपद-वाच्यत्वावगाही 'गवयो गवयपदवाच्य' इति ज्ञानमेव उपमितिरित्यपि बोध्यम् । **वैधर्म्यदर्शनेनाप्युपमितिरि**ति । यत्र केनचित् गोविधर्मा अश्व इत्युक्तं श्रुतवान् कश्चित् कदाचित् कुत्रचित् गोविधर्माणं अश्वं

---

1. अतिदेशवाक्येति । वद्धदिदमिति वाक्यमतिदेशवाक्यम् । प्रकृते गोसदृशो गवय इति वाक्यम् अतिदेशवाक्यम् ।

2. गोसदृशपिण्डेति । पिण्डशब्दः आकृतिविशिष्टव्यक्तिपरः । गोसदृशाकारगवयव्यक्ति-दर्शनमित्यर्थः ।

पश्यति तत्र वैधर्म्यविशिष्टपिण्डदर्शनं करणम्, गोविधर्मा अश्व इत्यतिदेशवाक्यार्थस्मरणं व्यापारः अश्वोऽश्वपदवाच्य इति ज्ञानमुपमितिरिति भावः ।

**वैशेषिकास्त्वित्यादि** । 'गवयो गवयपदवाच्यः, गोसादृश्यात्, यो गवयपदवाच्यो न भवति नासौ गोसदृशः, गोसदृशश्चायम्, तस्मात् गवयपदवाच्यः' इत्यनुमानप्रयोगोऽत्र विवक्षितः। तथा च गवयपदवाच्यत्वव्याप्यगोसादृश्यवानयमिति परामर्शात् जायमाना गवयो गवयपदवाच्य इति प्रमा अनुमितिरेव न तद्विलक्षणा । अतो नोपमानं प्रमाणान्तरमिति वैशेषिकाशयः । तन्मतं निराकरोति - **व्याप्तिज्ञानमन्तरेणापीति** । **अन्यत्रेति** । कुसुमाञ्जल्यादिग्रन्थेष्वित्यर्थः ।

**इति तर्कसङ्ग्रहदीपिकाप्रकाशिकाव्याख्यायां बालप्रियायां**
**उपमानपरिच्छेदः**



# शब्दपरिच्छेदः

## तर्कसङ्ग्रहः

**शब्दलक्षणम्**

आप्तवाक्यं शब्दः । आप्तस्तु यथार्थवक्ता ।

## दीपिका

शब्दं लक्षयति - **आप्तेति** । आप्तं लक्षयति - **आप्तस्त्विति** ।

## प्रकाशिका

**शब्दं लक्षयतीति** । उपजीव्योपजीवकत्वसङ्गत्या शब्दं निरूपयतीत्यर्थः । अत्र ज्ञायमानशब्दस्य शब्दप्रमाणतया शब्दे उपमानोपजीवकत्वाभावात् उपमितिशाब्दबोधरूपफलयोः सङ्गतिर्बोध्या । तथा हि - शक्तिपरिच्छित्तिरेवोपमितिः । तस्याश्च शाब्दबोधोपजीव्यत्वेन फलयोरुपजीव्योपजीवकत्वसम्भवः । तादृशसङ्गतेश्च फलनिष्ठत्वेऽपि स्वाश्रयकरणत्वात्मकपरम्परासम्बन्धेन करणनिष्ठत्वात् करणयोरनन्तराभिधानप्रयोजकत्वम् । शब्दज्ञानस्य प्रमाणत्वाङ्गीकर्तृनवीनमते तु उपमितेः शक्तपदविषयकत्वेन शब्दप्रमाणतया तत्र चोपमानजन्यत्वस्याक्षततया स्वरूपयोरपि सङ्गतिरिति मन्तव्यम् ।

**मूले आप्तवाक्यं शब्द** इति । शब्द इति लक्ष्यनिर्देशः । प्रमाणशब्द इति तदर्थः । आप्तवाक्यमिति लक्षणम् । भवति हि पयसा सिञ्चतीत्यादिशब्दः आप्तोक्तवाक्यम् । न तु वह्निना सिञ्चतीत्यादिशब्दः, तदुच्चारणकर्तुः यथार्थवक्तृत्वरूपाप्तत्वाभावात् । प्रकृतवाक्यार्थगोचरयथार्थज्ञानजन्यवाक्यं प्रमाणशब्द इति तु निष्कर्षः । वाक्यप्रयोगे वाक्यार्थज्ञानस्य हेतुत्वात् लक्षणसङ्गतिः । स्फुटमेतत् **शब्दमणौ** ।

**बालप्रिया**

**उपजीव्योपजीवकत्वसङ्गत्येति** । उपमानम् उपजीव्यं कारणम्, शब्दः उपजीवकः कार्यः । तथा च शब्दोपमानयोः कार्यकारणभावसद्भावात् कार्यकारणभावरूपसङ्गत्या उपमानानन्तरं शब्दनिरूपणमिति भावः । उपजीव्योपजीवकभावमेवोपपादयति - **अत्रेत्यादिना** ।

अयं भावः-प्रमाणयोरुपजीव्योजीवकभावोऽत्र दुर्वचः । शब्दप्रमाणं हि ज्ञायमानः वाक्यात्मकः शब्दः । उपमानप्रमाणं तु सादृश्यदर्शनम् । तत्कार्यत्वं तु शब्दे नास्तीति । शब्दोपमानात्मकप्रमाणयोः कार्यकारणभावो न सम्भवति । शब्दोपमानजन्यप्रमित्योरेवात्रकार्यकारणभावः । शब्दजन्याप्रमितिः शाब्दबोधः । उपमानजन्या प्रमितिः अयमसौ गवयपदवाच्य इत्याद्याकारकः शक्तिग्राहः । शक्तिग्रहजन्यत्वं च शाब्दबोधे वर्तत इति । न च कार्यकारणभावात्मकसङ्गतेः प्रमितिद्वयनिष्ठत्वेऽपि प्रमाणद्वयनिष्ठत्वाभावात् उपमानप्रमाणनिरूपणानन्तरं शब्दप्रमाणनिरूपणे तादृशसङ्गतेर्नोपयोग इति वाच्यम् । उपमितिशाब्दबोधरूपप्रमितिद्वयनिष्ठस्य कार्यकारणभावस्य स्वाश्रयजनकत्वसम्बन्धेन प्रमाणनिष्ठत्वात् । स्वं - कार्यकारणभावः, स्वाश्रयौ उपमितिशाब्दबोधौ, तज्जनकत्वमुपमानशब्दयोरिति । तथा च कार्यकारणभावरूपसङ्गतेः स्वाश्रयजनकत्वसम्बन्धेन प्रमाणनिष्ठत्वात् उपमानानन्तरं शब्दनिरूपणं सङ्गतमिति । इदं प्राचीनमतानुसारेण ।

नवीनमते तु शब्दज्ञानमेव शब्दप्रमाणम् । उपमितिरपि गवयो गवयपदवाच्य इत्याकारिका गवयधर्मिका गवयपदवाच्यत्वप्रकारिका गवयपदं गवयवाचकमित्याकारिका गवयपदधर्मिका गवयवाचकत्वप्रकारिका वा पक्षविषयकत्वात् शब्दज्ञानरूपैव । सा च सादृश्यज्ञानरूपोपमानप्रमाणजन्या । एवं च शब्दप्रमाणरूपशब्दज्ञानात्मकोपमितेः सादृश्यज्ञानात्मकोपमानप्रमाणजन्यत्वात् प्रमाणयोरपि कार्यकारणभावरूपा सङ्गतिरस्तीति ।

**उपमानोपजीवकत्वाभावादिति** । उपमानप्रमाणजन्यत्वाभावादित्यर्थः । **शक्तिररिच्छिन्नेरिति** । शक्तिविषयकज्ञानमित्यर्थः । **तस्याश्च** - शक्तिररिच्छितेश्च । **शाब्दबोधोपजीव्यत्वेन** - शाब्दबोधजनकत्वेन । **करणयोरनन्तराभिधानप्रयोजकत्वमिति** । करणयोः प्रमाणयोः यत् अनन्तराभिधानं पौर्वापर्येणाभिधानं तत्प्रयोजकत्वं तद्धेतुत्वं संगतेरित्यर्थः । **आप्तोक्तवाक्यमिति** । आप्तकर्तृकोच्चारणविषयभूतं वाक्यमित्यर्थः । आप्तस्तु यथार्थवक्तेति मूलात् अबाधितार्थविषयकज्ञानजनकशब्दप्रयोगकर्तेत्यर्थो लभ्यते । यथाभूतोऽबाधितोऽर्थो यथार्थः तस्य वक्ता इति विग्रहात् । वक्ता तद्विषयकज्ञानजनकशब्दप्रयोगकर्ता । आप्तवाक्यं शब्द इति मूलाच्च अबाधितार्थविषयकज्ञानजनकशब्दप्रयोगकर्तृकोच्चारणविषयशब्दत्वं शब्दप्रमाणस्य लक्षणमिति प्रतीयते । तदपेक्षया लाघवात् अबाधितार्थविषयकज्ञानजन्यवाक्यत्वमेव प्रमाणशब्दस्य लक्षणं भवितुमर्हतीत्याशयेनाह - **प्रकृतवाक्यार्थेति** । 'अर्थं बुद्ध्वा शब्दरचना' इति न्यायात् वक्तृनिष्ठेन वाक्यार्थविषयकयथार्थज्ञानेनैव वाक्यरूपः शब्दो जायत इति लक्षणसमन्वयः । तदाह - **वाक्यप्रयोग** इति । **स्फुटमेतत् शब्दमणाविति** । **तत्त्वचिन्तामणौ शब्दखण्डे** - 'प्रयोगहेतुभूतार्थतत्त्वज्ञानजन्यशब्दः प्रमाणम्' इति गङ्गेशवाक्यमत्राभिसंहितम् ।



## तर्कसङ्ग्रहः

वाक्यं तु पदसमूहः । शक्तं पदम् । अस्मात् पदात् अयमर्थो बोद्धव्य इति ईश्वरसङ्केतः शक्तिः ।

## दीपिका

वाक्यलक्षणमाह - **वाक्यमिति** । पदलक्षणमाह - **शक्तमिति** ।

अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धः शक्तिः । सा च पदार्थान्तरमिति मीमांसकाः । तन्निरासार्थमाह - **अस्मादिति** । डित्थादीनामिव घटादीनामपि सङ्केत एव शक्तिः, न तु पदार्थान्तरमित्यर्थः ।

## प्रकाशिका

मीमांसकमतनिरासकत्वेन अग्रिममूलमवतारयितुं तन्मतसाधारण्येन शक्तिपदार्थमाह - **अर्थस्मृत्यनुकूलेति** । शाब्दबोधजनक-अर्थ-स्मृत्यनुकूलः घटादिपदघटादिरूपार्थयोः सम्बन्धः शक्तिरित्यर्थः । अनुकूलत्वम् इह प्रयोजकत्वम् । तच्च कारणतावच्छेदकपदपदार्थसम्बन्धेऽप्यक्षतम् । घटादिपदतदर्थयोरन्यसम्बन्धवारणाय अनुकूलान्तं विवक्षितार्थकम् । अन्यसम्बन्धज्ञानस्यार्थस्मृतिजनकत्वेऽपि शाब्दबोधजनकस्मृतिजनकत्वाभावात् । अर्थस्मृत्यनुकूलत्वस्य अदृष्टादिसाधारण्यात् विशेष्यमिति ध्येयम् । **पदार्थान्तरमिति** । तत्तत्पदार्थतावच्छेदकाभावकूटवदित्यर्थः । तेनातिरिक्तपदार्थत्वस्य अन्यमताप्रसिद्धत्वेऽपि न व्याघातः । **अस्मात् पदात् अयमर्थो बोद्धव्य इति मूलस्य** 'एतत्पदजन्यबोधविषयोऽयमर्थः' इत्याकारकेश्वरेच्छा शक्तिरित्यर्थः ।

**न तु पदार्थान्तरमिति** । न चेश्वरीयज्ञानस्येच्छायाः कृतेर्वा शक्तिरूपत्वमिति विनिगमनाविरहात् अतिरिक्तैव शक्तिरिति वाच्यम् । आधुनिकसङ्केतस्य इच्छारूपतया शक्तेरपि इच्छारूपत्वे सङ्केतज्ञानस्य अनुगतकार्यकारणभावः सम्भवति नान्यथा इत्येवं विनिगमकसंभवेन, इच्छाया एव शक्तित्वस्वीकारात् ।

न च - भगवदिच्छायाः सकलविषयिण्याः शक्तित्वस्वीकारे घटपदबोद्धव्यत्वप्रकारकतदिच्छायाः पटेऽपि सत्त्वात् घटपदवाच्यत्वस्य अतिप्रसङ्गः । एवं गङ्गापदजन्यबोधविषयत्वप्रकारकेच्छायाः तीरेऽपि सत्त्वेन शक्त्यैव तद्बोधसम्भवे लक्षणोच्छेदापत्तिरिति - वाच्यम् । यतः तत्तत्पदवाच्यत्वं तत्तत्पदजन्यबोधविषयत्वप्रका-

रतानिरूपितेश्वरेच्छीयविशेष्यतावत्त्वम् । तादृशप्रकारतानिरूपित-विशेष्यतासम्बन्धेन तदिच्छावत्त्वं वा । तथा च तादृशस्य घटपद-वाच्यत्वस्य पटेऽसत्त्वात् नातिप्रसङ्गः । गङ्गादिपदजन्यत्वस्य बोधांशे, बोधविषयत्वस्य च तीरांशे, स्वातन्त्र्येण भानमीश्वरेच्छायां उपेयते । इत्थं च विशकलितभानस्थले निरूप्यनिरूपकभावापन्नविषयताया अभावेन गङ्गापदजन्यत्वप्रकारतानिरूपितबोधविषयत्वप्रकारतानिरू-पितविशेष्यतासम्बन्धेन इच्छावत्त्वस्य तीरेऽसत्त्वेन न क्षतिरिति सङ्-क्षेपः ।

## बालप्रिया

**शाब्दबोधजनकेति** । अनेकपदार्थसंसर्गावगाहिज्ञानं शाब्दबोधः । तस्य जनकं पदार्थानां स्मरणम्, तदनुकूलः पदपदार्थसम्बन्धः शक्तिः । तदनुकूलत्वं च तज्जनकज्ञानविषयत्वम् । तथा च यस्य पदपदार्थयोः सम्बन्धज्ञानमस्ति तस्यैव वाक्यघटकपदज्ञानात् तत्तत्पदार्थस्मरणं भवति । पदज्ञानं हि एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति रीत्या पदार्थस्मृतिं जनयति । यथा पूर्वं सम्बद्धतया दृष्टयोः हस्तिहस्तपकयोर्मध्ये पश्चात् कदाचित् एकस्य हस्तिपकरूपसम्बन्धिनो दर्शनेन अपरस्य हस्तिरूपस्य सम्बन्धिनः स्मरणं भवति तद्वत् पूर्वं पदपदार्थयोः सम्बन्धं यः जानाति स एव एकस्य पदरूपस्य सम्बन्धिनः ज्ञाने सति अपरमर्थरूपं सम्बन्धिनं स्मर्तुं शक्नोति । तथा च सम्बन्ध-ज्ञानसहकृतात् पदज्ञानात् पदार्थस्मृतिः ततः शाब्दबोध इति क्रमोऽत्र विवक्षितः ।

ननु **'अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धः शक्तिः'** इति **दीपिकावाक्ये** अनुकूलशब्दस्य यदि कारणमित्यर्थः तदा पदपदार्थसम्बन्धज्ञानस्यार्थ-स्मृतिजनकत्वेऽपि पदपदार्थसम्बन्धस्यार्थस्मृतिजनकत्वाभावादसम्भवः। अत आह - **अनुकूलत्वमिह प्रयोजकत्वमिति** । प्रयोजकत्वं च कारण-कारणतावच्छेदकोभयसाधारणम् । पदपदार्थसम्बन्धज्ञानमित्यस्य वि-

षयितासम्बन्धेन सम्बन्धविशिष्टज्ञानं इत्यर्थः। तथा च अर्थस्मृति-कारणम् सम्बन्धविशिष्टज्ञानम्। तत्र विषयितासम्बन्धेन विद्यमान-तया पदपदार्थसम्बन्धस्य कारणतावच्छेदकत्वमक्षतम्। कारणे विद्य-मानस्यैव कारणतावच्छेदकत्वात्। तथा च पदपदार्थसम्बन्धस्य अर्थ-स्मृतिप्रयोजकत्वात् तदनुकूलत्वं सम्भवतीति भावः। तथा च शाब्द-बोधजनकार्थस्मृतिप्रयोजकत्वे सति पदपदार्थसम्बन्धत्वं शक्तेर्लक्षण-मिति पर्यवसन्नम्। तत्र विशेष्यानुपादाने अदृष्टादिष्वतिव्याप्तिः। तेषां कार्यसामान्यं प्रति कारणतया अर्थस्मृतिं प्रत्यपि कारणत्वात्। तद्वार-णाय विशेष्योपादानम्। अदृष्टादेः पदपदार्थसम्बन्धत्वाभावात् नाति-व्याप्तिः। विशेषणानुपादाने घटपदस्य कम्बुग्रीवादिमद्रूपतदर्थस्य च यः कालिकादिसम्बन्धः तत्रातिव्याप्तिः। तद्वारणाय विशेषणम्। घट-पदतदर्थयोः कालिकसम्बन्धस्य कथञ्चित् अर्थस्मृत्यनुकूलत्वेऽपि तस्याः स्मृतेः शाब्दबोधजनकत्वं नास्ति। अतः शाब्दबोधजनकार्थस्मृत्यनुकू-लत्वस्य कालिकसम्बन्धेऽभावात् नातिव्याप्तिः। तदाह **घटादिपदेत्यादि-ना**। **विवक्षितार्थकमिति**। शाब्दबोधजनकस्मृत्यनुकूलत्वार्थकमित्यर्थः।

**'सा च पदार्थान्तरम्' इति दीपिकातः** शक्तिः क्लृप्तसप्तपदार्थाति-रिक्तः पदार्थः इत्यर्थो लभ्यते। तथा सति नैयायिकमतेऽप्रसिद्धिः। क्लृप्तपदार्थातिरिक्तत्वस्य अप्रसिद्धत्वात्। तथा च मीमांसकेन नैया-यिकं प्रति तत्साधने नैयायिकेनाप्रसिद्धविशेषणत्वं उद्भाव्यतेत्यालोच्य व्याचष्टे-**तत्तत्पदार्थतावच्छेदकाभावकूटवदित्यर्थ इति**। प्रत्येकं द्रव्यादौ प्रसिद्धाः ये द्रव्यत्वादीनामभावाः तद्घटित समुदायवती शक्तिरित्यर्थः। **अन्यमताप्रसिद्धत्वेऽपीति**। नैयायिकमतेऽप्रसिद्धत्वेऽपि इत्यर्थः। **न व्याघा-तः**- नानुपपत्तिः। अस्मात् पदादित्यत्र पञ्चम्याः जन्यत्वमर्थः। तस्य बुधधात्वर्थबोधेऽन्वयः। ण्यत्प्रत्ययस्य विषयत्वमर्थः। तथा च एतत्पद-जन्यबोधविषयोऽयमर्थ इति लभ्यते। तदाह- **इति मूलस्येति**। **आधुनिक-सङ्केतस्येत्यादि**। डित्थादिपदादयमर्थो बोद्धव्य इत्याकारकाधुनिकेच्छा-रूपसङ्केतग्रहात् डित्थादिपदात् व्यक्तिविशेषबोधो भवतीति स्वीकर-

णीयम् । 'घटदिपदात् अयमर्थो बोध्य' इत्याकारकेश्वरेच्छारूपसङ्केत-ग्रहात् घटादिपदात् घटादिबोध इति वक्तव्यम् । सङ्केतत्वं च तत्तत्पदबोद्धव्यत्वप्रकारकाधुनिकेच्छा - ईश्वरेच्छयोःसाधारणो धर्मः । तथा चेश्वरेच्छायाः शक्तित्वे उभयसाधारणसङ्केतत्वावच्छिन्नविषयकज्ञानत्वेन शाब्दबोधं प्रति एकविधमेव कारणत्वम् । तत्तत्पदजन्यबोधविषयत्वप्रकारकस्य ईश्वरज्ञानस्य ईश्वरप्रयत्नस्य वा शक्तित्वे तु डित्थादिपदस्थले इच्छारूपसङ्केतज्ञानात् शाब्दबोधः घटादिपदस्थले तु ईश्वरज्ञानरूपा ईश्वरप्रत्नरूपा वा या शक्तिः तज्ज्ञानादपि शाब्दबोध इत्येवं अनेके कार्यकारणभावाः कल्पनीया इति गौरवम् । अतः ईश्वरेच्छैव शक्तिरित्यर्थः । विनिगमकं विनिगमना इति पदयोः अन्यतरपक्षसाधकयुक्तिरित्यर्थः ।

**न च भगवदिच्छाया इत्यादि** । ईश्वरेच्छायाः सर्वविषयकत्वमेकत्वं चाङ्गीक्रियते । सा चेत् शक्तिः तर्हि पटादेरपि 'घटादिपदवाच्यत्वं प्रसज्येत। तथा हि - विशेष्यतासम्बन्धेन घटपदजन्यबोधविषयत्वप्रकारकभगवदिच्छावत्वं घटपदशक्यत्वमिति वक्तव्यम् । 'घटपदजन्यबोधविषयो घटो भवतु' इत्याकारिकायां भगवदिच्छायां घटो विशेष्यः घटपदजन्यबोधविषयत्वं प्रकारः। घटपदजन्यबोधविषयत्वप्रकारकेश्वरेच्छायाः स्वनिरूपितविशेष्यतासम्बन्धेन घटे सत्त्वात् घटस्य घटपदशक्यत्वम् । ईश्वरेच्छायाश्च एकत्वात् तस्याः 'पटपदजन्यबोधविषयः पटो भवतु', 'कुड्यपदजन्यबोधविषयः कुड्यं भवतु' इत्याद्याकारकत्वमप्यङ्गीकरणीयम् । तथा चेश्वरेच्छायां पटादेरपि विशेष्यत्वात् घटपदजन्यबोधविषयत्वप्रकारकेश्वरेच्छायाः विशेष्यतासम्बन्धेन पटादावपि सत्त्वात् पटादेरपि घटपदवाच्यत्वप्रसङ्गः।एवं 'गङ्गापदजन्यबोधविषयः प्रवाहो भवतु', 'तीरपदजन्यबोधविषयः तीरं भवतु' इत्याकारकताया अपीश्वरेच्छायाः वक्तव्यतया तत्र गङ्गापदजन्यबोधविषयत्वं प्रकारःतीरं विशेष्यमिति गङ्गापदजन्यबोधविषयत्वप्रकारकेश्वरेच्छायाः

विशेष्यतासम्बन्धेन तीरेऽपि सत्त्वात् तीरस्यापि गङ्गापदवाच्यत्वात् शक्त्यैव गङ्गापदात् तीरस्य बोधसम्भवेन तीरे गङ्गापदस्य लक्षणा अनावश्यिकीति लक्षणायाः भङ्गश्च प्रसज्येतेति शङ्कायाः आशयः ।

**घटपदबोद्धव्यत्वप्रकारकतदिच्छाया** इति। घटपदजन्यबोधविषयत्व-प्रकारकेश्वरेच्छाया इत्यर्थः। **यतस्तत्पदवाच्यत्वमित्यादि**। विशेष्यतासम्ब-न्धेन तत्पदजन्यबोधविषयत्वप्रकारकेश्वरेच्छावत्त्वं न तत्पदवाच्यत्वम्, येन पूर्वोक्तदोषौ स्याताम्। अपि तु तत्पदजन्यबोधविषयत्वनिष्ठप्रका-रतानिरूपिता या ईश्वरेच्छानिरूपिता विशेष्यता तद्वत्त्वम् तत्पदजन्य-बोधविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वं वा तत्पदवाच्यत्वम् । ईश्वरेच्छाया एकत्वेन तस्यां सर्वस्य विशेष्यत्वे प्रकारत्वेऽपि च ईश्वरेच्छीया तत्तत्पदार्थनिष्ठा विशेष्यता प्रकारभेदेन भिन्नभिन्ना भवति । एवं च 'घटपदजन्यबोधविषयो घटो भवतु,' 'पटपदजन्यबोधविषयः पटो भवतु' इत्यद्याकारकेश्वरेच्छानिरूपिता घटनिष्ठा विशेष्यतैव घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपिता, न पटनिष्ठा विशेष्यता, पटांशे घटपदजन्यबोधविषयत्वस्येश्वरेच्छाया अनवगाहनात् । अतः घटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्धेन ईश्वरेच्छायाः घटे एव सत्त्वात् घटस्यैव घटपद-वाच्यत्वं न पटादेः । एवं लक्षणास्थले 'गङ्गापदजन्यो बोधो भवतु' 'बोधविषयः तीरं भवतु' इत्याकारकत्वमेव ईश्वरेच्छायामङ्गीक्रियते । गङ्गापदजन्यत्वनिष्ठप्रकारतानिरूपित-बोधनिष्ठप्रकारतानिरूपित-वि-षयत्व-निष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्धेन ईश्वरेच्छावत्त्वमेव गङ्गापदवाच्यत्वम्। पूर्वप्रदर्शितविशकलितभानात्मिकायामीश्वरेच्छायां बोधनिष्ठप्रकारतायां गङ्गापदजन्यत्वनिष्ठप्रकारतानिरूपितत्वंनास्तीति उक्तसम्बन्धेनेश्वरेच्छावत्त्वस्य तीरेऽभावात् गङ्गापदवाच्यत्वं तीरस्य नास्तीति तीरे गङ्गापदलक्षणायाः स्वीकार्यतया न लक्षणोच्छेदापत्ति-श्चेति भावः । **तादृशस्य घटपदवाच्यत्वस्येति** । घटपदजन्यबोधविषय-

त्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनेश्वरेच्छावत्त्वरूपस्य घटपदवाच्यत्वस्येत्यर्थः । **नातिप्रसङ्गः**- न पटस्य घटपदवाच्यत्वप्रसङ्गः ।

ननु शक्त्या यत्र पदार्थबोधो भवति तत्रैवेश्वरेच्छाया आवश्यकता। लक्षणया यत्र बोधः तत्र नेश्वरेच्छाया आवश्यकत्वम् । शक्यसम्बन्धमात्रस्यैवापेक्षितत्वात् । तथा च 'गङ्गापदजन्यो बोधो भवतु, बोधविषयस्तीरं भवतु', इत्यद्याकारकेच्छाकल्पनं मुधा। तीरस्य गङ्गापदवाच्यत्वं तु प्रागुक्तप्रकारेणैव वार्यते । वाच्यार्थप्रवाहसम्बन्धमात्रेण तीरस्य गङ्गापदलक्ष्यत्वोपपत्तेरित्यत आह- **सङ्क्षेप** इति । कार्यसामान्यं प्रति ईश्वरेच्छायाः कारणत्वात् गङ्गापदात् तीरविषयकबोधं प्रत्यपि ईश्वरेच्छा कारणमिति वक्तव्यम्। तत्र किमाकारा ईश्वरेच्छा कारणमिति जिज्ञासायां तीरादौ गङ्गापदवाच्यत्वव्यवहाराभावात् उक्तविशकलितभानवती ईश्वरेच्छैव कारणमित्यवश्यवक्तव्यत्वात् इति भावः ।

## दीपिका

### विशिष्टशक्तिस्थापनम्

ननु गवादिपदानां जातावेव शक्तिः, विशेषणतया जातेः प्रथममुपस्थितत्वात्। व्यक्तिलाभस्तु आक्षेपादिति केचित् । तन्न - 'गामानय' इत्यादौ वृद्धव्यवहारेण सर्वत्रानयनादेः व्यक्तावेव सम्भवेन, जातिविशिष्टव्यक्तावेव शक्तिकल्पनात् ।

## प्रकाशिका

विशिष्टे शक्तिं व्यवस्थापयितुं मीमांसकमतं उपन्यस्य दूषयति- **गवादी**ति । विशेषणीभूतजातिग्रहमन्तरा विशिष्टग्रहासम्भवेन विशिष्टे शक्तिकल्पनं न सम्भवति । अतः जातिग्रहस्य प्रथममपेक्षितत्वेन जातावेव शक्तिकल्पनं उचितम् लाघवात् इत्याह - **विशेषणतये**ति । **प्रथममुपस्थितत्वादि**ति। विशिष्टग्रहात् पूर्वमवगतत्वादित्यर्थः। कथं तर्हि व्यक्तिलाभ इत्यत आह - **व्यक्ती**ति। **आक्षेपादि**ति । अर्थापत्तिप्रमाणा-

दित्यर्थः । **व्यक्तावेव सम्भवेने**ति । अनुपपत्तिप्रतिसन्धानशून्यतादशायामपि व्यक्तिभानस्य अनुभवसिद्धत्वेन चेत्यपि बोध्यम् । **विशिष्टव्यक्तावेवे**ति । एवकारेण केवलजातिकल्पनव्यवच्छेदः ।

अत्रेदं बोध्यम्-जाति-तद्वैशिष्ट्य-तदाश्रयेषु त्रिषु शक्तिः कल्पनीया । पदार्थद्वयसम्बन्धस्यैव पदद्वयसमभिव्याहारलभ्यत्वेनान्यस्याशक्यस्य शाब्दबोधे भानासम्भवादिति ।

**नव्यास्तु - लक्ष्यतावच्छेदकत्वग्रहमात्रेण लक्ष्यतावच्छेदकस्य यथा शाब्दबोधे भानं तथा शक्यतावच्छेदकत्वग्रहमात्रेण शक्यतावच्छेदकस्यापि शाब्दबोधे भानं सम्भवतीति शक्यतावच्छेदके च शक्तिः न कल्पनीयेति वदन्ति ।**

## बालप्रिया

**विशिष्टे शक्तिं व्यवस्थापयितुमिति** ।गवादिपदानां गोत्वादिजातिविशिष्टव्यक्तौ शक्तिं निर्धारयितुमित्यर्थः । **विशिष्टग्रहासम्भवेने**ति । विशिष्टविषयकबुद्धौ विशेषणविषयकज्ञानस्य कारणत्वेन गोत्वविशिष्टव्यक्तिज्ञानात् पूर्वं गोत्वरूपविशेषणज्ञानं आवश्यकम् । तथा च प्रथमोपस्थितत्वात् लाघवाच्च जातावेव शक्तिकल्पनमुचितम्, न तु तद्विशिष्टव्यक्ताविति भावः । **जातावेवे**ति । एवकारेण व्यक्तिषु शक्तिव्यवच्छेदः । **लाघवादि**ति । व्यक्तीनामानन्त्यात् जातेश्चैकत्वादिति भावः । ननु जातौ शक्तिस्वीकारे गवादिपदात् गोत्वादिजातेरेव बोधः स्यात् न तु व्यक्तेः । गोपदशक्यत्वात् । गोपदाशक्यस्यापि गोपदात् बोधाङ्गीकारे गोपदात् घटादेरपि बोधः स्यादित्यशयेन शङ्कते - **कथं तर्ही**ति । **अर्थापत्तिप्रमाणादित्यर्थ** इति । जातिविषयकज्ञानस्य व्यक्तिविषयकतानियमात् व्यक्तिभानं विना जातिभानमनुपपन्नमित्यनुपपत्तिप्रतिसन्धानरूपार्थापत्तिप्रमाणजन्यव्यक्त्युपस्थित्या गोपदजन्यशाब्दबोधे व्यक्तेर्भानमिति भावः । इदमुपलक्षणम् । गोपदस्य गोव्यक्तौ शक्त्यभावेऽपि

लक्षणा अङ्गीक्रियते । अतो लक्षणया शाब्दबोधे व्यक्तिभानमित्यपि द्रष्टव्यम् । एतेन गोव्यक्तिवाचकपदाभावेऽपि अर्थापत्तिप्रमाणोपस्थितगोव्यक्तेः शाब्दबोधे भानाङ्गीकारे पदादनुपस्थितस्य प्रत्यक्षादिनोपस्थितस्यापि घटादेः शाब्दबोधे भानापत्तिरित्यपास्तम् । **अनुपपत्तिप्रतिसन्धानेति** । व्यक्तिभानं विना जातिभानमनुपपन्नमित्याकारकानुपपत्तिप्रतिसन्धानशून्यकालेऽपि व्यक्तिभानस्यानुभवसिद्धतया नार्थापत्तिप्रमाणात् व्यक्तिभानम् । अन्वयानुपपत्तिप्रतिसन्धानशून्यकालेऽपि व्यक्तिभानस्यानुभवसिद्धतया न लक्षणया व्यक्तिभानमित्यर्थः । **केवलजातिकल्पनव्यच्छेद** इति । केवलजातौ शक्तिकल्पनस्य व्यवच्छेद इत्यर्थः ।

ननु जातिविशिष्टव्यक्तौ शक्तिकल्पने जातौ, जातिव्यक्त्योः यः समवायरूपः सम्बन्धः तत्र च शक्त्यभावात् कथं गोपदजन्यबोधे गोत्वजातेः गोत्वसमवायस्य च भानोपपत्तिः । शक्यतावच्छेदकत्वात् कथञ्चित् गोत्वभानोपपत्तावपि शक्यतानवच्छेदकस्य समवायस्य कथं भानम् । न चाकाङ्क्षया भानमिति वाच्यम् । द्वाभ्यां पदाभ्यां उपस्थितयोरर्थयोः यः सम्बन्धः तस्य द्वाभ्यां शक्तिभ्यां उपस्थितयोरर्थयोर्यः सम्बन्धः तस्य वा समभिव्याहाररूपाकाङ्क्षाभास्यत्वात् पदार्थतदवच्छेदकयोः सम्बन्धस्याकाङ्क्षाभास्यत्वानुपपत्तेः इत्याशङ्क्याह - **अत्रेदं बोध्यमित्यादिना** । तथा च घटत्व-समवाय-घटेषु त्रिषु घटपदस्यैका शक्तिः, तथा च शक्यत्वात् त्रयाणामपि घटपदजन्यबोधे भानं सम्भवतीति भावः । **पदार्थद्वयसम्बन्धस्यैवेति** । पदद्वयोपस्थप्यार्थद्वयसम्बन्धो वा भिन्नाभ्यां वृत्तिभ्यामेकपदोपस्थाप्यार्थद्वयसम्बन्धो वा पदार्थद्वयसम्बन्ध इत्यनेन विवक्षितः । एवकारेण शक्य-शक्यतावच्छेदकयोः सम्बन्धो व्यवच्छिद्यते । **पदद्वयसमभिव्याहारलभ्यत्वेनेति** । आकाङ्क्षाभास्यत्वेनेत्यर्थः । **अन्यस्याशक्यस्येति** । अकाङ्क्षया अलभ्यस्य संसर्गस्य शक्यत्वरहितस्य शक्यतावच्छेदकस्य घटत्वादिजातेश्चेत्यर्थः ।

**नव्यास्त्विति** । यथा गङ्गायां घोष इत्यादौ तीरे गङ्गापदस्य लक्षणास्वीकारेऽपि तीरत्वे लक्षणाविरहेऽपि तीरत्वस्य लक्ष्यतावच्छे-

दकत्वात् तीरत्वं लक्ष्यतावच्छेदकमित्याकारकलक्ष्यतावच्छेदकत्वप्रकारकज्ञानमात्रेण अलक्ष्यस्यापि तीरत्वस्य शाब्दबोधे भानम्, तथा घटत्वे शक्तिविरहेऽपि घटत्वं शक्यतावच्छेदकमित्याकारकशक्यतावच्छेदकत्वप्रकारकज्ञानमात्रेण घटपदात् घटत्वस्य भानं सम्भवतीति शक्यतावच्छेदके घटादौ शक्तिः न कल्पनीयेति भावः ।

अत्र केचित् - शक्यतावच्छेदके शक्त्यस्वीकारे पृथिवीपदात् कदाचित् अष्टद्रव्यातिरिक्तद्रव्यत्वेन कदाचिद्गन्धवत्त्वेन कदाचित्पृथिवीत्वेन च शाब्दबोधापत्तिः । पृथिवी पृथिवीपदशक्या इतिवत् अष्टद्रव्यातिरिक्तद्रव्यं गन्धवान् वा पृथिवीपदशक्यमित्याकारस्य शक्तिग्रहस्य सम्भवात् । तीरत्वावच्छिन्ने गङ्गापदशक्यसम्बन्धरूपलक्षणाज्ञानात् तीरत्वेन तीरबोधः,गङ्गातीरत्वावच्छिन्ने गङ्गापदलक्षणाज्ञानात् गङ्गातीरत्वेन तीरबोध इतिवत् । तथा च लक्षणया यत्किञ्चिदेकधर्मावच्छिन्नविषयक एव शाब्दबोध इति यथा न नियमः तथा शक्यार्थबोधेऽपि नियमो न स्यात् । शक्यतावच्छेदके शक्तिस्वीकारे तु पृथिवीपदात् पृथिवीत्वेनैव शाब्दबोध इति नियम उपपद्यते । अतः शक्यतावच्छेदकेऽपि शक्तिः स्वीकरणीयेत्याहुः ।

तच्चिन्त्यम् । यद्धर्मप्रकारकशाब्दबोध इष्यते तद्धर्मधर्मिकशक्यतावच्छेदकत्वप्रकारकशक्तिज्ञानमेव तादृशशाब्दबोधहेतुः । शक्यतावच्छेदकश्च सर्वत्र शक्यत्वान्यूनानतिप्रसक्तः लघुरेव धर्मः, सम्भवति लघुधर्मस्यावच्छेदकत्वे गुरुधर्मस्य स्वरूपसम्बन्धरूपावच्छेदकत्वानङ्गीकारात् । तथा च पृथिवीत्वापेक्षया अष्टद्रव्यातिरिक्तद्रव्यत्वादेर्गुरुत्वात् न शक्यतावच्छेदकत्वम् । अतस्तत्र शक्यतावच्छेदकत्वज्ञानं प्रमात्मकं न सम्भवतीति न तस्य प्रमात्मकशाब्दबोधहेतुत्वम् । लक्षणास्थले तु 'तीरं प्रवाहसम्बन्धवत्' इत्याकारकस्येव 'गङ्गातीरं प्रवाहसम्बन्धवत्' इत्याकारकस्यापि लक्षणाज्ञानस्यानुभवसिद्धतया गुरावपि स्वरूपसम्बन्धरूपलक्ष्यतावच्छेदकत्वज्ञानं शाब्दबोधहेतुरुरीयते।

तथा च शक्तिस्थले पृथिवीत्वेनैव शक्त्या पृथिवीपदात् पृथिवीबोधः, न तु अष्टद्रव्यातिरिक्तद्रव्यत्वादिनेति नियमः, लक्षणास्थले कदाचित् तीरत्वेन कदाचित् गङ्गातीरत्वेन बोध इत्यनियमश्चोपपद्यत इति लक्ष्यतावच्छेदके यथा न लक्षणा तथा शक्यतावच्छेदकेऽपि न शक्तिरिति नवीनानामाशयः। तदेतत्सर्वं **लक्ष्यतावच्छेदकत्वग्रहमात्रेण शक्यतावच्छेदकत्वग्रहमात्रेण** इति पदाभ्यां सूचितमिति ध्येयम् ।

## दीपिका

### शक्तिग्रहोपायप्रतिपादनम्

शक्तिग्रहश्च वृद्धव्यवहारेण । व्युत्पित्सुर्बालः 'गामानय' इति उत्तमवृद्धवाक्यश्रवणानन्तरं मध्यमवृद्धस्य प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वा मध्यमवृद्धप्रवृत्तिजनकज्ञानस्य अन्वयव्यतिरेकाभ्यां वाक्यजन्यत्वं निश्चित्य 'अश्वमानय, गां बधान' इति वाक्यान्तरे आवापोद्वापाभ्यां गोपदस्य गोत्वविशिष्टे शक्तिः, अश्वपदस्य अश्वत्वविशिष्टे शक्तिरिति व्युत्पद्यते ।

## प्रकाशिका

**शक्तिग्रहश्च वृद्धव्यवहारेणे**ति । शक्तिग्रहस्तु वृद्धव्यवहारादिना सम्भवतीत्यर्थः । आदिना व्याकरणादिपरिग्रहः । अत एव -

"शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च ।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः ॥

इत्यभियुक्तोक्तिः सङ्गच्छते । व्याकरणात् प्रकृतिप्रत्ययादीनां शक्तिग्रहः । उपमानात् शक्तिग्रहस्तु अधस्ताद्दर्शितः ।

'अप्येकदन्तहेरम्बलम्बोदरगजाननाः' इति कोशादेकदन्तादिशब्दाः गणेशत्वविशिष्टे शक्ता इत्यर्थकात् गणेशत्वविशिष्टे शक्तिग्रहः। तत्रैकदन्तादिशब्दानामेव पदार्थतया तेषां विभिन्नत्वेन द्वन्द्वोपपत्तिः । 'कोकिलः पिकशब्दवाच्यः' इत्याप्तवाक्यात् पिकपदस्य कोकिले शक्तिग्रहः ।

व्यवहारतः शक्तिग्रहं उपपादयति - **व्युत्पित्सुरिति**। शक्ति-ग्रहेच्छावानित्यर्थः। **उत्तमवृद्धेति**। प्रयोजकवृद्धेत्यर्थः। **मध्यम-वृद्धस्येति**। प्रयोज्यवृद्धस्येत्यर्थः। गवानयनं दृष्ट्वा प्रवृत्तिमुपलभ्य चेत्यन्वयः। **उपलभ्येत्यस्यानुमायेत्यर्थः**। 'इयं क्रिया प्रयत्नपूर्विका विलक्षणक्रियात्वात् स्वीयक्रियावत्' इत्यनुमानप्रयोगो बोध्यः। **प्रवृत्ति-जनकज्ञानस्य** - गवानयनगोचरप्रयत्नजनकगवानयनज्ञानस्य। वाक्यस्य विशिष्टेऽर्थे शक्तिर्न कल्पनीया, तादृशार्थस्य समभिव्याहारलभ्यत्वात्। 'अनन्यलभ्यो हि शब्दार्थः' इति न्यायादित्यभिसन्धिमाह - **अश्वमानये**त्यादि। **आवापोद्वापाभ्यामिति**। **आवापः** - सङ्ग्रहः। **उद्वापः** - त्यागः। **व्युत्पद्यत** -इति। व्युत्पत्त्याश्रयो भवतीत्यर्थः।

वाक्यशेषात् यथा - 'यवमयश्चरुर्भवति' इत्यत्र यवशब्दः आर्य - व्यवहारात् दीर्घशूकविशिष्टस्य वाचकः, म्लेच्छव्यवहारात् प्रियङ्गो-र्वाचको वेति सन्देहे -

> 'वसन्ते सर्वसस्यानां जायते पत्रशातनम्।
> मोदमानाश्च तिष्ठन्ति यवाः कणिशशालिनः॥'

इति वाक्यशेषात् दीर्घशूकविशिष्टे शक्तिनिर्णयः। प्रियङ्गौ तु शक्ति-भ्रमात् प्रयोगः।

विवरणात् यथा-'पचति पाकं करोति' इत्यत्र यत्नार्थककरोतिना सर्वाख्यातव्याख्यानात् आख्यातस्य यत्नत्वविशिष्टे शक्तिग्रहः। प्रसिद्ध-पदसान्निध्यात् शक्तिग्रहस्तु 'विकसितपद्मे मधुकरः' इत्याद्यग्रिमग्रन्थेन स्फुटीभविष्यति इत्यलं पल्लवितेन।

## बालप्रिया

**वृद्धव्यवहारेणेति**। वृद्धयोः ज्ञानवतोः व्यवहारः प्रवृत्तिः शब्द-प्रयोगश्च वृद्धव्यवहारः। प्रकृतिप्रत्ययादीनामिति। 'भू सत्तायाम्' इत्या-दिव्याकरणात् भूप्रभृतीनां प्रकृतीनां सत्तादिरूपार्थे शक्तिग्रहः। 'लः

**कर्मणि च भावे चाकर्मकेभ्यः'** इत्यादिव्याकरणात् प्रत्ययस्यार्थविशेषे शक्तिग्रहः । **अधस्ताद्दर्शित** इति । पूर्वमुपमानपरिच्छेदे दर्शितः । ननु **'अप्येकदन्तहेरम्ब'** इत्यादिकोशे एकदन्तहेरम्बादिशब्दानां पर्यायत्वेन एकार्थवाचकतया कथं द्वन्द्वसमासः । पदार्थभेद एव द्वन्द्वसमासाङ्गीकारादित्यत्राह - **तत्रैकदन्तादी**ति । एते शब्दाः एतादृशार्थबोधका इति ज्ञापनार्थं हि कोशः । तत्रैकदन्तादयः शब्दाः तत्तदानुपूर्वीकशब्दार्थका एवेति भावः ।

**दीपिकायाम् व्युत्पित्सुर्बाल इत्यादि** । कश्चित् बालकः गवादिपदानां कस्मिन्नर्थे शक्तिरिति जिज्ञासते । स कदाचित् केनचित् प्रेरकेण आचार्यादिना शिष्यं प्रति उक्तं 'गामानय'इति वाक्यं शृण्वतः शिष्यस्य गवानयनं पश्यति । ततः गवानयनरूपक्रियां प्रति कारणभूतं प्रयत्नमनुमिनोति । ततः किंचित्क्रियाविषयकप्रयत्नं प्रति तत्क्रियाविषयकज्ञानस्य कारणत्वात् तादृशज्ञानं प्रति प्रयोजकवृद्धप्रयुक्तं वाक्यमेव कारणमित्यन्वयव्यतिरेकाभ्यां निश्चिनोति । ततश्च प्रयोज्यवृद्धस्य गोकर्मकानयनविषयकं ज्ञानं'गामानय'इति वाक्यजन्यमिति निश्चिनोति । तत्र गोपदस्य गोत्वविशिष्टे शक्तिं विना गोपदार्थस्य कर्मत्वेऽन्वयासम्भवात् गोपदस्य गोत्वविशिष्टे शक्तिरित्यपि निश्चिनोति इत्यनया रीत्या व्यवहारस्य शक्तिग्राहकत्वमिति भावः । **प्रवृत्तिशब्दः** प्रयत्नपरः ।

ननु प्रवृत्तिजनकस्य गवानयनविषयकज्ञानस्य वाक्यजन्यत्वात् वाक्यस्यैव गोकर्मकानयने शक्तिः कल्प्यतामित्यत्राह - **प्रकाशिकायाम् वाक्यस्येति** । **विशिष्टेऽर्थे** इति । गोकर्मकत्वविशिष्टानयनरूपे वाक्यार्थे इत्यर्थः । तथा च पदशक्त्या उपस्थितानामर्थानां अन्वयरूपस्य वाक्यार्थस्य समभिव्याहाररूपाकाङ्क्षयैव भानोपपत्त्या वाक्यार्थे न शक्तिरिति भावः । अपि च गोपदस्यानयनान्वितगवि शक्तिस्वीकारे 'गां बधान' इत्यत्रापि तादृशगोबोधोपपत्तिः । एवमानयपदस्य गोकर्म-

**कानयने** शक्तिस्वीकारे **'अश्वमानय'** इत्यत्रापि तद्बोधापत्तिः । अतः गोपदस्य गोत्वविशिष्टे आनयपदस्य आनयनत्वविशिष्टे च शक्तिर्निश्चीयते । क्रियाकारकयोरन्वितत्वं तु समभिव्याहारलभ्यमित्यावापोद्वापाभ्यां सुनिश्चयम् । एतदभिप्रायेणैव आवापोद्वापोपन्यास इति भावः । **व्युत्पत्त्याश्रयो भवतीति** । शक्तिनिश्चयवान् भवतीत्यर्थः ।

**विवरणाद्यथेति** । तत्समानार्थकपदान्तरेण तदर्थकथनं विवरणम् । **'शक्तिग्रहं व्याकरणोपमान'** इत्यादिश्लोकानुक्तानां अङ्गुलिनिर्देशपूर्वकशब्दप्रयोगादीनामपि शक्तिग्राहकत्वं मनसिकृत्योक्तम् - **अन्नं पल्लवितेनेति** ।

## दीपिका

### शब्दानां सिद्धपरत्वमपीति निरूपणम्

ननु सर्वत्र कार्यपरत्वात् व्यवहारस्य कार्यपरवाक्य एव व्युत्पत्तिः न सिद्धपर इति चेत् - न । 'काश्यां त्रिभुवनतिलको भूपतिरास्ते' इत्यादौ सिद्धेऽपि व्यवहारात् 'विकसितपद्मे मधुकरः तिष्ठति' इत्यादौ प्रसिद्धपदसमभिव्याहारात् सिद्धेऽपि मधुकरादिव्युत्पत्तिदर्शनात् च ।

## प्रकाशिका

**व्यवहारस्य** । कार्यपरत्वादिति योजना । कार्यपरत्वं च कृतिसाध्यानयनादिरूपक्रियातात्पर्यकत्वम् । **व्युत्पत्तिः** - शक्तिग्रहः । व्यवच्छेद्यं स्फुटयति - **न सिद्धेति** । **सिद्धेऽपि व्यवहारादिति** । तथा च सिद्धेऽपि शक्तिग्रहस्त्वावश्यकः । अन्यथा तत्रानुभवसिद्धस्य शाब्दबोधस्य अपलापापत्तेरिति भावः ।

## बालप्रिया

**सिद्धेऽपि शक्तिग्रह** इत्यत्र सिद्धशब्दः क्रियाव्यतिरिक्तपरः ।

## दीपिका

### लक्षणानिरूपणम्

लक्षणापि शब्दवृत्तिः । शक्यसम्बन्धो लक्षणा । गङ्गायां घोष इत्यत्र गङ्गापदवाच्यप्रवाहसम्बन्धादेव तीरोपस्थितौ तीरेऽपि

शक्तिर्न कल्प्यते । सैन्धवादौ लवणाश्वयोः परस्परसम्बन्धाभावात् नानाशक्तिकल्पनम् ।

लक्षणा त्रिविधा - जहल्लक्षणा, अजहल्लक्षणा, जहदजहल्लक्षणा चेति । यत्र वाच्यार्थस्यान्वयाभावः तत्र जहल्लक्षणा । यथा मञ्चाः क्रोशन्तीति । यत्र वाच्यार्थस्याप्यन्वयः तत्र अजहदिति । यथा छत्रिणो गच्छन्तीति । यत्र वाच्यैकदेशत्यागेन एकदेशान्वयः तत्र जहदजहदिति । यथा तत्त्वमसीति ।

## प्रकाशिका

**तीरेऽपि शक्तिर्न कल्प्यत** इति । गङ्गापदस्येति शेषः । ननु एवं सैन्धवादिपदानां नानार्थकत्वानुपपत्तिः, एकत्र शक्तिः अन्यत्र लक्षणेत्येव निर्वाहादत आह - **सैन्धवादाविति** । आदिना हर्यादिपरिग्रहः । **सम्बन्धाभावादिति** । संयोगादिरूपसम्बन्धाभावादित्यर्थः । इदमुपलक्षणम्-प्रसिद्धयोरर्थयोः कुत्र लक्षणेत्यत्र विनिगमकाभावेन उभयत्र शक्तिकल्पनस्यावश्यकतेति ।

**मञ्चा** इति । मञ्चपदं मञ्चस्थपुरुषे लाक्षणिकम् । वाच्यार्थस्य क्रोशनकर्तृत्वान्वयाभावादित्यर्थः । **वाच्यार्थस्यापीति** । अपिना लक्ष्यसमुच्चयः । **छत्रिण** इति । एकसार्थवाहित्वेन छत्र्यच्छत्रिषु गमनकर्तृत्वान्वयः । तात्पर्यानुपपत्तिरेव लक्षणाबीजम् । न च छत्रीत्यस्य मतुबर्थकेनिप्रत्ययान्तस्य पदसमूहरूपत्वेन तच्छक्याप्रसिद्ध्या तत्सम्बन्धरूपलक्षणाया अभावेन कथमिदमुदाहरणमिति वाच्यम् । 'प्रतिपाद्यसम्बन्ध एव लक्षणा' इत्येतदभिप्रायेण तदुदाहरणदानात् । अन्यथा 'काकेभ्यो दधि रक्ष्यताम्' इत्याद्युदाहर्तव्यम् । तत्र काकपदस्य काकतदितरसाधारणदध्युपघातकत्वावच्छिन्नपरत्वात् ।

केचित्तु - छत्रपदस्य एकसार्थे लक्षणा । तद्धितार्थः सम्बन्धी । तथा चैकसार्थसम्बन्धिनो गच्छन्तीत्यन्वयबोधः इत्याहुः ।

**तत्त्वमसीति।** तत्पदवाच्ये सर्वज्ञत्वादिविशिष्टे त्वंपदवाच्यस्यान्तः-करणादिविशिष्टस्याभेदान्वयानुपपत्त्या उभयत्र विशेषणांशपरित्यागः। तथा च तत्पदलक्ष्यस्य शुद्धस्य त्वंपदलक्ष्येण सह अभेदान्वयोपपत्ति-रित्यभिप्रायः । इदमुदाहरणं तु जीवब्रह्मणोरैक्यं ब्रुवतां ब्रह्मवादिनां मताभिप्रायेण । नैयायिकमते तस्यासंमतत्वात् । नैयायिकमतरीत्या तु 'सोऽयम् देवदत्त' इत्यादौ तत्तांशस्य इदानीमसम्भवाद्धानम्, इदंत्वां-शस्य सम्भवादहानमिति जहदजहल्लक्षणामाचक्षते ।

परे तु - 'घटो नित्यः' इत्यादौ घटत्वस्येव 'सोऽयम् देवदत्त' इत्यादौ तत्तांशस्योपलक्षणतया भाने न किंचित् बाधकमिति किं जह-दजहल्लक्षणयेति वदन्ति ।

**बालप्रिया**

**संयोगादिरूपसम्बन्धाभावादिति** । तथा च शक्यसम्बन्धरूपलक्ष-णाया असम्भवात् लवणाश्वयोरूभयोरेव सैन्धवपदस्य शक्तिरित्यर्थः।

**मञ्चस्थपुरुष** इति । मञ्चस्थशिशाविति युक्तम्, रोदनादिरूप-क्रोशनकर्तृत्वस्य तत्रैव स्वारसिकत्वादित्याहुः । **वाच्यार्थस्येति** । मञ्च-पदशक्यार्थस्य मञ्चस्य समभिव्याहृतक्रोशतिपदार्थक्रोशनकर्तृत्वान्वय-विरहात् अन्वयानुपपत्तिरूपलक्षणाबीजसत्त्वात् मञ्चपदस्य मञ्चस्थे पुरुषे लक्षणेति भावः । तथा च यादृशपदे वाच्यार्थविशेष्यकेतरपदा-र्थान्वयविषयकशाब्दबोधजनकत्वं न सम्भवति तत्र पदे जहल्लक्षणा, या लक्षणा वाच्यार्थं त्यजति सा जहल्लक्षणा, जहती च सा लक्षणा चेति कर्मधारयात् । अथवा शक्यार्थं जहतः त्यजतः पदस्य लक्षणा जहल्लक्षणेति षष्ठीतत्पुरुषः । यत्र शक्यार्थो न परित्यज्यते शक्यार्था-परित्यागेन लक्ष्यार्थबोधः तत्र अजहल्लक्षणा। 'यथा छत्रिणो गच्छन्ति' इति। अत्र छत्रिपदस्य छत्र्यच्छत्रिघटितसमुदाये लक्षणा । **एकसार्थवाहि-त्वेनेति** । एकसमुदायघटकत्वेनेत्यर्थः । तृतीयायाः वैशिष्ट्यमर्थः। तस्य छत्र्यच्छत्रिष्वन्वयः । छत्रिपदलक्ष्येषु एकसमुदायघटकत्वविशि-ष्टेषु छत्र्यच्छत्रिषु गमनकर्तृत्वान्वय इति भावः।

नन्वन्वयानुपपत्तिर्न लक्षणाया बीजम्। 'यष्टीः प्रवेशय' इत्यादौ यष्टिपदवाच्यानां यष्टीनामपि प्रवेशनकर्मत्वान्वयसम्भवेनान्वयानुपपत्तिरूपबीजाभावात् यष्टिपदस्य यष्टिधरे लक्षणाया अयोगादित्यत आह - **तात्पर्यानुपपत्तिरेव लक्षणाबीजमिति** । यष्टिधरतात्पर्येणैव 'यष्टीः प्रवेशय' इति वाक्यप्रयोगात् लक्षणानङ्गीकारे तादृशतात्पर्यं नोपपद्येतेति लक्षणाबीजं तत्राप्यस्तीति भावः । एवकारेणान्वयानुपपत्तिव्यवच्छेदः ।

ननु तार्किकमते शक्तं पदमिति पदलक्षणात् छत्रिन् इति वाक्यमेव। छत्रपदस्य छत्रे शक्तत्वात् इनिप्रत्ययस्य सम्बन्धे शक्तत्वात् प्रकृतिप्रत्ययरूपपदद्वयसमूहरूपत्वात् छत्रिपदस्य । वाक्ये च शक्त्यभावात् वाक्यशक्यार्थाप्रसिद्ध्या शक्यसम्बन्धरूपा लक्षणा न सम्भवति। तथा च छत्रिन्नित्यस्य अजहल्लक्षणोदाहरणत्वं न सम्भवतीति शङ्कते- **न च छत्रीत्यस्येति** । **मतुबर्थकेति** । सम्बन्धार्थकेत्यर्थः । **प्रतिपाद्यसम्बन्ध** इति । बोध्यार्थसम्बन्ध इत्यर्थः । तथा च छत्रिन्निति वाक्यशक्यार्थाप्रसिद्धावपि तादृशवाक्यजन्यबोधविषयो योऽर्थः छत्रवानिति तत्सम्बन्धस्य समुदाये सत्त्वात् वाक्येऽपि लक्षणोपपद्यत इति भावः । **अन्यथेति** । शक्यसम्बन्ध एव लक्षणेति स्वीकार इत्यर्थः । **काकतदितरेति** । काकतदितरबिडालादिसाधारणं यत् दधिनाशकत्वं तदवच्छिन्ने काकपदस्य लक्षणेत्यर्थः । दधिनाशकत्वेन रूपेण काकस्यापि बोधात् अजहल्लक्षणात्वम् ।

पदलक्षणयैव निर्वाहं वदतां मतमाह - **केचित्त्विति** । **एकसार्थ** इति । एकसमुदायत्व इत्यर्थः । छत्रिणो गच्छन्तीत्यस्य एकसमुदायत्ववन्तो गच्छन्तीत्यर्थः । समुदायत्वं चापेक्षाबुद्धिविशेषविषयत्वम् । अथ वा छत्रपदस्य एकसमुदायोऽर्थः, इनि प्रत्ययस्य घटकत्वरूपसम्बन्धविशिष्टोऽर्थः । **आहुः** इत्यस्वरसोद्भावनम् । तद्बीजं तु छत्रपदस्य छत्रिघटितसमुदायत्वार्थकत्वे छत्रपदजन्यशाब्दबोधे छत्रपदमुख्यार्थस्य

छत्रस्य मुख्यविशेष्यतया भानाभावात् अत्रत्यलक्षणाया अजहत्स्वार्थत्वानुपपत्तिरिति ।

**अत्र तत्पदवाच्य इत्यादि** । तत्त्वमसीत्यत्र तत्पदस्य सर्वज्ञत्वादिविशिष्टचैतन्यं वाच्योऽर्थः । त्वंपदस्य अन्तःकरणविशिष्टचैतन्यं वाच्योऽर्थः । समानविभक्तेरभेदोऽर्थः । स च विशिष्टयोर्बाधितः । अतः वाच्यार्थैकदेशयोः सर्वज्ञत्व-अन्तःकरणरूपविशेषणयोः त्यागेन चैतन्यमात्रं द्वाभ्यां पदाभ्यां लक्ष्यते । **सोऽयं देवदत्त इत्यादाविति** । तत्पदस्य तद्देशतत्कालवृत्तित्वविशिष्टोऽर्थः । इदंपदस्य एतद्देशैतत्कालविशिष्टोऽर्थः । विशिष्टयोरैक्यं च बाधितम् । अतः तत्पदशक्यार्थविशिष्टैकदेशस्य तत्तद्देशतत्तत्कालवृत्तित्वरूपविशेषणस्य त्यागेन विशेष्ये देवदत्ते तत्पदस्य लक्षणा । एवं च यत्र विशेषणस्य शक्यैकदेशस्य त्यागेन विशेष्यस्य शक्यैकदेशस्य बोधस्तत्र जहदजहल्लक्षणेत्युक्तं भवति ।

**परे त्विति** । यथा घटोऽनित्य इत्यत्र घटत्वविशिष्टे अनित्यत्वविशिष्टाभेदो न सम्भवति, घटत्वेऽनित्यत्वाभावादिति घटत्वोपलक्षितेऽनित्यत्वान्वयस्वीकारेणोपपत्तिः, तथा सोऽयं देवदत्त इत्यादावपि तत्तोपलक्षिते इदन्त्वान्वयेनोपपत्त्या जहदजहल्लक्षणा मास्त्विति भावः ।

## दीपिका

### गौणीव्यञ्जनयोर्वृत्त्यन्तरत्वखण्डनम्

गौण्यपि लक्षणैव लक्ष्यमाणगुणसम्बन्धस्वरूपा । यथा अग्निर्माणवक इति । व्यञ्जनापि शक्तिलक्षणान्तर्भूता, शब्दशक्तिमूला, अर्थशक्तिमूला च अनुमानादिना अन्यथासिद्धा ।

## प्रकाशिका

गौण्या वृत्त्यन्तरत्वं निराचष्टे - **गौण्यपीति** । ननु 'गङ्गायां घोष' इत्यत्र तीरे शक्यस्य प्रवाहस्येव 'अग्निर्माणवक' इत्यादौ माणवके शक्यस्य अग्नेः साक्षात्सम्बन्धो न संभवति इति कथं लक्षणया निर्वाह इत्यत आह - **लक्ष्यमाणेति** । लक्ष्यमाणो यो गुणः शुचित्वादिः

तत्सम्बन्धरूपा इत्यर्थः । अयमभिप्रायः - शक्यसम्बन्धो हि लक्षणा । स च क्वचित्साक्षात्सम्बन्धः, क्वचित्परम्परासम्बन्धः । एवं च शक्यस्याग्नेः स्वनिष्ठशुचित्ववत्त्वसम्बन्ध एव लक्षणेति ।

आलङ्कारिकाः पुनरेवमाहुः - 'तीरे घोष' इति शब्दप्रयोगे स्वायत्ते 'गङ्गायां घोषः' इत्यनन्विताभिधानं शैत्यपावनत्वादिप्रतीत्यर्थम् । न च सा प्रतीतिर्लक्षणया उपपद्यते केवलतीरलक्षणयैव अन्वयानुपपत्तिपरिहारे शैत्यपावनत्वादिविशिष्टलक्षणायां मानाभावात् । तस्मात् व्यञ्जनावृत्तिरङ्गीकर्तव्येति । तन्मतं निरस्यति - **व्यञ्जनापीति** । **शक्तिलक्षणान्तर्भूतेति** । अयम्भावः - नानार्थकस्थले 'दूरस्था भूधरा रम्याः' इत्यादौ भूधरशब्देन पर्वतानामिव राज्ञामपि शक्त्यैव प्रतीतिः सम्भवति । 'गङ्गायां घोष' इत्यादौ तु शैत्यपावनत्वादिविशिष्टतीरप्रतीतिरपि लक्षणासाम्राज्यादेव । तत्र लक्षणाकल्पिकायाः तात्पर्यानुपपत्तेरेव सद्भावात् किं व्यञ्जनयेति ।

ननु शब्दशक्तिमूलाया व्यञ्जनाया अन्यथासिद्धत्वेऽपि अर्थशक्तिमूलायास्तस्या नान्यथासिद्धिः । तथा हि -

"गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयात् यत्र गतो भवान् ॥"

इत्यादौ 'हे प्रिय तव गमनोत्तरं मम प्राणनाशो भविष्यति । अतो न गन्तव्यम्' इत्याद्यर्थो व्यज्यते । न ह्यत्र शक्तिलक्षणाभ्यां निर्वाहः । इत्थं च व्यञ्जनाया आवश्यकतेत्यत आह - **अर्थशक्तिमूला चेति** । चस्त्वर्थः । **अनुमानादिनेति** । अनुमानप्रयोगस्तु - 'इयं मदीयगमनोत्तरकालिकप्राणवियोगवती विलक्षणशब्दप्रयोक्तृत्वात्' इत्यादिरूपः । आदिना संभावनादि परिग्रहः । उत्कटैकतरकोटिकसंशयस्सम्भावना । औत्कट्यं च विषयताविशेषः । यदि पुनरानुभविको लोकानां स्वरसवाही 'शब्दात् अमुमर्थं प्रत्येमि' इत्यनुभवः तदा वैयञ्जनिकी

प्रतीतिः गीर्वाणगुरुणाप्यशक्यवारणेति व्यञ्जनासिद्धिः निष्प्रत्यूहैवेति मन्तव्यम् ।

## बालप्रिया

**लक्ष्यमाणो यो गुण इत्यादि** । लक्ष्यमाणः शक्यार्थवृत्तिर्यो गुणः तत्सजातीयगुणवत्त्वं गौणीवृत्तिरित्यर्थः । अग्निर्माणवक इत्यत्र अग्निपदशक्यार्थवह्निवृत्तिर्यो गुणः शुचित्वं तत्सजातीयशुचित्ववान् माणवक इति बोधः । नन्वेतादृश्याः गौण्या वृत्तेः कथं शक्यसम्बन्धरूपलक्षणायामन्तर्भाव इत्यत्राह - **अयमभिप्राय** इति । शक्यार्थप्रतियोगिकः सम्बन्धो लक्षणा । सम्बन्धश्च साक्षात्परम्परासाधारणः । गङ्गायां घोष इत्यादौ गङ्गापदशक्यार्थस्य संयोगरूपः साक्षात्सम्बन्धस्तीरेऽस्ति । अग्निर्माणवक इत्यत्र तु शक्यार्थस्याग्नेः स्ववृत्तिगुणसजातीयगुणवत्त्वरूपः परम्परासम्बन्धः माणवकेऽस्ति । उभयोरपि सम्बन्धयोर्लक्षणात्वमेवेति भावः ।

व्यञ्जनाख्यामतिरिक्तां वृत्तिं वदतामालङ्कारिकाणां मतमनुवदति - **आलङ्कारिकाः पुनरिति** । यदि 'गङ्गायां घोष' इत्यादौ तीरवृत्तिर्घोष इत्याकारकबोधो विवक्षितः, तर्हि तीरवाचकं शब्दमेव प्रयुञ्जीत तीरे घोष इति । घोषानन्वितार्थवाचकं गङ्गापदं न प्रयुञ्जीत। अतोऽत्र शक्यार्थवृत्तिशैत्यपावनत्वादिरूपोऽर्थोऽपि घोषे विवक्षितः । स च 'तीरे घोष' इत्यतो न बुध्येत । गङ्गापदप्रयोगे तु तत्सामर्थ्यात् गङ्गाप्रवाहगतशैत्यपावनत्वादिर्व्यज्यत इति वक्तुं शक्यते । न च गङ्गापदस्यैव शैत्यपावनत्वादिविशिष्टतीरे लक्षणाऽस्तु, तथा च लक्षणयैव शैत्यपावनत्वादिप्रतीत्युपपत्तेः व्यञ्जनया न प्रयोजनमिति वाच्यम् । अन्वयानुपपत्तिर्हि लक्षणाबीजम् । सा च तीरलक्षणयैव परिहर्तुं शक्येति शैत्यपावनत्वादिलक्षणायां प्रमाणाभावात् । तस्मात् व्यञ्जनाख्या अतिरिक्ता वृत्तिः स्वीकरणीया, या शक्तिलक्षणाभ्यामनवगम्यमर्थं प्रत्याययतीत्यालङ्कारिकाणां भावः ।

**अयं भाव इत्यादि** । 'दूरस्थो भूधरो रम्य' इत्यत्र भूधरशब्द-वाच्यस्य पर्वतस्य दूरस्थितस्य रम्यत्वं प्रकृतोऽर्थः । अस्थिरचित्तत्वात् राजानोऽपि दूरस्था एव रम्या इत्यप्रकृतोऽर्थोऽप्यत्र प्रतीयते । सा च प्रतीतिः भूधरशब्दशक्तिमूला । तथा च नानार्थस्थले अर्थप्रकरणादिना निवारितस्याप्रकृतार्थस्य प्रतीतिः यद्बलात् भवति सा शब्दशक्तिमूला-व्यञ्जना इत्यालङ्कारिकाः । तत्र भूधरशब्देन पर्वतानामिव राज्ञामपि शब्दशक्त्यैव प्रतीतिसम्भवात् नास्ति व्यञ्जनायाः आवश्यकतेति नैयायिकाः । एवं गङ्गायां घोष इत्यादौ गङ्गापदस्य शैत्यपावनत्वादि-विशिष्टतीरे लक्षणाङ्गीकारेणैव शैत्यादिप्रतीतिरुपपद्यते । यद्यप्यत्रा-न्वयानुपपत्तिर्नास्ति, तथापि तात्पर्यानुपपत्तिरस्ति, शैत्यपावनत्वादि-बोधतात्पर्येणैव तीरपदं परित्यज्य गङ्गापदप्रयोगात् तस्य तात्पर्यस्य लक्षणां विनाऽनुपपत्तेः । तात्पर्यानुपपत्तिरेव लक्षणाबीजम् नान्वयानु-पपत्तिरिति पूर्वमेवोक्तं वक्ष्यति च **दीपिकायाम्** । तथा च कृतं व्यञ्जनयेति भावः ।

शङ्कते - **नन्विति** । **अन्यथासिद्धत्वेऽपि** - शक्त्या लक्षणया वा गतार्थत्वेऽपि । अर्थसामर्थ्यात् यत्रार्थान्तरं प्रतीयते तत्रार्थशक्तिमूला व्यञ्जना । यथा 'गच्छ गच्छसि चेत्' इत्यत्र भर्ता यत्र गच्छति तत्र देशे नायिकायाः जन्मकथनेन जन्मनश्च मरणानन्तरकालिकत्वेन जन्मरूप-पदार्थसामर्थ्यात् प्रवासोत्तरकालिकमरणरूपोऽर्थोऽभिव्यज्यते । तेन च गमनाभावो व्यज्यते । अस्यार्थस्य पदवृत्त्या शक्त्या लक्षणया वा प्रतीत्यसम्भवात् व्यञ्जनाख्या वृत्तिः स्वीकार्येत्याशयः शङ्कितुः । शिष्टं स्पष्टम् ।

## दीपिका

### लक्षणाबीजनिरूपणम्

तात्पर्यानुपपत्तिः लक्षणाबीजम् । तत्प्रतीतीच्छयोच्चरितत्वं तात्पर्यम् । तात्पर्यज्ञानं च वाक्यार्थज्ञाने हेतुः नानार्थानुरोधात् । प्रकरणादिकं तात्पर्यग्राहकम् ।

## प्रकाशिका

अन्वयानुपपत्तेः लक्षणाबीजत्वे यष्टीः प्रवेशय इत्यादौ लक्षणानुपपत्तिः । तात्पर्यानुपपत्तेः तथात्वे तु तस्यास्तत्रापि सत्त्वेन यष्टिपदस्य यष्टिधरे लक्षणा सम्भवतीत्याशयेनाह - **तात्पर्यानुपपत्तिरिति** । **तत्प्रतीतीति** । तीरादिरूपार्थप्रतीतीत्यर्थः । **नानार्थेति** । 'सैन्धवमानय' इत्यादिनानार्थकस्थले सैन्धवपदस्य अश्वे लवणे च शक्तेः तुल्यतया शाब्दबोधे तात्पर्यग्रहस्य कारणत्वमन्तरा नियतकाले तत्तद्बोधोपपत्तिः नास्तीति तत्र तत्कारणत्वस्यावश्यकत्वे तदनुरोधेन सर्वत्र तदावश्यकतेति भावः । न च मौनिश्लोकादौ शाब्दबोधानुपपत्तिः । तत्र निरुक्ततात्पर्यस्य असत्त्वादिति वाच्यम् , तात्पर्यस्य तत्प्रतीतीच्छारूपत्वपर्यवसानेन तत्र तादृशतात्पर्यस्य सत्त्वेनादोषात् । न च तथापि तत्प्रतीतीच्छारहितशुकाद्युच्चरितवाक्यादपि शाब्दबोधस्यानुभविकतया तत्रानुपपत्तेः परिहारासम्भव इति शङ्क्यम् । तत्रेश्वरेच्छामादायैवानुपपत्तेः परिहारसम्भवात् इत्यलमधिकजल्पनेन । **प्रकरणादिकमिति** । आदिना 'सशङ्खचक्रो हरिः पूज्यः' इत्यादौ हरिशब्दस्य भगवति तात्पर्यनिर्णायकस्य 'सशङ्खचक्र' इति विशेषणादेः परिग्रहः । कथं प्रकरणादेः तात्पर्यग्राहकत्वमिति चेत् - इत्थम् । 'इदं सैन्धवपदं लवणबोधेच्छया उच्चरितम् भोजनप्रकरणे उक्तत्वात्' इति रीत्या गृहाण ।

## बालप्रिया

**नियतकाल** इति । कदाचित् लवणविषयकः कदाचित् अश्वविषयक इत्येवं कालव्यवस्थेत्यर्थः । **तदनुरोधेनेति** । नानार्थकस्थले शाब्दबोधे तात्पर्यज्ञानस्य कारणत्वानुसारेणेत्यर्थः । **तदावश्यकतेति** । तात्पर्यज्ञानस्यावश्यकतेत्यर्थः । ननु तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्यज्ञानस्य शाब्दबोधहेतुत्वस्वीकारे मौनिकर्तृकेण वाक्यबोधकलिप्यादिना यत्र शाब्दबोधस्तत्र तत्प्रतीतीच्छयोच्चरितत्वरूपतात्पर्याभावात् तात्पर्यज्ञानमसम्भवीति शङ्कते - **न च मौनिश्लोकादाविति** । मौनिकर्तृकवाक्य-

बोधकलिप्यादावित्यर्थः। **निरूक्ततात्पर्यस्य** - तत्प्रतीतीच्छया उच्चरितत्वरूपतात्पर्यस्य। तात्पर्यं तत्प्रतीतीच्छामात्रम्। तत्तु मौनिनामप्यस्ति। तज्ज्ञानाच्च लिप्यादितः शाब्दबोध उपपद्यत इत्याशयेन समाधत्ते - **तात्पर्यस्ये**ति। ननु तत्प्रतीतीच्छापि न तात्पर्यम्। शुकादेः तादृशेच्छाविरहेऽपि शुकाद्युच्चारितवाक्यात् शाब्दबोधस्यानुभवसिद्धत्वादित्याशङ्कते - **न च तथापी**ति। **ईश्वरेच्छामि**ति। शुकोच्चारितादस्माद्वाक्यात् एतादृशार्थबोधो भवतु इत्याकारकेश्वरेच्छैव तत्र तात्पर्यम्। तज्ज्ञानाच्च शाब्दबोध इति भावः।

ननु प्रमाजनकशुकवाक्यादौ ईश्वरेच्छायास्तात्पर्यत्वेऽपि भ्रमजनके 'वह्निना सिञ्चति'इत्यादिशुकवाक्ये ईश्वरेच्छायास्तात्पर्यत्वं न सम्भवति, तथा सतीश्वरेच्छायाः विसंवादित्वापत्तेरित्यत्राह - **अलमधिकजल्पनेने**ति। विसंवादिशुकवाक्ये शिक्षकस्येच्छैव तात्पर्यम्, अतो न दोष इति भावः।

एकार्थवाचकशब्दघटितवाक्यात् शाब्दबोधो यत्र, तत्र तात्पर्यज्ञानस्यानुपयोगेऽपि नानार्थकसैन्धवादिपदघटितात् 'सैन्धवमानय'इत्यादिवाक्यात् कदाचिदश्वानयनबोधः कदाचिल्लवणानयनबोधः इति व्यवस्थायाः तात्पर्यज्ञानेनैव निर्वाहात् तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वमावश्यकम्। सैन्धवपदस्य अस्मिन्नर्थे तात्पर्यमिति ज्ञानं च प्रकरणादिना भवतीति **दीपिकायाम्** उक्तम्। तत्रादिपदग्राह्यमाह - **आदिने**ति। प्रकरणं नाम भोजनगमनादिप्रस्तावः। **विशेषणादेः** इत्यादिपदेन आभिमुख्यादिपरिग्रहः। **भोजनप्रकरणे उक्तत्वादि**ति। यन्नैवं तन्नैवं यथा प्रमाणप्रकरणे प्रयुक्तं सैन्धवपदमिति शेषः पूरणीयः। **इति रीत्ये**ति। इत्यनुमानविधयेत्यर्थः।

## दीपिका

### अर्थाध्याहारखण्डनम्

'द्वारम्' इत्यादौ 'पिधेहि'इति शब्दाध्याहारः। ननु अर्थज्ञानार्थत्वात् शब्दस्यार्थमविज्ञाय शब्दाध्याहारासम्भवात् अर्थाध्याहार एव

युक्त इति चेत्-न। पदविशेषजन्यपदार्थोपस्थितेः शाब्दज्ञाने हेतुत्वात्। अन्यथा 'घटः कर्मत्वमानयनं कृतिः' इत्यत्रापि शाब्दज्ञानप्रसङ्गात्।

### प्रकाशिका

प्राभाकरमतं निराकरिष्यमाणः स्वसिद्धान्तं दर्शयति - **द्वारमिति**। **अर्थज्ञानार्थत्वाच्छब्दस्येति** । शब्दज्ञानस्य अर्थज्ञानफलकत्वादित्यर्थः। एतावता प्रथमत एवार्थानुसन्धाने लाघवमिति सूचितम्। किं च 'अर्थं बुद्ध्वा शब्दरचना' इति न्यायेनार्थज्ञानमन्तरा आकाङ्क्षादिमच्छब्दानुसन्धानरूपशब्दाध्याहारस्यैवासम्भवेन प्रथमतः अर्थाध्याहारस्यैवावश्यकतेत्याह-**अर्थमविज्ञायेति**। यथाकथंचिदुपस्थितपदार्थानां शाब्दबोधानुदयेन पदजन्यत्वस्योपस्थितिविशेषणताया आवश्यकतया तादृशोपस्थितिसम्पत्तये शब्दाध्याहार एव अनायत्त्या अनुसर्तव्य इत्याह - **पदविशेषेति**। विशेषपदस्यापि प्रयोजनं दर्शयितुं 'घटः कर्मत्वम्' इत्याद्यनुधावनम्। तत्र कर्मत्वादिपदजन्यकर्मत्वाद्युपस्थितेः सत्त्वेऽपि घटपदोत्तराम्पदजन्यकर्मत्वाद्युपस्थितेरसत्त्वेन न सिद्धान्तिमते शाब्दबोधप्रसङ्ग इति भावः। **पदविशेषजन्येत्यत्र** वृत्त्या पदविशेषजन्येत्यपि बोध्यम्। तेन 'घटमानय' इत्यादौ घटादिपदादाकाशादेरुपस्थितावपि न शाब्दबोध इति दिक्।

### बालप्रिया

**अर्थज्ञानफलकत्वादिति**। शाब्दबोधात्मकार्थज्ञानहेतुत्वादित्यर्थः। **इति न्यायेनेति**। यथा शब्दप्रयोगात्मकशब्दरचनां प्रति अर्थज्ञानं कारणम्, तथा शब्दानुसन्धानरूपशब्दाध्याहारं प्रत्यपि अर्थज्ञानं कारणम्। ततश्च शब्दाध्याहारात् पूर्वभाविना अर्थज्ञानात्मकेन अर्थाध्यहारेणैव शाब्दबोधनिर्वाहे किं शब्दाध्याहारेणेति भावः। **यथाकथञ्चिदिति**। शाब्दबोधं प्रति पदार्थस्मरणं कारणम्। पदार्थस्मरणे पदज्ञानजन्यत्वं विशेषणं देयम्। अन्यथा यत्र पदात् न पदार्थस्मरणम्, अपि तूद्बोधकादिना, तत्रोद्बोधकादिजन्यपदार्थस्मरणस्य शाब्दबोधहेतुत्वापत्तेः।

एवं च द्वारमित्यादौ पदज्ञानजन्यपिधानोपस्थितिसम्पत्तये पदज्ञान-रूपशब्दाध्याहार एवावश्यक इति भावः। यथाकथंचिदित्यस्य पद-ज्ञानातिरिक्तेनोद्बोधकादिरूपोपायेनेत्यर्थः। **तादृशोपस्थितिसम्पत्तय** इति। पदजन्यपदार्थोपस्थितिनिष्पत्तय इत्यर्थः। **अनायत्या** - अगत्या। **घटादिपदादिति**। घटादिपदस्य शब्दरूपस्याकाशे समवायसम्बन्धेन विद्यमानतया समवायस्य घटादिशब्दः आकाशश्चेति द्वौ सम्बन्धिनौ। तत्रैकस्य घटादिपदस्य ज्ञानात् अपरस्य आकाशस्य स्मरणं भवति, एक-सम्बन्धिज्ञानमपरसम्बन्धिस्मारकमिति न्यायात्। तथा च तादृशस्म-रणविषयस्याकाशस्य शाब्दबोधवारणाय वृत्त्या पदज्ञानजन्यपदार्थस्म-रणं शाब्दबोधहेतुरिति वाच्यम्। वृत्तिश्च शक्तिलक्षणान्यतररूपः सम्बन्धः। घटपदादाकाशस्मरणस्य घटपदवृत्तिप्रयोज्यत्वाभावात् न तस्य शाब्दबोधहेतुत्वमिति भावः। वृत्त्या पदज्ञानजन्यत्वं च वृत्ति-ज्ञानसहकृतपदज्ञानजन्यत्वम्।

## दीपिका

### पदविभागः

पङ्कजादिपदेषु योगरूढिः। अवयवशक्तिर्योगः। समुदायशक्ती रूढिः। नियतपद्मत्वादिज्ञानार्थं समुदायशक्तिः। अन्यथा कुमुदेऽपि प्रयोगप्रसङ्गात्।

## प्रकाशिका

यद्यपि, पदम् तावत् चतुर्विधम् - यौगिकम्, रूढम्, योगरूढम्, यौगिकरूढम् चेति। योगोऽवयवशक्तिः। तन्मात्रेणार्थप्रतिपादक-माद्यम्। यथा पाचकादिपदम्। रूढिः समुदायशक्तिः। तन्मात्रेणार्थ-प्रतिपादकं द्वितीयम्। यथा गवादिपदम्। योगरूढिभ्यां परस्परसह-कारेणार्थप्रतिपादकं तृतीयम्। यथा पङ्कजादिपदम्। योगशक्त्या समुदायशक्त्या च परस्परसहायेन विभिन्नार्थप्रतिपादकं चतुर्थम्। यथा उद्भित्पदम् योगेन तरुगुल्मादेः रूढ्या तु यागविशेषस्य च

वाचकम् । तथापि योगरूढं प्रदर्श्य तत्र योगरूढयोः स्वरूपप्रदर्शनेन तद्रीत्या अन्यत्रापि बोद्धुं शक्यमित्यभिप्रायेण पङ्कजादिपदे योगरूढिं प्रदर्शयति - **पङ्कजादी**ति । **योगरूढि**रिति ।

योगसहिता रूढिरित्यर्थः । ननु पङ्कजादिशब्देष्वपि योग एवास्तु तावतैव निर्वाहात् इत्याशङ्क्य पङ्कजशब्दस्य पद्मत्वावच्छिन्ने वृत्तिमन्तरा नियमेन पद्मत्वावच्छिन्नभानमनुभवसिद्धं न निर्वहतीति पद्मत्वावच्छिन्ने रूढिरावश्यिकीत्याह - **नियते**ति । नियतपद्मत्वावच्छिन्न-भानानुभवे विप्रतिपन्नं प्रत्याह - **अन्यथे**ति । नियतपद्मत्वावच्छिन्नभानो-पयोगिसमुदायशक्त्यनङ्गीकार इत्यर्थः । **प्रयोगे**ति । पङ्कजपदप्रयोगे-त्यर्थः ।

## बालप्रिया

**योगोऽवयवशक्ति**रित्यादि । अवयवशक्तिमात्रेणार्थबोधकं पदं यौगिकम् । पाचकपदे पच् अक इत्यवयवद्वयमस्ति । तत्र पच्धातोः पाकोऽर्थः, अकप्रत्ययस्य कर्ता अर्थः । पाचकपदेन पाककर्ता बुध्यते । अवयवार्थमात्रस्यैव बोधात् पाचकपदं यौगिकम् । मात्रपदेन योगरूढ-पदव्यवच्छेदः । समुदायशक्तिमात्रेणार्थबोधकं रूढम्, मात्रपदेनावयव-शक्तिव्यवच्छेदद्वारा योगरूढपदव्यावृत्तिः । यथा गवादिपदे समुदाय-गता शक्तिरेव वर्तते । शक्तपदघटितत्वे सति समासभिन्नत्वे सति शक्तिनिरूपकत्वं यौगिकत्वम् । यथा पाचकपदे पाकशक्तपचधातु - कर्तृशक्त-अकपदघटितत्वे सति पाककर्तृत्वरूपैकधर्मावच्छिन्नशक्तिकत्व-मस्तीति समन्वयः । रूढेऽतिव्याप्तिवारणाय शक्तपदघटितत्वे सतीति । [1]समासेऽतिव्याप्तिवारणाय समासभिन्नत्वे सतीति । यद्यप्येवमपि योग-रूढे पङ्कजादिपदेऽतिव्याप्तिः प्रसजति, तथापि अवयवार्थघटितधर्मा-

---

1. समासेऽतिव्याप्तिवारणायेति । न च समासे शक्त्यनङ्गीकारात् शक्तिनिरूपकत्वा-भावात् कथमतिव्याप्तिप्रसक्तिरिति वाच्यम् । पाचकपदस्य यथा पाककर्तृत्व-रूपैकधर्मावच्छिन्नशक्तत्वं तथा राजपुरुषादिसमासस्यापि राजविशिष्टपुरुषत्वरूपैक-धर्मावच्छिन्नशक्तिकत्वमस्तीत्याशयात् ।

वच्छिन्नशक्तिकत्वं शक्तिनिरूपकत्वमित्यनेन विवक्षितम् । पाककर्तृत्व-रूपतादृशधर्मावच्छिन्नशक्तिकत्वात् पाचकपदे समन्वयः । पङ्कजपदं तु अवयवार्थाघटितपद्मत्वावच्छिन्नशक्तिकमिति न तत्रातिव्याप्तिः । रूढत्वं तु पदाघटितत्वे सति शक्तिनिरूपकत्वम् । गवादिपदे न शक्तं पदं घटकमिति पदाघटितत्वमस्ति, गोत्वावच्छिन्नशक्तत्वाच्च शक्तिनिरूपकत्वमस्तीति समन्वयः । यौगिकेऽतिव्याप्तिवारणाय सत्यन्तम् । अपभ्रंशेऽतिव्याप्तिवारणाय विशेष्यम् । शक्तपदघटितत्वे सति अवयवार्थाघटितधर्मावच्छिन्नशक्तिकत्वं योगरूढत्वम् । पङ्कजपदे 'पङ्क' 'ज' इति शक्तपदद्वयघटितत्वमस्ति, अवयवार्थाघटितपद्मत्वावच्छिन्नशक्तिकत्वं चास्तीति समन्वयः । [1]रूढिनिरूपकतावच्छेदकरूढ्यर्थतावच्छेदकासमानाधिकरणधर्मावच्छिन्नशक्तपदघटितसमुदायत्ववत्त्वं यौगिकरूढत्वम् । उद्भिदादिपदे रूढ्यर्थतावच्छेदकयागत्वासमानाधिकरणोर्ध्वभेदनत्वावच्छिन्नशक्त - भिद् - धातु - घटितं यागनिरूपितरूढिनिरूपकतावच्छेदकं यत् उद् - भिद् - समुदायत्वं तद्वत्त्वसत्त्वात् समन्वयः । यौगिके पाचकादिपदेऽतिव्याप्तिवारणाय समुदायत्वे रूढिनिरूपकतावच्छेदकत्वं विशेषणम् । रूढे गवादिपदेऽतिव्याप्तिवारणाय शक्तपदघटितत्वनिवेशः । योगरूढे पङ्कजादिपदेऽतिव्याप्तिवारणाय रूढ्यर्थतावच्छेदकासमानाधिकरणधर्मावच्छिन्नशक्तत्वं पदविशेषणमिति **नृसिंहशास्त्रिप्रदर्शितः** पन्थाः । **योगरूढिभ्यां परस्परसहकारेणे**ति । योगशक्त्या पङ्कजनिकर्तृ उच्यते, रूढ्या पद्ममुच्यते । ताभ्यां परस्परसहकारेण पङ्काज्जायमानं पद्ममुच्यते ।

## दीपिका

### अन्वितशक्तिखण्डनम्

'इतरान्विते शक्तिः' इति प्राभाकराः । अन्वयस्य वाक्यार्थतया भानसम्भवात् अन्वयांशेऽपि शक्तिर्न कल्पनीयेति गौतमीयाः ।

1. रूढिनिरूपकतावच्छेदकं इति समुदायत्वेऽन्वेति । रूढ्यर्थतावच्छेदकासमानाधिकरणेति धर्मविशेषणम् ।

## प्रकाशिका

यद्यपि 'कार्यान्विते शक्तिः'इति प्राभाकरमतम्, तथापि सिद्धार्थ-परवाक्ये व्युत्पत्तेर्व्यवस्थापितत्वेन तत्साधारण्याय तन्मतं परिष्कृत्य दर्शयति - **इतरान्वित** इति । अन्विते शक्तिः इति तु निष्कर्षः । अयमभिप्रायः - कथंचिदुपस्थितानां पदार्थानां शाब्दबोधवारणाय तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतदुपस्थितित्वेन हेतुतायाः कल्पनीयतया अन्वयांशेऽपि शक्तिरपेक्षिता ।अन्यथा तादृशसामान्यकार्यकारण-भावभङ्गप्रसङ्गात् । न च संसर्गविषयताभिन्नतत्तद्विषयताशालिशाब्द-बोधं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितित्वेन हेतुत्वमास्ताम्, तथा चान्वयांशे शक्त्यनङ्गीकारेऽपि न क्षतिरिति वाच्यम् । तथा सति कार्यतावच्छेदकगौरवापत्तेः । एवं च 'अन्वितो घटो घटपदवाच्यः' इत्याकारकशक्तिज्ञानमेव शाब्दबोधप्रयोजकमिति । केचित्तु-इतरान्विते शक्तिरित्यस्य कार्यान्विते शक्तिरित्यर्थं आहुः ।

सयुक्तिकं नैयायिकमतं दर्शयति - **अन्वयस्येति** । पदार्थसं-सर्गस्य पदसमभिव्याहारबलादेव शाब्दबोधे भानसम्भवात् तादृशसं-सर्गांशेऽपि शक्तिर्न कल्पनीयेति समुदितार्थनिष्कर्षः । अयमाशयः-तत्तद्विषयकशाब्दबुद्धिं प्रति वृत्तिज्ञानाधीनतत्तदुपस्थितित्वेन अनुगत-कार्यकारणभावो न सम्भवति, शक्तिलक्षणोभयसाधारणस्य वृत्तित्वस्य दुर्वचत्वात् । अपि तु तच्छक्तपदज्ञानजन्यतदुपस्थितित्वेनैका कारणता । तल्लाक्षणिकपदज्ञानजन्यतदुपस्थितित्वेन च अपरा कारणता स्वीकर्त-व्या । परस्परतत्तदुपस्थितिजन्यशाब्दबोधे व्यभिचारवारणाय च तत्त-त्कारणाव्यवहितोत्तरत्वं तत्तत्कार्यतावच्छेदककोटौ निवेशनीयम् । एवं च वृत्त्यनुपस्थितस्यापि पदार्थद्वयसंसर्गस्य शाब्दबोधोपगमे व्यभिचार-प्रसक्त्या दर्शितद्विविधकार्यकारणभावस्य निष्प्रत्यूहतेति किमन्वयांशे शक्तिकल्पनेन ।

ननु 'इतरान्विते शक्तिः इति प्राभाकराः' इत्ययुक्तम्। 'कार्यान्विते शक्तिः' इत्येव तत्सिद्धान्तात् इत्याशङ्क्याह - **यद्यपि कार्यान्वित** इति। **तथापीति**। 'काश्यां त्रिभुवनतिलको भूपतिरास्ते' इत्यादौ सिद्धेऽप्यर्थे शब्दप्रयोगात् सिद्धेऽप्यर्थे पदानां शक्तिग्रह इति पूर्वमेव निरूपितत्वात् कृतिसाध्यक्रियान्विते शक्तिरिति न युक्तमित्यालोच्य 'इतरान्विते शक्तिः' इति प्राभाकरैकदेशिनः परिष्कृतवन्त इति तन्मतमनूद्यत इति भावः। सिद्धपरवाक्येऽपि पदार्थस्य इतरान्वितत्वमस्तीति इतरान्विते शक्तिरित्युक्तौ सर्वत्रोपपत्तिरिति। इतरः स्वसमभिव्याहृतपदार्थः तदन्विते शक्तिः समभिव्याहृतपदार्थश्च कार्यरूपो वा सिद्धरूपो वा। इतरांशस्यापि पदान्तरेण लाभात् अन्विते शक्तिरित्येव परिष्करणीयमित्याशयेनाह - **अन्विते शक्तिरिति**। ननु अन्वयांशस्य समभिव्याहाररूपाकाङ्क्षालभ्यत्वात् तदंशे शक्तिकल्पनमयुक्तमित्यतः अन्वयांशे शक्ति वदतां प्राभाकराणामाशयमुद्घाटयति - **अयमभिप्राय** इति। **कथंचिदुपस्थितानामिति**। पदवृत्तिज्ञानातिरिक्तकारणजन्योपस्थितिविषयाणामित्यर्थः। पदार्थानामन्वयः शाब्दबोधे भासते। अन्वयांशे शक्त्यस्वीकारे अन्वयविषयकपदशक्तिज्ञानरूपकारणाभावात् अन्वयविषयकः शाब्दबोधः न स्यादिति भावः। **न चेति**। घटमानय इत्यत्र संसर्गताख्यविषयताभिन्ना या घटनिष्ठविषयता तच्छालिशाब्दबोधं प्रति 'घटः घटपदशक्यः' इत्याकारकवृत्तिज्ञानजन्यघटोपस्थितिः कारणम्। अन्वयनिष्ठा या संसर्गता तच्छालिशाब्दबोधं प्रति तु शक्तिज्ञानजन्या अन्वयोपस्थितिर्नापेक्षिता। अन्वयविषयकशाब्दबोधस्य संसर्गताभिन्नविषयताशालिशाब्दबोधत्वरूपकार्यतावच्छेदकानाक्रान्तत्वादिति भावः। **कार्यतावच्छेदकगौरवापत्तेरिति**। तद्विषयकशाब्दबोधत्वापेक्षया संसर्गताभिन्नतद्विषयताशालिशाब्दबोधत्वस्य गुरुत्वादिति भावः। एतन्मते शक्तिग्रहस्याकारमाह - **एवंचेति**। तथा च घटमानयेत्यत्र घटकर्मत्वयोः कर्मत्वानयनयोः आनयनलोडर्थयोश्चान्वयः

शाब्दबोधे भासते। घटनिष्ठकर्मतानिरूपकमानयनं कार्यमिति शाब्द-बोधात्। तत्र घटपदस्य घटरूपार्थमात्रे शक्तिस्वीकारे घटकर्मत्वयोर्यः आधेयत्वरूपः संसर्गः तद्वाचकपदाभावात् तस्य शाब्दबोधे भानं न स्यात्। अतः घटपदस्य स्वसमभिव्याहृताम्पदार्थकर्मत्वानुयोगिकाधेय-त्वरूपसंसर्गविशिष्टघटे शक्तिः। संसर्गविशिष्टत्वं च घटस्य संसर्ग-प्रतियोगित्वरूपम्। तत्र च कर्मत्वरूपस्येतरपदार्थस्य अम्पदेनैव लाभात् अनन्यलभ्यस्यैव शब्दार्थत्वात् कर्मत्वांशे न घटपदस्य शक्तिः। अपि तु कर्मत्वानुयोगिकत्वोपलक्षितान्वयविशिष्टे घटे शक्तिः। एवं अम्प-दस्यापि घटप्रतियोगिकत्वोपलक्षितान्वयविशिष्टे कर्मत्वे शक्तिः। एवं च घटकर्मत्वयोः संसर्गः घटपद-अम्पदशक्तिभ्यां लभ्य इति अन्व-यांशः पदशक्त्यैव भासते। एवं अम्पदार्थकर्मत्वधात्वर्थानयनयोः संस-र्गोऽपि पदद्वयशक्तिलभ्य इति प्राभाकराशयः।

नैयायिकाशयमाविष्करोति - **पदार्थसंसर्गस्येत्यादिना**। प्राभाक-रमतेऽपि अम् घट इत्यतः शाब्दबोधवारणाय घटपदाव्यवहितोत्तरव-र्त्यम्पदत्वज्ञानं शाब्दबोधकारणमित्यवश्यं वाच्यम्। तथा च तादृश-कारणबलादेव संसर्गांशस्य शाब्दबोधे भानसम्भवे संसर्गे शक्तिकल्पनं नोचितम्। अनन्यलभ्यस्यैव शब्दार्थत्वादिति भावः। **पदसमभिव्याहारेति।** पदसमभिव्याहारो नाम अव्यवहितोत्तरत्वसम्बन्धेन पदविशिष्टपद-त्वम्। ननु तद्विषयकशाब्दबोधं प्रति वृत्तिज्ञानजन्यतद्विषयकोपस्थि-तिः कारणमिति कार्यकारणभावस्य यथाकथंचिदुपस्थितपदार्थानां शा-ब्दबोधे भानवारणाय स्वीकार्यतया वृत्त्याऽनुपस्थितस्य संसर्गस्य शा-ब्दबोधे कथं भानम्। तथा सति उक्तकार्यकारणभावे व्यतिरेकव्यभि-चारप्रसङ्गात् इत्यतो नैयायिकानां भावं स्पष्टीकरोति - **अयमाशय इत्यादिना**। तथा च पूर्वोक्तः सामान्यकार्यकारणभावः न सम्भवति, शक्तिलक्षणोभयसाधारणस्य वृत्तित्वस्य दुर्वचत्वात्। अतस्तदर्थविष-यकशक्तिज्ञानजन्यतदर्थोपस्थितिः तदर्थविषयकशाब्दबोधे कारणम्। तदर्थविषयकलक्षणाज्ञानजन्यतदर्थोपस्थितिः तदर्थविषयकशाब्दबोधे

कारणमिति कार्यकारणभावद्वयं कल्पनीयम् । एवमपि यत्र घटविषयकशक्तिज्ञानजन्यघटोपस्थित्या घटविषयकशाब्दबोधः तत्र घटविषयकलक्षणाज्ञानजन्यघटोपस्थितिरूपकारणाभावात् यत्र लक्षणाज्ञानजन्यघटोपस्थित्या शाब्दबोधः तत्र शक्तिज्ञानजन्यतदुपस्थितिरूपकारणाभावाच्च कारणाभावेऽपि कार्योत्पत्तिरूपः व्यतिरेकव्यभिचारो भवतीति तद्वारणाय कार्यतावच्छेदककोटावव्यवहितोत्तरत्वं निवेश्य तद्विषयकशक्तिज्ञानजन्यतदुपस्थित्यव्यवहितोत्तरशाब्दबोधं प्रति तद्विषयकशक्तिज्ञानजन्यतदुपस्थितिः कारणम्, तद्विषयकलक्षणाज्ञानजन्यतदुपस्थित्यव्यवहितोत्तरशाब्दबोधं प्रति तद्विषयकलक्षणाज्ञानजन्यतदुपस्थितिः कारणमिति कार्यकारणभावो वक्तव्यः। लक्षणाज्ञानाधीनशाब्दबोधस्य शक्तिज्ञानजन्योपस्थित्यव्यवहितोत्तरत्वरूपकार्यतावच्छेदकानाक्रान्ततया तत्र शक्तिज्ञानजन्योपस्थित्यभावेऽपि न व्यतिरेकव्यभिचारः । कारणाभावेऽपि तत्कार्यतावच्छेदकविशिष्टस्योत्पत्तावेव व्यतिरेकव्यभिचारदोषात् । तथा च अन्वयविषयकशाब्दबोधस्य शक्तिलक्षणाज्ञानजन्योपस्थित्युत्तरत्वाभावेन द्विविधकार्यतावच्छेदकानाक्रान्ततया तत्र द्विविधकारणाभावेऽपि न व्यतिरेकव्यभिचारप्रसङ्गः। अतः कार्यकारणभावे व्यभिचारभिया नान्वयांशे शक्ति कल्पनीयेति भावः ।

**वृत्तित्वस्य दुवचत्वादिति** । न च शक्तिलक्षणान्यतरत्वमेव वृत्तित्वं सुवचमिति वाच्यम् । तद्भिन्नभिन्नत्वं ह्यन्यतरत्वम् । तथा च भेदद्वयावच्छिन्नभेदवत्वं तत् । भेदद्वयत्वं च एकभेदविशिष्टापरभेदत्वम् । तथा च भेदयोर्विशेष्यविशेषणभावे विनिगमनाविरहात् शक्तिभेदविशिष्टलक्षणाभेदावच्छिन्नप्रतियोगिकभेदवत्त्वं वा लक्षणाभेदविशिष्टशक्तिभेदावच्छिन्नप्रतियोगिताकभेदवत्त्वं वा अन्यतरत्वमित्यत्र विनिगमनाविरहेण तदुभयावच्छिन्नवृत्तिज्ञानस्य कारणताद्वयं कल्पनीयमिति एककार्यकारणभावो न सम्भवति इत्याशयात् । तथा च अन्वयांशः आकाङ्क्षालभ्य एवेति स्थितम् ।

आकाङ्क्षा योग्यता सन्निधिश्च वाक्यार्थज्ञानहेतुः । पदस्य पदान्तरव्यतिरेकप्रयुक्तान्वयाननुभावकत्वमाकाङ्क्षा। अर्थाबाधो योग्यता । पदानामविलम्बेनोच्चारणं सन्निधिः । आकाङ्क्षादिरहितं वाक्यं न प्रमाणम् । यथा गौरश्वः पुरुषो हस्ती इति वाक्यं न प्रमाणम् । आकाङ्क्षाविरहात् । अग्निना सिञ्चतीति वाक्यं न प्रमाणम् । योग्यताविरहात् । प्रहरे प्रहरेऽसहोच्चरितानि गामानय इत्यादिपदानि न प्रमाणं सान्निध्याभावात् ।

## दीपिका

**आकाङ्क्षेति** । आकाङ्क्षादिज्ञानमित्यर्थः । अन्यथा आकाङ्क्षादिभ्रमात् शाब्दभ्रमो न स्यात् । आकाङ्क्षां लक्षयति - **पदस्येति** । योग्यतालक्षणमाह - **अर्थेति** । सन्निधिलक्षणमाह - **पदानामिति** । अविलम्बेन पदार्थोपस्थितिः सन्निधिः। उच्चारणं तु तदुपयोगितयोक्तम्। **गौरश्व** इति । घटः कर्मत्वमित्यपि अनाकाङ्क्षोदाहरणं द्रष्टव्यम् ।

## प्रकाशिका

आकाङ्क्षादिरहितपदसमुदायात् शाब्दबोधवारणाय आकाङ्क्षादेः शाब्दबोधहेतुत्वं अभिहितं मूलकृता । तच्च नवीनमते न सम्भवतीति तज्ज्ञानस्य हेतुतामाह - **आकाङ्क्षादिज्ञानमिति** । आदिना योग्यतापरिग्रहः । **अन्यथा** - आकाङ्क्षादेः शाब्दबोधहेतुत्वे । **मूले पदस्येत्यादि** । यत्पदस्य यत्पदाभावप्रयुक्तमन्वयबोधाजनकत्वं तत्पदसमभिव्याहृततत्पदत्वं आकाङ्क्षेत्यर्थः । प्रयुक्तत्वं च 'कारणाभावात्कार्याभावः' इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः । अजनकत्वान्तं परिचायकम् । एकपदार्थेऽपरपदार्थवत्त्वं योग्यतेति मते संशयनिश्चयसाधारणतत्तज्ज्ञानत्वावच्छिन्नं शाब्दधीहेतुः । बाधनिश्चयाभावो योग्यतेति नवीनमते तु स्वरूपसत्येव योग्यता तद्धेतुरिति दिक् ।

**बालप्रिया**

**तच्च नवीनमते न सम्भवतीति** । आकाङ्क्षायाः शाब्दबोधहेतुत्वे यत्र आकाङ्क्षा नास्ति, परं तु आकाङ्क्षा अस्तीति भ्रमोऽस्ति तत्र शाब्दबोध इष्यमाणो न स्यात् । आकाङ्क्षाज्ञानस्य हेतुत्वे तु आकाङ्क्षाविरहेऽपि तद्विषयकभ्रमात्मकज्ञानात् शाब्दबोध उपपद्यत इति भावः । एवं योग्यतायाः शाब्दबोधहेतुत्वे योग्यताविरहेऽपि योग्यताभ्रमाच्छाब्दबोधो न स्यात् । अतो योग्यताज्ञानस्य शाब्दबोधहेतुत्वं वक्तव्यमिति भावः । **यत्पदस्येति** । यत्पदस्य घटपदस्य अम्पदाभावप्रयुक्तं घटनिष्ठं कर्मत्वं इत्याकारकशाब्दबोधाजनकत्वमिति घटपदस्य अम्पदसमभिव्याहृतत्वं आकाङ्क्षा । **कारणाभावात् कार्याभाव** इति । अम्पदरूपकारणाभावात् शाब्दबोधरूपकार्याभाव इत्यर्थः । **अजनकत्वान्त परिचायकमिति** । तथा च तत्पदसमभिव्याहृततत्पदत्वमेवाकाङ्क्षा । कीदृशपदसमभिव्याहृतकीदृशपदत्वमिति जिज्ञासायां यत्पदेऽसति यत्पदं न बोधजनकं तत्समभिव्याहृतत्वमिति ज्ञापनाय अजनकान्तमुक्तम् न तु तदपि लक्षणघटकम्, प्रयोजनाभावादिति भावः । परिचायकत्वं च लक्षणाघटकत्वे सति लक्षणघटकपदार्थज्ञापकत्वम् । **एकपदार्थ** इत्यादि । स्वघटकैकपदप्रतिपाद्यार्थविशिष्टापरपदार्थप्रतिपादकत्वं योग्यता । स्वं पयसा सिञ्चतीति वाक्यम् तद्घटकमेकपदं पयसेति पदं तत्प्रतिपाद्योऽर्थः पयः करणकत्वं तद्विशिष्टेऽपरपदार्थः सेकः तत्प्रतिपादकत्वं पयसा सिञ्चतीति वाक्येऽस्तीति तादृशवाक्यस्य योग्यता । एतादृशयोग्यताविषयकं संशयात्मकं निश्चयात्मकं वा ज्ञानं शाब्दबोधहेतुः। एकपदार्थे अपरपदार्थवत्त्वाभावरूपबाधविषयकनिश्चयाभावो योग्यतेति नव्यमते तु बाधनिश्चयाभावरूपयोग्यता प्रतिबन्धकाभावविधया स्वरूपतः सती हेतुः न तु तादृशयोग्यताज्ञानं कारणमिति भावः ।

नन्वेकपदार्थेऽपरपदार्थवत्त्वं योग्यतेति पक्षे यत्र वाक्यार्थोऽपूर्वः तत्र पूर्वं तादृशयोग्यताज्ञानस्यासंभवः । बाधनिश्चयाभावो योग्यतेति

मते तस्य शाब्दबुद्धिं प्रति कारणत्वकल्पनमनावश्यकम् । तद्वत्ताबुद्धिं प्रति तदभाववत्तानिश्चयः प्रतिबन्धक इति सामान्यप्रतिबध्यप्रतिबन्धकभावेनैव निर्वाहात् इत्यत आह - दिगिति ।तत्तद्वाक्यघटकतत्तत्पदार्थस्मरणे सति क्वचिन्निश्चयरूपं क्वचित्संशयरूपं वा योग्यताज्ञानं सम्भवति। भूतले घट इति प्रात्यक्षिकनिश्चयोत्तरं जायमाने शाब्दबोधे तादृशप्रात्यक्षिकनिश्चयात्मकं योग्यताज्ञानं कारणम् । यत्र तु वाक्यार्थोऽपूर्वः 'नद्यास्तीरे पञ्च फलानि सन्ति' इत्यादौ तत्र संशयात्मकं योग्यताज्ञानं कारणम् । अतःप्रथमपक्षे न दोषः । तद्वत्ताज्ञानसामान्ये तदभावनिश्चयत्वेन सामान्यप्रतिबन्धकता न सम्भवति । घटाभाववत् भूतलमिति निश्चयोत्तरमपि 'घटप्रकारकभूतलविशेष्यकचाक्षुषं मे जायताम्' इति इच्छाबलात् घटवद्भूतलमिति चाक्षुषज्ञानोत्पत्त्या व्यभिचारप्रसङ्गात् । अपि तु तद्विषयकचाक्षुषेच्छाविरहविशिष्टतदभावनिश्चयत्वेन विशिष्यैव प्रतिबध्यप्रतिबन्धकभावो वक्तव्यः ।आहार्यानुमितेरनङ्गीकारात् अनुमितिं प्रति तदभावनिश्चयप्रतिबन्धकतायां इच्छाविरहो न निवेश्यत इति तत्प्रकारकानुमितिं प्रति तदभावप्रकारकनिश्चयत्वेन पृथगेव प्रतिबन्धकता । एवमेव शाब्दबोधेऽपि पृथगेव प्रतिबन्धकत्वं कल्पनीयमिति बाधनिश्चयाभावरूपयोग्यतायाः शाब्दबोधकारणत्वमवश्यकल्पनीयमिति द्वितीयपक्षेऽपि न दोष इति भावः ।



**तर्कसङ्ग्रहः**

वाक्यं द्विविधम् - वैदिकं लौकिकं चेति । वैदिकं ईश्वरोक्तत्वात् सर्वमपि प्रमाणम् । लौकिकं तु आप्तवाक्यं प्रमाणम् । अन्यदप्रमाणम् । वाक्यार्थज्ञानं शाब्दज्ञानम् । तत्करणं शब्दः । एवं यथार्थानुभवो निरूपितः ।

**इति तर्कसङ्ग्रहे शब्दपरिच्छेदः**

## दीपिका

वाक्यं विभजते - **वाक्यमिति** । वैदिकस्य विशेषमाह - **वैदिक-मीश्वरोक्तत्वादिति** ।

## वेदपौरुषेयत्वम्

ननु वेदस्य अनादित्वात् कथमीश्वरोक्तत्वमिति चेत् - न । 'वेदः पौरुषेयः वाक्यसमूहत्वात् भारतादिवत्' इत्यनुमानेन पौरुषेयत्वसिद्धेः । न च स्मर्यमाणकर्तृकत्वमुपाधिः, गौतमादिभिः शिष्यपरम्परया वेदेऽपि सकर्तृकत्वस्मरणेन साधनव्यापकत्वात् । 'तस्मात्तेपानात्त्रयो वेदा अजायन्त' इति श्रुतेश्च ।

ननु वर्णाः नित्याः, स एवायं गकार इति प्रत्यभिज्ञाबलात् । तथा च कथं वेदस्य अनित्यत्वम् इति चेत् - न । 'उत्पन्नो गकारः, विनष्टो गकारः' इत्यादिप्रतीत्या वर्णानामनित्यत्वात्, 'सोऽयं गकारः' इति प्रत्यभिज्ञायाः 'सेयं दीपज्वाला' इतिवत् साजात्यावलम्बनत्वात् । वर्णानां नित्यत्वेऽप्यानुपूर्वीविशिष्टवाक्यस्य अनित्यत्वाच्च । तस्मात् ईश्वरोक्ताः वेदाः ।

## प्रकाशिका

मीमांसकः शङ्कते - **नन्विति** । वेदस्य ईश्वरोक्तत्वं अनुमानेन व्यवस्थापयति - **वेद** इति । ननु 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इत्यादि प्रमाणबलेन भारतादौ कर्ता उपलभ्यते । न हि तथा वेदे । तथा च स्मर्यमाणकर्तृकत्वस्य भारतादौ साध्यव्यापकत्वेन पक्षे साधनाव्यपकत्वेन च उपाधित्वात् कथमिदमनुमानं साधकं भवेदित्याशङ्कते - **न चेति** । गौतमादिभिःशिष्यपरम्परया वेदे कर्तृरूपदेशे विवदन्तं प्रत्याह - **तस्मादिति** ।

**स एवाय गकार** इति । अत्र एतत्कालिकगकारे पूर्वकालिकगकाराभेदो भासते । स च वर्णानामनित्यत्वे न सम्भवतीति भावः ।

**अनित्यत्वादिति** । तर्हि प्रत्यभिज्ञाविरोध इत्यत आह - **सोऽयमिति** । उत्पत्तिविनाशप्रत्यययोरन्यार्थकत्वकल्पनापेक्षया तत्प्रत्ययस्य तथात्वकल्पने लाघवमिति हृदयम् । 'अग्निमीले' इत्यादौ आनुपूर्वी - अकारोत्तरगकारोत्तरनत्वादिरूपा । तत्रोत्तरत्वमव्यवहितोत्तरक्षणवृत्तित्वं वाच्यम् । इत्थं च वर्णानां अनित्यत्वानङ्गीकारेऽप्यनित्यक्षणघटिताया आनुपूर्व्या अनित्यत्वात् तद्विशिष्टवाक्यसमुदायत्मकवेदस्य त्वदभिमतमनित्यत्वं न सिध्यतीति वर्णानामनित्यत्वमेवोचितमित्याह-**वर्णानामिति**।

**बालप्रिया**

**मीमांसक** इति । वेदापौरुषेयत्ववादीति शेषः। **व्यवस्थापयतीति** । साधयतीत्यर्थः । **दीपिकायाम् पौरुषेयत्वसिद्धेरिति** । तथा चोक्तानुमानेन वेदानां पुरुषनिर्मितत्वसिद्ध्या अनादित्वमसिद्धम् । अतोऽनादित्वात् कथमीश्वरोक्तत्वमिति शङ्काया नावसर इति भावः। **उपाधित्वादिति** । यत्रयत्र पौरुषेयत्वं भारतादौ तत्र स्मर्यमाणकर्तृकत्वमस्तीति स्मर्यमाणकर्तृकत्वस्य पौरुषेयत्वरूपसाध्यव्यापकत्वम् - यत्र साधनं वाक्यसमूहत्वमस्ति पक्षे वेदे तत्र स्मर्यमाणकर्तृकत्वं नास्तीति तस्य साधनाव्यापकत्वम् । अतः स्मर्यमाणकर्तृकत्वमुपाधिरिति उक्तानुमानं सोपाधिकत्वात् दुष्टमिति कथं पौरुषेयत्वसाधकमित्यर्थः । **गोतमादिभिरिति** । गोतमः स्वशिष्याय वेदाः सकर्तृका इत्युपदिदेश, सोऽपि स्वशिष्याय तथोपदिदेशेत्येवं शिष्यपरम्परया गौतमीयाः वेदानां सकर्तृकत्वं स्मरन्ति। तथा च स्मर्यमाणकर्तृकत्वस्य पक्षवृत्तितया साधनाव्यापकत्वाभावात् नोपाधित्वमिति **दीपिकोक्तं** न सङ्गच्छते । गोतमादयः तथोपदिदिशुरित्यत्र प्रमाणाभावात् इति शङ्काया अर्थः । **तस्मादितीति**। तेपानात् तपः कुर्वत ईश्वरात् त्रयो वेदा अजायन्तेति श्रुत्यर्थः । तथा च अनया श्रुत्यैव वेदानामीश्वरसृष्टत्वरूपं पौरुषेयत्वं प्रमितमिति अनुमानस्य नापेक्षेति भावः ।

**अनित्यत्वे न सम्भवतीति** । यदि वर्णाः उत्पत्तिविनाशवन्तः तर्हि पूर्वकालिकगकारस्य नष्टत्वात् एतत्कालिकगकारे तदभेदाव-

गाहिनी प्रत्यभिज्ञा न सङ्गच्छेतेति भावः । ननु वर्णानामुत्पत्तिविनाशावगाहिप्रतीतिबलात् उत्पत्तिविनाशवत्त्वे सिद्धे पूर्वोत्तरकालिकगकारयोरभेदासम्भवात् 'सोऽयं गकारः' इति प्रत्यभिज्ञा नाभेदमवगाहते । अपि तु तज्जातीयत्वम् । पूर्वकालिकगकारवृत्तिगत्वजातिमान् एतत्कालिकगकार इति प्रतिज्ञाया अर्थः इति **दीपिको**क्तं न युज्यते । 'सोऽयं गकार' इति प्रत्यभिज्ञया गकारयोरभेदे सिद्धे तद्विरोधात् 'उत्पन्नो गकारः, विनष्टो गकार' इति प्रतीतिः न गकारे उत्पत्तिं विनाशं वा अवगाहते, अपि तु वर्णव्यञ्जकवायुविशेषसंयोगादिगतस्य उत्पत्तेर्विनाशस्य च वर्णे आरोपमात्रमित्यपि वक्तुं शक्यत्वात् । अथ वा उत्पन्न इत्यस्य अभिव्यक्त इति विनष्ट इत्यस्य नाभिव्यक्त इति चार्थ इत्यपि वक्तुं शक्यत्वात् । तथा च वर्णनित्यत्वं निर्बाधमित्याशङ्क्याह - **उत्पत्तिविनाशप्रत्यययोरि**ति । उत्पन्नो गकारः विनष्टो गकारः इति प्रतीत्योरित्यर्थः । **अन्यार्थकत्वकल्पने**ति । अभिव्यक्त्याद्यर्थकत्वकल्पनमपेक्ष्येत्यर्थः ।

## दीपिका

### स्मृत्याचारयोः प्रामाण्यम्

मन्वादिस्मृतीनां आचाराणां च वेदमूलकतया प्रामाण्यम् । स्मृतिमूलवाक्यानां इदानीमनध्ययनात् तन्मूलभूता काचित् शाखा उत्सन्नेति कल्प्यते । ननु पठ्यमानवेदवाक्योत्सादनस्य कल्पयितुमशक्यतया विप्रकीर्णवादस्यायुक्तत्वात् नित्यानुमेयो वेदो मूलमिति चेत् - न । तथा सति कदापि वर्णानुपूर्वीज्ञानाभावेन बोधकत्वासम्भवात् ।

## प्रकाशिका

यद्यपि स्मृत्यादीनां आप्तोक्तत्वादेव प्रमाणत्वं सिध्यति तत्कर्तृमन्वादीनामाप्तत्वात्, तथापि तेषामाप्तत्वे विप्रतिपन्नं प्रत्याह - **मन्वादी**ति । **आचाराणामि**ति । आचारप्रतिपादकशिष्टवाक्यानामित्यर्थः ।

एतेन प्रमाणविभागव्याघातशङ्का निरस्ता । वेदार्थं ज्ञात्वैव मन्वादिभिः तदर्थकस्मृत्यादीनि विरचितानि । अतस्तेषां प्रामाण्यमिति मनसि कृत्वाह - **वेदमूलकतयेति** । ननु तर्हि स वेदः कुतो नोपलभ्यत इत्यत आह - **स्मृतिमूलेति** । **तन्मूलेत्यादि** । स्मृत्यादिमूलभूता काचित् शाखा पाठतः परिभ्रष्टेत्यनुमीयत इत्यर्थः । **वाक्योत्सादनस्य** - वाक्योच्छेदस्य । ननु समानानुपूर्वीकवेदपाठस्य संप्रदायसिद्धत्वात् तादृशवेदे कतिपयवाक्योच्छेदस्य कल्पयितुमशक्यत्वेऽपि पठ्यमानवेद एव विशकलिततया विद्यमानवाक्यानां स्मृतिमूलत्वमस्तीत्यतआह- **विप्रकीर्णेति** । **अयुक्तत्वादिति** । स्मृत्यादिसमानार्थकवाक्यानां पठ्यमानवेदेऽनुपलम्भादिति भावः । **नित्यानुमेय** इति । नित्योऽनुमेयरूप इत्यर्थः । **वर्णानुपूर्वीज्ञानाभावेनेति** । तादृशज्ञानस्यापिशाब्दबोधहेतुत्वात् । अन्यथा नदीदीनादिशब्दैः अर्थविशेषबोधानापत्तिरिति भावः ।

## बालप्रिया

ननु आचारस्य वेदमूलकतया प्रमाणत्वाङ्गीकारे कृतिरूपस्याचारस्य विभक्तेषु प्रत्यक्षादिषु चतुर्षु प्रमाणेष्वनन्तर्गततया अतिरिक्तप्रमाणत्वापत्तौ चतुर्धा प्रमाणविभजनमसङ्गतमित्यतो व्याचष्टे - **आचारप्रतिपादकेति** । आचारस्य अनुष्ठानस्य बोधकानि यानि शिष्टानां वाक्यानि तेषामित्यर्थः। **एतेनेति**। आचारपदस्योक्तवाक्यपरतयाव्याख्यानेनेत्यर्थः । **वेदार्थं ज्ञात्वैवेति** । तथा च वेदार्थज्ञानपूर्वकं विरचितत्वं वेदार्थज्ञानजन्यत्वं वा वेदमूलकत्वमित्युक्तं भवति ।

## दीपिका

### शब्दस्यानुमानान्तर्भावखण्डनम्

ननु 'एतानि पदानि स्मारितार्थसंसर्गवन्ति आकाङ्क्षादिमत्पदकदम्बकत्वात् गामानय दण्डेनेति मद्वाक्यवत्' इत्यनुमानादेव संसर्गज्ञानसम्भवात् शब्दो न प्रमाणान्तरमिति चेत् - न । अनुमित्यपेक्षया विलक्षणस्य शाब्दज्ञानस्य 'शब्दात्प्रत्येमि' इत्यनुव्यवसायसाक्षिकस्य सर्वसंमतत्वात् ।

## प्रकाशिका

शब्दस्य पृथक् प्रमाणत्वमनङ्गीकुर्वतां वैशेषिकाणां मतं दूषयितुमुपन्यस्यति - **नन्वेतानीत्यादिना**। **एतानि पदानि** - घटमानय इत्यादिपदानि ।**स्मारितार्थसंसर्गवन्तीति**। स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यर्थः। संसर्गे तात्पर्यविषयत्वं निवेशनीयम्। तेन संसर्गान्तरमादाय नार्थान्तरता। **आकाङ्क्षादी**त्यादिना योग्यतासत्योः परिग्रहः। आकाङ्क्षादिरहिते पदकदम्बके व्यभिचारवारणाय **आकाङ्क्षादी**ति। **सर्वसंमतत्वा**दिति। तथा च कार्यवैलक्षण्यानुरोधेन शब्दः प्रमाणान्तरं इति भावः।

## बालप्रिया

**स्मारितार्थसंसर्गज्ञानपूर्वकाणीत्यर्थ** इति। घटमानयेत्यादिवाक्यघटकघटादिपदैः स्मारिताः तादृशपदजन्यस्मृतिविषयभूताः ये पदार्थाः तेषां यः संसर्गः तद्विषयकज्ञानपूर्वकाणीत्यर्थः। तथा च स्मारितार्थज्ञानपूर्वकत्वं साध्यम्। साध्यघटकं यत् ज्ञानं तत् 'अर्थं बुद्ध्वा शब्दरचना' इति न्यायसिद्धं शब्दरचनाहेतुभूतं वक्तृगतं ज्ञानं, तज्जन्यत्वात्मकं तत्पूर्वकत्वं घटमानयेत्यादिवाक्यघटकपदेषु वर्तते। न चैवमपि वाक्यार्थज्ञानपूर्वकत्वस्य वाक्यार्थज्ञानस्य वा साध्यत्वेऽपि संसर्गरूपस्य वाक्यार्थस्यासाध्यत्वात् वाक्यार्थज्ञानस्य कथमनुमितिरूपत्वम्, तदभावे कथं तज्जनकवाक्यस्यानुमानविधया प्रमाणत्वमिति वाच्यम्। संसर्गविषयकत्वविशिष्टज्ञानस्य साध्यत्वेन विधेयकोटिप्रविष्टस्य संसर्गस्यापि साध्यत्वात्। **संसर्गान्तरमादाये**ति। घटमानयेत्यादौ घटकर्मत्वयोः कर्मत्वानयनयोश्च तात्पर्याविषयकालीकसंसर्गज्ञानपूर्वकत्वसिद्धिप्रयुक्तस्यार्थान्तरस्य वारणाय संसर्गे तात्पर्यविषयत्वं विशेषणमिति भावः। पदार्थे स्मारितत्वविशेषणस्य प्रयोजनमित्थमुक्तम् **मुक्तावलीप्रभायाम्**-"नैयायिकमते घटमित्यादिवाक्यजन्ये आधेयतासम्बन्धेन घटप्रकारककर्मत्वविशेष्यकशाब्दबोधे 'घटमिति वाक्यम् घटपदार्थप्रकारकाधेयत्वसंसर्गकाम्पदार्थविशेष्यकप्रतीतीच्छया उच्चरितम्' इत्या-

कारकं पदार्थत्वेन पदार्थावगाहितात्पर्यज्ञानमेव कारणम्। तथा चाम्पदार्थविशेष्यकाधेयतासंसर्गकघटपदार्थप्रकारकज्ञानस्यापि तात्पर्यविषयपदार्थसंसर्गज्ञानरूपतया तादृशज्ञानपूर्वकत्वसिद्धिमादायार्थान्तरम्। कर्मत्वम् आधेयतासम्बन्धेन घटविशिष्टमिति घटत्वावच्छिन्नघटीयत्वेनाधेयतासंसर्गकज्ञानस्यैवाभिमतत्वात्। अतःस्मारितत्वं पदार्थविशेषणम् पदनिरूपितवृत्तिज्ञानजन्योपस्थितिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्न इत्यर्थः। एवं चाम्पदार्थः आधेयत्वसम्बन्धेन घटपदार्थविशिष्ट इति ज्ञानस्य घटपदार्थत्वविशिष्टीयत्वेन आधेयतासंसर्गावगाहित्वेऽपि निरुक्तविषयतावच्छेदकत्वोपलक्षितघटत्वाद्यवच्छिन्नीयत्वेन आधेयत्वानवगाहित्वान्नार्थान्तरप्रसक्तिः" इति। **दिनकर्यामपि** - "तात्पर्यज्ञाने इतरपदार्थस्येतरपदार्थत्वेन प्रवेशात् घटत्वादिना स्मृतस्य संसर्गो न सिध्येत् अतः स्मारितेति" इति सङ्क्षिप्योक्तमत्रानुसन्धेयम्। **आकाङ्क्षादिरहिते पदकदम्बक** इति। घटः कर्मत्वम् आनयनं कृतिरित्यादौ। **कार्यवैलक्षण्यानुरोधेनेति**। कार्यमत्रानुव्यवसायः अनुमितिस्थले अनुमिनोमीत्याकारकः शाब्दबोधस्थले शब्दात् प्रत्येमीत्येकारकः। अथ वा कार्यं अनुमितिः शाब्दबोधश्च तयोर्विलक्षणत्वानुसारेणेत्यर्थः।

## दीपिका

### अर्थापत्त्यादीनां प्रमाणान्तरत्वनिरासः

ननु अर्थापत्तिरपि प्रमाणान्तरमस्ति, 'पीनो देवदत्तो दिवा न भुङ्क्ते' इति दृष्टे श्रुते वा पीनत्वान्यथानुपपत्त्या रात्रिभोजनं अर्थापत्त्या कल्प्यत इति चेत् - न। 'देवदत्तो रात्रौ भुङ्क्ते दिवाऽभुञ्जानत्वे सति पीनत्वात्' इत्यनुमानेनैव रात्रिभोजनस्य सिद्धत्वात्। शते पञ्चाशदिति सम्भवोऽप्यनुमानमेव। 'इह वटे यक्षस्तिष्ठति' इत्यैतिह्यमपि अज्ञातमूलवक्तृकशब्द एव। चेष्टापि शब्दानुमानद्वारा व्यवहारहेतुरिति न प्रमाणान्तरम्। तस्मात् प्रत्यक्षानुमानोपमानशब्दाः चत्वार्येव प्रमाणानि।

### इति दीपिकायां शब्दपरिच्छेदः

**प्रकाशिका**

मीमांसकः शङ्कते - **नन्विति**। 'दिवा न भुङ्क्ते' इत्यर्थे **दृष्टे** - प्रत्यक्षतो ज्ञाते, **श्रुते** - शब्दादवगते। एतेन दृष्टार्थापत्तिः श्रुतार्थापत्तिश्चेत्यर्थापत्तिद्वैविध्यं सूचितम्। **पीनत्वान्यथानुपपत्त्येति**। पीनत्वस्य रात्रिभोजनं विनाऽनुपपत्त्येत्यर्थः। अत्रेदमवधेयम् - यद्विना यदनुपपन्नं तत्तदुपपादकमिति रात्रिभोजनमुपपादकम्, पीनत्वमुपपाद्यम्, उपपादकज्ञानं फलम्, उपपाद्यज्ञानं करणम्। फलकरणयोरर्थापत्तिशब्दो वर्तते। फले 'अर्थस्य आपत्तिः कल्पना' इति व्युत्पत्त्या। करणे तु 'अर्थस्य आपत्तिः कल्पना यस्मात्' इति व्युत्पत्त्येति। व्यतिरेक्यनुमानेनैव गतार्थत्वात् अर्थापत्तेः प्रमाणान्तरत्वं अनुचितमिति समाधत्ते- **देवदत्त** इति। दिवामात्रभोजिनि पीने व्यभिचारवारणाय सत्यन्तम्। अहोरात्राभोजिन्यपीने व्यभिचारवारणाय विशेष्यम्। तच्च योगाद्यजन्यपीनत्वपरम्। तेन भोजनशून्ये योगिनि पीने न व्यभिचारः।

सम्भवैतिह्ययोरतिरिक्तप्रमाणत्वं वदतां पौराणिकानां मतं दूषयति - **शते पञ्चाशदित्यादि**ना। **अनुमानमेवेति**। अनुमानमेव, न तु प्रमाणान्तरमित्यर्थः। शतवानित्युक्ते पञ्चाशद्वानिति ज्ञानं सम्भवति तस्यानुमानेनैव निर्वाहात्। शतस्य पञ्चाशद्व्याप्यत्वादिति भावः। **अज्ञातमूलेति**। विशिष्यानिश्चितप्रथमवक्तृकः शब्दः न तु प्रमाणान्तरमित्यर्थः। तादृशशब्दस्य यथार्थत्वे शब्दप्रमाणमध्येऽन्तर्भावः। अन्यथा तु अप्रमाणमेवेति हृदयम्। नन्वनया चेष्टया अयमर्थो बोद्धव्य इति सङ्केतितचेष्टया विजातीयप्रमाजननात् चेष्टाया अपि प्रमाणान्तरत्वं इति वदन्तं निरस्यति - **चेष्टापीति**। **शब्दानुमानद्वारेति**। शब्दद्वारा अनुमानद्वारा वा, न तु स्वातन्त्र्येणेत्यर्थः। चेष्टया कल्पितस्य शब्दस्य प्रमापकत्वे गौरवात् अनुमानानुसरणम्। **व्यवहारेति**। प्रमात्मकज्ञानेत्यर्थः। उपसंहरति - **तस्मादिति**।

**इति प्रकाशिकायां शब्दपरिच्छेदः**

**इत्यर्थ** इति । दिवा भोजनाभावरूपेऽर्थे इत्यर्थः। **दृष्टार्थापत्तिरि**ति । प्रत्यक्षतो ज्ञातस्य दिवा अभुञ्जाननिष्ठस्य पीनत्वस्य यमर्थं रात्रिभोजनाख्यं विनाऽनुपपत्तिः तस्य रात्रिभोजनाख्यस्यार्थस्य कल्पनं दृष्टार्थापत्तिः । श्रुतस्य 'पीनो देवदत्तो दिवा न भुङ्क्ते' इत्यादिवाक्यादवगतस्य पीनत्वस्य यमर्थं विनाऽनुपपत्तिः तस्य रात्रिभोजनस्य कल्पनं श्रुतार्थापत्तिः । नन्वर्थापत्तिप्रमितेः अर्थापत्तिप्रमाणस्य च किं लक्षणम् । न हि तल्लक्षणमविज्ञाय तत्प्रमाणान्तरत्वविचारः कर्तुं शक्य इत्यत आह - **अत्रेदमवधेयमित्या**दि । यद्विना रात्रिभोजनं विना यदनुपपन्नं पीनत्वमनुपपन्नम् तत् रात्रिभोजनं तदुपपादकं पीनत्वस्योपपादकम् । उपपाद्यज्ञानेन उपपादकज्ञानमर्थापत्तिरूपा प्रमितिः । उपपाद्यस्य पीनत्वस्य ज्ञानेन उपपादकस्य रात्रिभोजनस्य ज्ञानं भवति इति समन्वयः । न च उपपाद्यज्ञानविषयको योऽनुव्यवसायः पीनत्वमहं जानामीत्याकारकः तस्यापि उपपाद्यज्ञानजन्यत्वात् तत्रातिव्याप्तिरिति वाच्यम् । उपपाद्यज्ञानत्वेनोपपाद्यज्ञानजन्यत्वस्य विवक्षितत्वात् । अनुव्यवसायात्मकमानसप्रत्यक्षस्य विषयविधया उपपाद्यज्ञानजन्यत्वेऽपि उपपाद्यज्ञानत्वेन तज्जन्यत्वाभावात् नातिव्याप्तिः । तथा चोपपाद्यविषयकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यताशालिज्ञानत्वमर्थापत्तिप्रमायाः लक्षणम् इत्युक्तं भवति । तादृशज्ञानकरणत्वमर्थापत्तिप्रमाणस्य लक्षणम् । **फलकरणयो**रिति । प्रमितौ प्रमाणे चेत्यर्थः। **व्यतिरेक्यनुमाने-नैवे**ति । " देवदत्तो रात्रौ भुङ्क्ते दिवा अभुञ्जानत्वे सति पीनत्वात् यो रात्रौ न भुङ्क्ते स दिवा अभुञ्जानत्वे सति पीनो न भवति यथा रात्रौ दिवा चाभुञ्जानः कृशो महर्षिः न तथा चायम् तस्मान्न तथा" इति प्रयोगोऽत्र विवक्षितः । केचित् - यो दिवा अभुञ्जानत्वे सति पीनः सः रात्रौ भुङ्क्ते यथा प्रतिनक्तमात्रं भुञ्जानो यज्ञदत्तः इत्यन्वय्यनुमानेनाप्यर्थापत्तेर्गतार्थतामाहुः। **सत्यन्तमि**ति । सत्यन्तानुपादाने रात्रिभोजनरूपसाध्याभाववति दिवामात्रभोजनकर्तरि पीने यज्ञदत्ते पीन-

त्वरूपहेतुसत्वात् व्यभिचारः । तद्वारणाय दिवा अभुञ्जानत्वे सतीति विशेषणम् । दिवा भुञ्जानत्वमेव यज्ञदत्तेऽस्तीति न व्यभिचारः । **अहोरात्राभोजिनीति** । तथा च पीनत्वादिति विशेष्यानुपादाने देवदत्तो रात्रौ भुङ्क्ते दिवा अभुञ्जानत्वादित्येव हेतुः स्यात्। तथा सति यस्तापसः दिवापि न भुङ्क्ते रात्रावपि न भुङ्क्ते अत एव कृशः तस्मिन् रात्रिभोजनरूपसाध्याभाववति दिवा अभुञ्जानत्वरूपहेतुसत्वात् तत्र व्यभिचारः । तद्वारणाय पीनत्वादिति । तस्मिंस्तापसे च पीनत्वाभावात् न व्यभिचारः । नन्वेवमपि यो योगी न भुङ्क्ते अथापि योगमाहात्म्यात् पीनो भवति, तस्मिन् रात्रिभोजनकर्तृत्वरूपसाध्याभाववति दिवा अभुञ्जानत्वे सति पीनत्वरूपहेतुसत्वात् व्यभिचार इत्याशङ्क्याह - **तच्च योगाद्यजन्यपीनत्वपरमिति** । तथा च योगिनि यत् पीनत्वं तत् योगजन्यमिति योगजन्यपीनत्वाभावात् न व्यभिचार इति भावः ।

**शतवानित्युक्त** इत्यादि । शतसङ्ख्याकब्राह्मणाधिकरणे अधिवेशने पञ्चाशत्सङ्ख्याकब्राह्मणाः सन्ति न वेति सन्देहानन्तरं शतत्वसङ्ख्यावतः समूहस्य पञ्चाशत्सङ्ख्यावद्घटितत्वेन शतवस्त्वधिकरणे पञ्चाशद्वस्तुसम्भव इत्याकारकज्ञानरूपात् सम्भवप्रमाणात् इह पञ्चाशत् ब्राह्मणाः सन्तीति निर्णयात्मकप्रमित्युत्पत्त्या सम्भवोऽपि प्रमाणान्तरमिति केचित् । तन्न - इदमधिवेशनं पञ्चाशद्ब्राह्मणवत् शतब्राह्मणवत्वात् यत् शतसङ्ख्याकवस्तुमत् तत् पञ्चाशत्सङ्ख्याकवस्तुमत् यथा शतघटाधिकरणं भूतलम् इति सामान्यमुखव्याप्तिपरामर्शजन्यानुमितिरूपैव सम्भवात्मिका प्रमितिः, अतो न सम्भवः प्रमाणान्तरमिति भावः । **शतस्य पञ्चाशद्व्याप्यत्वादिति** । यत्र शतसङ्ख्याकपदार्थाः तत्र पञ्चाशत्सङ्ख्याकपदार्था इति व्याप्तिः ।

**शब्दद्वारेति** । यथा लिपिदर्शनं शब्दस्मृतिं जनयित्वा शाब्दबोधं प्रयोजयतीति परम्परया कारणत्वेऽपि करणत्वाभावात् न प्रमाणम्,

तथा चेष्टापि द्वित्वबोधकशब्दस्मृतिद्वारा द्वित्वादिबोधप्रयोजिका न तत्करणमिति न प्रमाणमिति भावः । **अनुमानद्वारेति** । चेष्टमानस्याभिप्रायविशेषानुमानद्वारेत्यर्थः । अयं द्वित्वबोधतात्पर्यवान् द्वित्वबोधकत्वाविनाभूतविलक्षणचेष्टावत्त्वादित्यनुमानाकारो विवक्षितः । ननु व्यवहारहेतुरित्यत्र व्यवहारपदस्य प्रवृत्तिपरत्वे तद्धेतुत्वं द्वित्वादिज्ञान एवास्ति न तु परम्परया ज्ञानजनकचेष्टायामित्याशङ्क्य व्यवहारपदं प्रमापरतया व्याचष्टे - **प्रमात्मकज्ञानेत्यर्थ** इति । व्यवह्रियते अनेनेति व्युत्पत्या व्यवहारपदं प्रकृते प्रमात्मकज्ञानार्थकमित्यर्थः ।

**इति तर्कसङ्ग्रहदीपिकाप्रकाशिकाव्याख्यायां बालप्रियायां शब्दपरिच्छेदः**



# प्रामाण्यवादः

## दीपिका

तत्र विप्रतिपत्तिप्रदर्शनम्

ज्ञानानां तद्वति तत्प्रकारकत्वं स्वतोग्राह्यं परतो वेति विचार्यते। तत्र विप्रतिपत्तिः - ज्ञानप्रामाण्यं तदप्रामाण्याग्राहकयावज्ज्ञानग्राहक-सामग्रीग्राह्यं न वा इति । अत्र विधिकोटिः स्वतस्त्वम् निषेधकोटिः परतस्त्वम् ।

## प्रकाशिका

प्रमाणप्रसङ्गात् प्रमात्वस्य परतो ग्राह्यत्वं व्यवस्थापयिष्यन् आह - **ज्ञानानामि**ति । षष्ट्यर्थ आधेयत्वम्। तस्य चान्वयः तद्वति तत्प्र-कारकत्वे । तच्च तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वम् । तच्छब्दार्थो घटत्वादिरूपः । **स्वतोग्राह्यमिति** । ज्ञानग्राहकसामग्रीजन्यग्रहविषय इत्यर्थः । **परत** इति । ग्राह्यमित्यनुषज्यते । अनुमानादिजन्यग्रहविषय इत्यर्थः । **तत्र** - विचारे । प्रयोजकत्वं सप्तम्यर्थः विप्रतिपत्तावन्वेति । कथं तस्याः विचारप्रयोजकत्वमिति चेत् - अत्र वदन्ति । विरुद्धार्थ-प्रतिपादकवाक्यद्वयं हि विप्रतिपत्तिः । तया अप्रामाण्यशङ्काकबलित-तत्तद्वाक्यार्थबोधद्वारा मध्यस्थस्य संशयो जन्यत इत्येकतरकोटिनिश्च-याय न्यायप्रयोगादिरूपो विचारः। एवं च विचारोपयोगिसंशयजनन्या विप्रतिपत्तेर्विचारोपयोगित्वमक्षतमिति । ज्ञानप्रामाण्यमिति पक्षनि-र्देशः । अत्र तद्वति तत्प्रकारकज्ञानत्वरूपमेव प्रामाण्यं पक्षः, न तु प्रमितिकरणत्वरूपम् इति तात्पर्यग्राहकं ज्ञानपदम् । वस्तुतस्तु तद्वति तत्प्रकारकत्वस्य घटत्वपटत्वादिरूपार्थभेदेन भिन्नतया कस्यापि प्रामाण्यस्य यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं न सम्भवति इत्यतो यद्धर्मघटितप्रामाण्यं यदा पक्षः तदा तद्धर्मप्रकारकज्ञानग्राहकयावद्ग्राह्य-त्वमेव साधनीयम् । न तु सामान्यतो ज्ञानग्राहकयावद्ग्राह्यत्वमिति

तात्पर्यग्राहकं ज्ञानपदम् । **तदप्रामाण्येत्यादि** । तदप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयो न वेत्यर्थः । तादृशग्रहः गुरुमते व्यवसायः । मुरारिमिश्रमते अनुव्यवसायः । भाट्टमते च ज्ञाततालिङ्गकानुमितिः । अत्र गुरुमते सर्वस्मिन्नेव ज्ञाने मिति-मातृ-मेय-एतत्त्रयं भासते । तन्मते 'घटत्वेन घटं अहं जानामि' इत्याकारकस्यैव व्यवसायस्य उत्पत्तेः । एवं च व्यवसायस्य स्वप्रकाशात्मकतया स्वेनैव स्वगतप्रामाण्यस्य ग्रहणात् भवति प्रामाण्यस्य स्वतोग्राह्यत्वम् । विशिष्टबुद्धिं प्रति विशेषणज्ञानस्य कारणतायाः तैरनङ्गीकारात् अनुपस्थितस्यापि प्रामाण्यस्य भानसम्भवात् । मिश्रमते 'अयं घटः' इत्याकारकज्ञानानन्तरं 'घटत्वेन घटमहं जानामि' इति ज्ञानविषयकलौकिकमानसमुत्पद्यते, तेन प्रामाण्यस्य ग्रहणम् । भट्टमते तु ज्ञानस्यातीन्द्रियतया ज्ञाततालिङ्गकानुमितेरेव प्राथमिकज्ञानग्रहरूपतया तया प्रामाण्यं गृह्यते। अनुमानप्रयोगस्तु - घटः घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानविषयः घटत्वप्रकारकज्ञाततावत्त्वात् यन्नैवं तन्नैवम् इति । ज्ञातता च सविषयको ज्ञानजन्यः अतिरिक्तः पदार्थ इति मतविवेकः ।

## बालप्रिया

एतावता प्रबन्धेन चत्वारि प्रमाणानि निरूपितानि । एवं च प्रमाणे ज्ञाते [1]तद्घटकस्य प्रमात्वस्योपस्थितिः भवतीति स्मृतस्योपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या प्रमात्वविषयकं विचारं प्रवर्तयतीत्याह **प्रमाणप्रसङ्गादि**ति । प्रमाणनिरूपितप्रसङ्गसङ्गत्येत्यर्थः । **व्यवस्थापयिष्यन्नि**ति। परमतनिराकरणपूर्वकं साधयिष्यन् इत्यर्थः । **षष्ट्यर्थ आधेयत्वमि**त्यादि। तथा च अयं घट इत्यादिज्ञाननिष्ठं घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वादिरूपप्रमात्वं स्वतोग्राह्यं परतो वेति विचार्यत इत्यर्थः। इच्छादिनिष्ठप्रमात्वस्य मीमांसकैरपि परतोग्राह्यत्वस्वीकारात् तत्र विवादो नास्तीति तस्य विचारोऽनावश्यक इति सूचनाय ज्ञाननिष्ठ-

---

1. तद्घटकस्येति । प्रमात्वविशिष्टप्रमाजनकस्य प्रमाणशब्दार्थत्वादिति भावः ।

मिति प्रमात्वे विशेषणमुपात्तम् । सकलज्ञानसाधारणमेकं प्रमात्वं नास्ति, जात्यतिरिक्तस्य घटत्वादिविषयघटितस्य तस्य प्रतिज्ञानं भिन्नत्वादिति सूचनाय **ज्ञानानां** इति बहुवचनम् । **ज्ञानग्राहके**ति । ज्ञानविषयकज्ञानजनिका या सामग्री तज्जन्यं यत् ज्ञानं तद्विषय इत्यर्थः । अस्य समन्वयप्रकारः पश्चाद्भविष्यति। **अनुमाना**दि इत्यादिपदेन आप्तवाक्यरूपः शब्दो गृह्यते । **वाक्यद्वयमि**ति । प्रमात्वं स्वतोग्राह्यं इत्येकं वाक्यम्, प्रमात्वं परतो ग्राह्यम् इत्यपरं वाक्यम्। तत्र प्रथमं मीमांसकस्य, द्वितीयं नैयायिकस्य। एतत् परस्परविरुद्धार्थप्रतिपादकवाक्यद्वयं शृण्वतः मध्यस्थस्य प्रथमं अप्रामाण्यशङ्काविषयभूतः तत्तद्वाक्यार्थबोधो जायते, ततः प्रमात्वं स्वतोग्राह्यं वा परतोग्राह्यं वेति संशयो जायते । ततः मध्यस्थस्य एकतरकोटिकनिश्चयमुत्पादयितुं न्यायप्रयोगरूपो विचारः क्रियते। तथा च न्यायप्रयोगरूपविचारं प्रति मध्यस्थसंशयः कारणम् । मध्यस्थसंशयं प्रति विप्रतिपत्तिः कारणमिति विप्रतिपत्तेः विचारप्रयोजकत्वमिति भावः। अत्र "विचारो जल्पः, विपरीतोद्भावकपरविजिगीषया न्यायप्रयोगरूपः । जिज्ञासासम्पादनेन तदङ्गस्य तदुपयोगिनो मध्यस्थसंशयस्य जननीर्विप्रतिपत्तीरित्यर्थ" इति **गदाधरग्रन्थो**ऽनुसन्धेयः । दीपिकायां प्रदर्शितं विप्रतिपत्तिवाक्यं तत्तन्मतानुवादरूपं **दीपीका**कारस्यैवेत्याहुः । **संशयजनन्या** इति । संशयजनिकाया इत्यर्थः ।

ननु ज्ञानप्रामाण्यमिति पक्षनिर्देश इत्युक्तम् । तत्र प्रामाण्यमित्येव पक्षनिर्देशोऽस्तु, ज्ञानपदं किमर्थमित्याशङ्कायामाह-**अत्र तद्वती**ति । करणार्थकल्युडन्तात् प्रमाणशब्दात् भावेष्यञा निष्पन्नस्य प्रामाण्यशब्दस्य प्रमाकरणत्वमर्थः । भावार्थकल्युडन्तात् प्रमाणशब्दात् भावे ष्यञा निष्पन्नस्य प्रामाण्यशब्दस्य प्रमात्वमर्थः । प्रकृते च प्रमात्वरूपः प्रामाण्यपदार्थ एव पक्षः, न तु प्रमाकरणत्वरूप इति सूचनाय ज्ञानपदम् । न च प्रमाकरणत्वमेव पक्षोऽस्त्विति वाच्यम् । तत्र स्वतोग्राह्यत्वरूपसाध्याभावेन बाधात् । न च ज्ञानपदोपादानेन कथं प्रमाकरणत्वव्यावृत्तिः । प्रमाकरणत्वस्य व्याप्तिज्ञानसादृश्यज्ञानादिज्ञाननिष्ठ-

त्वात् इति वाच्यम् । ज्ञानस्यैव प्रामाण्यं ज्ञानप्रामाण्यमित्यवधारण-स्याभिप्रेतत्वात् ज्ञानमात्रवृत्तिप्रामाण्यं पक्षतयाभिमतम् । प्रमाकर-णत्वरूपं प्रामाण्यं तु न ज्ञानमात्रवृत्ति, तस्य [1]मनः प्रभृतिवृत्तित्वात् । प्रमात्वरूपं प्रामाण्यं तु ज्ञानमात्रवृत्तीति ज्ञानपदेन प्रमितिकरणत्व-व्यवच्छेद इत्याशयात् ।

ननु ज्ञानमात्रवृत्तीति विशेषणे दत्तेऽपि व्याप्तिज्ञानादिनिष्ठं यत् अनुमित्यादिप्रमाकरणत्वं तत् ज्ञानमात्रवृत्तीति तद्व्यवच्छेदः कथमिति चेत् - अत्राहुः । विशेष्यतावच्छेदकावच्छेदेन विशेषणान्वयस्यौत्सर्गिकत्वात् प्रकृते प्रमाकरणत्वत्वरूपविशेष्यतावच्छेदकावच्छेदेन ज्ञान-मात्रवृत्तित्वान्वयो वाच्यः । प्रमाकरणत्वत्वाक्रान्ते प्रत्यक्षप्रमाकरणत्वे ज्ञानमात्रवृत्तित्वबाधात् । अतः प्रमात्वमेवात्र प्रामाण्यपदार्थः । तद्वति तत्प्रकारकज्ञानत्वत्वरूपप्रमात्वत्वावच्छिन्ने तु ज्ञानमात्रवृत्तित्वान्वयः सम्भवतीति तद्बलात् अत्र प्रमात्वरूपं प्रामाण्यमेव गृह्यत इति ।

ननु प्रामाण्यपदार्थत्वेन प्रामाण्यपदार्थस्य पक्षत्वे भवेदेवं ज्ञान-पदसार्थक्यम् । विशिष्य तद्वति तत्प्रकारकज्ञानत्वस्य पक्षत्वे ज्ञानपदं व्यर्थमित्यतस्तात्पर्यग्राहकतया तत्सार्थक्यमाह - **वस्तुत** इति । **कस्यापि प्रामाण्यस्ये**ति । घटत्ववति घटत्वप्रकारकज्ञानत्वरूपप्रामाण्यस्य तदा-श्रयभूतज्ञानग्राहकसामग्रीग्राह्यत्वेऽपि तदनाश्रययावदन्तर्गतपटादिज्ञान-ग्राहकसामग्रीग्राह्यत्वं नास्तीति बाधः स्यात् । अतो घटत्वघटितं घट-त्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकज्ञानत्वरूपं प्रामाण्यं यदा पक्षः तदा घटत्वप्रकारकज्ञानग्राहकसामग्रीग्राह्यत्वमेव साध्यम् । न तु ज्ञान-त्वेन सामान्येन ज्ञानघटितं ज्ञानग्राहकसामग्रीग्राह्यत्वमिति सूचनाय ज्ञानपदमिति भावः । **न तु सामान्यत** इति । इदमुपलक्षणम्, धर्मा-न्तरप्रकारकज्ञानग्राहकयावत्सामाग्रीग्राह्यत्वं न साध्यमिति लाभाये-त्यपि बोध्यम् ।

---

1. मनः प्रभृतीति । मनसः मानसप्रत्यक्षरूपप्रमाकरणत्वादिति भावः ।

**तदप्रामाण्येत्यादि** । ज्ञानं यया सामग्र्या ज्ञायते तयैव सामग्र्या ज्ञानगतं प्रमात्वमपि ज्ञायते। ज्ञानविषयकज्ञाने एव ज्ञानगतं प्रमात्वमपि विषय इत्यर्थः । तत्र प्राभाकरमते ज्ञानं त्रिपुटीरूपमङ्गीक्रियते । त्रिपुटीत्यस्य ज्ञातृ-ज्ञेय-ज्ञानैतत्त्रितयविषयकमित्यर्थः । तन्मते आदौ 'अयं घट' इति व्यवसायात्मकं ज्ञानं ततः 'घटमहं जानामि' इत्यनुव्यवसायात्मकं ज्ञानमिति नाङ्गीक्रियते । अपि तु प्रथमत एव घटमहं जानामीत्याकारकमेव ज्ञानं जायते, तदेव व्यवसायात्मकम् । तस्मिन् ज्ञाने विषयः घटः, ज्ञाता अहमर्थः, ज्ञाधात्वर्थज्ञानं चेति त्रयं विषयः । अत एव ज्ञानस्य स्वविषयकत्वरूपं स्वयंप्रकाशत्वम् । तथा च ज्ञानविषयकं स्वात्मकं ज्ञानं स्वगतप्रमात्वमपि विषयीकरोति, यथा ज्ञानगतं ज्ञानत्वमपि विषयीकरोति तद्वत् । ज्ञानत्वविशिष्टज्ञानविषयकत्ववत् प्रमात्वविशिष्टज्ञानविषयकत्वमपि व्यवसायस्य स्वीक्रियते । न च विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात् पूर्वमनुपस्थितस्य प्रमात्वस्य कथं भानमिति वाच्यम् । तादृशकारणताया अनङ्गीकारात् । तथा च ज्ञानविषयकज्ञानविषयत्वस्यैव स्वतस्त्वरूपतया गुरुमते ज्ञानविषयकं ज्ञानं स्वयमेव तद्विषयत्वं प्रमात्वस्यास्तीति स्वतस्त्वोपपत्तिः ।

मुरारिमिश्राणां मते आदौ अयं घट इति व्यवसायात्मकं ज्ञानम्, ततः घटत्वेन घटमहं जानामीत्यकारकः अनुव्यवसायः । तस्य घटत्वप्रकारकघटविशेष्यकज्ञानवानित्यर्थः । तथा च तन्मते ज्ञानविषयकज्ञानमनुव्यवसायः । तेन ज्ञाने विषयीक्रियमाणे तद्विशेषणतया घटत्वप्रकारकत्वावच्छिन्नघटविशेष्यकत्वरूपं प्रमात्वमपि विषयीक्रियते । अतः ज्ञानविषयकज्ञानविषयत्वरूपस्वतस्त्वोपपत्तिः ।

भाट्टानां मते ज्ञानस्यातीन्द्रियतया ऐन्द्रियकं घटादिज्ञानं ज्ञानविषयकं न भवतीति प्रथमतः अयं घट इत्येव ज्ञानमुदेति । तेन ज्ञानेन घटे ज्ञातताख्यः कश्चित् सविषयको धर्मो जायते । तया ज्ञाततया ज्ञानमनुमीयते । तथा च ज्ञाततालिङ्गकानुमितिरेव तन्मते ज्ञानविषयकज्ञानम् । तया अनुमित्या ज्ञानगतं प्रमात्वमपि विषयीक्रियत इति ज्ञानविषयत्वरूपस्वतस्त्वोपपत्तिः ।

[1]प्राथमिकज्ञानग्रहविषयत्वं स्वतोग्राह्यत्वमिति मतत्रयसाधारणं निर्वाच्यम् । ज्ञानग्रहे प्राथमिकत्वविशेषणात् नैयायिकसंमतप्रवृत्त्या-दिलिङ्गकानुमित्यात्मकद्वितीयज्ञानग्रहो व्यवच्छिद्यते ।

**व्यवसायस्य स्वप्रकाशात्मकतये**ति । स्वविषयकतयेत्यर्थः । **ग्रह-णादि**ति । विषयीकरणादित्यर्थः । **ज्ञानविषयकलौकिकमानसमि**ति । ज्ञप्ति-विषयकमात्ममनस्संयोगरूपलौकिकसन्निकर्षजन्यं मानसप्रत्यक्षमित्यर्थः। इदमेव मानसम् अनुव्यवसाय इत्युच्यते । **तेन प्रामाण्यस्य ग्रहणमि**ति । तेन मानसप्रत्यक्षेण प्रमात्वस्य विषयीकरणमित्यर्थः । ज्ञानविषयक-मानसप्रत्यक्षनिरूपिता प्रमात्वनिष्ठविषयतेति यावत् । **तया प्रामाण्यं गृह्यते** - अनुमित्या प्रामाण्यं विषयीक्रियते । **घटत्ववद्विशेष्यके**ति । तथा चास्यामनुमितौ घटत्ववद्विशेष्यकघटत्वप्रकारकज्ञानं विषयः, ज्ञान-विशेषणतया घटत्ववद्विशेष्यकघटत्वप्रकारकत्वरूपप्रमात्वमपि विषयः ।

## दीपिका

### स्वतस्त्वघटकदलप्रयोजनम्

अनुमानादिग्राह्यत्वेन सिद्धसाधनवारणाय **यावदि**ति । 'इदं ज्ञानं अप्रमा' इति ज्ञानेन प्रामाण्याग्रहात् बाधवारणाय **अप्रामाण्या-ग्राहके**ति । 'इदं ज्ञानं अप्रमा' इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकस्यापि अप्रामाण्याग्राहकत्वाभावात् स्वतस्त्वं न स्यात् अतः **तदि**ति । तस्मिन् ग्राह्यप्रामाण्याश्रये अप्रामाण्याग्राहकेत्यर्थः । उदाहृतस्थले व्यवसायेऽ-प्रामाण्यग्राहकस्याप्यनुव्यवसाये तदग्राहकत्वात् स्वतस्त्वसिद्धिः ।

## प्रकाशिका

यावत्त्वविशेषणे सत्येव अग्राहकान्तं सार्थकमित्यभिप्रेत्य प्रथम-तस्तस्यैव प्रयोजनं दर्शयति - **अनुमाने**ति । प्रामाण्यस्येत्यादिः । **सिद्ध-साधने**ति । नैयायिकमतेऽपि 'इदम् ज्ञानम् प्रमा समर्थप्रवृत्तिजनकत्वात्'

---

1. प्राथमिकेति । प्राथमिकं यत् ज्ञानविषयकज्ञानं तद्विषयत्वमित्यर्थः ।

इत्यनुमानेन 'इदम् ज्ञानम् प्रमा' इत्याप्तवाक्येन च ग्राह्यत्वादिति भावः । नैयायिकमतेऽपि निषेधे साध्ये बाधवारणायेत्यपि बोध्यम् । **यावदितीति** । ननु सामग्रचां यावत्त्वविशेषणमयुक्तम्, यावत्सामग्री-जन्यग्रहाप्रसिद्धेः । न हि सर्वाभिः ज्ञानसामग्रीभिः एकं ज्ञानं जन्यते । न च यावतीः सामग्रीः विशिष्योपादाय तत्तज्जन्यग्रहविषयत्वं साध्यत इति वाच्यम् । अनुव्यवसायादिसामग्रीणां ताद्रूप्येण निवेशे मतत्रय-साधारण्यानिर्वाहादिति चेत् - न । यतो यावदिति फलतो ग्रहविशे-षणम् । तथा च ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वमिति फलि-तम् । तत्तद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहत्वव्यापकविषयिता-प्रतियोगित्वमिति निष्कर्ष इति सङ्क्षेपः । **प्रामाण्याग्रहादिति** । व्यवसा-यनिष्ठेत्यादिः । प्रामाण्याविषयीकरणादित्यर्थः । **अप्रामाण्याग्राहकेतीति** । तथा च तादृशज्ञानसामग्रचाः साध्यकोटचप्रविष्टत्वात् तया प्रामाण्य-स्याग्रहणेऽपि न बाध इति भावः । **अनुव्यवसायनिष्ठेत्यादि** । तादृशानु-व्यवसायनिष्ठं यदप्रामाण्यवद्विशेष्यकत्वविशिष्टाप्रामाण्यप्रकारकत्वरूप-प्रामाण्यं तद्ग्राहकस्येत्यर्थः । 'सामान्ये नपुंसकम्' इति नपुंसकनिर्देशः। **स्वतस्त्वं न स्यादिति** । यदा निरुक्तप्रामाण्यस्य पक्षता, तदा अप्रामाण्या-ग्राहकप्रामाण्यग्राहकसामग्रचा एव साध्यकोटौ निवेशनीयतया तादृश-सामग्रचा अप्रसिद्धत्वात् तस्य स्वतोग्राह्यत्वं न सिध्येदित्यर्थः । सप्त-मीतत्पुरुषमभिप्रेत्याह - **तस्मिन्निति** । एतस्यैव विवरणं **ग्राह्यप्रामाण्या-श्रय** इति । यादृशप्रामाण्यं प्रकृतानुमितावुद्देश्यं तादृशप्रामाण्याश्रयवि-शेष्यकाप्रामाण्यप्रकारकज्ञानाजनकेति अग्राहकान्तार्थः । इदं ज्ञानं अप्रमा इत्यनुव्यवसायनिष्ठप्रामाण्यग्राहकसामग्रचाः व्यवसायविशे-ष्यकाप्रामाण्यग्रहजनकत्वेऽपि अनुव्यवसायविशेष्यकाप्रामाण्यग्रहाजन-कत्वात् ज्ञानग्राहकत्वाच्च अप्रामाण्यवद्विशेष्यकत्वादिघटितप्रामाण्यस्य स्वतोग्राह्यत्वसिद्धिरित्याह - **उदाहृतस्थल** इति । इदं ज्ञानं अप्रमेत्य-त्रेत्यर्थः । अधिकं अस्मदीय**मणिदीधितिव्याख्याया**मनुसन्धेयम् ।

**बालप्रिया**

तदप्रामाण्याग्राहकयावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वम् इति **दीपिका**यामुक्तम् । तस्मिन् अप्रामाण्याग्राहिका यावती ज्ञानग्राहिका सामग्री तज्जन्यग्रहविषयत्वमिति तदर्थः । अप्रामाण्याग्राहकेत्यस्य अप्रामाण्यप्रकारकज्ञानाजनकेत्यर्थः । तदेकदेशज्ञाने तस्मिन्निति सप्तम्यन्तार्थस्य तद्विशेष्यकत्वस्यान्वयः । तच्छब्देन यादृशं प्रामाण्यं अनुमित्या ग्राह्यं तादृशप्रामाण्याश्रय उच्यते । तथा च ग्राह्यप्रामाण्याश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानाजनकज्ञानविषयकज्ञानजनकयावत्सामग्रीजन्यज्ञानविषयत्वं स्वतस्त्वमिति पर्यवसन्नम् । अयं घटः इत्याकारकज्ञाने इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् इत्यनुमित्या ग्राह्यं यत् घटत्ववति घटत्वप्रकारकत्वरूपं प्रमात्वं अस्ति तदाश्रयः अयं घट इति ज्ञानम्, तद्विशेष्यकं यत् अप्रमात्वप्रकारकं ज्ञानं इदं ज्ञानमप्रमेत्याकारकं तदजनिका भवति घटज्ञानविषयकज्ञानजनिका सामग्री, न हि तया घटज्ञानविशेष्यकाप्रमात्वज्ञानं जायत इति । तादृशसामग्रीजन्यं ज्ञानं च ज्ञानविषयकं ज्ञानं पूर्वोक्तरीत्या व्यवसाय-अनुव्यवसाय-अनुमित्यात्मकं मतभेदेन, तद्विषयत्वं प्रमात्वेऽस्तीति समन्वयः । अत्र दलप्रयोजनकथनावसरे प्रथमं यावत्पदस्य प्रयोजनमुक्त्वा तदनन्तरं तदप्रामाण्याग्राहकेत्यस्य प्रयोजनमुक्तं **दीपिकायाम्** । तत्र प्रथमोपस्थितस्य अग्राहकान्तस्य प्रथमं प्रयोजनमुक्त्वा तदनन्तरमेवानन्तरोपस्थितस्य यावत्पदस्य प्रयोजनकथनं न्याय्यम् । तत्परित्यज्य किमर्थं विपर्ययेण प्रयोजनमुक्तमित्याशङ्कायामाह - **यावत्त्वविशेषणे सत्येवे**ति । इदं तु द्वयोरपि विशेषणयोः प्रयोजने ज्ञाते सत्येव स्पष्टीकर्तुं शक्यत इति आदौ तयोः प्रयोजनं प्रतिपाद्यते । अप्रामाण्याग्राहकेति विशेषणानुपादाने यावज्ज्ञानग्राहकसामग्रीग्राह्यत्वं स्वतस्त्वमिति भवेत् । तथा च 'इदं ज्ञानं अप्रमा' इत्याकारकज्ञानमपि ज्ञानविषयकयावज्ज्ञानान्तर्गतं तद्ग्राह्यत्वमप्रमात्व एवास्ति, न तु प्रमात्व इति बाधः स्यात् । तद्वारणाय सामग्र्यां अप्रामाण्याग्राहकेति विशेषणमुपात्तम् । इदं ज्ञानं अप्रमा

इत्याकारको यो ज्ञानग्रहः तज्जनकसामग्री अप्रामाण्यग्राहिकैव भवेत् तादृशग्रहस्याप्रामाण्यविषयकतया तादृशग्रहजनकसामग्र्याः अप्रामाण्य-ग्राहकत्वावश्यम्भावात् । तथा च तादृशसामग्र्याः अप्रामाण्याग्राहकत्वा-भावात् अप्रामाण्याग्राहिका ज्ञानग्राहकसामग्री अनुव्यवसायादिसामग्र्येव तज्जन्यानुव्यवसायादिरूपज्ञानग्रहविषयत्वं प्रमात्वे अस्तीति न बाधः। यावत्पदानुपादाने अप्रमात्वाग्राहिका या ज्ञानग्राहकसामग्री इत्यनेन इदं ज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् इत्यनुमानरूपां इदं ज्ञानं प्रमा इत्याप्त-वाक्यरूपां वा सामग्रीमुपादाय तज्जन्यानुमिति-शाब्दबोधरूपयोः 'इदं ज्ञानं प्रमा' इत्याकारकयोः ज्ञानग्रहयोर्विषयत्वं प्रमात्वे नैयायिकस्या-प्यभिमतमिति तत्साधने सिद्धसाधनं स्यादिति तद्वारणाय यावत्पदम् । तथा सति व्यवसायानुव्यवसायादीनामपि यावज्ज्ञानग्रहान्तर्गततया तद्विषयत्वस्य प्रमात्वेऽनङ्गीकारात् न सिद्धसाधनमिति द्वयोः दलयोः प्रयोजनस्थितिः । तत्र यावत्त्वदले सत्येव अप्रामाण्याग्राहकेति सार्थकम् । अन्यथा ज्ञानग्राहकसामग्रीजन्यग्रहविषयत्वं स्वतस्त्वमित्युक्तौ न बाध-प्रसक्तिः, ज्ञानग्रहपदेन व्यवसायस्यानुव्यवसायस्य ज्ञाततालिङ्गकानु-मितेर्वा ग्रहणेन तद्विषयत्वस्य प्रमात्वे सम्भवात् । तथा च बाधाप्रसक्त्या तद्वारणफलकमग्राहकान्तं व्यर्थं स्यात् । यावत्पदे सति तु 'इदं ज्ञानं अप्रमा' इत्याकारकग्रहस्यापि यावज्ज्ञानग्रहान्तर्गततया तद्विषयत्वं प्रमात्वे नास्तीति बाधः प्रसज्यते, तद्वारकतया चाग्राहकान्तं सार्थक-मित्याशयेन यावत्वविशेषणे सत्येव अग्राहकान्तं सार्थकमित्युक्तं **प्रका-शिकयामि**ति ।

**निषेधे साध्ये बाधवारणाये**ति। तदप्रामाण्याग्राहकयावज्ज्ञानग्राहक-सामग्रीग्राह्यत्वाभावः नैयायिकस्य साध्यः । तत्र यावत्पदाभावे समर्थ-प्रवृत्तिजनकत्वलिङ्गकानुमान-आप्तवाक्यग्राह्यत्वात् तदभावरूपसाध्या-भावात् बाधः तद्वारणाय यावत्पदमिति भावः । अभावसाध्यकस्थले पक्षे प्रतियोगिमत्त्वमेव बाध इत्याशयेनेदम् । **ननु सामग्र्यामि**ति । या-वत्पदस्य सामग्रीपदविशेषणत्वे यावत्यः ज्ञानग्रहजनकसामग्र्यः तज्ज-

न्यग्रहविषयत्वं साध्यमिति फलति । तथा सति यावत्सामग्रीजन्यः एकः ज्ञानग्रहः अप्रसिद्ध इति साध्याप्रसिद्धिः प्रसज्यते । यतः अनुव्यवसाय-जनक-व्यवसायजनक-ज्ञाततालिङ्गकानुमितिजनक-समर्थप्रवृत्तिलिङ्ग - कानुमितिजनकसामग्रीणां सर्वासामपि प्रत्येकं ज्ञानग्राहकतया तादृश-यावत्सामग्रीजन्यः एको ज्ञानग्रहो न भवतीति । सामग्रीणां यावत्त्वेन न निवेशः, अपि तु विशिष्यैव । तथा च तत्तज्ज्ञानग्रहजनकतत्तत्सामग्री-जन्यतत्तद्ग्रहविषयत्वं स्वतस्त्वमिति परिष्कारेण साध्याप्रसिद्धिवार-णेऽपि मतत्रयसाधारण्यं न निर्वहतीति शङ्काग्रन्थार्थः ।

समाधत्ते - **यतो यावदि**ति । ननु ज्ञानग्राहकसामग्रीजन्य याव-द्ग्रहविषयत्वस्य साध्यत्वेऽपि पटज्ञानग्राहकसामग्रीजन्ययावद्ग्रहान्त-र्गतपटज्ञानज्ञानेन घटत्वघटितप्रामाण्यस्याग्रहात् बाधो दुर्वार इत्या-शङ्क्य ज्ञानग्राहकेत्यत्र ज्ञाने तद्धर्मप्रकारकत्वविशेषणात् न दोष इति समाधानं विवक्षुः यावत्पदस्य स्वसमभिव्याहृतपदार्थतावच्छेदकव्याप-कत्वबोधकत्वव्युत्पत्तिमप्यभिसन्धाय फलितार्थमाह - **तत्तद्धर्मे**ति । यद्धर्मघटितप्रामाण्यं पक्षः तद्धर्मप्रकारकेत्यर्थः । तथा च घटत्ववद्विशे-ष्यकत्वावच्छिन्नघटत्वप्रकारकत्वं घटत्वप्रकारकज्ञानग्राहकसामग्रीजन्य-ग्रहत्वव्यापकविषयितानिरूपकमिति प्रतिज्ञावाक्यम् । घटत्वप्रकारक-ज्ञानम् अयं घट इत्याकारकज्ञानं तद्विषयकज्ञानजनकसामग्री अनुव्य-वसायादिसामग्री तज्जन्यग्रहत्वं यत्र यत्र अनुव्यवसायादौ तत्र घटत्व-वद्विशेष्यकघटत्वप्रकारकत्वरूपप्रमात्वनिरूपितविषयितास्ति, तादृशवि-षयितानिरूपकत्वं च प्रमात्वेऽस्तीति समन्वयः ।

ननु नैयायिकमतेऽपि प्रामाण्यनिरूपितविषयितायाः घटत्ववद्वि-शेष्यकत्वावच्छिन्नघटत्वनिरूपितप्रकारितात्वेन तादृशग्रहत्वव्यापकत्वा-भावेऽपि घटत्वनिरूपितप्रकारितात्वेन अनुव्यवसायादिसामग्रीजन्य-ग्रहत्वव्यापकत्वात् सिद्धसाधनम् । घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्व-निरूपितप्रकारितात्वेन प्रामाण्यविषयितायाः व्यापकत्वं तु न विवक्षितुं

शक्यम् । नैयायिकमते साध्याप्रसिद्धेः । 'घटत्वेन इमं जानामि' इत्याकारकानुव्यवसाये घटत्वनिरूपितप्रकारितात्वेनैव तादृशप्रकारितायाः भानात् न तु घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारितात्वेनेत्य शङ्क्याह - **सङ्क्षेप** इति ।

अत्र घटत्ववति घटत्वप्रकारकत्वं घटत्वप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगितानवच्छेदकधर्मवद्विषयितानिरूपकमिति प्रतिज्ञा न विवक्षिता, येनोक्तदोषः स्यात् । अपितु घटत्वप्रकारकज्ञानग्राहकसामग्रीजन्यग्रहनिष्ठाभावप्रतियोगिता, घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपप्रामाण्यविषयकत्वत्वानवच्छिन्ना इति प्रतिज्ञा विवक्षिता । अतो न साध्याप्रसिद्धयादिकमिति भावः । अधिकं **प्रामाण्यवादगादाधर्यां** द्रष्टव्यम् ।

दीपिकायाम् '**इदं ज्ञानमप्रमेति ज्ञानेने**ति । तथा च अप्रामाण्याग्राहकेति सामग्रीविशेषणानुपादाने ज्ञानग्राहकसामग्रीजन्ययावद्ग्रहविषयत्वं स्वतस्त्वमिति स्यात् । तथा सति रजते इदं रजतमिति व्यवसायानन्तरं यत् इदं ज्ञानमप्रमेति भ्रमात्मकं ज्ञानं तस्य ज्ञानग्रहरूपतया तज्जनकसामग्रीजन्ययावद्ग्रहान्तर्गततादृशज्ञानविषयत्वमप्रमात्व एवास्ति न तु प्रमात्वरूपपक्ष इति बाधः स्यात् । तद्वारणाय अप्रामाण्याग्राहकेतिविशेषणम् । अप्रमात्वग्राहाजनकेति तदर्थः । निरुक्तज्ञानग्रहस्य अप्रमात्वविषयकत्वेन अप्रमात्वग्रहरूपतया निरुक्तज्ञानग्रहजनकसामग्र्याः अप्रमात्वग्रहजनकत्वात् तदजनकत्वं नास्तीति ज्ञानग्रहपदेन 'इदं ज्ञानमप्रमा' इत्याकारको ज्ञानग्रहो न ग्राह्यः, अपि तु 'रजतत्वेन इमं जानामि' इत्यनुव्यवसायादिरेव ग्राह्यः तज्जनकसामग्र्याः अप्रामाण्यग्राहकत्वात् तज्जन्यानुव्यवसायाद्यात्मकग्रहविषयत्वं प्रमात्वेऽस्तीति न बाध इति भावः ।

प्रकाशिकायाम् **व्यवसायनिष्ठेत्यादिरि**ति। इदं रजतम् इत्याकारकव्यसायनिष्ठं यत् प्रमात्वं रजतत्ववति रजतत्वप्रकारकत्वरूपं तदविषयकत्वादित्यर्थः । तथा च प्रमात्वे यावदन्तर्गततादृशज्ञानाविषयत्वात्

बाध इति भावः । **तादृशज्ञानसामग्र्या** इति । इदं ज्ञानं अप्रमा इत्याकारकज्ञानजनकसामग्र्या इत्यर्थः । **साध्यकोटयप्रविष्टत्वादि**ति । अप्रमात्वग्राहकत्वेन अप्रामाण्याग्राहकत्वरूपविशेषणानाक्रान्तत्वादिति भावः ।

तदप्रामाण्यग्राहकेत्यत्र तत्पदस्य **दीपिको**क्तं प्रयोजनमेवम् - इदं रजतमितिभ्रमात्मकव्यवसायोत्तर-इदं ज्ञानम् अप्रमा इत्याकारकज्ञाननिष्ठस्य अप्रमात्ववति अप्रमात्वप्रकारकज्ञानत्वरूपस्य प्रमात्वस्य अप्रमात्वग्राहकसामग्र्यैव ग्रहणात् अप्रामाण्याग्राहकसामग्रीग्राह्यत्वात्मकस्वतस्त्वबाधः तादृशप्रमात्वे स्यादिति तद्वारणाय तदप्रामाण्याग्राहकेति तत्पदम् । तस्मिन् अप्रामाण्यग्राहकेति तदर्थः । यादृशप्रमात्वे स्वतस्त्वमिष्यते तादृशप्रमात्वाश्रयविशेष्यकाप्रमात्वप्रकारकज्ञानाजनकेति तदप्रामाण्याग्राहकेत्यस्यार्थः । इदं ज्ञानं अप्रमा इत्याकारकज्ञाननिष्ठप्रमात्वग्राहकसामग्र्याः इदंज्ञानपदेन विवक्षितं यत् इदं रजतम् इत्याकारकज्ञानं तद्विशेष्यकाप्रमात्वग्राहकत्वेऽपि प्रकृतस्याप्रमात्ववति अप्रमात्वप्रकारकत्वरूपप्रमात्वस्य आश्रयभूतं यत् इदं ज्ञानं अप्रमेत्याकारकज्ञानं तद्विशेष्यकाप्रमात्वप्रकारकज्ञानजनकत्वात् नोक्तदोष इति । **इदं ज्ञानं अप्रमेत्यनुव्यवसायनिष्ठे**ति । ज्ञानविषयकत्वादस्य ज्ञानस्यानुव्यवसायशब्देन व्यपदेशः । अतः जानामीत्याद्याकारकताविरहात् कथमस्यानुव्यवसायत्वमिति नाशङ्कनीयम् ।

ननु विशेष्यभूतसामग्रीपदानुसारेण प्रामाण्यग्राहिकाया अपीति वक्तव्ये कथं प्रामाण्यग्राहकस्यापीत्युक्तं **दीपिकायाम्** इत्याशङ्क्याह - **सामान्ये नपुंसकमि**ति । (ग्राहकत्वरूप)सामान्यधर्माश्रयविवक्षया तदाश्रयविशेषाविवक्षायां नपुंसकमित्यनुशासनात् अत्र नपुंसकत्वमिति भावः । **निरुक्तप्रामाण्यस्ये**ति । अप्रामाण्यवद्विशेष्यकत्वविशिष्टाप्रामाण्यप्रकारकत्वरूपप्रामाण्यस्येत्यर्थः । **तस्ये**ति । निरुक्तप्रामाण्यस्येत्यर्थः । **न सिध्येदि**ति । तथा च बाध इति भावः । **स्वतोग्राह्यत्वसिद्धि**रिति । तादृशप्रामाण्याश्रयभूतः यः इदं ज्ञानं अप्रमेत्याकारकानुव्यव-

सायः तद्विषयकज्ञानजनकसामग्र्याः स्वाश्रयतादृशानुव्यवसायवि-शेष्यकप्रामाण्यप्रकारकज्ञानाजनकतया तादृशसामग्र्याः प्रसिद्धत्वात् तज्जन्यानुव्यवसायविषयकज्ञानविषयत्वस्य अनुव्यवसायनिष्ठप्रमात्वे सत्वात् न बाध इति भावः ॥

## दीपिका

### प्रामाण्यज्ञप्तिवादपूर्वपक्षः

ननु स्वत एव प्रामाण्यं गृह्यते, 'घटमहं जानामि' इत्यनुव्यव-सायेन घटघटत्वयोरिव तत्सम्बन्धस्यापि विषयीकरणात् व्यवसाय-रूपप्रत्यासत्तेस्तुल्यत्वात् । पुरोवर्तिनि प्रकारसम्बन्धस्यैव प्रमात्व-पदार्थत्वादिति चेत्—

## प्रकाशिका

इत्थं विप्रतिपत्तिमुपन्यस्य मीमांसकमतमुपन्यस्यति - **नन्विति** । **स्वत एवेत्यादि** । घटत्वादिघटितप्रामाण्यं निरुक्तसामग्रीत एव गृह्यत इत्यर्थः । अप्यर्थकेनैवकारेण अनुमानादिपरिग्रहः । **अनुव्यवसायेनेति** । इदं च मिश्रमताभिप्रायेण । मतत्रयसाधारण्येन तु प्राथमिकज्ञानग्रहे-णेति ध्येयम् । **तत्सम्बन्धस्यापीति** । घटघटत्वयोः यः सम्बन्धः तस्या-पीत्यर्थः । ननु अनुव्यवसाये कथं सम्बन्धस्य भानमित्याशङ्क्य यथा घटघटत्वयोः व्यवसायरूपप्रत्यासत्त्या भानम् तथा तत्सम्बन्धस्यापि, व्यवसायरूपप्रत्यासत्तेरविशेषादित्याह - **व्यवसायेति** । तावता कथं प्रामाण्यस्य भानमत आह - **पुरोवर्तिनि प्रकारसम्बन्धस्यैवेति** । पुरो-वर्तिनि यः प्रकारसम्बन्धः तद्घटितस्यैवेत्यर्थः ।

अयमाशयः - नैयायिका अपि अनुव्यवसाये विशेष्यत्वप्रकार-त्वयोर्भानमङ्गीकुर्वन्ति, पुरोवर्तिनं घटत्वेन जानामीत्याकारक-स्यैव अनुव्यवसायस्य तैरङ्गीकारात् । परन्तु पुरोवर्तिनि घटादौ घटत्वादिरूपप्रकारसम्बन्धभानं नाङ्गीकुर्वन्ति । अतस्तत्र प्रकारसम्बन्ध-भानस्य व्यवस्थापने किमपि नावशिष्टमिति प्रामाण्यस्य भानं सिध्यति,

अनुपस्थितयोरपि विशेष्यत्वप्रकारत्वयोर्भानस्य सर्वसंमतत्वादिति ।

**बालप्रिया**

**घटत्वादिघटितप्रामाण्यमिति** । घटत्ववद्विशेष्यकत्वावच्छिन्नघटत्वप्रकारकत्वरूपं प्रामाण्यं तदाश्रयज्ञानग्राहकसामग्र्यैव गृह्यत इत्यर्थः । अयं घट इत्याकारकव्यवसायविषयकं यत् ज्ञानं घटमहं जानामीत्याकारकं तस्मिन् अहमर्थः आत्मा ज्ञानं च आत्ममनस्संयोगेन मनस्संयुक्तसमवायेन च भासेते इति तदंशे लौकिकत्वम् । घटघटत्वयोस्तु ज्ञान॰लक्षणया प्रत्यासत्त्या भानम् । तादृशानुव्यवसायात् पूर्वं अयं घट इत्याकारकव्यवसायस्य सत्त्वात् व्यवसायस्य घटघटत्वोभयविषयकत्वात् । तथा च घटघटत्वविषयकव्यवसायात्मकज्ञानलक्षणसन्निकर्षेण यथा वा 'घटमहं जानामि' इत्यनुव्यवसाये घटघटत्वयोर्भानम्, तथैव घटघटत्वयोः यः सम्बन्धः समवायरूपः तस्यापि भानमावश्यकम् । व्यवसाये तस्यापि भानेन व्यवसायात्मकसन्निकर्षात् तत्सम्बन्धभानस्यावश्यम्भावात् । न च घटघटत्वसम्बन्धो भासताम्, तावता प्रमात्वाभानात् प्रमात्वस्य ज्ञानविषयकग्रहविषयत्वाख्यं स्वतस्त्वं कथं सिध्येदिति वाच्यम् । पुरोवर्तिनि प्रकारसम्बन्धस्यैव प्रमात्वपदार्थत्वात् सम्बन्धभानस्यैव प्रमात्वभानरूपत्वात् । एतदेव कथमिति चेत्-श्रूयताम् - ज्ञानस्य प्रामाण्ये विशोध्यमाने विषयतथात्व एव तत्पर्यवस्यति । विषयो यादृशधर्मवत्तया व्यवसाये भासते तादृशधर्मसम्बन्ध एव विषयस्य तथात्वम्, तदेव च प्रमात्वमिति तस्यानुव्यवसायेन विषयीकरणात् प्रमात्वस्य स्वतोग्राह्यत्वमिति मीमांसकाशयः । स एव **दीपिकायां प्रकाशिकायां** चानूदित इति । यद्यपि अर्थतथात्वस्य विषयनिष्ठस्य ज्ञानगतप्रमात्वरूपत्वं न सम्भवतीति तद्वन्निष्ठविशेष्यतानिरूपकत्वे सति तन्निष्ठप्रकारताशालिज्ञानत्वमेव प्रमात्वं वाच्यमिति शङ्का अवतरति, तथापि नैयायिकैः पुरोवर्तिनिष्ठविशेष्यतानिरूपकत्वे सति रजतत्वनिष्ठप्रकारतानिरूपकत्वमनुव्यवसाये भासत इति स्वीक्रियते । तत्र विशेष्यताप्रकारतयोरनुपस्थितयोरपि भानम् ।

पुरोवर्तिरजतत्वयोः व्यवसायरूपप्रत्यासत्या भानम्, पुरोवर्तिनि रजतत्ववत्वं न भासते इत्यङ्गीक्रियते । मीमांसकास्तु व्यवसायरूपप्रत्यासत्तिसाम्यात् रजतत्ववत्वमपि भासत इति निरूप्य तद्घटितप्रमात्वं अनुव्यवसायेन विषयीक्रियत इति निरूपयन्तीति विशेषः । **पुरोवर्तिनं घटत्वेन जानामीत्याकारकस्येति** । पुरोवर्तिनिष्ठविशेष्यतानिरूपकघटत्वनिष्ठप्रकारतानिरूपकज्ञानवानहमित्यर्थः ।

## दीपिका

### प्रामाण्यज्ञप्तिवादसिद्धान्तः

स्वतःप्रामाण्यग्रहे 'जलज्ञानं प्रमा न वा' इत्यनभ्यासदशायां प्रमात्वसंशयो न स्यात् । अनुव्यवसायेन प्रामाण्यस्य निश्चितत्वात् । तस्मात् स्वतोग्राह्यत्वाभावात् परतो ग्राह्यत्वमेव । तथाहि - प्रथमं जलज्ञानानन्तरं प्रवृत्तौ सत्यां जललाभे सति पूर्वोत्पन्नं जलज्ञानं प्रमा समर्थप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं, यथा अप्रमा इति व्यतिरेकिणा प्रमात्वं निश्चीयते । द्वितीयादिज्ञानेषु पूर्वज्ञानदृष्टान्तेन तत्सजातीयत्वलिङ्गेन अन्वयव्यतिरेकिणापि गृह्यते ॥

## प्रकाशिका

**जलज्ञानमित्यादि** । जलज्ञानं प्रमा न वा इत्याकारकः । **अनभ्यासदशायाम्** - प्राथमिकजलज्ञानग्रहोत्तरदशायाम् । अनुभवसिद्धः प्रमात्वसंशयो न स्यादित्यर्थः । **निश्चितत्वादिति** । तद्वत्तानिश्चयस्य तदभाववत्ताज्ञानं प्रति प्रतिबन्धकत्वादिति भावः । अत्र 'ज्ञातो घटः' इति प्रतीतेः ज्ञानविषयताविषयकत्वकल्पनेनैव निर्वाहे अतिरिक्तज्ञातता न कल्पनीया गौरवात् मानाभावाच्च इति तन्निरसनप्रकारो बोध्यः । **तस्मादिति** । अनभ्यासदशायां संशयानुभवादित्यर्थः । एतस्य स्वतोग्राह्यत्वाभावेऽन्वयः । **परतोग्राह्यत्वमिति** । प्रामाण्यस्यानुमानादित एव ग्राह्यत्वमित्यर्थः । **प्रवृत्तौ सत्यामिति** ।

एतेन मीमांसकैरभ्युपगतायां प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुतायां व्यभिचारो दर्शितः । न च निष्कम्पप्रवृत्तावेव प्रामण्यनिश्चयस्य हेतु-

ता, सकम्पप्रवृत्तौ तु प्रमाण्यसंशयस्य, निष्कम्पत्वं सकम्पत्वं च विषयिताविशेषः एवं च तत्र सकम्पप्रवृत्यङ्गीकारेऽपि प्रामाण्यनिश्चयस्य हेतुतायां कथं व्यभिचार इति वाच्यम्, तथापि यत्र प्रामाण्यस्याप्रामाण्यस्य वा ज्ञानं नासीत्, आसीच्च केवलजलादिज्ञानं तत्र प्रवृत्तिप्रदर्शनेन प्रामाण्यसंशयहेतुतायां व्यभिचारस्य दुर्वारत्वात् । न चैवं जलादिज्ञाने अप्रामाण्यनिश्चयकाले प्रवृत्तिःस्यादिति शङ्कनीयम्, अगृहीताप्रामाण्यकजलादिज्ञानत्वेन तद्धेतुतास्वीकारेण अदोषादिति सङ्क्षेपः । **जललाभे सतीति** । एतावता वक्ष्यमाणस्य प्रामाण्यव्यवस्थापकहेतोः स्वरूपासिद्धिशङ्का निराकृता । इदानीं पक्षस्यासत्त्वादाह - **पूर्वोत्पन्नमिति** । **समर्थेति** । तद्वद्विशेष्यकतत्प्रकारकेत्यर्थः । अन्वय्युदाहरणासम्भवात् व्यतिरेक्युदाहरणं सदृष्टान्तमाह - **यन्नैवं तन्नैवमिति** । यदप्रमा तत्समर्थप्रवृत्यजनकमित्यर्थः । **व्यतिरेकिणा** - व्यतिरेकव्याप्तिमता । **निश्चीयते** - अनुमीयते । **द्वितीयादिज्ञानेषु** - द्वितीयादिजलज्ञानेषु । **तत्सजातीयत्वलिङ्गेन** - पूर्वज्ञानसजातीयत्वरूपलिङ्गेन । समर्थप्रवृत्तिजनकत्वेनेति यावत् । **गृह्यत** इति । प्रामाण्यमनुमीयत इत्यर्थः ।

## बालप्रिया

**प्राथमिकजलज्ञानग्रहोत्तरदशायामिति** । प्राथमिकं यत् जलज्ञानं तद्विषयको यो ग्रहः जलमहं जानामीत्याकारकः तदुत्तरकाले इत्यर्थः । तथा च प्राथमिकजलज्ञानग्रहे यदि जलज्ञाननिष्ठं प्रमात्वमपि गृहीतं तर्हि जलज्ञानं प्रमा न वेति जलज्ञानधर्मिकप्रमात्वसंशयो न स्यात्, जलज्ञानधर्मिकप्रमात्वनिश्चयात्मकप्रतिबन्धकसत्वादिति भावः । जातु जलाशये जलमालोक्य तत्र विहितस्नानपानादेः पुंसः परदिने मध्याह्ने दूरात् तत्र यज्जलदर्शनं तत् द्वितीयं जलज्ञानं अभ्यासदशापन्नमित्युच्यते । तस्य गृहीतप्रामाण्यकपूर्वज्ञानसजातीयत्वानुसन्धानेन इदं ज्ञानं प्रमा न वा इति संशयस्य न प्रसक्तिरिति पर्यालोच्य प्राथमिकजलज्ञानग्रहोत्तरमित्युक्तम् । **तदभाववत्ताज्ञानं प्रतीति** । प्रमात्वसंशये

प्रमात्वाभावकोटेरपि भानेन तदंशज्ञानं प्रति प्रमात्वनिश्चयस्य प्रतिबन्धकत्वादित्यर्थः। **तन्निरसनप्रकार** इति। ज्ञाततानिरासप्रकार इत्यर्थः।

**एतेने**ति। प्राथमिकजलज्ञानानन्तरमेव प्रवृत्तिरिति कथनेनेत्यर्थः। **मीमांसकैरभ्युपगतायामि**ति। कस्मिंश्चित् विषये ज्ञाते सति जाते ज्ञाने प्रामाण्यनिश्चयं विना विषये प्रवृत्तिः न भवतीति तद्विषयकप्रवृत्तिं प्रति तद्विषयकज्ञानधर्मिकप्रामाण्यनिश्चयः कारणमिति मीमाँसकाः वदन्ति। तन्न युक्तम्। जलज्ञानानन्तरं इदं ज्ञानं प्रमा इत्याकारकजलज्ञानधर्मिकप्रामाण्यनिश्चयं विनापि प्रवृत्तेरूत्पत्त्या व्यतिरेकव्यभिचारादिति भावः। **न च निष्कम्पे**ति। प्रवृत्तिर्द्विविधा - निष्कम्पा सकम्पा चेति। उत्कटा प्रवृत्तिः निष्कम्पा, अनुत्कटा प्रवृत्तिः सकम्पा। उत्कटत्वानुत्कटत्वे प्रवृत्तिगतौ विषयिताविशेषौ। तत्र तद्विषयिणीं उत्कटप्रवृत्तिं प्रति तद्विषयकज्ञाने प्रामाण्यनिश्चयः कारणम्, तद्विषयकानुत्कटप्रवृत्तिं प्रति तु प्रामाण्यसंशयः कारणम्। प्रामाण्यनिश्चयस्य निष्कम्पप्रवृत्तित्वं कार्यतावच्छेदकम्, प्रामाण्यसंशयस्य सकम्पप्रवृत्तित्वं कार्यतावच्छेदकम्। यत्र जलज्ञानानन्तरं तत्र प्रामाण्यनिश्चयं विनापि प्रवृत्तिः जायते तत्र सा प्रवृत्तिः सकम्पेत्यङ्गीक्रियते। तस्यां च निष्कम्पप्रवृत्तित्वरूपकार्यतावच्छेदकविरहात् प्रामाण्यनिश्चयं विना निष्कम्पप्रवृत्तित्वावच्छिन्नस्यानुत्पत्त्या न व्यतिरेकव्यभिचार इति प्रामाण्यनिश्चयस्य प्रवृत्तिहेतुत्वं निर्बाधमिति शङ्कितुराशयः। **तथापी**ति। यत्र प्रामाण्यस्य अप्रामाण्यस्य वा संशयो वा निश्चयो वा नाभूत् जलज्ञानं परमभूत् तत्रापि प्रवृत्तेर्दर्शनेन सकम्पायाः तादृशप्रवृत्तेः प्रामाण्यसंशयं विनाप्युत्पत्त्या व्यतिरेकव्यभिचारात् प्रामाण्यसंशयस्य प्रवृत्तिहेतुता न भवतीति समाधातुराशयः। **न चैवमि**ति। प्रामाण्यनिश्चयस्य वा प्रामाण्यसंशयस्य वा प्रवृत्तिं प्रति हेतुत्वानङ्गीकारे यत्र जलज्ञाने अप्रामाण्यनिश्चयः तत्कालेऽपि प्रवृत्तिः स्यात्, प्रवृत्तिहेतोः जलज्ञानस्य सत्वादित्यर्थः। **अगृहीते**ति। अप्रामा-

ण्यज्ञानाभावविशिष्टजलादिज्ञानमेव जलादिविषयकप्रवृत्तिहेतुरित्यङ्गी-कारात् जलादिज्ञाने अप्रामाण्यज्ञानकाले अप्रामाण्यज्ञानविशिष्टजला-दिज्ञानमेवास्तीति न प्रवृत्यापत्तिः, अप्रामाण्यज्ञानाभावविशिष्ट-जलज्ञानरूपस्य प्रवृत्तिहेतोरभावादिति भावः ।

ननु बहुवित्तव्ययायाससाध्येषु वैदिकेषु व्यवहारेषु प्रामाण्य-निश्चयं विना निष्कम्पप्रवृत्तिर्न दृश्यत इति प्रामाण्यग्रहविशिष्टार्थ-निश्चयस्यैव प्रवृत्तिहेतुत्वम् । युक्तं चैतत्-अप्रामाण्यज्ञानाभावविशि-ष्टार्थनिश्चयस्य प्रवृत्तिहेतुत्वे तच्छरीरे तदभाववति तत्प्रकारकत्व-रूपस्य तद्वति तत्प्रकारत्वाभावरूपस्य चाप्रामाण्यस्य निवेशापेक्षया प्रामाण्यग्रहविशिष्टत्वनिवेशे लाघवादित्याशङ्क्याह - **सङ्क्षेप** इति । प्रामाण्यग्रहस्य कथञ्चित् प्रवृत्त्युपयोगित्वेऽपि परतः प्रामाण्यग्रहसंभ-वात् स्वत एव प्रामाण्यग्रह इति नाभिनिवेष्टव्यमिति भावः ।

**एतावते**ति । जललाभे सतीति कथनेनेत्यर्थः । **वक्ष्यमाणस्य प्रामाण्यव्यवस्थापकहेतो**रिति । प्रामाण्यसाधकस्य समर्थप्रवृत्तिजनकत्व-रूपहेतोरित्यर्थः । **स्वरूपासिद्धिशङ्का** - पक्षावृत्तित्वशङ्का । प्रवृत्तेः सामर्थ्यं हि जललाभेनैव । तथा च जललाभकथनेन जलज्ञाने समर्थ-प्रवृत्तिजनकत्वरूपहेतुरस्तीति सूचितमिति भावः । **इदानीमि**ति । प्रामाण्यानुमितिसमय इत्यर्थः । **पूर्वज्ञानसजातीयत्वे**ति । गृहीतप्रामाण्य-कपूर्वज्ञानसजातीयत्वलिङ्गेनेत्यर्थः । द्वितीयादिज्ञानस्य पूर्वज्ञानसजा-तीयत्वं च सफलप्रवृत्तिजनकत्वरूपेण । तथा च सफलप्रवृत्तिजनकत्व-मेव हेतुः, पूर्वज्ञानमन्वयदृष्टान्त इति सूचनाय पूर्वज्ञानसजातीयेत्यु-क्तम् । अनुमानप्रयोगस्तु-द्वितीयादिजलज्ञानं प्रमा समर्थप्रवृत्तिजन-कत्वात् यत् समर्थप्रवृत्तिजनकम् तत्प्रमा यथा प्राथमिकजलज्ञानमिति।

अत्रेदं तत्त्वम्-अयं घट इति ज्ञानानन्तरं इमं घटं जानामि, इमं घटत्वेन जानामि इत्यनुव्यवसायो भवति, न तु घटं घटत्वेन जानामीति । प्रमात्वं तु न केवलं धर्मिविशेष्यकत्वविशिष्टघटत्व-

प्रकारकत्वम् , तस्य प्रमाभ्रमोभयनिष्ठत्वात् । किं तु घटत्ववद्विशेष्यकत्वविशिष्टघटत्वप्रकारकत्वम् । इदं च नानुव्यवसाये भासते । तत्र घटत्वविशिष्टनिष्ठतया विशेष्यताया अग्रहणात् । व्यवसाये इदन्त्वेनैव घटस्य विशेष्यत्वात् घटत्वविशिष्टत्वेन घटस्य विशेष्यत्वाभावात् घटत्वविशिष्टनिष्ठतया विशेष्यतायाः अनुव्यवसायेन ग्रहणासंभवात् । अतः प्रामाण्यं न स्वतोग्राह्यमिति नैयायिकानामाशयः इति केचित् । "तथाप्यनुव्यवसायानन्तरं व्यवसायस्य प्रामाण्ये अर्थस्य तद्वत्त्वे च संशयस्यानुभवसिद्धत्वात् नार्थतद्वत्त्वं तद्विषयः" इति **मणिग्रन्थः** तेषामनुकूलः ।

**दीधितिकारा** अपि-"प्रामाण्यस्य संशयान्यथानुपपत्त्या तद्धर्मविशिष्टे तत्प्रकारकत्वस्य ग्राहकत्वेऽनुव्यवसायस्यासामर्थ्यं कल्प्यते । तेन पुरोवर्तिनि रजतत्वप्रकारकमिति ग्रहेऽपि पुरोवर्तिनि रजते रजतत्वप्रकारकमिति न ग्रहः" इति प्राहुः ।

**गदाधरभट्टाचार्यास्तु**- "तद्वद्विशेष्यकत्वतत्प्रकारकत्वयोरवच्छेद्यावच्छेदकभावाग्रहेण प्रामाण्यसंशयस्य तदधीनस्यार्थतद्वत्त्वसंशयस्य चोपपत्तेः अर्थतद्वत्त्वाविषयकत्वे निर्भरो नोचित" इत्याहुः[1] ।

## दीपिका

### प्रामाण्योत्पत्तिपरतस्त्वनिरूपणम्

प्रमाया गुणजन्यत्वमुत्पतौ परतस्त्वम् । प्रमासाधारणकारण गुणः, अप्रमासाधारणकारणं दोषः । तत्र प्रत्यक्षे विशेषणवद्विशेष्यसन्निकर्षो गुणः । अनुमितौ व्यापकवति व्याप्यज्ञानम् । उपमितौ यथार्थसादृश्यज्ञानम् । शाब्दज्ञाने यथार्थयोग्यताज्ञानम् इत्याद्यूहनीयम् ।

---

1. इत्याहुरिति । ज्ञाने गृहीतेऽपि ज्ञाने प्रामाण्यस्य संशयो भवतीति तदनुरोधेन प्रामाण्यघटकः कश्चिदंशः ज्ञानज्ञाने न भासत इति वक्तव्यम् । स चांशः पुरोवर्तिनि घटत्ववत्स्वरूप इति दीधितिकारादयः । घटत्ववद्विशेष्यकत्वघटत्वप्रकारकत्वयोरवच्छेद्यावच्छेदकभावरूपः स इति गदाधरभट्टाचार्य इति विवेकः ।

## प्रकाशिका

एवं ज्ञप्तौ परतस्त्वं व्यवस्थाप्य उत्पत्तौ परतस्त्वं निरूपयति **प्रमाया** इति । **प्रमासाधारणकारणमि**ति । प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नप्रमानिष्ठकार्यतानिरूपितकारणताशालीत्यर्थः । तेन ज्ञानमात्रहेतुभूतात्ममनस्संयोगादेः भ्रमजनकपित्तादिदोषाणां च व्युदासः । अप्रमासाधारणकारणत्वमप्येवं परिष्कर्तव्यम् । चतुर्विधप्रमायां हेतुभूतं गुणं क्रमेणोपपादयति **तत्रे**ति । चतुर्विधप्रमामध्य इत्यर्थः । **इत्याद्यूहनीयमि**ति । 'पीतः शङ्खः' इत्यादिभ्रमे पित्तादिदोषः, इदं रजतमित्यादिभ्रमे च चाकचक्यादिः इति ऊहनीयमित्यर्थः ।

## बालप्रिया

**प्रमात्वाधिकदेशवृत्ती**ति । प्रमात्वव्यापकधर्मानवच्छिन्ना या प्रमानिष्ठा कार्यता तन्निरूपितकारणत्वं प्रमात्वप्रयोजकस्य **गुणस्य लक्षणमित्यर्थः** । प्रमानिष्ठकार्यतानिरूपितकारणत्वमात्रोक्तौ ज्ञानसामान्यं प्रति हेतुभूते आत्ममनस्संयोगादावतिव्याप्तिः । तद्वारणाय कार्यतायां प्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नत्वनिवेशः । आत्ममनस्संयोगादौ तु प्रमात्वाधिकदेशवृत्तिः यो धर्मः ज्ञानत्वं तदवच्छिन्नकार्यतानिरूपितकारणत्वमेवास्ति, न तदनवच्छिन्नकार्यतानिरूपितकारणत्वमिति नातिव्याप्तिः । भ्रमासाधारणकारणेषु पित्तादिदोषेषु प्रमात्वव्यापकज्ञानत्वाद्यनवच्छिन्नकार्यतानिरूपितकारणत्वसत्त्वात् तत्रातिव्याप्तिवारणाय कार्यतायां प्रमानिष्ठत्वनिवेशः । पित्तादेः भ्रमनिष्ठकार्यतानिरूपितकारणताशालित्वेऽपि प्रमानिष्ठकार्यतानिरूपितकारणताशालित्वाभावात् नातिव्याप्तिः । तदाह - **तेने**ति । **एवं परिष्कर्तव्यमि**ति । अप्रमात्वाधिकदेशवृत्तिधर्मानवच्छिन्नाप्रमानिष्ठकार्यतानिरूपितकारणताशालित्वं दोषस्य लक्षणमित्यर्थः ।

## दीपिका

### अप्रामाण्यस्य परतस्त्वनिरूपणम्

पुरोवर्तिनि प्रकाराभावस्य अनुव्यवसायेन अनुपस्थितत्वात् अप्रमात्वं परत एव गृह्यते । पित्तादिदोषजन्यत्वमुत्पत्तौ परतस्त्वम् ।

## प्रकाशिका

अप्रमात्वस्य परतस्त्वं सयुक्तिकं दर्शयति - **पुरोवर्तिनी**ति । **अनुपस्थितत्वादि**ति । अविषयीकरणादित्यर्थः । तथा च प्रत्यासत्तेरभावात् अप्रमात्वस्यानुव्यवसायेन ग्रहणं न सम्भवतीति भावः । **अप्रमात्वम्** - तदभाववद्विशेष्यकत्वविशिष्टतत्प्रकारकत्वम् । **परत एव गृह्यत** इति । अनुमानादित एव गृह्यत इत्यर्थः । अनुमानप्रयोगस्तु -इदं ज्ञानं अप्रमा विसंवादिप्रवृत्तिजनकत्वात् यन्नैवं तन्नैवं यथा प्रमा इति ।

## बालप्रिया

**प्रत्यासत्तेरभावादि**ति । संनिकर्षाभावादित्यर्थः । विशेष्ये प्रकारसम्बन्धस्य व्यवसायविषयत्वात् व्यवसायरूपज्ञानलक्षणप्रत्यासत्त्या अनुव्यवसायेन प्रकारसंबन्धघटितप्रमात्वग्रहणं कथंचित् प्रसक्तं पूर्वं निराकृतम् । पुरोवर्तिनि प्रकाराभावसम्बन्धस्य व्यवसायविषयत्वात् तद्घटितस्याप्रमात्वस्य कथमपि भ्रमानुव्यवसायेन ग्रहणं न सम्भवतीति अप्रमात्वं न प्राथमिकज्ञानग्रहविषयत्वरूपस्वतस्त्ववत् । अपि तु अनुमानवेद्यत्वाख्यपरतस्त्ववदिति भावः । **विसंवादिप्रवृत्ती**ति । विफलप्रवृत्तीत्यर्थः ।

## दीपिका

### अन्यथाख्यातिसमर्थनम्

ननु सर्वेषां ज्ञानानां यथार्थत्वात् अयथार्थज्ञानमेव नास्तीति । न च 'शुक्तौ इदं रजतम्' इति ज्ञानात् प्रवृत्तिदर्शनात् अन्यथाख्यातिसिद्धिरिति वाच्यम् । रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्ति-

सम्भवात् । स्वतन्त्रोपस्थितेष्टभेदाग्रहस्यैव सर्वत्र प्रवर्तकत्वेन 'नेदम् रजतम्' इत्यादौ अतिप्रसङ्गाभावादिति चेत् - न । सत्यरजतस्थले पुरोवर्तिविशेष्यकरजतत्वप्रकारकज्ञानस्य लाघवेन प्रवृत्तिजनकतया शुक्तावपि रजतार्थिप्रवृत्तिजनकत्वेन विशिष्टज्ञानस्यैव कल्पनात् ।

**प्रकाशिका**

गुरुमतं निरस्य अन्यथाख्यातिं व्यवस्थापयति - **नन्वित्यादिना** । **यथार्थत्वात् - प्रमात्वात्** । **अयथार्थज्ञानमेव नास्तीति** । तदभाववद्विशेष्यकतत्प्रकारकत्वरूपायथार्थत्वं ज्ञानवृत्ति नेत्यर्थः । तेन न सिद्ध्यसिद्धिभ्यां व्याघातः। अयथार्थत्वस्य तु प्रसिद्धिरिच्छादौ बोध्या । **अन्यथाख्यातीति**। तदनङ्गीकारे पुरोवर्त्तिविशेष्यकरजतत्वादिरूपेष्टतावच्छेदकप्रकारकज्ञानस्य संवादिविसंवादिसाधारणप्रवृत्तिजनकतया तत्र प्रवृत्तिरेव न स्यादिति भावः । **रजतस्मृतीति** । क्लृप्तनियतपूर्ववर्तिभ्यामित्यादिः । **सम्भवादिति** । तथा च प्रवृत्तिं प्रति विशिष्टज्ञानत्वेन कारणतैव नास्तीति तदनुरोधेन अन्यथाख्यातिकल्पनं न सम्भवतीति भावः । नन्वेवं यत्र 'नेदम् रजतम्' इत्यादिबाधग्रहः तत्रापि प्रवृत्तिः स्यादित्यत आह - **उपस्थितेति** । एतावता स्मृतिरूपकारणापेक्षा स्फुटीकृता । **इष्टभेदाग्रहस्यैव** - रजतादिरूपेष्टभेदग्रहाभावस्यैव । एवकारेण विशिष्टज्ञानस्य प्रवर्तकत्वव्यवच्छेदः । **सर्वत्रेति** । रजते शुक्तौ चेत्यर्थः । सत्यरजतस्थले विशिष्टज्ञानत्वेनैव प्रवृत्तिं प्रति कारणत्वमेष्टव्यम् । अन्यथा धर्मधर्मिज्ञानयोः इष्टभेदाग्रहत्वरूपगुरुधर्मावच्छिन्नस्य च कारणतापत्तेः। एवं च तत्र प्रवृत्तिं प्रत्यन्वयव्यतिरेकाभ्यां विशिष्टज्ञानस्य कारणतायां लाघवात् सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रति विशिष्टज्ञानत्वेन अनुगतकार्यकारणभावस्यैव कल्पनीयतया विसंवादिप्रवृत्तेरपि तत्कार्यतावच्छेदकावलीढतया तत्पूर्वं विशिष्टज्ञानस्य कल्पनीयत्वात् अन्यथाख्यातिर्निराबाधैवेति समाधत्ते - **सत्यरजतेति** । **रजतत्वप्रकारकज्ञानस्येति** । तादृशज्ञानत्वावच्छिन्नस्येत्यर्थः । **प्रवृत्तिजनकतया** - प्रवृत्तित्वावच्छिन्नजनकतया । **विशिष्टज्ञानस्यैव** - पुरोवर्ति-

विशेष्यकेष्टतावच्छेदकप्रकारकज्ञानस्यैव । एतेन इष्टभेदाग्रहस्य व्यवच्छेदः । **कल्पनात्** - अनुमानात् । तत्प्रयोगस्तु - 'इयम् पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानजन्या, प्रवृत्तित्वात्, रजतस्थलीयप्रवृत्तिवत्' इति । स्यादेतत् - प्रत्यक्षे सन्निकर्षस्य कारणतया रजतत्वांशे तदभावेन कथं शुक्तौ 'इदम् रजतम्' इति प्रत्यक्षमिति चेत्, मैवम् । अलौकिकसन्निकर्षस्यापि प्रत्यक्षजनकताया व्यवस्थापितत्वेन ज्ञानलक्षणप्रत्यासत्तेरेव प्रकृते सम्भवात् ।

## बालप्रिया

**गुरुमतमि**ति । सर्वाणि ज्ञानानि तद्वति तत्प्रकारकत्वरूपप्रमात्ववन्ति । तदभाववति तत्प्रकारकत्वरूपाप्रमात्ववत् किमपि जानं न भवतीति प्राभाकरमतमित्यर्थः । ननु **दीपिकायाम्** अयथार्थज्ञानमेव नास्तीति गुरुमतानुवादो न युक्तः । अयथार्थज्ञानस्य प्रसिद्धत्वे तन्निषेधो न युक्तः । अयथार्थज्ञानस्याप्रसिद्धत्वे च प्रतियोग्यप्रसिद्धचा तन्निषेधो न युक्त इति सिद्धचसिद्धिभ्यां व्याघातादित्यत आह - **तदभाववदि**ति । अयथार्थत्वं पक्षः, ज्ञानवृत्तित्वाभावः साध्यः, ज्ञानत्वव्यापकप्रमात्वविरुद्धत्वात् इति हेतुः । **तदनङ्गीकार** इति । तदभाववद्विशेष्यकतत्प्रकारकज्ञानरूपान्यथाख्यात्यनङ्गीकार इत्यर्थः । **पुरोवर्तिविशेष्यके**ति । पुरोवर्तिविशेष्यकप्रवृत्तिं प्रति पुरोवर्तिविशेष्यकेष्टतावच्छेदकप्रकारकज्ञानं हेतुः । रजतार्थिनः पुरुषस्य पुरोवर्तिनि इदंकारास्पदे वस्तुनि इष्टतावच्छेदकरजतत्वज्ञानं विना प्रवृत्तेरनुदयात् । तथा च शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानात्मकान्यथाख्यातिमन्तरेण प्रवृत्तिर्न घटते । अतः प्रवृत्त्यनुसारेण तद्धेतुभूता अन्यथाख्यातिरङ्गीकार्येति शङ्कितुराशयः । संवादिप्रवृत्तिः सफलप्रवृत्तिः । विसंवादिप्रवृत्तिः विफलप्रवृत्तिः ।

ननु विशिष्टज्ञानं प्रवृत्तिकारणं वा ज्ञानद्वयं तत्कारणं वेत्यत्र विनिगमनाविरहात् 'रजतस्मृतिपुरोवर्तिज्ञानाभ्यामेव प्रवृत्तिसम्भवात्'

इत्ययुक्तमित्यत्राह - **क्लृप्तनियतपूर्ववर्तिभ्यामित्यादिरिति**। विशिष्टज्ञानस्य प्रवृत्तिकारणत्वं वदता नैयायिकेनापि विशिष्टज्ञानात्पूर्वं इदमित्याकारकं पुरोवर्तिविषयकं प्रत्यक्षं रजतस्मरणं चेति ज्ञानद्वयं भवतीत्यङ्गीक्रियते। तथा च क्लृप्तनियतपूर्ववर्तिभ्यां इदंज्ञानरजतस्मरणाभ्यामेव प्रवृत्तेः सम्भवे विशिष्टज्ञानमनावश्यकमिति भावः। **विशिष्टज्ञानत्वेनेति**। पुरोवर्तिविशेष्यकरजतत्वादिप्रकारकज्ञानत्वेनेत्यर्थः। **नन्वेवमिति**। रजतस्मृतिपुरोवर्तिज्ञाने एव प्रवृत्तिकारणे; विशिष्टज्ञानं तु न प्रवृत्तिकारणमित्यङ्गीकार इत्यर्थः। **प्रवृत्तिः स्यादिति**। रजतस्मृतिपुरोवर्तिज्ञानयोः सत्त्वादिति भावः। **रजतादिरूपेति**। रजतादिरूपं यत् इष्टं तत्प्रतियोगिकभेदज्ञानाभावस्येत्यर्थः। तथा च पुरोवर्तिविशेष्यकरजतादिरूपेष्टप्रतियोगिकभेदप्रकारकज्ञानाभावविशिष्टे पुरोवर्तिज्ञानरजतस्मरणे पुरोवर्तिनि रजतार्थिप्रवृत्तिहेतुरिति 'नेदम् रजतम्' इति बाधज्ञानकाले न प्रवृत्त्यापत्तिरिति भावः। इदमिति धर्मिज्ञान-रजतत्वज्ञानभेदाग्रहाणां त्रयाणां कारणत्वापेक्षया विशिष्टज्ञानस्यैकस्य कारणत्वे लाघवमिति मूलेऽभिप्रेतम्। तदाह - **सत्यरजतस्थल इत्यादिना**। यद्यपि धर्मधर्मिज्ञानयोः कारणत्वं विशिष्टज्ञानकारणतावाद्यपि अङ्गीकरोति, तथापि 'नेदं रजतम्' इति बाधग्रहकाले प्रवृत्तिवारणाय इष्टभेदग्रहाभावत्वावच्छिन्नस्य कारणत्वं प्राभाकरेणोच्यते नैयायिकेन विशिष्टज्ञानत्वावच्छिन्नस्य कारणत्वमुच्यते। तत्र कारणतावच्छेदकलाघवं नैयायिकस्यैवेति भावः। **सामान्यतः प्रवृत्तित्वावच्छिन्नं प्रतीति**। संवादिविसंवादिप्रवृत्तिसाधारणप्रवृत्तित्वावच्छिन्नं प्रतीत्यर्थः। **तत्कार्यतावच्छेदकावलीढतयेति**। तस्य विशिष्टज्ञानस्य यत् कार्यतावच्छेदकं प्रवृत्तित्वं तदाश्रयतयेत्यर्थः। **तत्पूर्वमिति**। विसंवादिप्रवृत्तेःपूर्वमित्यर्थः। **रजतत्वांशे तदभावेनेति**। सन्निकर्षाभावेन चक्षुस्संयुक्तशुक्तिसमवायाभावेनेत्यर्थः। **ज्ञानलक्षणेति**। रजतस्मरणात्मकं यत् रजतत्वप्रकारकज्ञानं स एव रजतत्वभानप्रयोजकः संनिकर्ष इति भावः।



अयथार्थानुभवनिरूपणम्

अयथार्थानुभवस्त्रिविधः - संशय-विपर्यय-तर्कभेदात् । एकस्मिन् धर्मिणि विरुद्धनानाधर्मवैशिष्टयज्ञानं संशयः । यथा स्थाणुर्वा पुरुषो वेति । मिथ्याज्ञानं विपर्ययः । यथा शुक्तौ इदं रजतम् इति । व्याप्यारोपेण व्यापकारोपस्तर्कः । यथा यदि वह्निर्नस्यात् तर्हि धूमोऽपि न स्यात् इति ।

## दीपिका

अयथार्थानुभवं विभजते - **अयथार्थ** इति । स्वप्नस्य मानसविपर्ययरूपत्वात् न त्रैविध्यविरोधः । संशयलक्षणमाह - **एकेति** । घटपटाविति समूहालम्बनेऽतिव्याप्तिवारणाय एकेति । 'घटः द्रव्यम्' इत्यादावतिव्याप्तिवारणाय विरुद्धेति । 'घटत्वविरुद्धपटत्ववान्' इत्यत्र अतिव्याप्तिवारणाय नानेति । विपर्ययलक्षणमाह - **मिथ्येति** । तदभाववति तत्प्रकारकनिर्णय इत्यर्थः । तर्कं लक्षयति - **व्याप्येति** । यद्यपि तर्कः विपर्ययेऽन्तर्भवति, तथापि प्रमाणानुग्राहकत्वात् भेदेन सङ्कीर्तनम् ।

## प्रकाशिका

ननु अयथार्थानुभवस्य त्रैविध्यकथनम् मूलेऽसङ्गतम्, स्वप्नज्ञानस्य अनुभूतपदार्थस्मरणकफपित्तादिरूपदोषशुभाशुभादृष्टैर्जायमानस्य बाधितार्थविषयकस्य अनुभवसिद्धत्वादत आह - **स्वप्नस्येति** । यद्यपि ्रदेशविशेषावस्थितमनस्संयोगः स्वप्नः । तथापि तदसमवायिकारणकज्ञाने स्वप्नशब्दो भाक्त इत्यवधेयम् । चाक्षुषादिरूपत्वासम्भवादाह - **मानसेति** । यत्तु स्मृतिरूपं स्वप्नज्ञानमिति तत् भाष्यादिविरुद्धमित्युपेक्षितम् । कोटयोरव्याप्यवृत्तित्वज्ञानोत्तरं जायमाने एकस्मिन् धर्मिणि घटतदभावोभयप्रकारकसमुच्चयेऽतिव्याप्तिवारणाय विरोधविषयकत्वस्य निवेशेऽपि नानेत्यस्यावश्यकतेति दर्श-

यितुमाह - **घटत्वविरुद्धेति** । **नानेतीति** । एकधर्मिनिष्ठविशेष्यतानिरूपितविरुद्धनानाधर्मनिष्ठप्रकारताकत्वाभावात् नातिव्याप्तिरिति भावः। न च विभिन्नरूपेणैकधर्मिविशेष्यकविरुद्धानेकधर्मप्रकारकज्ञानेऽतिव्याप्तिरिति शङ्क्यम् । एकधर्मावच्छिन्नविशेष्यताघटितपरिष्कारकारणेन अदोषादिति दिक् । तन्त्रान्तरे ब्रह्मभिन्ने सर्वस्मिन्नेवमिथ्याशब्दस्य प्रयोगदर्शनादाह - **तदभाववतीति** । प्रमावारणाय इदम् । तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वेत्याद्यर्थविवक्षणात् न समूहालम्बनेऽतिप्रसङ्गः । संशयस्य इच्छायाश्च वारणाय संशयान्यज्ञानार्थकं निश्चयपदमिति सङ्क्षेपः ।

**मूले व्याप्यारोपेणेति** । आहार्यव्याप्यवत्ताभ्रमजन्य - आहार्यव्यापकवत्ताभ्रमस्तर्क इत्यर्थः । आहार्यज्ञानमात्रेऽतिप्रसङ्गवारणाय जन्यान्तम् । यत्र नायम् पुरुष इति निश्चयसत्त्वे शाखादौ करादिभ्रमात् 'अयं पुरुषः' इत्याद्याहार्यारोपः तत्रातिव्याप्तिवारणाय प्रथममाहार्यपदम् । रजतत्वव्याप्याभाववत्ताग्रहकाले आहार्यं यद्रजतत्वव्याप्यवत्ताज्ञानम् तज्जन्ये 'इदम् रजतम्' इत्यनाहार्यज्ञानेऽतिव्याप्तिवारणाय द्वितीयमाहार्यपदम् । तर्के आपाद्यव्यतिरेकनिश्चय आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणमिति ध्येयम्। तर्कस्तु मानसविपर्ययरूप एवेति कथमयथार्थस्य त्रैविध्यकथनमित्याह - **यद्यपीति** । **प्रमाणानुग्राहकत्वम्** - प्रमाणेन प्रमायां जननीयायां प्रतिबन्धकविघटनद्वारोपयोगित्वम् । **भेदेनेति** । तर्कत्वरूपवैलक्षण्येनेत्यर्थः । तर्कस्य प्रामाणानुग्राहकत्वज्ञापनाय तथा कथनमिति भावः ।

## बालप्रिया

**भाक्त** इति । लाक्षणिकः कार्ये कारणोपचार इत्यर्थः । तथा च स्वाप्नं विज्ञानं विपर्ययेऽन्तर्भूतमिति भावः । **भाष्यादिविरुद्धमिति**। "उपरतेन्द्रियग्रामस्य प्रलीनमनस्कस्य इन्द्रियद्वारेणैव यदनुभवनं मानसम्, तत् स्वप्नज्ञानम्" इति **प्रशस्तपादभाष्ये तद्व्याख्यानकन्दल्यादिग्रन्थे च**

स्वप्नस्यानुभवरूपताप्रतिपादनादिति भावः। एकधर्मिविशेष्यकविरुद्ध-नानाधर्मप्रकारकज्ञानं संशयः। घटपटाविति ज्ञानस्य विरुद्धघटत्व-पटत्वरूपानेकधर्मप्रकारकत्वात् तत्रातिव्याप्तिः। तद्वारणाय एकधर्मि-विशेष्यकेत्युक्तम्। घटपटरूपानेकधर्मिविशेष्यकं घटपटाविति ज्ञानमि-मिति नातिव्याप्तिः। घटो द्रव्यमिति ज्ञानस्य घटरूपैकधर्मिविशेष्य-कत्वात् घटत्व-द्रव्यत्वरूपानेकधर्मप्रकारकत्वाच्च तत्रातिव्याप्तिः। तद्वारणाय विरुद्धेति धर्मविशेषणम्। घटत्वद्रव्यत्वयोरेकत्र घटे वर्तमानयोरेकत्रावर्तमानत्वरूपविरुद्धत्वाभावात् नातिव्याप्तिः। घट-त्वविरुद्धपटत्ववान् इति ज्ञानस्यापि एकधर्मिपटविशेष्यकविरुद्धपटत्व-रूपधर्मप्रकारकत्वात् तत्रातिव्याप्तिः। तद्वारणाय नानाधर्मप्रकारके-त्युक्तम्। यद्यपि घटत्वविरुद्धपटत्ववानिति ज्ञानस्यापि घटत्वपटत्व-रूपनानाधर्मप्रकारकत्वमस्ति, तथापि तस्मिन् ज्ञाने घटत्वं विरोधांशे प्रकारः पटत्वं तु पटांशे प्रकार इति एकस्मिन् धर्मिणि तयोः प्रकार-कत्वं नास्तीति नातिव्याप्तिः।

ननु अयं पटत्ववानिति ज्ञानस्यापि वस्तुतो घटत्वविरुद्धं यत् पटत्वं तत्प्रकारकत्वेन तत्रातिव्याप्तिवारणमेव नानेत्यस्य प्रयोजनं भवितुमर्हतीति 'घटत्वविरुद्धपटत्ववान्' इति ज्ञानपर्यन्तानुधावनं दीपिकायामयुक्तमित्यत्राह - **कोटयोरिति**। घटः तदभावश्चाव्याप्य-वृत्तिः इति ज्ञानानन्तरं जायमाने 'अयं घटवान् घटाभाववांश्च' इत्याकारके समुच्चयसंज्ञके ज्ञाने वस्तुतः घटविरुद्धः यो घटाभावः तत्प्रकारकत्वात् तत्रातिव्याप्तिवारणाय कोटिद्वयविरोधविषयकत्वमपि निवेशनीयम्। कोटयोरव्याप्यवृत्तित्वज्ञानशून्यकालीने समुच्चये एव कोटयोर्विरोधो विषयः। तयोरव्याप्यवृत्तित्वज्ञानकालीने समुच्चये तु कोटयोर्विरोधो न भासते। तथा चोक्तसमुच्चयस्य विरोधविषयक-त्वाभावात् नातिव्याप्तिः। तथा चायं पटत्ववानिति ज्ञानस्य वस्तुतः घटत्वविरुद्धं यत् पटत्वं तद्विषयकत्वेऽपि विरोधविषयकत्वाभावात् न

तन्नातिव्याप्तिः वक्तुं शक्यत इत्याशयेन 'अयं घटत्वविरुद्धपटत्ववान् इति ज्ञानपर्यन्तानुधावनम् । तस्य ज्ञानस्य विरोधविषयकत्वात् प्रसक्ताया अतिव्याप्तेर्वारणाय नानेति विशेषणमिति भावः ।

**एकधर्मिनिष्ठविशेष्यते**त्यादि । अयं घटत्वविरुद्धपटत्ववान् इति ज्ञाने घटत्वमपि प्रकारः पटत्वमपि प्रकारः । परन्तु घटत्वनिष्ठप्रकारता विरोधनिष्ठविशेष्यतानिरूपिता, पटत्वनिष्ठप्रकारता पटनिष्ठविशेष्यतानिरूपिता । द्वयोः घटत्वपटत्वनिष्ठप्रकारतयोः एकधर्मिनिष्ठविशेष्यतानिरूपितत्वं नास्तीति तादृशज्ञाने एकधर्मिनिष्ठविशेष्यतानिरूपितनानाधर्मनिष्ठप्रकारतानिरूपकत्वाभावात् नातिव्याप्तिरिति भावः। **विभिन्नरूपेणे**ति । 'पर्वतो वह्निमान् द्रव्यं वह्न्यभाववत्' इत्याकारके समूहालम्बने पर्वतत्वद्रव्यत्वाभ्यां पर्वतरूपैकधर्मिविशेष्यकेऽतिव्याप्तिः । पर्वतनिष्ठविशेष्यतानिरूपितवह्नितदभावरूपनानाधर्मनिष्ठप्रकारतानिरूपकत्वादिति भावः । **एकधर्मावच्छिन्ने**ति । तथा च एकधर्मावच्छिन्नविशेष्यतानिरूपितनानाधर्मनिष्ठप्रकारतानिरूपकज्ञानत्वं संशयस्य लक्षणम् । 'पर्वतो वह्निमान्, द्रव्यं वह्न्यभाववत्' इति ज्ञाने वह्निनिष्ठप्रकारता पर्वतत्वावच्छिन्नविशेष्यतानिरूपिता वह्न्यभावनिष्ठप्रकारता द्रव्यत्वावच्छिन्नविशेष्यतानिरूपितेति द्वयोः प्रकारतयोः एकधर्मावच्छिन्नविशेष्यतानिरूपितत्वं नास्तीति नातिव्याप्तिरिति भावः ।

नन्वेवमपि घटतदभावयोरव्याप्यवृत्तित्वज्ञानकालीने 'भूतलं घटवत् घटाभाववच्च' इत्याकारके समुच्चयेऽतिव्याप्तिः । तस्यापि भूतलत्वरूपैकधर्मावच्छिन्नविशेष्यतानिरूपितघटतदभावरूपनानाधर्मनिष्ठप्रकारतानिरूपकत्वादित्यत आह - **दिगिति** । [1]'स्वघटितधर्मा-

---

1. **स्वघटितेत्यादि । एवं भूतलं घटवन्न वेति संशयनिष्ठा घटनिरूपिता प्रकारिता तद्घटितो धर्मः घटनिरूपितप्रकारित्वावच्छिन्नभूतलनिरूपितविशेष्यिताशालिज्ञानत्वं तदवच्छिन्ना भूतलं घटवदित्याकारकज्ञाननिष्ठा प्रतिबन्धकता तन्निरूपिता या प्रति-**

वच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता या स्वनिरूपकतावच्छेदकधर्मावच्छिन्ननिरूपितविरोधविषयितानिरूपिता प्रकारिता सामानाधिकरण्यसम्बन्धेन तद्विशिष्टप्रकारितैव संशयत्वम् । तच्च समुच्चयव्यावृत्तम् । समुच्चये विरोधाभानेन कोटिद्वयविषयितयोः विरोधविषयित्वानिरूपितत्वात् । संशये चान्ततः कोटयोः संसर्गतया परस्परविरोधभानोपगमेन लक्षणसमन्वय इति भावः । एतेन समुच्चयेऽतिव्याप्तिवारणाय ज्ञाने विरोधविषयकत्वविशेषणदाने तत एव घटपटाविति ज्ञानस्य घटः द्रव्यम् इति ज्ञानस्य च वारणसम्भवात् एकधर्मिविशेष्यकत्वविशेषणं धर्मे विरुद्धत्वविशेषणं च व्यर्थम् । तयोर्ज्ञानयोः विरोधविषयकत्वाभावेनैव वारणादिति शङ्कायाः नावसरः । उक्तपरिष्कार एव प्रकृतग्रन्थतात्पर्यादिति ।

**तन्त्रान्तरे** - अद्वैतवेदान्ते । तथा च मिथ्याविषयकं ज्ञानं विपर्यय इत्युक्तौ ब्रह्मातिरिक्तविषयकस्य सर्वस्यापि ज्ञानस्य अद्वैतिमते मिथ्याविषयकत्वात् विपर्ययत्वापत्तिः, अतः मिथ्याज्ञानमित्यस्य तदभाववति तत्प्रकारकनिर्णय इति व्याख्यानं कृतमिति भावः । **प्रमावारणायेदमि**ति। तत्प्रकारकनिर्णयः विपर्ययः इत्येतावन्मात्रोक्तौ अयं घट इत्यादिप्रमायामतिव्याप्तिः, तस्या अपि घटत्वादिप्रकारकत्वात् । तद्वारणाय तदभाववतीति विशेषणम् । अयं घट इत्यादिप्रमायाः घटत्ववद्विशेष्यकत्वेन घटत्वाभाववद्विशेष्यकत्वाभावात् नातिव्याप्तिरिति भावः । **न समूहालम्बनेऽतिप्रसङ्ग** इति । रङ्गरजतयोः 'इमे रङ्गरजते' इति प्रमायाँ नातिव्याप्तिरित्यर्थः । तस्याः प्रमायाः रजतत्वाभाववद्रङ्गविशेष्यकत्वे रजतत्वप्रकारकत्वे च सत्यपि रङ्गत्वाभाववद्विशेष्यकत्वावच्छिन्न-

---

**बध्यता भूतलं घटाभाववदिति ज्ञाननिष्ठा तदवच्छेदकीभूता घटाभावनिरूपिता प्रकारिता, एवं स्वं घटनिरूपितप्रकारिता तन्निरूपकता घटनिष्ठा तदवच्छेदकधर्मः घटत्वं तदवच्छिन्ननिरूपितो यो विरोधः तन्निष्ठविषयतानिरूपिता सा घटाभावनिरूपिता प्रकारिता भवति एकाधिकरणवृत्तित्वसम्बन्धेन तद्विशिष्टप्रकारिता घटनिरूपितप्रकारिता भूतलं घटवद् न वेति संशयेऽस्तीति समन्वयः ।**

रजतत्वप्रकारकत्वं नास्ति, रजतत्वनिष्ठप्रकारतायाः रजतत्ववद्रजत-निष्ठविशेष्यतानिरूपितत्वेन रजतत्वाभाववद्रङ्गनिष्ठविशेष्यतानि-रूपितत्वाभावात् रङ्गांशे रजतत्वस्याप्रकारत्वादिति भावः। अत्र-शिष्टं सर्वं प्रत्यक्षपरिच्छेद एवोक्तमित्याशयेनोक्तम् **सङ्क्षेप** इति।

व्याप्यारोपेण व्यापकारोपस्तर्कः। आरोपशब्दस्य आहार्यभ्रम इत्यर्थः। आहार्यत्वं च बाधकालीनेच्छाजन्यत्वम्। तृतीयायाः जन्यत्वमर्थः। तस्य व्यापकारोपेऽन्वयः। व्याप्यस्यारोपः व्याप्यारोपः। षष्ठ्याः विषयत्वमर्थः। तथा च बाधकालीनेच्छाजन्यव्याप्यविषयक-भ्रमजन्यः बाधकालीनेच्छाजन्यव्यापकविषयको भ्रमस्तर्क इति फलति। यदि पर्वतो वह्न्यभाववान् स्यात् तर्हि धूमाभाववान् स्यात् इत्या-कारकस्तर्कः। तत्र व्याप्यः वह्न्यभावः तद्विषयकः आरोपः पर्वतो वह्न्यमानिति बाधकालीनया इच्छया जन्यः भ्रमः यदि पर्वतो वह्न्य भाववान् स्यात् इत्याकारकः,तज्जन्यः व्यापकस्य धूमाभावस्य आरोपः तर्हि धूमाभाववान् स्यादित्याकारकः। स एव तर्कः। व्याप्यविषयक-भ्रमे आहार्यत्वविशेषणादाने शाखायां पुरुषत्वव्याप्यकरभ्रमात् यत्र अयं पुरुष इत्याहार्यारोपः तत्रातिव्याप्तिः, तद्वारणाय आहार्यत्व-विशेषणम्। शाखायां करभ्रमः न आहार्य इति नातिव्याप्तिः। व्यापकारोपे आहार्यत्वविशेषणादाने आहार्यात् रजतत्वव्याप्यवत् इदमिति ज्ञानात् जायमाने इदं रजतं इत्याकारके अनाहार्यभ्रमेऽति-व्याप्तिः। तद्वारणाय तत्। तदाह - **आहार्यव्याप्यवत्त्वेत्यादि**। **नायं पुरुष इति निश्चयसत्त्व** इति। 'अयं पुरुष' इति भ्रमस्य आहार्यत्व-सम्पादनायैतदुक्तम्। रजतत्वव्याप्यवत्ताज्ञानस्य आहार्यत्वसम्पादनाय **रजतत्वव्याप्याभाववत्ताग्रहकाले** इति।

**आपाद्यव्यतिरेकनिश्चय** इति। आपाद्यः प्रसञ्जनीयः, धूमाभावः तद्व्यतिरेकः धूमाभावाभावः धूमरूपः तन्निश्चयः, आपाद्यस्य धूमाभावस्य आपादकस्य वह्न्यभावस्य च या व्याप्तिः तन्निश्चयश्च

तर्के कारणमित्यर्थः । **कथमयथार्थस्य त्रैविध्यकथनमिति** । संशयो विपर्ययश्चेति द्वैविध्यकथनस्यैव युक्तत्वादित्यर्थः । **प्रतिबन्धकविघटनद्वारेति** । प्रतिबन्धकीभूतव्यभिचारशङ्कानिवर्तनद्वारेत्यर्थः । तर्कातिरिक्तविपर्ययाणां तु नास्ति प्रमाणानुग्राहकत्वम्, तर्कस्य तु तदस्तीति वैलक्षण्यसूचनाय विपर्ययान्तर्भूतस्यापि तर्कस्य पृथङ्निर्देश इत्यर्थः । तथा च विपर्यये तर्कत्वाकारः प्रमाणानुग्राहकतावच्छेदकः, विपर्ययत्वं तु न तथेति विशेषज्ञापनाय विपर्ययत्वतर्कत्वाभ्यां विभाग इति भावः ।

## तर्कसङ्ग्रहः

### स्मृतिनिरूपणम्

स्मृतिरपि द्विविधा - यथार्था अयथार्था चेति । प्रमाजन्या यथार्था । अप्रमाजन्या अयथार्था ।

### सुखादिनिरूपणम्

सर्वेषां अनुकूलतया वेदनीयं सुखम् । प्रतिकूलतया वेदनीयं दुःखम् । इच्छा कामः । क्रोधो द्वेषः । कृतिः प्रयत्नः । विहितकर्मजन्यो धर्मः । निषिद्धकर्मजन्योऽधर्मः । बुद्ध्यादयः अष्टौ आत्ममात्रविशेषगुणाः। बुद्धीच्छाप्रयत्ना नित्या अनित्यश्च । नित्या ईश्वरस्य । अनित्या जीवस्य ।

## दीपिका

स्मृतिं विभजते - **स्मृतिरिति** । सुखं लक्षयति - **सर्वेषामिति** । 'सुखी अहम्' इत्याद्यनुव्यसायगम्यं सुखत्वादिकमेव लक्षणम् । यथाश्रुतं तु स्वरूपकथनमिति द्रष्टव्यम् ।

## प्रकाशिका

ननु 'सर्वेषां अनुकूलतया वेदनीयम्' इत्यादि मूलं सुखादिलक्षणपरं न सम्भवति, परद्रव्योपभोगादिजन्यसुखे साधूनां द्वेषदर्शनात् अव्याप्तेरित्याशङ्कायां 'सुख्यहम्' इत्यादिप्रत्यक्षसिद्धं

सुखत्वादिकमेव लक्षणमित्याह - **सुखी अहमित्याद्यनुव्यवसायेति** । सुखत्वादीत्यादिना दुखत्वपरिग्रहः । **यथाश्रुतं त्विति** । सर्वेषामनुकूलतया इत्यादिकमित्यर्थः ।

### बालप्रिया

सर्वेषां अनुकूलतया वेदनीयं सुखम् इति मूलात् अनुकूलत्वप्रकारकज्ञानविषयत्वं सुखस्य लक्षणमिति प्रतीयते । तथा सति परकीयद्रव्योपभोगजन्ये सुखे साधूनां द्वेषदर्शनेन साधुवृत्तिप्रतिकूलत्वप्रकारकज्ञानविषयत्वस्यैव तत्र सत्त्वेन सर्वेषां अनुकूलतया वेदनीयत्वस्य तादृशसुखेऽभावेनाव्याप्त्यापत्तेः इदं लक्षणं अयुक्तमिति शङ्कानिवारणार्थः सुख्यहमित्यादि**दीपिका**ग्रन्थ इत्याह - **ननु सर्वेषा**मित्यादिना ।



## तर्कसङ्ग्रहः

**संस्कारनिरूपणम्**

संस्कारः त्रिविधः - वेगः भावना स्थितस्थापकश्चेति । वेगः पृथिव्यादिचतुष्टयमनोवृत्तिः । अनुभवजन्या स्मृतिहेतुः भावना । आत्ममात्रवृत्तिः । अन्यथा कृतस्य (स्थितस्य) पुनः तादवस्थ्यापादकः स्थितस्थापकः । कटादिपृथिवीमात्रवृत्तिः ।

### दीपिका

संस्कारं विभजते - **संस्कार** इति । संस्कारत्वजातिमान् संस्कारः । वेगस्याश्रयमाह - **वेग** इति । वेगत्वजातिमान् वेगः । भावनां लक्षयति - **अनुभवेति** । अनुभवध्वंसेऽतिव्याप्तिवारणाय स्मृतीति । आत्मादावतिव्याप्तिवारणाय अनुभवेति । स्मृतेरपि संस्कारजनकत्वं नवीनैरुक्तम् । स्थितस्थापकं लक्षयति - **अन्यथेति** । सङ्ख्यादयः अष्टौ नैमित्तिकद्रवत्ववेगस्थितस्थापकाः सामान्यगुणाः ।

### प्रकाशिका

**अनुभवेतीति** । स्मृतिं संस्कारं प्रति च अनुभवत्वेनैव कारणत्वं वदतां प्राचां अयमभिप्रायः - तत्तद्विषयकस्मृतिं प्रति तत्तद्विषयक-

संस्कारं प्रति च तत्तद्विषयकानुभवत्वेनैव हेतुता न तु तत्तद्विषयकज्ञानत्वेन, अनुभवत्वस्यापि जातित्वेन ज्ञानत्वापेक्षया गौरवासंभवात्। न च विनिगमनाविरह इति शङ्क्यम्, व्याप्यधर्मपुरस्कारेण कारणत्वसम्भवे व्यापकधर्मस्यान्यथासिद्धिनिरूपकत्वादिति।

नवीनाः पुनः - अनुभवानां तत्तद्विषयकस्मृतिं तादृशसंस्कारं प्रति च तत्तद्विषयकज्ञानत्वेनैव हेतुता, न तु अनुभवत्वेन, संस्कारस्य फलनाश्यतया प्रथमस्मरणेनैव अनुभवजन्यसंस्कारस्य नाशेन सकृदनुभूतस्य स्मरणोत्तरं अस्मरणप्रसङ्गात्। न च स्वजन्यस्मरणस्य संस्कारनाशकत्वे स्मृतिसाधारणेन ज्ञानत्वेन हेतुत्वेऽपि घटपटादिरूपनानाविषयावगाहिना अनुभवेन जनितस्य तावद्विषयकसंस्कारस्य घटाद्येकैकगोचरस्मरणेनापि विनाशात् तदुत्तरं पटादिस्मरणानुपपत्तिः, तत्तद्विषयकसंस्काराभावात्। स्मृतिजन्यपटादिगोचरसंस्कारस्य च भिन्नविषयकतया पटादिस्मारकत्वायोगात्। अतः स्वजन्यचरमस्मृतेरेवानायत्या तत्तद्व्यक्तित्वेन तत्तत्संस्कारनाशकताया अङ्गीकर्तव्यतया अनुभवत्वेन जनकतायामपि न दोष इति वाच्यम्, अन्यूनविषयकस्यैव फलस्य नाशकत्वाङ्गीकारेण अदोषात्। जायते च पुनः पुनः स्मरणात् दृढतरः संस्कारः। दाढर्च च संस्कारगतः जातिविशेषः झटिति स्मृत्युत्पादप्रयोजकः। न च दैववशसम्पन्नात् झटिति उद्बोधकसमवधानादेव झटिति स्मृतिनियमोपपत्तौ न तत्प्रयोजकतया संस्कारगतः जातिविशेषः सिद्ध्यतीति वाच्यम्। झटिति स्मृतेः दैवाधीनझटित्युद्बोधकसमवधानाधीनत्वमभ्युपगम्य संस्कारातिशयखण्डने शास्त्रादावभ्यासस्यैवानापत्तेः। किं च परित्यज्य च निश्चिताव्यभिचारकं रूपं गृह्यमाणव्यभिचारकेण कारणत्वकल्पनं स सम्भवतीति नानुभवत्वेन स्मृतिसंस्कारहेतुतासम्भवः - इति प्राहुः। तन्मतं दर्शयति - **स्मृतेरपीति।** अपिना अनुभवपरिग्रहः। एतन्मते लक्षणे च अनुभवजन्या इति स्थाने ज्ञानजन्येति निवेशनीयम्।

**व्याप्यधर्मपुरस्कारेणे**ति। व्याप्यधर्मः अनुभवत्वम्, व्यापकधर्मः ज्ञानत्वम्। **अन्यथासिद्धिनिरूपकत्वादि**ति। न हि दण्डस्य द्रव्यत्वेन रूपेण घटकारणत्वमिति भावः। **संस्कारस्य फलनाश्यतये**ति। स्मरणरूपेण फलेन नाश्यतयेत्यर्थः। तथा च संस्कारं प्रति अनुभवत्वेन हेतुत्वे यत्र घटविषयकानुभवजन्यसंस्कारेण घटस्मरणं जातम्, तत्र पुनः कालान्तरे घटस्मरणं न स्यात् घटसंस्कारस्य प्राथमिकघटस्मरणेन नष्टत्वात्। न च घटस्मरणात् पुनः संस्कारो जायते तेन पुनर्घटस्मरणमिति भवता वक्तुं शक्यते। अनुभवत्वेन कारणत्वपक्षे घटस्मरणे संस्कारकारणतावच्छेदकानुभवत्वाभावेन तस्य संस्कारोत्पादकत्वायोगात्। ज्ञानत्वेन कारणत्वे तु स्मरणेऽपि ज्ञानत्वसत्त्वेन तस्यापि संस्कारकारणतया प्रथमोत्पन्नघटस्मरणात् पुनः संस्कारः ततः स्मरणमिति स्मरणोत्तरं स्मरणमुपपद्यत इति भावः।

**न च स्वजन्येत्या**दि। संस्कारजन्यस्मरणेन संस्कारो नश्यतीति स्वीकारे तद्विषयकज्ञानं तद्विषयकस्मृतिहेतुरिति ज्ञानत्वेन रूपेण कारणत्वाङ्गीकारेऽपि तत्र समूहालम्बनात्मकघटपटादिनानापदार्थविषयकानुभवानन्तरं घटपटादीनां प्रत्येकशः स्मरणमजनिष्ट, न तु अनुभूतसकलपदार्थविषयकैकस्मरणम् तत्र घटस्मरणेन समूहालम्बनानुभवजन्यस्य घटपटादिनानापदार्थविषयकसंस्कारस्य नाशात् पटादिस्मरणानुपपत्तिः पटादिविषयकसंस्कारस्य नष्टत्वात्। न च तत्र घटस्मरणजन्यसंस्कारः पटादिस्मृति-जनयतीति वाच्यम्। घटस्मरणजन्यसंस्कारस्य घटविषयकतया तस्य पटादिस्मृतिजनकत्वायोगात्। तद्विषयकस्मृतिं प्रति तद्विषयकसंस्कारस्य हेतुत्वात् अन्यविषयकसंस्कारेणान्यविषयकस्मरणासम्भवात्। तथा च अन्तिमस्मृतिरेव तद्व्यक्तित्वेन संस्कारनाशं प्रति हेतुरिति वाच्यम्। इत्थं च अनुभवत्वावच्छिन्नं संस्कारस्मृत्योर्हेतुरिति पक्षेऽपि प्राथमिकघटस्मरणेन

घटानुभवजन्यसंस्कारो न नश्यतीति तद्बलात् पुनः घटस्मरणं भवितुमर्हतीति अनुभवत्वेनैव स्मृतिहेतुत्वमस्तु इति शङ्काग्रन्थाभिप्रायः ।

**अन्यूनविषयकस्यैवेत्यादि** । संस्कारे यावन्तः पदार्थाः विषयाः तावत्पदार्थविषयकस्मरणमेव संस्कारनाशकम् । तथा च घटपटादिनानापदार्थविषयकसमूहालम्बनानुभवजन्यतावद्विषयकसंस्कारस्य घटमात्रस्मरणेन तत्संस्कारन्यूनविषयकेण नाशो न भवतीति क्रमशः पटादिस्मरणमुपपद्यत इति भावः । स्मरणे संस्कारन्यूनविषयकत्वं च संस्कारविषयताव्यापकविषयताकत्वम् । संस्कारं प्रति ज्ञानत्वेनैव हेतुत्वे युक्त्यन्तरमाह - **जायते चे**ति । पुनः पुनः घटस्मरणात् झटिति घटस्मृतिप्रयोजकदाढर्यरूपजातिविशेषविशष्टसंस्कारो जायत इत्यनुभवसिद्धम्। तच्च ज्ञानत्वेन संस्कारहेतुत्व एव सङ्गच्छते, स्मरणस्यापि ज्ञानत्वेन ततः संस्कारोत्पत्तिसम्भवात् इति भावः । **उद्बोधकसमवधानादि**ति । उद्बोधकं सम्बन्धिदर्शनादि । **संस्कारातिशयखण्डन** इति । संस्कारगतदाढर्याख्यजातिविशेषखण्डन इत्यर्थः । **अभ्यासस्यैवानापत्तेरि**ति । संस्कारदाढर्यार्थमेव अभ्यासकरणादिति भावः । ननु झटिति स्मृत्यर्थं झटिति स्मृतिप्रयोजकोद्बोधकसमवधानार्थं वा शास्त्राभ्यासः, न संस्कारदाढर्यार्थं इत्यतः दोषान्तरमाह - **किं चे**ति । **निश्चिताव्यभिचारकं रूपमि**ति । यद्धर्मावच्छिन्ने कार्याव्यवहितपूर्ववृत्त्यभावाप्रतियोगित्वरूपाव्यभिचारनिश्चयोऽस्ति तादृशं धर्ममित्यर्थः । कार्याव्यवहितपूर्ववृत्त्यभावप्रतियोगितानवच्छेदकतया निश्चितं धर्ममिति यावत् । **गृह्यमाणव्यभिचारकेणे**ति । यद्धर्मावच्छिन्ने व्यभिचारो गृह्यते तेन धर्मेणेत्यर्थः । प्रकृते स्मरणात्पूर्वमनुभवत्वावच्छिन्नं न नियमेनास्ति द्वितीयस्मरणात्पूर्वमनुभवाभावात् । तथा चानुभवत्वावच्छिन्नं गृह्यमाणव्यभिचारकम् । द्वितीयस्मरणात्पूर्वमपि ज्ञानत्वावच्छिन्नस्य प्रथमस्मरणस्य सत्त्वात् ज्ञानत्वं निश्चिताव्यभिचारकम् । अतः निश्चिताव्यभिचारेण ज्ञानत्वेनैव स्मृतिहेतुत्वम्,न तु गृहीतव्यभिचारेणानुभवत्वेनेति भावः । ननु नवीनमते अनुभवस्येव स्मृतेरपि संस्कारं प्रति

हेतुतया स्मृतिजन्ये संस्कारेऽनुभवजन्यत्वाभावात् 'अनुभवजन्या-स्मृतिहेतुः भावना' इति लक्षणं तत्राव्याप्तमित्यत आह- **एतन्मत** इति। तथा च एतन्मते ज्ञानजन्यत्वे सति स्मृतिहेतुत्वमेव संस्कारस्य लक्षणम् । स्मृतिजन्यसंस्कारेऽपि स्मृतिरूपज्ञानजन्यत्वमस्तीति नाव्याप्तिरिति भावः ।

## दीपिका

### विशेषगुणलक्षणम्

अन्ये रूपादयो विशेषगुणाः। द्रव्यविभाजकोपाधिद्वयसमानाधि-करणावृत्तिजातिमद्गुणत्वं विशेषगुणत्वम् ।

## प्रकाशिका

**द्रव्यविभाजकोपाधीति**। पृथिवीत्वजलत्वादिरूपं यद्द्रव्यविभाज-कोपाधिद्वयं प्रत्येकं तत्समानाधिकरणाः द्वित्वपृथक्त्वसंयोगादयः तद-वृत्तिजातिमद्गुणत्वमित्यर्थः । रूपादिषु चतुर्षु नीलत्वादिकम् , [रूप-त्वादिकम् ?] सांसिद्धिकद्रवत्वे च द्रवत्वावान्तरजातिम् , स्नेहादिषु दशसु स्नेहत्वादिकम्, भावनायां संस्कारत्वावान्तरजातिं चादाय लक्षणसमन्वयः । ननु इदं लक्षणं एकत्वादिष्वतिव्याप्तम् एकत्वत्वादि जातेरपि तादृशत्वात् । न च तादृशोपाधिद्वयसमानाधिकरणवृत्ति-गुणत्वन्यूनवृत्तिजातिशून्यगुणत्वमिति तदर्थः । एवं चैकत्वादिषु सङ्ख्यात्वादेः सत्त्वात् तादृशजातिशून्यत्वस्यासत्त्वेन नातिव्याप्ति-रिति वाच्यम् । एवमपि परिमाणादिष्वतिव्याप्तेः । परिमाणत्वादेः तादृशजातित्वासम्भवात् इति चेत् -

अत्र प्रवदन्त्यभिज्ञाः - यद्यद्रूपावच्छिन्नसमानाधिकरणं यत्किं-चिद्द्रव्यविभाजकोपाधिद्वयं तत्तद्भिन्ना स्थितस्थापकवृत्तिभिन्ना च या जातिः तद्वत्त्वे सति गुणत्वमिति तदर्थः । यद्रूपावच्छिन्नसामानाधि-करण्यस्य समवायसम्बन्धघटितस्यैव निवेशनीयतया यद्रूपपदेन घट-त्वादेर्धर्तुमशक्यत्वात् घटादौ अतिव्याप्तिः, अतो विशेष्यम् । स्थित-

स्थापकेऽतिव्याप्तिवारणाय स्थितस्थापकवृत्तिभिन्नेति । स्थितस्थापकस्य पृथिव्यादिचतुष्टयवृत्तित्वमते तु न देयम् । रूपत्वादेः यद्रूपपदेन धर्तुं अशक्यत्वेऽप्यवान्तरजातिमादाय रूपादिषु लक्षणसमन्वयः । पार्थिवानुष्णाशीतस्पर्शस्य वायवीयापेक्षया विजातीयस्यैव अनुभवसिद्धत्वात् । सङ्ख्यादयस्तु सामान्यगुणा इति न तत्र वैजात्यं जलपृथिव्यादिभेदेन सिद्धान्तसिद्धम्, अतः तत्र नातिव्याप्तिः । तादृशजातिमद्भिन्नगुणत्वमेव सामान्यगुणानां लक्षणमत्रसेयम् ।

## बालप्रिया

ननु द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमद्गुणत्वं विशेषगुणस्य **दीपिकायां** लक्षणमुक्तम् । तत्र द्रव्यविभाजकोपाधिद्वयं पृथिवीत्वजलत्वादि तदधिकरणमप्रसिद्धम्, पृथिवीत्वजलत्वयोरेकत्रासत्त्वात्, तथा च लक्षणमिदमसम्भवीत्यतो व्याचष्टे - **पृथिवीत्वजलत्वादिरूपमिति** । पृथिवीत्वजलत्वयोरुभयोः अधिकरणस्याप्रसिद्धत्वेऽपि प्रत्येकं तयोरधिकरणं पृथिवी जलं च प्रसिद्धम् । तद्वृत्तयः द्वित्वपृथक्त्वसंयोगादयः तदवृत्तिर्जातिः रूपत्वरसत्वादिः तद्वान् गुणः रूपरसादिरिति तादृशजातिमद्गुणत्वस्य रूपरसादौ सत्त्वात् लक्षणसमन्वयः । रूपादिकं तु द्रव्यविभाजकोपाधिद्वयसमानाधिकरणं न भवति, द्रव्यविभाजकपृथिवीत्वजलत्वद्वयाधिकरणपृथिवीजलयोः एकस्य रूपस्य रसादेः वा अवृत्तेः । अतो द्विनिष्ठं द्वित्वादिकमेव तादृशं तदवृत्तित्वं रूपत्वादिजातावस्तीति भावः । अत्र प्रत्येकमित्यस्य तत्समानाधिकरणेत्यत्राधिकरण एवान्वयः न तु तदधिकरणवृत्तित्वेऽपीत्यवधेयम् । **नीलत्वादिकमिति** । आदिपदेन रसत्वव्याप्यं मधुरत्वादि स्पर्शत्वव्याप्यं अनुष्णाशीतत्वादि च गृह्यते । न च रूपत्वरसत्वादिजातिमादायैव समन्वयसम्भवे तद्व्याप्यनीलत्वादिजातिमादाय समन्वयकरणं किमर्थमिति वाच्यम् । "**अत्र प्रवदन्ती**"त्यादिना वक्ष्यमाणपरिष्कार एव लक्षणस्यास्य तात्पर्यात् तत्र रूपत्वादिव्याप्यजातिमादायैव समन्वयस्य कर्तव्यत्वात् । **द्रवत्वावान्तरजातिमिति** । द्रवत्व-

त्वव्याप्यां सांसिद्धिकद्रवत्वत्वरूपां जातिमित्यर्थः। **स्नेहादिषु दशस्विति**। स्नेहशब्दबुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मेष्वित्यर्थः। **संस्कारत्वावान्तरजातिमि**ति । संस्कारत्वव्याप्यां भावनात्वजातिमित्यर्थः ।

शङ्कते - **नन्विदमि**ति । पृथिवीत्वजलत्वरूपयोः द्रव्यविभाजकयोर्द्वयोरुपाध्योः प्रत्येकमधिकरणे पृथिव्यां जले च एकत्वं नास्ति। पृथिवीवृत्त्येकत्वस्य जलवृत्त्येकत्वस्य च भिन्नत्वेन एकस्य एकत्वस्य उभयत्रावृत्तेः । तथा च तादृशोपाधिद्वयसमानाधिकरणाः द्वित्वसंयोगादय एव, तदवृत्तिः या जातिः एकत्वत्वरूपा जातिः तद्वद्गुणत्वस्यैकत्वे सत्त्वात् विशेषगुणलक्षणस्य सामान्यगुणे एकत्वेऽतिव्याप्तिरिति भावः। **तादृशत्वादि**ति । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तित्वादित्यर्थः । **न च तादृशे**ति । तादृशेत्यस्य द्रव्यविभाजकेत्यर्थः । तथा च द्रव्यविभाजकोपाधिद्वयं पृथिवीत्वजलत्वादि प्रत्येकं तदधिकरणपृथिवीजलवृत्तिः द्वित्वपृथक्त्वादिः तद्वृत्तिः गुणत्वव्याप्यजातिः सङ्ख्यात्व-पृथक्त्वत्वादिः तच्छून्यगुणत्वं रूपादावस्ति । एकत्वे तु नास्ति,सङ्ख्यात्वरूपतादृशजातिमत्त्वस्यैव सत्त्वात्।अतो नातिव्याप्तिरिति भावः । **गुणत्वन्यूनवृत्ती**ति । गुणत्वव्याप्येत्यर्थः । **एवमपी**ति । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणवृत्तिगुणत्वव्याप्यजातिशून्यगुणत्वस्य विशेषगुणलक्षणत्वेऽपीत्यर्थः । **परिमाणादिष्वतिव्याप्ते**रिति । अणुत्वमहत्त्वादिरूपं परिमाणं प्रत्येकवृत्ति न व्यासज्यवृत्ति । अतः द्रव्यविभाजकोपाधिद्वयसमानाधिकरणं न परिमाणम्, अपि तु द्वित्वादिकमेव तद्वृत्तिर्या गुणत्वव्याप्यजातिः सङ्ख्यात्वादिः तच्छून्यत्वे सति गुणत्वस्य परिमाणे सत्त्वात् तत्रातिव्याप्तिरिति भावः । **तादृशजातित्वासम्भवादि**ति । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणवृत्तिगुणत्वव्याप्यजातित्वासम्भवादित्यर्थः ।

**यद्यद्रूपे**ति । यद्यद्रूपं संयोगत्वपृथक्त्वत्वादिकं तदवच्छिन्नसंयोगपृथक्त्वादेरधिकरणे जले पृथिव्यां च प्रत्येकं वर्तमानं द्रव्यवि-

भाजकोपाधिद्वयं जलत्वपृथिवीत्वरूपम्, तत्तद्भिन्ना संयोगत्वपृथक्त्व-त्वादिभिन्ना या जातिः नीलत्वादिः तद्वत्त्वे सति गुणत्वं नीलादिष्व-स्तीति समन्वयः। अत्र गुणत्वरूपविशेष्यदलस्य प्रयोजनमाह - **यद्रू-पावच्छिन्नेति**। तथा च यद्रूपपदेन घटत्वं नोपादातुं शक्यम्। तदव-च्छिन्नस्य घटस्याधिकरणे कपाले द्रव्यविभाजकोपाधिद्वयस्य जलत्व-पृथिवीत्वद्वयस्यासत्त्वात्। अतः संयोगत्वादिकमेव यद्रूपपदेनोपादेयम्, तद्भिन्ना या घटत्वजातिः तद्वत्त्वस्य घटे सत्त्वात् तत्रातिव्याप्तिः, तद्वारणाय गुणपदम्। न च यद्रूपपदेन घटत्वमप्युपादातुं शक्यते तद-वच्छिन्नस्य घटस्य कालिकसम्बन्धेनाधिकरणे काले कालिकसम्बन्धेन जलत्वपृथिवीत्वात्मकोपाधिद्वयसत्त्वात् तद्भिन्नत्वं च घटत्वे नास्तीति कथं अतिव्याप्तिप्रसक्तिरिति वाच्यम्। शुक्लत्वावच्छिन्नस्य कालिक-सम्बन्धेनाधिकरणे जले पृथिव्यां च जलत्वपृथिवीत्वद्वयसत्त्वात् तद्भिन्नत्वं शुक्लत्वादिजातौ नास्तीत्यसम्भववारणाय समवायसम्ब-न्धेन यद्रूपावच्छिन्नाधिकरणे समवायसम्बन्धेन वर्तमानमित्यर्थस्यैव यद्रूपावच्छिन्नसमानाधिकरणमित्यनेन विवक्षितत्वात् काले घटत्वा-वच्छिन्नस्य समवायेनासत्त्वात् कालो न समवायेन घटत्वावच्छिन्ना-धिकरणम्, अपि तु कपाल एवेति तद्वृत्तित्वस्य जलत्वपृथिवीत्व-द्वयेऽभावात् यद्रूपपदेन घटत्वस्योपादातुमशक्यतया संयोगत्वादिक-मुपादाय तद्भिन्ना या घटत्वजातिः तद्वत्त्वात् घटेऽतिव्याप्तिप्रसक्ति-रित्याशयात्।

**स्थितस्थापक** इति। स्थितस्थापकत्वावच्छिन्नाधिकरणकटादौ जलत्वपृथिवीत्वोभयाभावेन यद्रूपपदेन स्थितस्थापकत्वं नोपादातुं शक्यते, अपि तु संयोगत्वादिकमेव तद्भिन्ना या जातिः स्थितस्थापक-त्वरूपा जातिः तद्वद्गुणत्वस्य स्थितस्थापके सत्त्वात् तत्रातिव्याप्तिः। तद्वारणाय जातौ स्थितस्थापकवृत्तिभिन्नेति विशेषणम्। स्थितस्था-पकत्वं तु स्थितस्थापकवृत्ति, न तद्भिन्नमिति न दोष इति भावः। **न देयमिति**। तन्मते स्थितस्थापकाधिकरणं जलं पृथिवी च तद्वृत्ति-

त्वं जलत्वपृथिवीत्वयोरस्तीति यद्रूपपदेन स्थितस्थापकत्वमपि ग्रहीतुं शक्यते तद्भिन्नत्वं नास्ति तस्येत्यत एव अतिव्याप्तिवारणसम्भवात् स्थितस्थापकवृत्तिभिन्नेति विशेषणं न देयमिति भावः ।

ननु यद्रूपपदेन रूपत्वमपि ग्रहीतुं शक्यम् , रूपत्वावच्छिन्न-रूपाधिकरणे जले पृथिव्यां च जलत्वपृथिवीत्वद्वयसत्त्वात् तद्भिन्ना रूपत्वभिन्ना रूपत्वजातिः न भवतीति कथं रूपे लक्षणसमन्वय इत्यत आह - **रूपत्वादे**रिति । तथा च रूपत्वभिन्नां नीलत्वादिजातिमादाय नीलादौ समन्वय इति भावः । ननु स्पर्शे कथं लक्षणसमन्वयः । न तावत् स्पर्शत्वमादाय । तस्यापि यद्रूपपदेनोपादातुं शक्यत्वात् । तथा हि-यद्रूपं स्पर्शत्वम् तदवच्छिन्नाधिकरणं जलं पृथिवी च, तद्वृत्ति जल-त्वपृथिवीत्वद्वयं भवति, अतः स्पर्शत्वभिन्ना स्पर्शत्वजातिः न भवति इति स्पर्शत्वमादाय समन्वयः कर्तुमशक्यः । नापि अनुष्णाशीतस्पर्श-त्वादिकमादाय, तत्र शीतोष्णत्वे आदाय शीतोष्णस्पर्शयोः समन्वय-सम्भवेऽपि अनुष्णाशीतत्वमादाय अनुष्णाशीते समन्वयो न सम्भवति, यद्रूपपदेन अनुष्णाशीतत्वमप्युपादातुं शक्यते तदवच्छिन्नाधिकरणे पृथिव्यां वायौ च द्रव्यविभाजकोपाधिद्वयस्य वायुत्वपृथिवीत्वरूपस्य सत्त्वात् तद्रूपभिन्नत्वं अनुष्णाशीतत्वे नास्तीत्याशङ्क्याह - **पार्थिवा-नुष्णाशीतस्पर्शस्ये**ति । तथा च अनुष्णाशीतत्वव्याप्या पार्थिवानुष्णाशी-तस्पर्शे, वायवीयस्पर्शेऽविद्यमाना काचन विलक्षणजातिरस्ति, एवं वायवीयानुष्णाशीतस्पर्शे च पार्थिवस्पर्शेऽविद्यमाना काचन जातिरस्ति । तां तामादाय पार्थिवस्पर्शे वायवीयस्पर्शे च समन्वयः । तथा हि - यद्रूपपदेन सा जातिः न ग्रहणयोग्या तादृशजात्यवच्छिन्नाधिकरणे पृथिव्यां वायुत्वपृथिवीत्वरूपोपाधिद्वयासत्त्वात् अपि तु संयोगत्वादि-रेव ग्राह्या, तद्भिन्नत्वं च पार्थिवस्पर्शगतविजातौ वर्तते तद्वत्वात् पार्थिवस्पर्शे समन्वयः । एवं वायवीयस्पर्शेऽपि समन्वयो बोध्य इति भावः ।

नन्वेवं पृथिवीगतैकत्वे जलीयैकत्वेऽविद्यमाना काचन जाति रस्तीति स्वीकृत्य एकत्वेऽतिव्याप्तिप्रसक्तिरित्यत आह - **सङ्ख्यादयस्तु सामान्यगुणा** इति । तथा चैकत्वे वैजात्याभावात् सकलैकत्वसाधारणमेकत्वत्वं यद्रूपपदेनोपादेयम् तदवच्छिन्नाधिकरणं जलं पृथिवी च तद्वृत्ति जलत्वपृथिवीत्वरूपोपाधिद्वयम् । अतस्तद्भिन्ना एकत्वत्वभिन्ना एकत्वत्वजातिः न भवतीति नैकत्वेऽतिव्याप्तिरित्याशयः । **तादृशजातिमद्भिन्नगुणत्वमि**ति । द्रव्यविभाजकोपाधिद्वयसमानाधिकरणावृत्तिजातिमद्भिन्नगुणत्वमित्यर्थः ।



## तर्कसङ्ग्रहः

### कर्मनिरूपणम्

चलनात्मकं कर्म । ऊर्ध्वदेशसंयोगहेतुः उत्क्षेपणम् । अधोदेशसंयोगहेतुः अपक्षेपणम् । शरीरसन्निकृष्टसंयोगहेतुः आकुञ्चनम् । शरीरविप्रकृष्टसंयोगहेतुः प्रसारणम् । अन्यत्सर्वं गमनम् ।

### सामान्यनिरूपणम्

नित्यमेकं अनेकानुगतं सामान्यम् । द्रव्यगुणकर्मवृत्ति । परं सत्ता । अपरं द्रव्यत्वादि ।

### विशेषनिरूपणम्

नित्यद्रव्यवृत्तयो व्यावर्तका विशेषाः ।

## दीपिका

कर्मणो लक्षणमाह - **चलनेति** । उत्क्षेपणादीनां कार्यभेदमाह - **ऊर्ध्वेति** । **शरीरेति** । वक्रतासंपादकं आकुञ्चनम् । ऋजुतासम्पादकं प्रसारणमित्यर्थः ।

सामान्यं लक्षयति - **नित्यमिति** । संयोगेऽतिव्याप्तिवारणाय नित्यमिति । जलपरमाणुगतरूपेऽतिव्याप्तिवारणाय एकेति । परमाणु-

परिमाणादावतिव्याप्तिवारणाय अनेकेति अनुगतत्वं समवेतत्वम् तेन नाभावादौ अतिव्याप्तिः ।

विशेषं लक्षयति - **नित्येति** ।

**प्रकाशिका**

मूलोक्तं सर्वसङ्ग्राहकं न भवतीत्याह - **चक्रेति** ।

**नित्यमितीति** । अत्र नित्यत्वं प्रागभावाप्रतियोगित्वं ध्वंसाप्रतियोगित्वं वा, एकतरनिवेशेनापि संयोगादेर्वारणात् । एकपदं स्वरूपकीर्तनमात्रपरमिति द्रष्टव्यम् ।

**मूले व्यावर्तका** इति । नित्यद्रव्याणां परस्पर भेदसाधका इत्यर्थः अथ विशेषपदार्थे किं प्रमाणम् । न च अत्यन्तसङ्कीर्णानां परमाणूनां भेदकधर्मं विना भेदासिद्धिरतः विशेषा अङ्गीकर्तव्या इति वाच्यम्, एकत्वादिव्यक्तेरेव भेदकत्वसंभवात् इति चेत् - न । यतः एतत्परमाणौ तत्परमाणुभेदसाधने एकत्वादेः व्यभिचारितया एतदेकत्वादेरेव हेतुता वाच्या । न च तयोः परमाण्वोः भेदासिद्धौ एकत्वादौ एतत्वं सुग्रहम् । एतत्परमाणुसमवेतत्वं हि तस्यैतत्वम् । तस्मात् प्रतिनित्यद्रव्यमेष्टव्यो विशेषपदार्थः । स एव स्वसजातीयानां परस्परं भेदसाधक इति तत्रापि विशेषान्तरापेक्षा नास्ति । अतो नानवस्था इति सम्प्रदायः ।

**बालप्रिया**

ननु नित्यद्रव्यवृत्तयः व्यावर्तकाः विशेषाः इति परममूलात् नित्यद्रव्यवृत्तित्वे सति भेदसाधकत्वं विशेषस्य लक्षणमिति लभ्यते । तथा च सति गगनपरिमाणादीनामपि नित्यद्रव्यवृत्तित्वात् इतरभेदसाधकत्वाच्च तत्रातिव्याप्तिः इत्यतो व्याचष्टे - **नित्यद्रव्याणां परस्पर भेदसाधका इत्यर्थ** इति । **अत्यन्तसङ्कीर्णानामिति** । अत्यन्तं मिश्रितानामित्यर्थः । **एकत्वादिव्यक्तेरेवेति** । अयं परमाणुः तत्परमाणोः भिद्यते एकत्वात् इत्यनुमानमत्र विवक्षितम् । **यत एतत्परमाणाविति** । तत्परमाणुभेदरूपसाध्याभाववति तत्परमाणावप्येकत्वरूपहेतुसत्वाद् व्यभिचारः,

तद्वारणाय एतदेकत्वादिति हेतुः प्रयोक्तव्यः । एतदेकत्वं नाम एतत्परमाणुमात्रसमवेतमेकत्वम् । एकत्वे एतत्परमाणुमात्रसमवेतत्वं च एतत्परमाणुभिन्नासमवेतत्वे सति एतत्परमाणुसमवेतत्वरूपं एतत्परमाणौ तत्परमाण्वपेक्षया भेदेऽज्ञाते दुर्ग्रहम् । तथा च हेतुज्ञानाभावात् नानुमितिः । पूर्वमेव भेदे ज्ञाते चानुमानवैयर्थ्यम् । अनुमानस्य भेदसिद्ध्यर्थत्वादिति भावः । ननु एतत्परमाणुः तत्परमाणोः भिन्नः एतद्विशेषात् इति हेतुना परमाणुभेदस्साधनीयः । तत्र एतत्परमाणुगतविशेषे परमाण्वन्तरगतात् विशेषात् भेदसिद्धिं विना एतद्विशेषस्य परमाण्वन्तरभेदसाधकत्वं न भवति । तदर्थं विशेषे विशेषान्तरस्वीकारे अनवस्थेत्यत आह - **स एव स्वसजातीयानामिति** । विशेषः यथा परमाणूनां भेदं साधयति तथा सजातीयविशेषान्तरभेदमपि साधयति, स्वपरनिर्वाहकत्वाङ्गीकारात्, अतो नानवस्थेति भावः ।



## तर्कसङ्ग्रहः

**समवायनिरूपणम्**

> नित्यसम्बन्धः समवायः । अयुतसिद्धवृत्तिः । ययोर्मध्ये एकमविनश्यदवस्थं अपराश्रितमेवावतिष्ठते तौ अयुतसिद्धौ । यथा अवयवावयविनौ, गुणगुणिनौ, क्रियाक्रियावन्तौ, जातिव्यक्ती, विशेषनित्यद्रव्ये चेति ।

## दीपिका

समवायं लक्षयति - **नित्येति** । संयोगे अतिव्याप्तिवारणाय नित्येति । आकाशादावतिव्याप्तिवारणाय सम्बन्धेति । अयुतसिद्धलक्षणमाह - **ययोरिति** । नीलो घट इति विशिष्टप्रतीतिर्विशेषणविशेष्यसम्बन्धविषया, विशिष्टबुद्धित्वात्, दण्डीति विशिष्टबुद्धिवत् इति समवायसिद्धिः । **अवयवावयविनाविति** । द्रव्यसमवायिकारणमवयवः, तज्जन्यं द्रव्यं अवयवि ।

## प्रकाशिका

वैशेषिकमतसाधारण्येन समवाये अनुमानं प्रमाणयति - **नील** इति। समवायिकारणत्वस्य अन्त्यावयविनि सत्त्वात् **द्रव्ये**ति । परमाणुवारणाय **जन्ये**ति । अविनश्यदवस्थमपराश्रितमेवावतिष्ठते विनश्यदवस्थं त्वनाश्रितं क्षणमवतिष्ठते यथा तन्त्वादिनाशे पटादिरिति मनसिकृत्य मूले अविनश्यदित्युक्तम् ।

## बालप्रिया

'द्रव्यसमवायिकारणम् अवयवः' इति दीपिकातः द्रव्यनिरूपितसमवायिकारणत्वं अवयवस्य लक्षणमिति लभ्यते । घटरूपद्रव्यसमवायिकारणत्वस्य कपाले सत्त्वात् लक्षणसमन्वयः । तत्र समवायिकारणत्वमात्रोक्तौ अवयविनि घटेऽपि तत्समवेतरूपादिसमवायिकारणत्वसत्त्वात् तत्रातिव्याप्तिः । तद्वारणाय समवायिकारणत्वे द्रव्यनिरूपितेति विशेषणम् । अवयविनः घटस्य गुणादिनिरूपितसमवायिकारणत्वसत्त्वेऽपि द्रव्यनिरूपितसमवायिकारणत्वाभावात् नातिव्याप्तिः । तदाह - **समवायिकारणत्वस्ये**ति । कपालरूपेऽवयविनि अवयवत्वस्येष्टतया तत्रातिव्याप्तिर्नेति सूचनाय अन्त्यावयविनीत्युक्तम् । जन्यं द्रव्यमवयवीति ग्रन्थेन जन्यत्वे सति द्रव्यत्वम् अवयविनो लक्षणमुक्तम् । तत्र जन्यत्वमात्रोक्तौ जन्यगुणदावतिव्याप्तिः । तद्वारणाय द्रव्यत्वमुपात्तम् । द्रव्यत्वमात्रोक्तौ अवयवे परमाणावतिव्याप्तिः । तद्वारणाय जन्यत्वमुपात्तम् । तदाह - **परमाणुवारणाये**ति । परममूले 'ययोर्मध्ये एकमविनश्यदवस्थमपराश्रितमेवावतिष्ठते तावयुतसिद्धौ'' इति ग्रन्थेन अयुतसिद्धयोर्लक्षणमुक्तम् । ययोर्मध्ये तन्तुपटयोर्मध्ये एकः पटः तन्त्वाश्रित एवावतिष्ठते इति तौ तन्तुपटावयुतसिद्धौ । तत्र विनश्यदवस्थ इत्यस्य नाशपूर्वक्षणस्थ इत्यर्थः । अविनश्यदवस्थ इत्यस्य नाशाव्यवहितपूर्वक्षणात् पूर्वक्षणेषु विद्यमान इत्यर्थः । स्वाव्यवहितपूर्वक्षणवृत्तित्व-स्वप्रतियोगित्वोभयसम्बन्धेन नाशविशिष्टत्वं विनश्यदवस्थत्वमिति यावत् । तत्र अविनश्यदवस्थमिति विशेषणस्य प्रयो-

जनमाह् - **अविनश्यदवस्थमि**त्यादिना । अयमत्राशयः-यदि एकमित्यस्य अविनश्यदवस्थमिति विशेषणं न दीयते, तर्हि ययोर्मध्ये एकमपराश्रितमेवावतिष्ठते तावयुतसिद्धाविति अयुतसिद्धलक्षणं स्यात् । तथा सति तन्तुपटयोरव्याप्तिः । तन्तुपटयोर्मध्ये एकस्य पटस्य तन्त्वाश्रिततयैवावस्थानमिति नियमाभावात् , यदा तन्तुनाशात् पटनाशः तदा तन्तुनाशक्षणे पटस्य तन्त्वनाश्रितस्यैवावस्थानात् । अतः पटस्य अविनश्यदवस्थेति विशेषणम् । तन्तुनाशक्षणस्थः पटः विनश्यदवस्थः, उत्तरक्षणे पटस्य नाशात् , नाशाव्यवहितपूर्वक्षणस्थत्वरूपविनश्यदवस्थलक्षणाक्रान्तत्वात् । अतः अविनश्यदवस्थः पटः तन्तुनाशपूर्वक्षणावच्छिन्नपटः तस्य तु तन्त्वाश्रिततयैवावस्थानात् नाव्याप्तिरिति । **तन्त्वादिनाश** इति । तन्त्वादिनाशक्षणे इत्यर्थः ।



## तर्कसङ्ग्रहः

### अभावनिरूपणम्

अनादिः सान्तः प्रागभावः । उत्पत्तेः पूर्वं कार्यस्य । सादिरनन्तः प्रध्वंसाभावः । उत्पत्तेरनन्तरं कार्यस्य । त्रैकालिकः संसर्गावच्छिन्नाभावः अत्यन्ताभावः । यथा भूतले घटो नास्ति इति । तादात्म्यावच्छिन्नप्रतियोगिताकाभावोऽन्योन्याभावः । यथा घटः पटो न भवतीति ।

## दीपिका

प्रागभावं लक्षयति - **अनादिरि**ति । आकाशादौ अतिव्याप्तिवारणाय सान्त इति । घटादौ अतिव्याप्तिवारणाय अनादिरिति । प्रतियोगिसमवायिकारणवृत्तिः प्रतियोगिजनको भविष्यतीति व्यवहारहेतुः प्रागभावः । ध्वंसं लक्षयति-**सादिरि**ति । घटादौ अतिव्याप्तिवारणाण अनन्त इति । आकाशादौ अतिव्याप्तिवारणाय सादिरिति । प्रतियोगिजन्यः प्रतियोगिसमवायिकारणवृत्तिः ध्वस्त इति व्यवहार-

हेतुः ध्वंसः । अत्यन्ताभावं लक्षयति - **त्रैकालिकेति** । अन्योन्याभावे अतिव्याप्तिवारणाय संसर्गेति । ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिक इति । अन्योन्याभावं लक्षयति - **तादात्म्येति** । प्रतियोगितावच्छेदकारोप्यसंसर्गभेदादेकप्रतियोगिकयोरत्यन्तान्योन्याभावयोर्भिन्नत्वम् । केवलदेवदत्ताभावात् 'दण्डयभाव' इति प्रतीत्या विशिष्टाभावः, 'एकसत्त्वेपि द्वौ न स्तः' इति प्रतीत्या द्वित्वावच्छिन्नाभावः, संयोगेन घटवति समवायेन घटाभावः, तत्तद्घटाभावात् घटत्वावच्छिन्नप्रतियोगिताकसामान्याभावश्च अतिरिक्तः । एवमन्योन्याभावोऽपि ।

## प्रकाशिका

प्रागभावे प्रमाणमाह - **भविष्यतीति** । **संसर्गेति** । तादात्म्यातिरिक्तसंसर्गेत्यर्थः । ध्वंसप्रागभावयोरपि प्रतियोगितावच्छेदकसम्बन्धः वर्तत इति मताभिप्रायेण त्रैकालिकेति विशेषणम् । अन्यथा अन्योन्याभाववारकेणैव तयोर्वारणात् तद्व्यर्थतापत्तेः । यदि संसर्गावच्छिन्नेत्यादेः अन्योन्याभावभिन्नाभाव इत्यर्थः तदा त्रैकालिकेति सिद्धान्तेऽपि सार्थकं त्रैकालिकत्वमिह नित्यत्वरूपम् ।

**मूले भूतले घटो नास्तीति** । अत्र घटाभावांशे भूतलस्य विशेष्यत्वं सम्बन्धः, घटाभाववत् भूतलम् इत्यत्र तु भूतलांशे अभावस्य विशेषणत्वं संसर्ग इति वदतां प्राचां अयमभिप्रायः - विशेष्यत्वविशेषणत्वे स्वरूपसम्बन्धविशेषौ न ज्ञानीयविषयताविशेषौ । न च विशेषणताख्यः स्वरूपसम्बन्ध एक एव अस्तु, 'भूतले घटो नास्ति' इति प्रतीतौ 'भूतलं घटाभाववत्' इति प्रतीतितो वैलक्षण्यस्य विशेषणत्वावच्छिन्नाधेयताविषयकत्वकल्पनेनैव निर्वाहादिति वाच्यम् । तादृशप्रतीत्योः वैलक्षण्याय प्रथमायां विशेषणत्वावच्छिन्नाधेयता सन्निकर्षः, द्वितीयायां विशेषणता संसर्गः इत्युपेयते; किं वा प्रथमायां विशेषणता संसर्गः, द्वितीयायां विशेषणत्वावच्छिन्नाधारता इत्यत्र विनिगमकस्य

दुर्लभत्वात् । न च तादृशप्रतीत्योः संसर्गांशेऽविलक्षणत्वेऽपि विशेषण-विशेष्यभावभेदात् वैलक्षण्योपपत्तिः इत्युभयत्र विशेषणताया एव सम्बन्धतास्त्विति वाच्यम् । तावतापि 'भूतले घटो नास्ति' 'भूतल-वान् घटाभावः' इत्यनयोः 'भूतलं घटाभाववत्' 'घटाभावे भूतलम्' इत्यनयोश्च प्रतीत्योः वैलक्षण्यानिर्वाहात् । तस्मात् विशेष्यत्व-विशेषणत्वनामकयोः उभयोः स्वरूपसम्बन्धविशेषयोः संसर्गता । तथा च 'भूतलवान् घटाभावः' इत्यत्र घटाभावांशे भूतलस्य विशेषणत्वं संसर्गः, घटाभावे भूतलम् इत्यत्र च भूतलांशेऽभावस्य विशेष्यता-संसर्गः भासते । स च तत्र अबाधित इति अभ्रमत्वनिर्वाह इति सङ्क्षेपः ।

ध्वंसप्रागभावयोरिव एकप्रतियोगिकयोः अत्यन्ताभावान्यो-न्याभावयोः किम् एकविधत्वं, नेत्याह - **प्रतियोगितेति** । **आरोप्येति** । प्राचीनमताभिप्रायेण । अत्र यथायोगं प्रतियोगितावच्छेदकधर्मभेदइव संसर्गभेदोऽप्यत्यन्ताभावबहुत्वप्रयोजकः । प्रतियोगितावच्छेदकधर्मभेदः अन्योन्याभावबहुत्वप्रयोजक इति द्रष्टव्यम् । तदेत्र दर्शयति - **केवलेति** । केवलदेवदत्ताभावात् विशिष्टाभावोऽतिरिक्त इत्यन्वयः । अन्यथा केवलदेवदत्तवति 'दण्डी नास्ति' इति प्रत्ययानापत्तेः । उभया-भावस्यातिरिक्तत्वे प्रतीतिं प्रमाणयति - **एकसत्त्वेऽपीति** । घटपटौ द्वौ न स्त इत्यादौ घटत्वं पटत्वं उभयत्वं चैतत्त्रितयं प्रतियोगितावच्छे-दकम्, केवलघटवति केवलपटवति यत्किंचिदुभयवति च तथा प्रत्ययात् । सम्बन्धभेदेनाभावस्यातिरिक्तत्वं दर्शयति - **संयोगेनेति** । सामान्यविशेषाभावयोः भेदं दर्शयति - **तत्तदिति** । **अतिरिक्त इति** । अन्यथा यत्किंचित् घटवति घटो नास्तीति प्रत्ययापत्तेः । **एवमन्योन्या-भावोऽपीति** । अवच्छेदकभेदात् तत्तद्घटभेदः ततः उभयभेदः घटभेदश्च अतिरिक्त इत्यर्थः ।

**बालप्रिया**

'त्रैकालिकः संसर्गाभावः अत्यन्ताभावः' इति मूलम्। संसर्गाभाव इत्यस्य संसर्गावच्छिन्नप्रतियोगिताकाभाव इत्यर्थः। तत्र त्रैकालिकत्वमात्रोक्तौ अन्योन्याभावेऽतिव्याप्तिः, तस्यापि नित्यत्वात्। तद्वारणाय संसर्गावच्छिन्नप्रतियोगिताक इत्युक्तम्। न च संसर्गावच्छिन्नप्रतियोगिताकत्वनिवेशेऽपि अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वात् अतिव्याप्तितादवस्थ्यमिति वाच्यम्। संसर्गाभाव इत्यनेन तादात्म्यातिरिक्तसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वात्। तदाह - **तादात्म्यातिरिक्तसंसर्गेत्यर्थ** इति। संसर्गाभावत्वमात्रोक्तौ ध्वंसप्रागभावयोरतिव्याप्तिः, तद्वारणाय त्रैकालिक इति। ननु समवायेन घटाधिकरणे संयोगेन घटो नास्ति, संयोगेन घटाधिकरणे समवायेन घटो नास्ति इति प्रतीत्युपपत्तये संयोगसम्बन्धावच्छिन्नघटाभाव- समवायसम्बन्धावच्छिन्नघटाभावयोर्भेदो वक्तव्यः। तदर्थं चात्यन्ताभावीयप्रतियोगितायां सम्बन्धावच्छिन्नत्वं अङ्गीक्रियते। ध्वंसप्रागभावयोस्तु तादृशयुक्त्यसम्भवेन तयोः संसर्गावच्छिन्नप्रतियोगिताकत्वं अप्रामाणिकम्। तथा च संसर्गाभाव इत्यनेनैव ध्वंसप्रागभावयोर्वारणसम्भवात् त्रैकालिकेति विशेषणं व्यर्थं इत्यत आह - **ध्वंसप्रागभावयोर**पीति। ध्वंसप्रागभावयो अत्यन्ताभावविरोधितामते'श्यामघटे समवायेन रक्तो नास्ति' 'रक्तघटे समवायेन श्यामो नास्ति' इति प्रतीतौ प्रागभावध्वंसयोरेव विषयतया तयोरपि समवायसम्बन्धावच्छिन्नप्रतियोगिताकत्वमस्तीति तन्मतानुसारेण ध्वंसप्रागभावयोरतिव्याप्तिवारणाय त्रैकालिकेति विशेषणमिति भावः। **अन्यथे**ति। ध्वंसप्रागभावयोः सम्बन्धावच्छिन्नप्रतियोगिताकत्वानङ्गीकार इत्यर्थः। **अन्योन्याभाववारकेणै**वेति। अन्योन्याभावेऽतिव्याप्तिवारणाय उपात्तेन तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकत्वविशेषणेनैवेत्यर्थः। **तयोर्वारणात्** - ध्वंसप्रागभावयोरतिव्याप्तिवारणसम्भवात्। तद्व्यर्थतापत्तेः - त्रैकालिकेति विशेषण-

वैयर्थ्यापत्तेः । **यदीति** । तथा च संसर्गाभाव इत्यस्य अन्योन्याभाव-भिन्नाभाव इत्यर्थः । ध्वंसप्रागभावयोरपि अन्योन्याभावाभिन्नाभावत्व-मस्तीति तत्रातिव्याप्तिवारणाय त्रैकालिकेति विशेषणमिति भावः । अनित्यपदार्थेष्वपि पूर्वदिनश्वोदिनाद्यदिनाख्यभूतभविष्यद्वर्तमानरूप-कालत्रयवृत्तित्वसम्भवात् त्रैकालिकेति विशेषणे दत्तेऽपि ध्वंसप्राग-भावयोः अतिव्याप्तिः तदवस्थेत्यत आह - **त्रैकालिकत्वमिह नित्यत्वरूप-मिति** । नित्यत्वं च ध्वंसाप्रतियोगित्वे सति प्रागभावाप्रतियोगित्वम् । ध्वंसाप्रतियोगित्वनिवेशात् प्रागभावनिरासः । प्रागभावाप्रतियोगित्व-निवेशात् ध्वंसनिरासः ।

ननु भूतले घटो नास्ति इत्यत्र घटाभावांशे भूतलस्य विशेष्यत्वं संम्बन्धः, भूतलं घटाभाववत् इत्यत्र भूतलांशे घटाभावस्य विशेषणत्वं सम्बन्धः इति प्राचीनैरुक्तं न सङ्गच्छते । भूतलं घटा-भाववत् इति प्रतीतौ भूतलस्य विशेष्यतया घटाभावस्य विशेषणतया च भानात् भूतलांशे घटाभावस्य विशेषणत्वं सम्बन्ध इत्युक्तेः सङ्गतत्वेऽपि भूतले घटो नास्ति इति प्रतीतौ घटाभावस्य विशेष्यतया भूतलस्य च प्रकारतया भानेन भूतलस्य विशेष्यत्वाभावेन भूतलस्य विशेष्यत्वं सम्बन्ध इत्युक्तेरसङ्गतत्वात् । तथा बाधितविशेष्यत्वरूप-संसर्गावगाहितया तादृशप्रतीतेः भ्रमत्वापत्तिः इत्यतः प्राचीनानामाशयं वक्तुं आरभते - **तत्र घटाभावांश** इत्यादिना ।

**विशेष्यत्वविशेषणत्वे स्वरूपसम्बन्धविशेषाविति** । यथा दण्डविशिष्टः पुरुष इत्यत्र दण्डनिरूपितं विशेष्यत्वं पुरुषगतं दण्डविशिष्टत्वात्मकं दण्ड-व्यावर्त्यत्वरूपं वा आधारपुरुषस्वरूपं तथा भूतलनिष्ठं घटाभावनिरूपितं विशेष्यत्वमपि घटाभावविशिष्टत्वात्मकं आधारभूतलस्वरूपम्, यथा वा दण्डनिष्ठं विशेषणत्वं आधेयदण्डस्वरूपम् तथा घटाभावनिष्ठं विशे-षणत्वमपि घटाभावस्वरूपम् । सम्बन्धतयोच्यमानं विशेष्यत्वं विशेष_णत्वं च न ज्ञानीयविशेष्यताप्रकारताख्यविषयताविशेषरूपम्, किं तु

स्वरूपसम्बन्धात्मकम् । तथा च 'भूतले घटो नास्ति' इत्यत्र विशेष्यतारूपविषयतायाः भूतलेऽभावेऽपि स्वरूपसम्बन्धात्मकविशेष्यत्वसत्त्वात् तेन सम्बन्धेन घटाभावांशे भूतलस्य प्रकारतया भानात् प्रतीतेः प्रमात्वमेवेति भावः । **न च विशेषणताख्य** इति । तथा च भूतलघटाभावयोः विशेषणत्वमिति एक एव सम्बन्धः । न च एकस्यैव सम्बन्धस्य द्वयोरपि प्रतीत्योर्विषयत्वे तयोर्वैलक्षण्यं कथमिति वाच्यम् । सम्बन्धैक्येऽपि 'भूतले घटो नास्ति' इति प्रतीतौ विशेषणतासम्बन्धावच्छिन्नाधेयत्वं विषयः,'भूतलं घटाभाववत्' इति प्रतीतौ विशेषणत्वं विषय इत्येवं प्रतीत्योः वैलक्षण्यस्य वक्तुं शक्यत्वादिति शङ्कितुः आशयः । समाधत्ते - **तादृशप्रतीत्योरिति । प्रथमायामिति ।** 'भूतले घटो नास्ति' इति प्रतीतावित्यर्थः । **द्वितीयायामिति** । 'भूतलं घटाभाववत्' इति प्रतीतावित्यर्थः ।

पुनः शङ्कते - **न च तादृशप्रतीत्योरिति** । तथा चोभयत्रापि प्रतीत्योः विशेषणत्वनामकः एक एव सम्बन्धः विषयः । तथापि'भूतले घटो नास्ति' इति प्रतीतौ विशेष्यताख्यविषयता घटाभावनिष्ठा विशेषणताख्यविषयता भूतलनिष्ठा । 'भूतलं घटाभाववत्' इति प्रतीतौ विशेष्यताख्यविषयता भूतलनिष्ठा विशेषणताख्यविषयता घटाभावनिष्ठा इत्येवं विषयतावैलक्षण्यादेव तादृप्रतीत्योर्वैलक्षण्यं न सम्बन्धवैलक्षण्यादिति शङ्कितुरभिप्रायः । **विशेषणविशेष्यभावभेदादिति** । विशेषणता-विशेष्यताख्यविषयतावैलक्षण्यादित्यर्थः ।

समाधत्ते - **तावतापीति** । 'भूतले घटो नास्ति' इति प्रतीतौ घटाभावे विशेष्यताख्यविषयता भूतले विशेषणताख्यविषयता, 'भूतलवान् घटभावः' इत्यत्रापि तथैवेति विषयतावैलक्षण्याभावात् तयोः वैलक्षण्यं न स्यात् । एवं 'भूतलं घटाभाववत्' इति प्रतीतौ भूतलनिष्ठा विशेष्यताख्यविषयता, घटाभावनिष्ठा विशेषणताख्यविषयता, 'घटाभावे भूतलम्' इति प्रतीतावपि तथैवेति विषयता-

वैलक्षण्याभावात् तयोः वैलक्षण्यं दुरुपपादमिति भावः । एवं च स्वरूपात्मकविशेषणताख्यमेकमेव सम्बन्धमङ्गीकृत्य विषयतावैलक्षण्यात् प्रतीतिवैलक्षण्यस्य दुरुपपादत्वात् विशेषणत्वं विशेष्यत्वं चेति स्वरूपात्मकसम्बन्धद्वयमङ्गीकृत्य सम्बन्धवैलक्षण्यादेव प्रतीतिवैलक्षण्य निर्वोढव्यमिति वदन् उपक्रान्तं प्रतीतेरभ्रमत्वमुपसंहरति - **तस्मादिति**। तथा च 'भूतले घटो नास्ति' इत्यत्र घटाभावे भूतलस्य विशेष्यत्वं संसर्गः, 'भूतलवान् घटाभावः' इत्यत्र घटाभावे भूतलस्य विशेषणत्वं सम्बन्ध इत्यनयोर्वैलक्षण्यम् । 'भूतलं घटाभाववत्' इत्यत्र भूतलांशे घटाभावस्य विशेषणत्वं संसर्गः । 'घटाभावे भूतलम्' इत्यत्र भूतलांशे घटाभावस्य विशेष्यत्वं सम्बन्ध इति तयोः वैलक्षण्यमिति भावः ।

नन्वेवमपि 'घटाभावे भूतलम्', 'भूतले घटो नास्ति' इत्यनयोः विशेष्यताविषयकत्वात् वैलक्षण्यं न स्यात् । एवं 'भूतलवान् घटाभावः', 'भूतलं घटाभाववत्' इत्यनयोः वैलक्षण्यं न स्यात्, उभयत्र विशेषणतारूपसम्बन्धस्यैव विषयत्वादित्यत आह - **सङ्क्षेप इति**। विषयताविशेषात्मकविशेष्यविशेषणभाववैलक्षण्यसहकृतस्वरूपसम्बन्धात्मकविशेष्यविशेषणभाववैलक्षण्येन प्रतीतीनां वैलक्षण्यमुपपादनीयम् । ययोः प्रतीत्योः विषयतावैलक्षण्यं नास्ति तयोः सम्बन्धवैलक्षण्यमस्ति । ययोः सम्बन्धवैलक्षण्यं नास्ति, तयोः विषयतावैलक्षण्यमस्ति इत्येवं प्रतीतीनां वैलक्षण्यम् । तत्तत्सम्बन्धस्याबाधितत्वात् प्रमात्वं चोपपद्यत इति भावः ।

**अस्य सन्दर्भस्य बहुवारमालोडने कृतेऽपि तात्पर्याज्ञानात् आचार्यचरणान् अपृच्छम् । तेऽपि बहुधा आलोच्य प्रकाशिकायामीषत् शोधनं कृत्वा तात्पर्यमवर्णयन् । तथैवाहमत्रालिखम् ।**

प्रतियोगितावच्छेदकधर्मभेदात् प्रतियोगितावच्छेदकसम्बन्धभेदाच्च एकप्रतियोगिकोऽप्यत्यन्ताभावः भिद्यते । एवं प्रतियोगितावच्छे-

दकधर्मभेदात् एकप्रतियोगिकोऽप्यन्योन्याभावः भिद्यत इति सोदाहरणं दीपिकायां निरूप्यते । ध्वंसप्रागभावयोस्तु तथा भेदो न निरूपितः, तत्र कारणमाह - **ध्वंसप्रागभावयो**रिति । अयं भावः - ध्वंसप्रागभावयोः सम्बन्धावच्छिन्नप्रतियोगिताकत्वं वा किंचिद्धर्मावच्छिन्नप्रतियोगिताकत्वं वा नाङ्गीक्रियते । अतः एकप्रतियोगिकानां ध्वंसानां एकप्रतियोगिकानां प्रागभावानां चैकविधत्वमेव । अत्यन्तान्योन्याभावयोस्तु तदङ्गीकारात् एकप्रतियोगिकानामत्यन्ताभावानां भिन्नभिन्नधर्मसम्बन्धावच्छिन्नप्रतियोगिताकत्वे प्रतियोगितावच्छेदकधर्मभेदात् प्रतियोगितावच्छेदकसम्बन्धभेदाच्च भिन्नत्वमेव । एकप्रतियोगिकानां अन्योन्याभावानां यद्यपि सम्बन्धभेदात् भेदो वक्तुमशक्यः, तादात्म्यस्यैव प्रतियोगितावच्छेदकसम्बन्धत्वात् । तथापि प्रतियोगितावच्छेदकधर्मभेदात् भेदो वक्तुं शक्यत इति भावः ।

**आरोप्येति प्राचीनमताभिप्रायेणे**ति । संसर्गारोपजन्य प्रतीतिविषयोऽभावः अत्यन्ताभावः । संसर्गारोपो नाम तादात्म्यातिरिक्तसम्बन्धेन प्रतियोग्यारोप इति प्रचीना आहुः । तथा चात्यन्ताभावबुद्धिजनकारोपविषयसंयोगसमवायादिसम्बन्धभेदात् अत्यन्ताभावभेद इति आरोप्यसंसर्गभेदादिति दीपिकाया अर्थ इति भावः ।

नवीनास्तु- प्रतियोग्यारोपस्याभावबुद्धिहेतुतायाः निर्युक्तिकत्वात् तादात्म्यातिरिक्तसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वमेव संसर्गाभावत्वम्, त्रैकालिकत्वविशेषितं तदेवात्यन्ताभावत्वमित्याहुः । तन्मतानुसारेण तु प्रतियोगितावच्छेदकसम्बन्धभेदादत्यन्ताभावभेद इत्यूह्यम् ।

**प्रतियोगितावच्छेदकधर्मभेद** इति । तादात्म्यरूपस्य प्रतियोगितावच्छेदकसम्बन्धस्य एकविधत्वात् प्रतियोगितावच्छेदकसम्बन्धभेदः नान्योन्याभावभेदप्रयोजकतया उक्त इत्यवधेयम् । **केवलदेवदत्ताभावा**दिति । देवदत्ताभावस्य दण्डविशिष्टदेवदत्ताभावस्य च यद्यपि देवदत्त

एक एव प्रतियोगी, तथापि एकत्र देवदत्तत्वं प्रतियोगितावच्छेदकम्, अन्यत्र दण्ड इति प्रतियोगितावच्छेदकधर्मभेदात् देवदत्ताभाव-दण्डच-भावयोर्भेदः। यदि तु तयोर्भेदो नाङ्गीक्रियते तर्हि केवलदेवदत्तवति भूतले देवदत्तो नास्ति इति प्रतीतिः यथा न भवति, तथा दण्डी नास्तीति प्रतीतिरपि न भवेत्। भवति तु तादृशी प्रतीतिः। अतः केवलदेवदत्ताभावात् दण्डविशिष्टदेवदत्ताभावोऽतिरिक्त इति भावः।

**घटपटौ द्वौ न स्त** इति। केवलघटवति वा केवलपटवति वा प्रदेशे 'घटपटौ द्वौ न स्तः' इति प्रतीतिः भवति, 'घटो नास्ति' इति वा 'पटो नास्ति' इति वा प्रतीतिः न भवति। अतः केवलघटाभावात् केवलपटाभावाच्च अतिरिक्ततया घटपटोभयाभावः स्वीकर्तव्यः। 'घटपटौ न स्त' इत्यत्र घटत्वमात्रं वा पटत्वमात्रं वा उभयत्वमात्रं वा न प्रतियोगितावच्छेदकम्, प्रतियोगितावच्छेदकविशिष्ट-प्रतियोगिना साकमभावस्य विरोधात् घटमात्रवति भूतले प्रतियोगितावच्छेदकघटत्वविशिष्टघटरूपविरोधिसत्त्वेन 'घटपटौ न स्तः' इत्याकारकोभयाभावावगाहिप्रतीत्यनुपपत्तेः। तथा केवलपटवति घटपटातिरिक्तयत्किञ्चिदुभयवति च प्रदेशे पटत्वविशिष्टस्य उभयत्वविशिष्टस्य च विरोधिनः सत्त्वेन तादृशप्रतीतिः न स्यात्। अतः घटत्वं पटत्वं उभयत्वं चेति त्रितयं प्रतियोगितावच्छेदकम्। प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नप्रतियोगिना साकमभावस्य विरोध इति तादृशत्रितयावच्छिन्न-घटपटोभयमेव घटपटोभयाभावस्य विरोधीति घटपटोभयवत्येव प्रदेशे 'घटपटौ न स्त' इति प्रतीतिर्न भवति, केवलघटादिमति तु भवितुमर्हतीति भावः।

**संयोगेनेती**ति। तथा च संयोगसम्बन्धावच्छिन्नघटाभावात् समवायसम्बन्धावच्छिन्नघटाभावोऽन्य इति स्वीकरणीयम्। अन्यथा संयोगेन घटवति भूतले संयोगेन घटो नास्तीति प्रतीतिः यथा न भवति तथा समवायेन घटो नास्तीति प्रतीतिरपि न स्यात्। एवं तत्रैव

समवायेन घटो नास्तीति प्रतीतिः यथा भवति तथा संयोगेन घटो नास्तीति प्रतीतिरपि स्यादिति भावः।

**सामान्यविशेषाभावयोरि**ति। सामान्याभावविशेषाभावयोरित्यर्थः। सामान्यधर्मावच्छिन्नप्रतियोगिताकाभावः सामान्याभावः। विशेषधर्मावच्छिन्नप्रतियोगिताकाभावः विशेषाभावः। 'घटो नास्ति' इति प्रतीतिसिद्धः घटत्वावच्छिन्नप्रतियोगिताकाभावः सामान्याभावः। 'नीलघटो नास्ति', 'रक्तघटो नास्ति' इत्यादिप्रतीतिसिद्धः नीलघटत्वाद्यवच्छिन्नप्रतियोगिताकाभावः विशेषाभावः। यदि सामान्याभावो नातिरिक्तः तदा नीलघटवति भूतले रक्तघटाभावस्य सत्त्वात् रक्तघटाभावरूपस्य घटसामान्याभावस्यापि सत्त्वमावश्यकमिति 'घटो नास्ति' इति घटसामान्याभावावगाहिनी प्रतीतिः स्यात्। सामान्याभावस्यातिरिक्तत्वे तु नीलघटवति भूतले रक्तघटाभावस्य सत्त्वेऽपि घटसामान्याभावस्यासत्त्वात् न तादृशी प्रतीतिरिति वक्तुं शक्यते। अतः विशेषाभावातिरिक्तः सामान्याभावोऽङ्गीकरणीय इति भावः।

**अवच्छेदकभेदा**दिति। नीलघटभेदस्य नीलघटत्वं प्रतियोगितावच्छेदकम्, घटपटोभयभेदस्य घटपटोभयत्वं प्रतियोगितावच्छेदकम् घटभेदस्य घटत्वं प्रतियोगितावच्छेदकम् इत्येवं प्रतियोगितावच्छेदकधर्मभेदात् 'नायं नीलघटः' 'नेमौ घटपटौ' 'नायं घटः' इत्यादिप्रतीतिसिद्धानां नीलघटभेदघटपटोभयभेद-घटभेदादीनां भिन्नत्वं वक्तव्यमित्यर्थः।

## दीपिका

### व्यधिकरणधर्मावच्छिन्नाभावः

'घटत्वेन पटो नास्ति' इति प्रतीत्या व्यधिकरणधर्मावच्छिन्नाभावो नाङ्गीक्रियते। पटे घटत्वं नास्तीति तदर्थः। अतिरिक्तत्वे स केवलान्वयी।

## प्रकाशिका

प्रसङ्गादाह - **घटत्वेनेति** । **नाङ्गीक्रियत** इति । अभावधियः विशिष्टवैशिष्ट्यावगाहिमर्यादोपबृंहिततया 'घटत्वेन पटो नास्ति' इत्यादिप्रत्ययस्य विशिष्टवैशिष्ट्यानवगाहिनः घटत्वादेः प्रतियोगितावच्छेदकत्वव्यवस्थापकत्वाभावेन व्यधिकरणधर्मावच्छिन्नाभावे मानाभावादिति भावः । ननु तर्हि तादृशप्रत्ययस्य का गतिरिति अत आह- **पट इति** । ननु 'घटत्वेन पटो नास्ति' इति प्रतीतेः पटाधिकरणकघटत्वाभावावगाहित्वं न सम्भवति । असति बाधके तच्छब्दोल्लेखिप्रतीतेः तच्छब्दप्रतिपाद्यार्थविषयकत्वपरित्यागायोगात् पटाधिकरणकघटत्वाभावस्य 'घटत्वेन पटो नास्ति' इति शब्दात् कथमप्यप्रतीतेः । किन्तु अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेन अभावांशे स्वातन्त्र्येण घटत्वावगाहित्वमेव । 'अभावबुद्धिः विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते' इति नियमस्तु न । एवं च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः सप्रमाण इति चेत् - अस्तु तर्हि अतिरिक्तत्वं तस्येत्याह - **अतिरिक्तत्व इति** । **सः** - व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकः । **केवलान्वयीति** । प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिरूपविरोधिविरहादिति भावः ।

## बालप्रिया

ननु अभावानां अनेकविधत्वनिरूपणप्रसङ्गे व्यधिकरणधर्मावच्छिन्नाभावखण्डनं अयुक्तमित्यत आह - **प्रसङ्गादि**ति । स्मृतस्य उपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्येत्यर्थः । प्रतियोगितावच्छेदकधर्मसंबन्धभेदादिव प्रतियोगितावच्छेदकधर्मगतात् प्रतियोगितासामानाधिकरण्यतदसमानाधिकरण्यभेदादपि अभावभेदः भवति, तथैव व्यधिकरणसमानाधिकरणधर्मावच्छिन्नप्रतियोगिताकयोरभावयोर्भेदसिद्धेरित्याशङ्क्य व्यधिकरणधर्मावच्छिन्नाभाव एव नास्ति, कुतस्तदर्थं भेदकान्तरान्वेषणमित्याशयेन व्यधिकरणधर्मावच्छिन्नाभावखण्डनमपि सङ्गतमेव इति तु **नृसिंहशास्त्रिचरणाः** प्राहुः ।

**दीपिकायाम् घटत्वेन पटो नास्तीत्यादि** । घटत्वेन पटो नास्तीति प्रतीत्या सिद्ध्यतीत्युक्तः व्यधिकरणधर्मावच्छिन्नाभावो नास्माभिरङ्गीक्रियते । तादृशप्रतीतेः पटानुयोगिकघटत्वाभावविषयकत्वेन घटत्वावच्छिन्नपटनिष्ठप्रतियोगितानिरूपकाभावाविषयकत्वादित्यर्थः । अत्र सौन्दडोपाध्यायाः - अभावः द्विविधः - व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकः समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकश्चेति । प्रतियोगिताश्रयावृत्तिर्धर्मः व्यधिकरणधर्मः । प्रतियोगिताश्रयवृत्तिधर्मः समानाधिकरणधर्मः । 'घटत्वेन पटो नास्ति' इत्यत्र प्रतियोगिताश्रयः पटः तदवृत्तिर्धर्मः घटत्वं तदवच्छिन्ना या पटनिष्ठा प्रतियोगिता तन्निरूपकोऽभावः व्यधिकरणधर्मावच्छिन्नाभावः । 'घटो नास्ति' इत्यत्र प्रतियोगिताश्रयः घटः तद्वृत्तिधर्मः घटत्वम् तदवच्छिन्नघटनिष्ठप्रतियोगिताकोऽभावः समानाधिकरणधर्मावच्छिन्नाभावः इत्याहुः ।

तत्खण्डनप्रकारमाह **प्रकाशिकायाम् - अभावधिय** इति । अभावबुद्धिर्विशिष्टवैशिष्ट्यावगाहिमर्यादां नातिशेते' इति नियमात् अभावत्वप्रकारकबुद्धिः सर्वापि प्रतियोगितावच्छेदकविशिष्टप्रतियोगिवैशिष्ट्यमभावेऽवगाहत इति वक्तव्यम् । प्रकृते घटत्वविशिष्टपटाप्रसिद्ध्या तद्वैशिष्ट्यावगाहित्वं न सम्भवतीति 'घटत्वेन पटो नास्ति' इति प्रतीतिः न घटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकाभावं विषयीकरोति । अपि तु शशशृङ्गं नास्तीति प्रतीतिः यथा शृङ्गे शशीयत्वाभावं विषयीकरोति तथा घटत्वेन पटो नास्तीति प्रतीतिरपि पटे घटत्वाभावमवगाहते । अतः उक्तप्रतीतिः व्यधिकरणधर्मस्य प्रतियोगितावच्छेदकत्वसाधनाय नालमिति भावः ।

**ननु घटत्वेनेत्यादि** । असति बाधके तच्छब्दोल्लिखितप्रतीतेस्तच्छब्दप्रतिपाद्यार्थविषयकत्वमिति नियमात् 'घटत्वेन पटो **नास्ति'** इति शब्दात् योऽर्थः प्रतिपाद्यते स एव तदुल्लिखतप्रतीतावपि **विषय**

इति वाच्यम् । तत्र तादृशशब्दात् घटत्वावच्छिन्नपटनिष्ठप्रतियोगिताकाभावस्यैव प्रतिपत्तेः तादृशशब्दोल्लिखितप्रतीतेरपि तद्विषयकत्वमेव युक्तमिति भावः । **किन्तु** इति । घटत्वेनेत्यत्र तृतीयायाः अवच्छिन्नप्रतियोगिताकत्वमर्थः, तस्याभावेऽन्वय इत्यभिप्रायः । विभक्त्यर्थरूपेण सम्बन्धेनान्वय इष्ट एव । अत एव **दिनकर्याम्** "भूतले घट' इत्यादौ आधेयतासंसर्गेणापि घटभूतलयोरन्वयात् साक्षादित्यस्यापि व्युत्पत्तौ निवेशात्" इत्युक्तम् । तत्र **रामरुद्रीये** - "यद्यपि घटे भूतलवृत्तित्वप्रकारकबोधस्वीकारेणैवोपपत्तौ आधेयतासम्बन्धेन भूतलस्यापि घटे प्रकारत्वोपगम्गेऽनुचितः, पदार्थस्य संसर्गविधया भानानङ्गीकारात् । तथापि 'भूतले घट' इति वाक्यजज्ञानानन्तरं घटो भूतलीयो न वेति संशयानुत्पादस्याप्यनुभवसिद्धतया विभक्त्यर्थस्य संसर्गविधयापि भानमादृतम्" इत्युक्तम् । एतेन अवच्छिन्नप्रतियोगिताकत्वस्य तृतीयाविभक्त्यर्थत्वात् तस्य प्रकारतया भानस्यैवोचितत्वात् अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेनेत्युक्तिर्न युक्तेति शङ्का अपस्ता ।

ननु 'घटत्वेन घटो नास्ति' इत्यादावप्युक्तन्यायेन घटत्वस्य अवच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावेऽन्वयो वक्तव्यः । तथा च घटे घटत्वस्यानन्वयात् घटत्वविशिष्टवैशिष्ट्यावगाहित्वं नास्तीति 'अभावबुद्धिर्विशिष्टवैशिष्ट्यावगाहित्वमर्यादां नातिशेते' इति नियमस्य भङ्ग इत्यत आह - **अभावबुद्धिरिति** । 'घटत्वेन घटो नास्ति' इत्याकारकस्याभावप्रत्ययस्यानुभविकतया यत्र प्रतियोगितावच्छेदकत्वं भासते तद्विशिष्टवैशिष्ट्यावगाहित्वमभावबुद्धेरिति नियमासम्भवः। तथा च तादृशनियमभङ्ग इष्ट एव इति भावः ।

**अस्तु तर्हीति** । तथा च घटत्वेन घटो नास्तीति प्रतीत्या यथा स्वातन्त्र्येण भासमाने घटत्वादौ प्रतियोगितावच्छेदकत्वावगाहनात् प्रतियोगिविशेषणतापन्नस्यैव प्रतियोगितावच्छेदकत्वमिति नियमो

नास्तीति समानाधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः सिध्यति, तथैव घटत्वेन पटो नास्तीति प्रतीत्यापि व्यधिकरणे घटत्वेऽवच्छेदकत्वावगाहनात् व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावोऽपि सिध्यतीति भावः ।

**विरोधिविरहादिति** । प्रतियोगितावच्छेदकविशिष्टः प्रतियोगियोगिताश्रयः अभावस्य विरोधी । घटत्वविशिष्टस्य घटस्य सत्त्वे घटत्वावच्छिन्नघटाभावः न सम्भवति । घटशून्यस्थल एव तादृशाभाव इति स न केवलान्वयी । घटत्वेन पटाभावस्तु घटविशिष्टपटरूपविरोध्यप्रसिद्ध्या तदभावात् पटवति पटशून्ये च सर्वत्रास्तीति केवलान्वयीति भावः ।

## दीपिका

### सामयिकाभावस्यातिरिक्तत्वखण्डनम्

सामयिकाभावोऽपि अत्यन्ताभाव एव समयविशेषे प्रतीयमानः । घटाभाववति घटानयने अत्यन्ताभावस्य अन्यत्र गमनाभावेऽपि अप्रतीतेः, घटापसरणे सति प्रतीतेः, भूतलघटसंयोगप्रागभावध्वंसयोः घटात्यन्ताभावप्रतीतिनियामकत्वं कल्प्यते । घटवति तत्संयोगप्रागभावध्वंसयोरसत्त्वादेव अत्यन्ताभावस्याप्रतीतिः । घटापसरणे तु संयोगध्वंसस्य सत्त्वात् प्रतीतिरिति ।

## प्रकाशिका

ननु भूतलादौ घटसत्त्वदशायां न तदभावबुद्धिः अन्यदा तु जायते । अतः सामयिकाभावोऽतिरिक्त एवाङ्गीकर्तव्य इति वदन्तं निराकर्तुमाह - **सामयिकेति** । प्रतियोगिविरहसमये प्रतीयमानोऽत्यन्ताभाव एव सामयिकाभावः । न तु उत्पादविनाशशाल्यतिरिक्त इति **समुदितोऽर्थः** । नन्वेवं भूतले घटस्य आनयनदशायामपि तदभावस्य नित्यत्वेन तत्प्रत्ययापत्तिः अत आह - **घटाभाववतीति** । नियामकत्वमेव समुपपादयति - **घटवतीति** । तत्तत्कालावच्छिन्नभूतलादेरेव घटा-

द्यभावसंसर्गतया घटकाले च तच्छून्यकालविशिष्टभूतलादिरूपसंसर्गाभावेन तदा न तदत्यन्ताभावबुद्धिरित्यपि द्रष्टव्यम् ।

### बालप्रिया

**न तु उत्पादविनाशशाल्यतिरिक्त** इति । प्रतियोगिविरहकाले उत्पद्यमानः प्रतियोगिकाले विनश्यंश्चात्यन्ताभावः सामयिकोऽत्यन्ताभावः । तथा च घटाद्यत्यन्ताभावः सामयिकात्यन्ताभावः, शशशृङ्गाद्यत्यन्ताभावस्तु त्रैकालिकोऽत्यन्ताभाव इति तेषामाशयः । **दीपिका**कारास्तु सामयिकाभावस्तु त्रैकालिकात्यन्ताभावात् नातिरिच्यते । सर्वदा विद्यमानोऽपि समयविशेषे प्रतीयमानत्वमात्रेण सामयिकाभाव इत्युच्यते, न तु समयविशेषे उत्पत्तिमत्त्वेन । ननु सामयिकाभावस्य अत्यन्ताभावादनतिरिक्तत्वे घटाभाववति भूतले घटानयनानन्तरमपि घटात्यन्ताभावप्रतीतिप्रसङ्गः, घटात्यन्ताभावस्य नित्यत्वात् निष्क्रियत्वेन अन्यत्र अगमनाच्च घटानयनानन्तरं घटवति भूतले घटात्यन्ताभावरूपविषयसत्त्वात् इति चेत्-न । यतः घटानयनानन्तरं विद्यमानोऽपि घटात्यन्ताभावो न प्रतीयते, घटापसरणानन्तरं प्रतीयते,अतः घटात्यन्ताभावप्रत्यक्षं प्रति भूतलघटसंयोगप्रागभावः भूतलघटसंयोगध्वंसश्च प्रयोजक इति कल्प्यते । घटानयनानन्तरं तु भूतलघटसंयोगस्यैव सत्त्वात् तत्प्रागभावो वा तद्ध्वंसो वा नास्तीति कारणाभावात् न घटात्यन्ताभावप्रत्यक्षम् । घटापसरणानन्तरं तु भूतलघटसंयोगध्वंसस्य सत्त्वात् घटात्यन्ताभावप्रत्यक्षं भवति । एवं च नित्यस्यैवात्यन्ताभावस्य समयविशेषे प्रतीतितदभावयोरुपपत्त्या तदर्थं सामयिकाभावोऽतिरिक्ततया न स्वीकर्तव्य इति निरूपयन्तीति प्रघट्टकार्थः ।

**प्रकाशिकायां** समाधानान्तरमाह - **तत्तत्कालावच्छिन्नेति** । यस्मिन् घटशून्यकाले भूतले घटात्यन्ताभावबुद्धिर्भवति तादृशघटशून्यकालावच्छिन्नभूतलस्वरूपमेव भूतलघटात्यन्ताभावयोः सम्बन्धः, घटानयनानन्तरं च भूतलस्य घटात्यन्ताभावस्य च सत्त्वेऽपि घटशून्यः यः काल॰

तदवच्छिन्नभूतलस्वरूपात्मकस्य सम्बन्धस्याभावात् न भूतले घटा-त्यन्ताभावप्रतीतिरिति भावः ।

## दीपिका

### अभावस्याधिकरणात्मकत्वखण्डनम्

केवलाधिकरणादेव नास्तीति व्यवहारोपपत्तौ अभावः न पदार्थान्तरमिति गुरवः। तन्न-अभावानङ्गीकारे कैवल्यस्य निर्वक्तुमशक्यत्वात्।

## प्रकाशिका

नन्वभावः नास्ति अतिरिक्तः पदार्थः, यस्मिन् अधिकरणे 'घटो नास्ति' इत्यादिप्रत्ययः तस्मिन् अधिकरणे पटाद्यभावत्वकल्पनेनैव तथा प्रतीतिनिर्वाहात्, क्लृप्तधर्मिणि धर्मकल्पनाया अक्लृप्तधर्मिकल्पनातो लघीयस्त्वादिति गुरुमतमाशङ्क्य निराचष्टे - **केवलेति** । यद्यप्यनन्तेषु अधिकरणेषु धर्मकल्पनातोऽतिरिक्तैकधर्मिकल्पनस्यैव लघीयस्त्वात् अत्रोक्तन्यायस्यानवतारः । किं च अभावस्याधिकरणस्वरूपत्वे जलादौ विद्यमानस्य गन्धाद्यभावस्य जलादिरूपत्वादितरेन्द्रियग्राह्यतापत्तिरित्यादिदूषणानि प्रस्फुरन्ति,तथापि'केवलाधिकरणादेव' इति तद्वचननिरासादेव तन्निवृत्तिसम्भवे किमेतान्यपेक्षितानीत्यालोच्य तदेव निराकरोति - **अभावानङ्गीकार** इति । अतिरिक्ताभावानङ्गीकार इत्यर्थः । अथ किमिदं कैवल्यम् ? भूतलस्वरूपमिति चेत् - घटवद्भूतलस्यापि तदभावस्वरूपतापत्त्या तदानीमपि घटाभाववत्ताबुद्धिप्रसङ्गः । घटाभाववत्त्वमिति चेत् सिद्धमतिरिक्ताभावेन, अतः कैवल्यनिर्वचनमशक्यमित्याह - **कैवल्यस्येति** ।

## बालप्रिया

**यद्यप्यनन्तेष्विति** । येषु येषु अधिकरणेषु घटात्यन्ताभावप्रतीतिः भवति तेषु तेषु अधिकरणेषु घटाभावत्वकल्पनापेक्षया क्लृप्तेषु तावत्स्वधिकरणेषु एकस्य घटात्यन्ताभावरूपस्य धर्मिणः कल्पनं लघुतरमिति भावः । ननु धर्मिकल्पनापक्षे अभावरूपो धर्मी अभावत्वरूप-

धर्मश्च इत्युभयं कल्पनीयम् । धर्मकल्पनापक्षे तु अभावत्वरूपधर्ममात्रं कल्पनीयम् । धर्मिणामधिकरणानां क्लृप्तत्वादिति कुतो लाघवावकाश इत्यतो दूषणान्तरमाह - **किं चेति** । अभावः यद्यधिकरणस्वरूपः तर्हि जले विद्यमानस्य गन्धाभावस्य जलस्वरूपतया 'यो गुणो यदिन्द्रियग्राह्यः, तन्निष्ठा जातिः तदभावश्च तदिन्द्रियग्राह्यः' इति न्यायात् गन्धाभावस्य घ्राणेन्द्रियग्राह्यतया गन्धाभावात्मकस्य जलस्य घ्राणेन्द्रियग्राह्यत्वापत्तिः, जलस्य चक्षुरादिग्राह्यतया घ्राणेन्द्रियाग्राह्यतया च जलात्मकस्य गन्धाभावस्य चक्षुरादिग्राह्यत्वापत्तिः घ्राणेन्द्रियाग्राह्यत्वापत्तिर्वा इति भावः । **इतरेन्द्रियग्राह्यत्वापत्तिरिति** । घ्राणेतरचक्षुरादिग्राह्यतापत्तिरित्यर्थः । **इत्यादिदूषणानीति** । अभावस्याधिकरणात्मकत्वे भूतलघटाभावयोराधाराधेयभावानुपपत्तिः आधाराधेयभावस्य भेदव्याप्यत्वादिति दूषणमादिपदग्राह्यम् ।

## दीपिका

### अभावाभावस्य भावरूपता

अभावाभावः भाव एव । नातिरिक्तः, अनवस्थाप्रसङ्गात् । ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येवेति प्राञ्चः । अभावाभावः अतिरिक्त एव तृतीयाभावस्य प्रथमाभावरूपत्वात् न अनवस्थेति नवीनाः ।

## प्रकाशिका

नन्वभावस्य अतिरिक्तत्वे तदभावोऽप्यतिरिक्तः, तस्याप्यभावः तथेत्यनवस्था स्यादत आह - **अभावाभाव** इति । **ध्वंसेत्यादि** । ध्वंसप्रागभावः प्रतियोगिस्वरूपः, तत्प्रागभावरूपश्च । प्रागभावध्वंसस्तु प्रतियोगिस्वरूपः, तद्ध्वंसरूपश्च इत्यस्यार्थः अवसेयः । तेन प्रतियोगिप्रागभावदशायामपि 'ध्वंसो भविष्यति' इति प्रत्ययस्य प्रतियोगिध्वंसदशायामपि'प्रागभावो नष्टः'इति प्रत्ययस्य चोपपत्तिः । ननु काले द्रव्यत्वं नास्ति इति प्रत्ययः न जायते, द्रव्यत्वाभाव इति

तु जायते इति वैषम्यनिर्वाहाय नास्तीति प्रत्यये दैशिकसम्बन्धाव-च्छिन्नाधेयत्वभानं कल्पनीयम् । इत्थं च घटाभावाभावादेः घटादि-रूपत्वे त्विह घटाभावो नास्तीति प्रत्ययस्य भ्रमत्वमेव स्यात् । भावस्य विशेषणताविशेषेण वृत्त्यनङ्गीकारात् । अतः अभावाभावः अतिरिक्तः न तु भावरूप इति नवीनमतं दर्शयति - **अभावेति** । तर्हि अनवस्थे-त्यत आह - **तृतीयेति** ।

### बालप्रिया

ननु ध्वंसप्रागभावः प्रागभावध्वंसश्च प्रतियोग्येव इति दीपिकातः घटध्वंसप्रागभावः घटप्रागभावध्वंसश्च घटस्वरूप इति लभ्यते । तथा सति घटानुत्पत्तिदशायां 'घटध्वंसो भविष्यति' इति घटध्वंसप्राग-भावविषयकप्रतीतिः न स्यात् तदानीं घटाभावात् । एवं घटध्वंस-दशायां 'घटप्रागभावो नष्ट' इति घटप्रागभावध्वंसविषयकप्रतीतिर्न स्यात्, तदात्मकस्य घटस्याभावादित्यतः तात्पर्यमाह - **ध्वंसप्रागभाव** इति । घटध्वंसप्रागभावः घटस्वरूपः घटप्रागभावस्वरूपश्च । तथा च घटानुत्पत्तिदशायां घटप्रागभावस्य सत्त्वात् तदात्मकं घट-ध्वंसप्रागभावं विषयीकुर्वन् 'घटध्वंसो भविष्यति' इति प्रतीतिः उदयते । घटोत्पत्त्यनन्तरं जायमाना 'घटध्वंसो भविष्यति' इति प्रतीतिस्तु घटात्मकं घटध्वंसप्रागभावं विषयीकरोति । एवं घटप्राग-भावध्वंसः घटस्वरूपः, घटध्वंसस्वरूपश्च । अतः घटकाले 'घटप्राग-भावो नष्टः' इति प्रतीतिः घटरूपं घटप्रागभावध्वंसं विषयीकरोति । घटध्वंसकाले 'घटप्रागभावो नष्टः' इति प्रतीतिः घटध्वंसरूपं घट-प्रागभावध्वंसं विषयीकरोति । तथा च न काप्यनुपपत्तिरिति भावः ।

**ननु काले द्रव्यत्वं नास्तीत्यादि** । काले द्रव्यत्वं नास्तीति प्रतीतिः न जायते, काले द्रव्यत्वाभाव इति प्रतीतिस्तु जायते । तदर्थं नञ्पदं दैशिकविशेषणतासम्बन्धावच्छिन्नाधेयत्वान्विताभावबोधकमिति व्यु-त्पत्तिः स्वीकरणीया । घटे पटत्वं नास्तीत्यस्य घटनिरूपितदैशिक-

विशेषणतासम्बन्धावच्छिन्नाधेयतावान् पटत्वाभाव इत्यर्थः। काले कालिकसम्बन्धेन द्रव्यत्वाभावस्य सत्त्वेऽपि दैशिकविशेषणतासम्बन्धेन द्रव्यत्वाभावं प्रति समवायसम्बन्धेन द्रव्यत्वस्य विरोधिततया काले समवायेन द्रव्यत्वसत्त्वात् कालनिरूपितदैशिकविशेषणतासम्बन्धावच्छिन्नाधेयतावान् द्रव्यत्वाभावो न भवतीति काले द्रव्यत्वं नास्तीति प्रतीतिः न भवतीति वक्तव्यम्। इत्थं च भूतले घटाभावो नास्तीति प्रतीतिरपि घटाभावाभावे भूतलनिरूपितदैशिकविशेषणतासम्बन्धावच्छिन्नाधेयत्वमवगाहत इति वक्तव्यम्। घटाभावाभावो यदि घटस्वरूपः स्यात् तदा भावानां दैशिकविशेषणतासम्बन्धेन वृत्तेरनङ्गीकारात् तत्सम्बन्धावच्छिन्नाधेयत्वाभाववति घटे तदवगाहितया तादृशप्रतीतेर्भ्रमत्वं स्यात्। इष्यते तु प्रमात्वम्। अतः अभावाभावः न भावरूपः अपि तु अतिरिक्तः। न च अनवस्था। घटाभावाभावस्य अतिरिक्तत्वेऽपि घटाभावाभावाभावस्य घटाभावरूपत्वाङ्गीकारात् इति नवीनानामाशयः। नवीनतरास्तु भावानामपि दैशिकविशेषणतासम्बन्धेन वृत्तिं अङ्गीकुर्वन्ति। तन्मते अभावाभावः नातिरिक्तः। एतत्तत्त्वं **कूटघटितलक्षणगादाधर्यां** द्रष्टव्यम्।



## तर्कसङ्ग्रहः

**षोडशपदार्थानां सप्तपदार्थेष्वन्तर्भावः**

सर्वेषामपि पदार्थानां उक्तेष्वेव अन्तर्भावात् सप्तैव पदार्था इति सिद्धम्।

## दीपिका

ननु **"प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानात् निःश्रेयसाधिगमः"** [न्या. सू. १-१-१] इति न्यायसूत्रे षोडशपदार्थानामुक्तत्वात् कथं सप्तैवेत्यत आह - **सर्वेषामिति**। सर्वेषां सप्तस्वेवान्तर्भाव इत्यर्थः।

**"आत्मशरीरेन्द्रियार्थबुद्धिमनः प्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेयम्"** इति द्वादशविधं प्रमेयम् । **प्रवृत्तिः**-धर्माधर्मौ । रागद्वेषमोहाः **दोषाः** । **रागः**-इच्छा । **द्वेषः**-मन्युः । **मोहः**-शरीरादौ आत्मभ्रमः । **प्रेत्यभावः**-मरणम् । **फलम्**-भोगः । **अपवर्गः**-मोक्षः । स च स्वसमानाधिकरणदुःखप्रागभावासमानकालीनदुःखध्वंसः । **प्रयोजनम्**-सुखप्राप्तिः दुःखहानिश्च । **दृष्टान्तः**-महानसादिः । प्रामाणिकत्वेन अभ्युपगतोऽर्थः **सिद्धान्तः** । **निर्णयः**-निश्चयः । स च प्रमाणफलम् ।

## प्रकाशिका

परमकारुणिकेन मुनिना दुःखपङ्कनिमग्नं जनं उद्दिधीर्षुणा प्रणीतम् "प्रमाणप्रमेय" इत्यादिसूत्रं, तद्विरोधं परिहर्तुं आक्षिपति - **नन्विति** । प्रत्यक्षप्रमाणस्य द्रव्ये, अनुमानादीनां च गुणेऽन्तर्भावस्य स्फुटत्वात् प्रमेयादीनां द्रव्यादिष्वन्तर्भावमाह - **आत्मेत्यादिना** । आत्मशरीरेन्द्रियाणां द्रव्ये, अर्थस्य पृथिव्यादिरूपस्य द्रव्यादिषु, बुद्धेः गुणे, अन्तरिन्द्रियस्य मनसः द्रव्येऽन्तर्भावः । एवमग्रेऽपि यथायथमन्तर्भावः द्रष्टव्यः । **धर्माधर्मौ** इति । तज्जनिकेत्यर्थः । एतच्च स्फुटमाकरे । **रागः** - इच्छाविशेषः । **मरणमिति** । मरणानन्तरभावि जननमित्यर्थः । तथा च पदव्युत्पत्तिः प्रेत्य मृत्वा भावः जननमितिः । चरमप्राणशरीरसंयोगध्वंसः **मरणम्** । आद्यशरीरप्राणसंयोगः **जननम्** । मुक्तात्मसंयोगध्वंसवतः घटस्य मुक्तत्वापत्तिवारणाय - **दुःखध्वंस** इति । दुःखध्वंसवतां अस्मदादीनामपि मुक्तत्वापत्तिवारणाय कालीनान्तम् । अन्यदीयदुःखप्रागभावसमानकालिकदुःखध्वंसवतां शुकाद्यात्मनामप्यमुक्तत्वप्रसङ्गात् स्वसमानाधिकरणेति दुःखप्रागभावविशेषणम् । न च स्वसमानाधिकरणदुःखासमानकालीनेत्यनेनैव सुषुप्तिकालिकदुःखध्वंसस्यापि अग्रिमदुःखक्षणवृत्तेर्वारणात् प्रागभावेति व्यर्थमिति वाच्यम् । यथासन्निवेशे वैयर्थ्याभावादिति दिक् । संशयस्य निरूपितत्वात् प्रयोजनस्वरूपं दर्शयति - **प्रयोजनमिति** ।

**प्रत्यक्षप्रमाणस्य द्रव्य** इति । इन्द्रियं प्रत्यक्षप्रमाकरणम् । तत्र चक्षुषः तेजसि, रसनायाः जले, घ्राणस्य पृथिव्याम्, त्वचः वायौ, श्रोत्रस्य आकाशेऽन्तर्भावात् मनसः पृथक् द्रव्यत्वाच्च प्रत्यक्ष-प्रमाणस्य द्रव्येऽन्तर्भाव इत्यर्थः । **अनुमानादीनां च गुण** इति । व्याप्ति-ज्ञानमनुमानम्, सादृश्यज्ञानमुपमानम्, पदज्ञानं शब्द इत्येवमनुमाना-दीनां ज्ञानरूपे गुणेऽन्तर्भाव इत्यर्थः । **एवमग्रेऽपी**ति । प्रवृत्तिदोषादीना-मपि यथायथं सप्तस्वेवान्तर्भाव इत्यर्थः । ननु प्रवृत्तेः प्रयत्नविशेष-रूपत्वात् धर्माधर्मयोस्तु अदृष्टविशेषरूपत्वात् 'प्रवृत्तिः धर्माधर्मौ' इति दीपिकाग्रन्थोऽसङ्गत इत्यत आह - **तज्जनिकेत्यर्थ** इति । धर्माधर्मयो-र्जनिका प्रवृत्तिरित्यर्थः । कार्ये कारणोपचार इति भावः । तथा च प्रवृत्तेः गुणेऽन्तर्भावः । **स्फुटमाकर** इति । "प्रवृत्तिसाधनौ धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ यथा अन्नसाधनाः प्राणाः" इति द्वितीयसूत्रे भाष्ये, "प्रवृत्तिफले धर्माधर्मौ आस्मिन् सूत्रे प्रवृत्तिरित्युच्येते । कस्मात्, तत्साधनत्वात् अन्नं वै प्राणिनः प्राणा इति यथा" इति सप्तदशसूत्रे वा-र्तिके चोक्तत्वात् प्रवृत्तेर्धर्माधर्मजनकत्वं मूलग्रन्थेषु स्पष्टमिति भावः । **इच्छाविशेष** इति । उत्कटेच्छेत्यर्थः । तथा च रागस्येच्छात्मके गुणेऽन्त-र्भावः, द्वेषस्य गुणे, मिथ्याज्ञानरूपस्य मोहस्य च गुणेऽन्तर्भावः । मिथ्याज्ञानं नाम भ्रमात्मकज्ञानम् । **मरणानन्तरे**ति । प्रेत्य-मृत्वा भावः जननमिति व्युत्पत्त्या मरणानन्तरकालिकजन्म प्रेत्यभावशब्दार्थः । चर-मस्य प्राणशरीरसंयोगस्य ध्वंसः मरणम् । आद्यः शरीरप्राणसंयोगः जन्म । तथा च प्रेत्यभावस्य संयोगरूपे गुणेऽन्तर्भावः । प्राणशरीर-संयोगे चरमत्वं च स्वसजातीयशरीरवृत्तिप्राणसंयोगप्रागभावानधि-करणत्वम् । आद्यत्वं च स्वसजातीयशरीरवृत्तिप्राणसंयोगध्वंसान-धिकरणत्वम् ।

**दीपिकायाम् फलं भोग** इति । भोगो नाम सुखदुःखानुभवः । तथा च फलस्य अनुभवरूपज्ञानात्मके गुणेऽन्तर्भावः । **स्वसमानाधि-**

**करणेति** । स्वसमानाधिकरणः यः दुःखप्रागभावः तदसमानकालीनः दुःखध्वंसः मोक्ष इत्यर्थः । इदानीमस्माकं विद्यमानः यत्किंचिद्दुःखध्वंसः भविष्यद्दुःखप्रागभावसमानकालिकः । मुक्तौ यः दुःखध्वंसः सः दुःखप्रागभावासमानकालिकः पुनर्दुःखस्याजनिष्यमाणत्वादिति भावः । अपवर्गलक्षणघटकदलानां प्रयोजनमाह **प्रकाशिकायाम् - मुक्तात्मसंयोगेत्यादिना** । दुःखध्वंसः इत्यत्र दुःखपदानुपादाने स्वसमानाधिकरणदुःखप्रागभावासमानकालीनः ध्वंसः मोक्ष इति एतावन्मात्रोक्तौ मुक्तात्मनो घटस्य च यः संयोगः तद्ध्वंसोऽपि दुःखप्रागभावासमानकालीन इति तादृशसंयोगध्वंसवतो घटस्यापि मुक्तत्वं स्यात् । तद्वारणाय दुःखध्वंस इत्युक्तम् । संयोगध्वंसो न दुःखध्वंस इति तस्य न मुक्तित्वमिति भावः ।

ननु मुक्तात्मनो विभुत्वात् यावद्घटस्थिति घटे मुक्तात्मसंयोगोऽस्त्येवेति तद्ध्वंसवत्वं घटस्य कथं भवेत् । घटे नष्टे तु मुक्तात्मघटसंयोगध्वंससत्त्वेऽपि घटस्याभावात् सुतरां न घटस्य मुक्तत्वमिति कथमियमाशङ्का? अत्रोच्यते - घटः आदौ कुत्रचित् प्रदेशेऽस्ति, तदा तत्प्रदेशावच्छेदेन मुक्तात्मघटसंयोगोऽस्ति । स एव घटः प्रदेशान्तरं नीतश्चेत् पूर्वप्रदेशावच्छिन्नात्मसंयोगो नश्यति, प्रदेशान्तरावच्छेदेन अन्यः संयोगो जायते । तथा चानष्टे एव घटे प्रदेशविशेषावच्छिन्नमुक्तात्मसंयोगध्वंसोऽस्तीति घटस्य मुक्तत्वप्रसङ्ग इत्याशयात् । **दुःखध्वंसवतामिति** । तथा च दुःखध्वंसो मोक्ष इत्येतावन्मात्रोक्तौ संसारिणामस्मदादीनामपि सुषुप्तिकाले दुःखध्वंससत्त्वात् मुक्तत्वापत्तिः । तद्वारणाय कालीनान्तम् । अद्य विद्यमानस्य अस्मदीय दुःखध्वंसस्य श्वोभाविदुःखप्रागभावसमानकालीनत्वात् तादृशदुःखप्रागभावासमानकालीनत्वं नास्तीति न मुक्तित्वमिति भावः । **अन्यदीये**ति । तथा च दुःखप्रागभावे स्वसमानाधिकरणेति विशेषणानुपादाने मुक्तानां शुकादीनां यो दुःखध्वंसः सः शुकाद्यन्यसंसार्यात्मवृत्ति यत् भावि दुःखं तत्प्रागभावसमानकालीनमेव भवतीति तदसमानकालीनदुःखध्वंसवत्वाभावात्

शुकादीनाममुक्तत्वं स्यात् । तद्वारणाय स्वसमानाधिकरणेति विशेषणम्। तदुपादाने च स्वं शुकात्मवृत्तिः दुःखध्वंसः तदधिकरणं शुकात्मा तद्वृत्तित्वं अन्यदीयदुःखप्रागभावे नास्तीति न तत्समानकालीनत्वमादाय पूर्वोक्तदोष इति भावः ।

ननु स्वसमानाधिकरणदुःखासमानकालीनेत्येवास्तु, किं तादृशदुःखप्रागभावासमानकालीनेति विशेषणेन । न च अस्माकं सुषुप्तौ यो दुःखध्वंसः तस्य दुःखसमानकालीनत्वं नास्ति, सुषुप्तौ दुःखाभावात् । तथा च दुःखासमानकालीनदुःखध्वंससत्त्वात् अस्माकं मुक्तत्वापत्तिर्भवेत् दुःखासमानकालीनेत्युक्तौ । दुःखप्रागभावासमानकालीनेत्युक्तौ तु सुषुप्तौ अस्मासु भाविदुःखप्रागभावोऽस्तीति तदातनदुःखध्वंसस्य दुःखप्रागभावसमानकालीनत्वात् वारणमिति वाच्यम् । ध्वंसस्य ध्वंसासम्भवेन सुषुप्तिकालिको यो दुःखध्वंसः तस्य जाग्रत्क्षणेऽप्यनुवर्तमानतया जाग्रत्काले यद्दुखं तत्समानकालीनत्वमस्तीति समानाधिकरणदुःखासमानकालीनत्वाभावात् वारणं भवतीति दुःखप्रागभावासमानकालीनत्वपर्यन्तस्यानावश्यकत्वात् इत्याशयेन शङ्कते - **न च स्वसमानाधिकरणे**ति ।

समाधत्ते - **यथासंनिवेश** इति । यद्यपि दुःखासमानकालीनत्वविशेषणेन वारणं भवति, तथापि दुःखप्रागभावासमानकालीनत्वेनापि वारणसम्भवात् तस्य न वैयर्थ्यमिति भावः । न च लघुना दुःखासमानकालीनत्वेनैव वारणे गुरुणः दुःखप्रागभावासमानकालीनत्वविशेषणस्य वैयर्थ्यमेवेति वाच्यम् । यत्र गुरुधर्मघटकेन लघुधर्मेण निर्वाहः तत्रैव गुरुधर्मस्य वैयर्थ्यम् । प्रकृते तु दुःखासमानकालीनत्वत्वावच्छिन्नाभावः दुःखासमानकालीनत्वम् । दुःखप्रागभावसमानकालीनत्वत्वावच्छिन्नाभावः दुःखप्रागभावासमानकालीनत्वम् । अनयोश्चाभावयोः प्रतियोगितावच्छेदकभेदेन भिन्नत्वात् एकस्मिन् अभावेऽन्यस्य घटकत्वाभावात् न वैयर्थ्यावकाश इत्याशयात् । ननु

स्वत्वस्याननुगततया तद्घटितमुक्तेरप्यनेकत्वेन मुक्तिपदस्य नानार्थ-कत्वापत्तिः इत्यत आह - **दिगिति** । अत्रानुयोगिनि स्वत्वं न विवक्षितम्, **किं** तु प्रतियोगिनि । तथा च स्वसमानाधिकरणदुःखप्रागभाव-समानकालीनं यद्यत्स्वं तत्तद्व्यक्तिभेदविशिष्टदुःखध्वंसो मोक्षः । एवं च तादृशभेदकूटविशिष्टत्वोपलक्षितदुःखध्वंसत्वस्य सकलमुक्तिसाधारणतया न मुक्तिपदस्य नानार्थकतापत्तिरिति भावः । इत्थं चापवर्गस्य मोक्षेऽन्तर्भावः । संशयस्य अयथार्थानुभवरूपत्वस्य पूर्वमुक्तत्वात् ज्ञानरूपे गुणेऽन्तर्भावः उक्त इत्याशयेन मूले संशयस्याकथनम्। तदाह - **संशयस्य निरूपितत्वादिति** । सुखप्राप्तिर्नाम सुखमेव । दुःखहानिश्च दुःखध्वंसः । तथा च प्रयोजनस्य गुणेऽभावे चान्तर्भावः । दृष्टान्तस्य यथायथं द्रव्यगुणादिष्वन्तर्भावः । सिद्धान्तोऽपि द्रव्यादिरूप एव । प्रामाणिकत्वेन स्वीकृतार्थस्यैव सिद्धान्तत्वात् । निर्णयस्य ज्ञानरूपे गुणेऽन्तर्भावः । अवयवानां शब्दरूपतया प्रागुक्तत्वात् गुणेऽन्तर्भावः, तर्कस्यारोपरूपताया उक्तत्वात् भ्रमात्मकज्ञानेऽन्तर्भावः इति तयोः अत्राकथनम् । वादजल्पवितण्डानां शब्दरूपतया गुणेऽन्तर्भावः ।

## दीपिका

### कथानिरूपणम्

तत्त्वबुभुत्सोः कथा वादः । उभयसाधनवती विजिगीषुकथा जल्पः । स्वपक्षस्थापनाहीना अपरपक्षविदलनमात्रावसाना वितण्डा । कथा नाम नानावक्तृकपूर्वोत्तरपक्षप्रतिपादकवाक्यसन्दर्भः ।

## प्रकाशिका

**उभयसाधनवतीति** । परपक्षनिराकरणस्वपक्षसाधनवती । इदं च वितण्डायां अतिव्याप्तिवारणायेति ध्येयम् । **स्वपक्षेति** । अत्र विजिगीषु कथेत्यनुवर्तते । **नानेति** । एकेन पूर्वपक्षः क्रियते, अन्येन च समाधानम्, एवं क्रमेण नानाकर्तृकत्वं वाक्यसमूहस्यावसेयम् ।

### बालप्रिया

**परपक्षेत्यादि** । विजिगीषुकथा जल्पः इत्येतावन्मात्रोक्तौ वितण्डायामतिव्याप्तिः । अतः स्वपक्षसाधनवतीत्युक्तम् । परपक्षनिराकरणस्वपक्षसाधनवतीत्यत्र परपक्षनिराकरणमपि जल्पे आवश्यकमिति सूचनाय अन्तर्भावितम् , नातिव्याप्त्यादिवारणाय । विजिगीषुपदेनैव वादस्य वारणसम्भवात् । दुष्टहेतुरूपाणां हेत्वाभासानां यथायथं द्रव्यादिष्वन्तर्भावः ।

### दीपिका

#### छलनिरूपणम्

अभिप्रायान्तरेण प्रत्युक्तस्यार्थान्तरं परिकल्प्य दूषणं छलम् ।

### प्रकाशिका

**छलमिति** । यथा 'नवकम्बलोऽयं देवदत्तः' इति नूतनतात्पर्येण प्रयुक्तस्य नवत्वसङ्ख्याविशिष्टमर्थान्तरं परिकल्प्य कश्चित् दूषयति 'नास्य नव कम्बलाः सन्ति अति दरिद्रत्वात्' इत्यादि ।

### बालप्रिया

छलमपि शब्दरूपत्वात् गुणेऽन्तर्भवति ।

### दीपिका

#### जातिनिरूपणम्

असदुत्तरं जातिः ।

### प्रकाशिका

**असदुत्तरमिति** । उत्तरस्य असत्वं तु स्वासाधकतासाधारण्येन परासाधकतासाधकतया स्वव्याघातकत्वम् । तथा च स्वव्याघातमुत्तरं जातिरिति लक्षणं पर्यवस्यति ।

### बालप्रिया

**स्वासाधकतासाधारण्येनेति** । परमतासाधकत्वसाधनाय हि जातिरूपमुत्तरमुच्यते । तच्चेत् स्वमतासाधकतामपि साधयेत् तदा जातिरित्यर्थः । परकीयहेतोः परासाधकत्वे साध्यमाने स्वकीयहेतोः स्वा-

साधकत्वमपि येन भवति तत् जात्युत्तरमिति भावः । परमतबाध-नार्थं उच्यमानमुत्तरं स्वमतमपि विहन्ति चेत् तादृगुत्तरविशेषो जातिरिति फलितोऽर्थः ।

## दीपिका

साधर्म्य- वैधर्म्य-उत्कर्ष- अपकर्ष-वर्ण्य-अवर्ण्य-विकल्प-साध्य-प्राप्ति-अप्राप्ति-प्रसङ्ग-प्रतिदृष्टान्त-अनुत्पत्ति-संशय-प्रकरण-अहेतु- अर्थापत्ति-अविशेष-उपपत्ति-उपलब्धि - अनुपलब्धि - नित्य - अनित्य - कार्य-अकार्य-समा जातयाः ।

## प्रकाशिका

### साधर्म्यसमालक्षणम्

तदवान्तरभेदान् दर्शयति - **साधर्म्येत्यादिना** । द्वन्द्वान्ते श्रूयमाणस्य समाशब्दस्य प्रत्येकं योगः । साधर्म्यसमा वैधर्म्यसमेत्यादयः चतुर्विंशतिः जातयः । साधर्म्येण स्थापनाहेतुदूषकमुत्तरम् **साधर्म्यसमा** । यथा आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् लोष्टवत्,क्रिया हेतुगुणश्चात्र क्रियाजनकवायुसंयोगादिरेवेति स्थापनायमुत्तरम् - 'यदि सक्रिय-साधर्म्यात् सक्रियः तदा विभुत्वरूपनिष्क्रयसाधर्म्यात् निष्क्रिय एव किं न स्यात् । न च अत्र किञ्चित् विनिगमकमस्ति' इति ।

## बालप्रिया

साधर्म्यसमायाः सोदाहरणं लक्षणमाह - **साधर्म्येणे**ति । वादिना स्वसाध्यसाधनार्थं हेतौ प्रयुक्ते सति प्रतिवादिनः दृष्टान्त-सादृश्यमात्रावष्टब्धेन हेतुना वाद्यभिमतसाध्याभावसाधनमुखेन वा-द्युक्तहेतोः स्वसाध्यासाधकत्वसाधकमुत्तरं साधर्म्यसमेत्यर्थः । **यथा आत्मेत्यादि** । यो यः क्रियाहेतुभूतगुणवान् स क्रियावान्; यथा लोष्टः क्रियाहेतुभूतवायुसंयोगरूपगुणवत्त्वात् क्रियावान् तद्वत् आत्मापि तादृश-गुणवत्त्वात् क्रियावान् इति वादिनोक्ते सति, प्रतिवादी वदति 'यदि

क्रियाहेतुगुणवत्त्वेन रूपेण लोष्टसादृश्यात् आत्मनः क्रियावत्त्वं तर्हि यथा परममहत्परिमाणवतः आकाशस्य निष्क्रियत्वं तथा आत्मनोऽपि परममहत्परिमाणवत्त्वात् निष्क्रियत्वं किं न स्यात्; आत्मा निष्क्रियः परममहत्परिमाणवत्त्वात् आकाशवदित्यपि वक्तुं शक्यत्वात्' इति दूषयति । एतादृशं दूषणं साधर्म्यसमेत्यर्थः ।

## प्रकाशिका

### वैधर्म्यसमालक्षणम्

वैधर्म्येण दूषकमुत्तरम् **वैधर्म्यसमा** । यथा तत्रैव क्रियावतो लोष्टस्य साधर्म्यात् यदि क्रियावानात्मा, तदा विभुत्वरूपतद्वैधर्म्यात् निष्क्रिय एव किं न स्यात् । न हि तत्साधर्म्यात् क्रियावता भवितव्यम्, तद्वैधर्म्यात् निष्क्रियेण न भवितव्यम् इत्यत्र किञ्चित् नियामकमस्ति इति ।

## बालप्रिया

एवं दृष्टान्तावृत्तिधर्मवत्त्वरूपेण दृष्टान्तवैधर्म्येण वाद्युक्तहेतोः स्वसाध्यासाधकत्वकथनं वैधर्म्यसमा । **विभुत्वरूपे**ति । विभुत्वं परममहत्परिमाणवत्त्वम् । तथा च वादिना आत्मा क्रियावान् क्रियाहेतुगुणवत्त्वात् लोष्टवत् इत्युक्ते, आत्मा निष्क्रियः सक्रियलोष्टविधर्मत्वात् इति प्रतिवादी वदति । सक्रिये लोष्टे विद्यमानस्य धर्मस्य सत्त्वात् आत्मा लोष्टवत् सक्रियश्चेत् लोष्टे अविद्यमानस्य विभुत्वस्य आत्मनि सत्त्वात् आत्मा निष्क्रिय एव कुतो न स्यादिति दूषणं वैधर्म्यसमेत्युक्तं भवति ।

## प्रकाशिका

### उत्कर्षसमालक्षणम्

परोक्तसाधनादेव तदव्यापकस्य धर्मस्य पक्षे आपादनम् **उत्कर्षसमा** । यथा शब्दोऽनित्यः कृतकत्वात् घटवत् इत्यादौ कश्चिदेवमाह

'यदि कृतकत्वेन हेतुना शब्दः घटवदनित्यः स्यात्, तर्हि तेनैव शब्दः घटवदश्रावणोऽपि स्यात्' इति ।

### बालप्रिया

उत्कर्षसमाया लक्षणमाह - **परोक्तसाधनादेवे**ति । परेण स्वसाध्यसाधनाय यो हेतुरुच्यते तेनैव तादृशहेतोरव्यापको यः धर्मः तस्य पक्षे प्रसञ्जनं उत्कर्षसमेत्यर्थः । यथा शब्दोऽनित्यः कृतकत्वादित्यत्र कश्चिदाह - यदि कृतकत्वेन हेतुना शब्दः घटवदनित्यः तर्हि तेनैव हेतुना शब्दः घटवद् अश्रावणोऽपि स्यादिति । अत्र हेतोः कृतकत्वस्य अव्यापकः धर्मः अश्रावणत्वं तस्य पक्षे आपादनं क्रियते । ईदृशमुत्तरं उत्कर्षसमा । "व्याप्तिमपुरस्कृत्य पक्षदृष्टान्तान्यतरस्मिन् साध्यसाधनान्यतरेण अविद्यमानधर्मप्रसञ्जनं उत्कर्षसमः । यथा शब्दोऽनित्यः कृतकत्वात् इति स्थापनायाम् अनित्यत्वं कृतकत्वं च घटे रूपसहचरितम्, अतः शब्दोऽपि रूपवान् स्यात् । एवं श्रावणशब्दसाधर्म्यात् कृतकत्वात् घटोऽपि श्रावणः स्यादविशेषात्" इति **विश्वनाथः** ।

### प्रकाशिका

#### अपकर्षसमालक्षणम्

परोक्तदृष्टान्तसाधर्म्येण पक्षे पराभिमतधर्मान्तरस्य अभावसाधनम् अपकर्षसमा । यथा तस्मिन्नेव अनुमाने 'यदि कृतकत्वेन शब्दः घटवदनित्यः स्यात् तर्हि तेनैव शब्दो घटवदश्रावणोऽपि स्यात्' इति ।

### बालप्रिया

अविद्यमानधर्मप्रसञ्जनं उत्कर्षसमा । विद्यमानधर्माभावप्रसञ्जनं अपकर्षसमा । तदाह - **परोक्तदृष्टान्तसाधर्म्येणे**ति । परेण वादिना उक्तो यो दृष्टान्तः तत्साधर्म्येण पक्षे वाद्यभिमतस्य अर्थान्तरस्याभावसाधनम् अपकर्षसमा । यथा शब्दोऽनित्यः कृतकत्वात् इति वादिनोक्ते प्रतिवादी वदति - यदि कृतकत्वरूपात् घटसाधर्म्यात् शब्दो घटवदनित्यः तर्हि तस्मादेव हेतोः शब्दः घटवत् अश्रावणोऽपि

स्यादिति । अत्र पक्षे शब्दे अनित्यत्ववत् वाद्यभिमतं अर्थान्तरं श्रावणत्वं तदभावस्य प्रसञ्जनं क्रियते इति समन्वयः । "साध्ये धर्माभावं दृष्टान्तात् प्रसजतोऽपकर्षसमः' इति **भाष्यम्** ।

### प्रकाशिका

#### वर्ण्यसमालक्षणम्

वर्ण्यस्य स्थापनीयस्य दृष्टान्तधर्मस्य पक्षे साधनम् वर्ण्यसमा। यथा पूर्वोक्तानुमाने 'क्रियाजनकनोदनाख्यसंयोगवत्त्वात् लोष्टादेः भवतु क्रियावत्त्वम् । आत्मनस्तु क्रियावत्त्वे तज्जनकनोदनाख्यसंयोगवत्त्वमपि स्यात्' इति ।

### बालप्रिया

वर्ण्यसमां लक्षयति - **वर्ण्यस्येति** । दृष्टान्ते विद्यमानस्य पक्षे स्थापनीयस्य साधनं वर्ण्यसमा । यथा आत्मा क्रियावान् क्रियाहेतुगुणवत्त्वात् लोष्टवदिति वादिनोक्ते प्रतिवादी उत्तरयति-लोष्टादेः क्रियाजनकनोदनाख्यसंयोगवत्त्वात् क्रियावत्त्वं भवतु। आत्मनस्तु क्रियावत्त्वे लोष्टवत् क्रियाजनकनोदनाख्यसंयोगवानात्मा भवेदिति । ईदृशमुत्तरं वर्ण्यसमा । "ख्यापनीयो वर्ण्यो विपर्ययादवर्ण्यः" इति **भाष्यम्** ।

### प्रकाशिका

#### अवर्ण्यसमालक्षणम्

साध्यहेत्वोर्धर्मयोरपि पक्षे तुल्यतासाधनम् अवर्ण्यसमा । यथा तत्रैवानुमाने लोष्टादिगतनोदनादिरूपक्रियाहेतुगुणवत्त्वं आत्मन्यसिद्धम्। तथा च तुल्यतया यथा असिद्धेन क्रियाहेतुगुणेन आत्मनि क्रियावत्त्वं साध्यते, तथा तादृशेन क्रियावत्त्वेन तज्जनकगुणवत्त्वमपि किमिति न साध्यते नियामकाभावात् इति ।

### बालप्रिया

अवर्ण्यसमामाह - **साध्यहेत्वोरिति** । पक्षे साध्यहेत्वोर्द्वयोरपि तुल्यत्वात् यत् वादिदूषकमुत्तरं तदवर्ण्यसमा । यथा आत्मा सक्रियः

क्रियाहेतुगुणवत्त्वात् लोष्टवत् इत्यनुमाने एव आत्मनि क्रियावत्त्वमपि असिद्धम्, क्रियाहेतुनोदनाख्यसंयोगवत्त्वमप्यसिद्धम्। तत्रासिद्धेन नोद-नाख्येन क्रियाहेतुगुणेन आत्मनः सक्रियत्वं साध्यते चेत् असिद्धेन क्रियावत्त्वेन क्रियाजनकनोदनाख्यसंयोगवत्त्वमपि कुतो न साध्यते नियामकाभावात् इत्येवं यदुत्तरं तदवर्ण्यसमेत्यर्थः ।

## प्रकाशिका

### विकल्पसमालक्षणम्

दृष्टान्तविकल्पं प्रदर्श्य दार्ष्टान्तिकविकल्पकथनं विकल्पसमा । यथा तत्रैव अनुमाने 'क्रियाहेतुगुणयुक्तं किञ्चित् गुरु यथा लोष्टादिकम्, किञ्चित् लघु, यथा वायुः, एवं क्रियाहेतुगुणयुक्तं किञ्चित् क्रियावत् स्यात् यथा लोष्टादि किञ्चिदक्रियम् यथा आत्मा । पूर्वविकल्पो भवति अयं तु न भवतीत्यत्र किं नियामकं स्यात्' इति ।

## बालप्रिया

विकल्पसमामाह - **दृष्टान्तविकल्पं प्रदर्श्येति** । दृष्टान्ते विविधं कल्पं प्रदर्श्य दार्ष्टान्तिकेऽपि विविधकल्पप्रदर्शनं विकल्पसमेत्यर्थः । यथा पूर्वोक्ते आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् इत्यनुमाने एव क्रियाहेतुगुणयुक्तं किञ्चित् गुरु यथा लोष्टादि किञ्चिल्लघु यथा वायुः, एवं क्रियाहेतुगुणयुक्तं किञ्चित्सक्रियं यथा घटादि, किञ्चिदक्रियं यथा आत्मा । तत्र पूर्वो विकल्प एव समीचीनः अयं तु विकल्पः न समी-चीनः इत्यत्र नियामकं किमपि नास्ति । तथा च क्रियाहेतुगुणवत्त्वे समानेऽपि कस्यचित् सक्रियत्वमित्यपि सम्भवतीति तेन हेतुना आत्मनो निष्क्रियत्वमेवास्तु इति रीत्या यदुत्तरं तत् विकल्पसमा ।

## प्रकाशिका

### साध्यसमालक्षणम्

दृष्टान्तस्य पक्षतुल्यताकथनम् साध्यसमा । साध्यशब्दोऽत्र पक्षवाची । यथा तत्रैव यदि 'यथा लोष्टः तथा आत्मा' इति त्वया

उच्यते तदा 'यथा आत्मा तथा लोष्टः' इत्यप्यायातम् । तश्च यद्यात्मनि क्रियावत्त्वं साध्यते तर्हि लोष्टेऽपि तत्साधनीयम् नेति चेत्तर्हि यथा लोष्टः तथा आत्मेति न वाच्यम् । 'लोष्टसदृश आत्मा, नात्मसदृशो लोष्टः' इत्यत्र नियामकाभावात् इति ।

## बालप्रिया

साध्यसमामाह - **दृष्टान्तस्य पक्षतुल्यताकथनमिति** । साध्यतेऽस्मिन्निति व्युत्पत्त्या साध्यशब्दः पक्षवाची । दृष्टान्तः पक्षतुल्य इत्यापादनं साध्यसमा । शिष्टं स्पष्टम् । "हेत्वाद्यवयवसामर्थ्ययोगी धर्मः साध्यः तं दृष्टान्ते प्रसजतः साध्यसमः । यदि यथा लोष्टः तथा आत्मा, प्राप्तस्तर्हि यथा आत्मा तथा लोष्ट इति । साध्यश्चायमात्मा क्रियावानिति कामं लोष्टोऽपि साध्यः । अथ नैवम्, न तर्हि यथा लोष्टः तथा आत्मा" इति **भाष्यम्** ।

## प्रकाशिका

### प्राप्तिसमालक्षणम्

प्राप्त्या प्रत्यवस्थानम् प्राप्तिसमा । प्राप्तिश्च साध्यहेत्वोः सामानाधिकरण्यम् । यथा तत्रैव क्रियाहेतुगुणवत्त्वेनैव किमिति क्रियावत्त्वं साध्यते किमिति क्रियावत्त्वेन तादृशगुणवत्त्वं न उभयोरविशेषात् इति ।

## बालप्रिया

प्राप्तिसमामाह - **प्राप्त्या प्रत्यवस्थानमिति** । साध्येन सह एकाधिकरणवृत्तित्वं हेतोरस्ति चेत् हेतुना साकं एकाधिकरणवृत्तित्वं साध्यस्याप्यस्तीत्यङ्गीकरणीयम् । तथा च साध्यसामानाधिकरण्यं पुरस्कृत्य हेतुना साध्यं साध्यते चेत् हेतुसामानाधिकरण्यं पुरस्कृत्य साध्येनैव हेतुः साध्यताम् । एवं च आत्मा क्रियावान् क्रियाहेतुगुणवत्त्वात् इतिवत् आत्मा क्रियाहेतुगुणवान् क्रियावत्त्वात् इत्यपि

साध्यताम् अविशेषात् इति प्रत्यवस्थानं प्राप्तिसमेत्यर्थः । **उभयोर-विशेषादिति** । उभयोः सामानाधिकरण्याविशेषादित्यर्थः ।

## प्रकाशिका

### अप्राप्तिसमालक्षणम्

अप्राप्त्या प्रत्यवस्थानम् अप्राप्तिसमा । यथा तत्रैव पूर्वोक्त-दोषादप्राप्तस्य हेतोः साध्यसाधकत्वं वाच्यम्, तथा चाप्राप्तत्वावि-शेषात् सर्वः सर्वं साधयेत् इति । अयमेव हेतुः साध्याभावं किमिति न साधयेत् । साध्यमेव तु साधयेदित्यत्र विनिगमकाभावात् इति ।

## बालप्रिया

अप्राप्तिसमामाह - **अप्राप्त्या प्रत्यवस्थानमिति** । अप्राप्तिः साध्यहेत्वोः असामानाधिकरण्यम् । अत्रैवं विकल्पः कर्तव्यः । आत्मा क्रियावान् क्रियाहेतुगुणवत्त्वात् इत्युक्ते अयं हेतुः साध्यसमानाधिकरणः सन् साध्यं साधयति वा? साध्यासमानाधिकरणः सन् साध्यं साधयति वा? आद्ये सामानाधिकरण्याविशेषात् साध्येनापि कुतो न हेतुः साध्यत इति प्रत्यवस्थानात् प्राप्तिसमा । द्वितीये असामानाधिकरण्याविशे-षात् साध्यमिव अन्यत् सर्वमपि हेतुः कुतो न साधयेत् । तथा च सर्वः सर्वं साधयेत् । तथा हेतुर्यथा साध्येनासमानाधिकरणोऽपि साध्यं साध-यति तथा साध्याभावेनासमानाधिकरणत्वात् साध्याभावमेव कुतो न साधयेत्? । इति रीत्या प्रत्यवस्थानम् - दूषणकथनम् अप्राप्ति-समेत्यर्थः ।

## प्रकाशिका

### प्रसङ्गसमालक्षणम्

साधनपरम्पराप्रश्नः प्रसङ्गसमा । यथा क्रियावत्त्वे क्रियाहेतु-गुणवत्त्वं साधनम् । तत्र किं साधनम् ? न हि साधनं विना कस्यचित् सिद्धिरस्ति । एवं तत्रापि किं साधनमित्यादि ।

## बालप्रिया

प्रसङ्गसमां लक्षयति – **साधनपरम्पराप्रश्न** इति। साधनपरम्परा विषयकः प्रश्नः प्रसङ्गसमा। "साधनस्यापि साधनं वक्तव्यमिति प्रसङ्गेन प्रत्यवस्थानं प्रसङ्गसमः" इति **भाष्यम्**। शिष्टं स्पष्टम्।

## प्रकाशिका

### प्रतिदृष्टान्तसमालक्षणम्

दृष्टान्तान्तरेण साध्याभावसाधनम् प्रतिदृष्टान्तसमा। यथा 'तत्रैव लोष्टदृष्टान्तेन क्रियावत्त्वे साधिते निष्क्रियाकाशदृष्टान्तेन आत्मनो निष्क्रियत्वमेव किं न स्यात्। लोष्टदृष्टान्तेन क्रियावत्त्वं आकाशदृष्टान्तेन निष्क्रियत्वं न इत्यत्र नियामकाभावात्' इति।

## बालप्रिया

प्रतिदृष्टान्तसमामाह – **दृष्टान्तान्तरेणे**ति। आत्मा क्रियावान् क्रियाहेतुगुणयुक्तत्वात् लोष्टवत् इति लोष्टदृष्टान्तेन क्रियावत्त्वं साध्यते चेत् आत्मा निष्क्रियः क्रियाहेतुवायुसंयोगवत्त्वात् आकाशवत् इत्याकाशदृष्टान्तेन कुतो न साधयितुं शक्यत इति प्रकृतसाध्यशून्यं दृष्टान्तं प्रदर्श्य दूषणोद्भावनं प्रतिदृष्टान्तसमा। "क्रियावान् आत्मा क्रियाहेतुगुणयोगात् लोष्टवत् इत्युक्ते प्रतिदृष्टान्त उपादीयते क्रियाहेतुगुणयुक्तं आकाशं निष्क्रियं दृष्टमिति। कः पुनराकाशस्य क्रियाहेतुगुणः, वायुना संयोगः" इति **भाष्यम्**।

## प्रकाशिका

### अनुत्पत्तिसमालक्षणम्

अनुत्पत्त्या प्रत्यवस्थानम् अनुत्पत्तिसमा। यथा 'घटो न नित्यः जन्यैकत्वात्' इत्यादौ कश्चिदाह - यदि जन्यैकत्वं अनित्यत्वे प्रमाणम् तदा घटे एकत्वोत्पत्तेः पूर्वं तदभावात् नित्यत्वम्। नित्यश्चेत् तर्हि अनुत्पन्न एवेति।

### बालप्रिया

अनुत्पत्तिसमामाह - **अनुत्पत्त्या प्रत्यवस्थानमिति । जन्यैकत्वा- दिति** । जन्यं च तत् एकत्वं च जन्यैकत्वम्, तस्मात् । **अनुत्पन्न एवे**ति । तथा च अनित्यत्वं बाधितमिति भावः । "तथा च साधनाङ्गपक्षहेतु- दृष्टान्तानां उत्पत्तेः प्राक् हेत्वभाव इत्यनुत्पत्त्या प्रत्यवस्थानं अनु- त्पत्तिसमः । उत्पत्तेः पूर्वं हेत्वाद्यभावेन प्रत्यवस्थानस्यैव लक्षणत्वात्" इति **विश्वनाथः** ।

### प्रकाशिका

#### संशयसमालक्षणम्

साधारणधर्मं प्रदर्श्य संशयोद्भावनं संशयसमा । यथा 'शब्दोऽ- नित्यः कार्यत्वात्' इत्यादौ 'शब्दस्य अनित्यघटेन सह कार्यत्वरूपं साधर्म्यं यथा अस्ति तथा नित्येन शब्दत्वेन सह श्रावणप्रत्यक्षविषयत्वं साधर्म्यं अस्तीति उभयसाधर्म्यदर्शनात् संशयः स्यात् । एकपरिशेषे नियामकाभावात्' इति ।

### बालप्रिया

संशयसमामाह - **साधारणधर्मं प्रदर्श्ये**ति । स्पष्टार्थम् । "नित्या- नित्यसाधर्म्यादिति संशयकारणोपलक्षणम् । तेन समानधर्मदर्शनादि यत्किञ्चित्संशयकारणबलात् संशयेन प्रत्यवस्थानं संशयसमः" इति **विश्वनाथः** ।

### प्रकाशिका

#### प्रकरणसमालक्षणम्

वाद्युक्तहेतोः साध्यविपरीतसाधकहेत्वन्तरोद्भावनम् प्रकरण- समा । सत्प्रतिपक्षोदाहरणमेव अत्रोदाहरणं बोध्यम् ।

### बालप्रिया

प्रकरणसमामाह - **वाद्युक्तहेतोरि**ति । शब्दः अनित्यः कृतकत्वात् घटवत् इति वादिना अनित्यत्वसाधनाय कृतकत्वहेतौ उक्ते सति

तादृशहेतुसाध्यस्य अनित्यत्वस्य विपरीतं यत् शब्दः नित्यः श्रावणत्वात् शब्दत्ववत् इत्येवं प्रयुज्यमानं हेत्वन्तरम् श्रावणत्वाख्यं तदुद्भावनेन प्रत्यवस्थानं प्रकरणसमेत्यर्थः ।

## प्रकाशिका

### अहेतुसमालक्षणम्

कालत्रयेऽपि हेतुत्वासम्भवेन अहेतुत्वकथनम् अहेतुसमा । यथा 'कार्यत्वादिरूपसाधनं साध्यादनित्यत्वात् पूर्वकालवृत्ति चेत् तदाऽनित्यत्वरूपसाध्यस्य तदानीमभावात् कस्य साधकम् । अथ पश्चात्कालवृत्ति चेत् तदा पूर्वकाले साधनाभावात् कस्य साध्यमनित्यत्वम् । यदि च उभयं एककालवृत्ति तदा किं कस्य साधनं किं कस्य साध्यम् । विनिगमकाभावादिति । हेतुसमेति पाठे तु कालत्रयेऽपि हेतुत्वस्य असम्भवकथनं हेतुसमेत्यर्थः ।

## बालप्रिया

अहेतुसमां लक्षयति - **कालत्रयेऽपीति** । कालत्रयेऽपि हेतुत्वासम्भवकथनपूर्वकं अहेतुत्वकथनम् अहेतुसमा । **कस्य साधकमिति** । अनित्यत्वस्य कार्यत्वं न साधकमित्यर्थः । पूर्वकालावच्छेदेन अविद्यमानस्य साध्यस्य हेतुः कथं साधको भवेत् इति भावः । **कस्य साध्यमनित्यत्वमिति** । अनित्यत्वं कार्यत्वस्य साध्यं न भवतीत्यर्थः । कालत्रयशब्देन कार्यकालतत्पूर्वकालतत्पश्चात्कालाः विवक्षिताः । "हेतुरहेतुना न विशिष्यते । अहेतुना साधर्म्यात् प्रत्यवस्थानम् अहेतुसमः" इति **भाष्यम्** ।

## प्रकाशिका

### अर्थापत्तिसमालक्षणम्

अर्थापत्तिपुरस्कारेण साध्याभावोद्भावनम् अर्थापत्तिसमा । यथा 'पूर्वोक्तानुमाने शब्दस्य अनित्यसाधर्म्यादनित्यत्वं यदि, तदा

अर्थापत्त्या सिद्धं नित्यसाधर्म्यात् नित्यत्वमपि एकतरावधारणे नियामकाभावात्' इति ।

## बालप्रिया

अर्थापत्तिसमां लक्षयति - **अर्थापत्तिपुरस्कारेणे**ति । शब्दः अनित्यः कृतकत्वात् इति अनित्येन घटेन कृतकत्वसाधर्म्यात् शब्दः अनित्यः इत्युक्ते अर्थादापद्यते नित्यसाधर्म्यात् नित्य इति । अस्ति च नित्येन आकाशेन अस्पर्शत्वरूपं साधर्म्यं शब्दस्य इति शब्दो नित्य एव किं न स्यादित्येवम् अर्थापत्तिपूर्वकं दूषणोद्भावनं अर्थापत्तिसमेत्यर्थः । 'अर्थापत्त्या प्रतिपक्षं साधयतः अर्थापत्तिसमः । यदि प्रयत्नानन्तरीयकत्वात् अनित्यसाधर्म्यात् अनित्यः शब्द इति, तदा अर्थादापद्यते नित्यसाधर्म्यात् नित्य इति । अस्ति त्वस्य नित्येन साधर्म्यं अस्पर्शत्वम्' इति **भाष्यम्** । **एकतरावधारण** इति । अनित्यसाधर्म्यादनित्यत्वमेवेत्यवधारण इत्यर्थः ।

## प्रकाशिका

### अविशेषसमालक्षणम्

सर्वाविशेषप्रसङ्गोद्भावनम् अविशेषसमा । यथा तत्रैव 'यदि कृतकत्वादिना अनित्यघटादिसाधर्म्येण शब्दस्य अनित्यत्वं तदा प्रमेयत्वादिरूपेण तत्साधर्म्येण सर्वस्यैवानित्यत्वं स्यात् । मदुक्तसाधर्म्येण तत्सिध्यति, न तु त्वदुक्तेनेत्यत्र नियामकाभावात्' इति ।

## बालप्रिया

अविशेषसमां लक्षयति - **सर्वाविशेषप्रसङ्गोद्भावनमि**ति । शब्दोऽनित्यः कृतकत्वात् इत्यत्र एकस्य धर्मस्य कृतकत्वादेः शब्दे घटे च सत्त्वात् यदि शब्दघटयोरनित्यत्वेनाविशेष उच्यते, तदा सर्वेषामविशेषप्रसङ्गः । सत्त्वप्रमेयत्वादिरूपस्य एकस्य धर्मस्य सर्वेषु सत्त्वात् । तथा च सन्मात्रवृत्तिधर्मेणाविशेषापादनमविशेषसमा । तथा च सर्वे-

षामभेदे पक्षादिविभागो न स्यात् । सर्वेषामेकजातीयत्वेऽवान्तरजात्युच्छेदः, सर्वेषामनित्यत्वे जात्यादिविलय इति **विश्वनाथः** निरूपयति ।

## प्रकाशिका

### उपपत्तिसमालक्षणम्

उभयपक्षसाधर्म्येण साधनोपपत्तिकथनम् उपपत्तिसमा । यथा 'यदि अनित्यत्वसाधनं कार्यत्वमुपपद्यत इति शब्दस्यानित्यत्वं तदा नित्यत्वसाधनमपि किंचिदुपपद्यत इति नित्यत्वं किं न स्यात्' इति ।

## बालप्रिया

उपपत्तिसमां लक्षयति - **उभयपक्षसाधर्म्येणे**ति । द्वयोरपि पक्षयोः साधनमुपपद्यत इति कथनम् उपपत्तिसमा । शब्दस्य अनित्यत्वपक्षे यथा साधनं कार्यत्वमुपपद्यते, तथा शब्दनित्यत्वपक्षेऽपि साधनं श्रावणत्वादिकमुपपद्यत इति द्वयोरपि पक्षयोः साधनस्योपपन्नत्वाख्यं समानधर्मं पुरस्कृत्य प्रत्यवस्थानम् उपपत्तिसमेति यावत् ।

## प्रकाशिका

### उपलब्धिसमालक्षणम्

वाद्युपदर्शितसाधनाभावेऽपि साध्यस्य उपलब्धिकथनम् उपलब्धिसमा । यथा शब्दोऽनित्यः प्रयत्नानुविधायित्वात् घटवत् इत्यत्र प्रयत्नं विनापि वायुनोदनवशात् वृक्षशाखाभङ्गजन्यस्य शब्दस्य उपलब्धेः न प्रयत्नानुविधायित्वं शब्देऽस्ति इति ।

## बालप्रिया

उपलब्धिसमां सोदाहरणं लक्षयति - **वाद्युक्ते**ति । वादिना निर्दिष्टस्य कारणस्याभावेऽपि साध्योपलम्भात् प्रत्यवस्थानम् उपलब्धिसमः । तथा हि - पर्वतो वह्निमान् धूमात् इत्यादिकं वह्न्यवधारणार्थं उच्यते, न च तत्सम्भवति, धूमं विना आलोकादितोऽपि वह्निसिद्धेः । तथा च न तस्य साधकत्वमिति प्रतिकूलतर्कः इति **विश्वनाथः** ।

## प्रकाशिका

### अनुपलब्धिसमालक्षणम्

वादिनाऽनुपलब्धिवशात् कस्यचित् पदार्थस्य अनङ्गीकारे अनुपलब्धिवशादेव वाद्यभिमतस्यापि यत्किंचित्पदार्थस्य अभावसाधनम् अनुपलब्धिसमा। यथा-'जलादेः विद्यमानस्यापि आवरणवशात् यथाऽनुपलब्धिः तथा उच्चारणात्पूर्वं शब्दस्य विद्यमानस्यापि आवरणवशात् अनुपलब्धिः इत्येतन्मतं वादिना दूष्यते-यद्यावरणवशात् शब्दो नोपलभ्येते, तदा जलाद्यावरणमिव शब्दाद्यावरणमप्युपलभ्येतेति। अत्रोत्तरम्-यदि भवद्भिः अनुपलब्धित आवरणं नाभ्युपेयते तदा अनुपलब्धेरपि अनुपलब्ध्याभावे सिद्धे तदभावात् आवरणाभावासिद्धौ आवरणसिद्धिः' इति।

## बालप्रिया

अनुपलब्धिसमां लक्षयति - **वादिने**ति। नैयायिकैस्तावत् शब्दानित्यत्वं एवं साध्यते - यदि शब्दः नित्यः स्यात् तर्हि उच्चारणात् प्राक् कुतो नोपलभ्यते। न हि घटाद्यावरणकुड्यादिवत् शब्दस्यावरणमस्ति, तदनुपलब्धेरिति। तत्रैवं जातिवादी प्रत्यवतिष्ठते-यद्यावरणानुपलब्धेः आवरणाभावः सिध्यति तदा आवरणानुपलब्धेरप्यनुपलम्भात् आवरणानुपलब्धेरप्यभावः सिध्येत्। तथा च अनुपलब्धिप्रमाणकः आवरणाभावो न स्यात् अपि तु आवरणोपपत्तिरेव स्यादिति शब्दनित्यत्वे नोक्तं बाधकं युक्तमिति। इत्थं च एवंरूपेण प्रत्यवस्थानम् अनुपलब्धिसमेत्यर्थ इति **विश्वनाथः**।

## प्रकाशिका

### नित्यसमालक्षणम्

धर्मस्य नित्यत्वानित्यत्वविकल्पात् धर्मिणो नित्यत्वसाधनम् नित्यसमा। यथा 'शब्दस्य यत् अनित्यत्वं भवद्भिः उच्यते तत् नित्यं अनित्यं वा। यदि नित्यं तदा शब्दवृत्तेरेव तस्य सदातनत्वात् शब्द-

स्यापि तथात्वमागतम् । अथ अनित्यं तदा शब्दे कदाचित् अनित्यत्वाभावोऽस्तीति नित्य एव शब्द इत्युभयथापि शब्दस्य नित्यत्वम्' इति ।

### बालप्रिया

नित्यसमां लक्षयति - **धर्मस्येति** । **शब्दस्यापि तथात्वमागतमिति** । शब्दस्यापि नित्यत्वं प्रसक्तमित्यर्थः । धर्मिणं विना धर्मस्य स्थित्यभावेन धर्मस्यानित्यत्वस्य नित्यत्वे सदातनत्वे धर्मी शब्दोऽपि नित्यः स्यादिति भावः । शब्दे अनित्यत्वस्य नित्यं सर्वकालं स्वीकारे अनित्ये शब्दे नित्यत्वं स्यादित्यापादनं नित्यसमा इति **विश्वनाथः** ।

### प्रकाशिका

#### अनित्यसमालक्षणम्

अनित्यदृष्टान्तसाधर्म्यात् सर्वानित्यत्वप्रसङ्गोद्भावनम् अनित्यसमा । यथा 'यदि अनित्येन घटेन सादृश्यात् शब्दः अनित्यः इत्युच्यते तदा येन केनचित् धर्मेण सर्वस्यैव तत्सदृशत्वात् सर्वस्यानित्यत्वप्रसङ्गः' इति ।

### बालप्रिया

अनित्यसमां लक्षयति - **अनित्यदृष्टान्तेति** । अनित्येन घटेन साधर्म्यात् (कृतकत्वरूपात्) अनित्यः शब्द इति ब्रुवतः अस्ति घटेनानित्येन सर्वभावानां साधर्म्यं (सत्त्वादिरूपम्) इति सर्वस्य अनित्यत्वमनिष्टं सम्पद्यते । सोऽयं अनित्यत्वेन प्रत्यवस्थानात् अनित्यसम इति **भाष्यम्** । व्याप्तिमपुरस्कृत्य यत्किञ्चिद्दृष्टान्तसाधर्म्येण सर्वस्य साध्यवत्त्वापादनात् अनित्यसमा । साध्यपदादविशेषसमातो व्यवच्छेदः तत्र सर्वाविशेष एवापद्यते न तु सर्वस्य साध्यवत्त्वम् इति **विश्वनाथः** ।

### प्रकाशिका

#### कार्यसमालक्षणम्

वाद्युक्तहेतोः अन्यकार्येणापि सम्भवाभिधानं कार्यसमा । यथा तत्रैव प्रयत्नानुविधायित्वं उभयथापि सम्भवति घटादिवत् शब्दस्व-

रूपोत्पत्तौ जलादिवत् आवरकनिवृत्तौ च उभयत्रापि प्रयत्नानुविधायित्वदर्शनात् । तथा च तस्य आवरकनिवृत्तिरूपकार्यान्तरस्य सम्भवात् नानित्यत्वनियतत्वं इति । क्वचित् कारणसमेति पाठः । तस्यापि 'कारणस्य प्रयत्नानुविधायित्वस्य उभयत्र शब्दस्योत्पत्तौ तदावरकनिवृत्तौ च समत्वाभिधानम्' इति रीत्या उक्त एवार्थे पर्यवसानमवसेयम् । अत्र ग्रन्थगौरवभयात् सूक्ष्मप्रकाराः न दर्शिताः इत्यभियुक्तैरन्यत्र तेऽनुसन्धेयाः ।

## बालप्रिया

कार्यसमां लक्षयति - **वाद्युक्तहेतोरि**ति । यथा शब्दः अनित्यः प्रयत्नानुविधायित्वात् इत्यत्र प्रयत्नानुविधायित्वं कार्यद्वयेऽस्ति स्वरूपोत्पत्तौ आवरकनिवृत्तौ चेति । तत्र स्वरूपोत्पत्त्यभिप्रायेण वादिनोक्ते जातिवादी आह आवरकनिवृत्तावेव प्रयत्नानुविधायित्वस्योपयोगः न स्वरूपोत्पत्ताविति शब्दस्यानित्यत्वं न सिध्यतीति । एवंरीत्या प्रत्यवस्थानं कार्यसमेत्यर्थः ।

अत्रेदमवधेयम्-केषुचित् ग्रन्थेषु साधर्म्यसमा वैधर्म्यसमा इत्यादिरूपेण स्त्रीलिङ्गतया समशब्दः प्रयुज्यते, केषुचित्तु साधर्म्यसमः वैधर्म्यसमः इत्यादिरूपेण पुल्लिङ्गतया प्रयुज्यते । तत्र जातेर्विशेष्यत्वविवक्षायां समशब्दस्य स्त्रीलिङ्गत्वम् । **न्यायसूत्रकारस्तु**-'साधर्म्यवैधर्म्यसमौ' इत्यादिरूपेण पुल्लिङ्गतयैव निर्दिशति । तस्यायं भावः - वाद्युक्तस्य प्रतिषेधः किल जातिवादिना क्रियते, तत्र प्रतिषेधशब्दः पुल्लिङ्ग इति तदनुरोधेन समशब्दस्य पुल्लिङ्गतेति । तदुक्तं **न्यायपरिशुद्धौ वेदान्तदेशिकैः** - "अक्षपादीयेषु च जातिविशेषलक्षणसूत्रेषु पुल्लिङ्गान्तसमशब्दनिर्देशः स्वपक्षस्थापनपरपक्षप्रतिक्षेपरूपेण विभागे प्रत्यवस्थाने प्रतिषेधभागेनात्र जातित्वं विवक्षितम् इत्युक्तरूपजातिविशेषाभिप्राय इत्याहुः" इति । **न्यायभाष्यकारा**दयोऽपीति प्रतिषेधशब्दस्य सूत्रे बहुलं प्रयोगात् प्रतिषेधशब्दमादायैव समशब्दे पुल्लिङ्गनिर्वाहं मन्यन्ते । **विश्वनाथन्यायपञ्चाननस्तु** 'साधर्म्यसमादयो जाति-

विकल्पाः । विविधः कल्पः विकल्पः प्रभेदः' इति वदन् विकल्पशब्दानुसारेण समशब्दस्य पुल्लिङ्गतां निर्वहति। एवं वादिना साधने क्रियमाणे तत्र प्रतिवादिना उद्भाव्यमानः असदुत्तरविशेषः जातिः। तस्य जातिशब्दवाच्यता जायमानत्वनिबन्धना। तथा च "साधर्म्यवैधर्म्याभ्याम् प्रत्यवस्थानम् जातिः" इति सूत्रे **भाष्यम्** - "प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते सः जातिः" इति। कथायां प्रवृत्तयोः वादिप्रतिवादिनोः मध्ये वादिना साधने कृते यथावस्थितोत्तरस्फूर्तिरहितस्य जिगीषोः प्रतिवादिनः मुखात् यः कश्चित् हेत्वाभासः अवशात् आगतः जायमान एव भवति न तु जातः सन् कार्यकरोऽपीत्याशयेन अवधारणार्थतया जातिशब्दः प्रवर्तत इति **उत्तमूरुवीरराघवाचार्यस्वामिनः** निरूपयन्ति। ते एव स्वामिनः साम्यार्थकसमशब्दघटनस्य तात्पर्यमेवं वर्णयन्ति - वादिप्रतिवादिप्रयुक्तयोर्हेत्वोः साम्यम्, वादिप्रतिवादिनोरपि साम्यं च समशब्देन लक्ष्यते। **सूत्रे** समशब्दः प्रतिषेधरूपहेतुविशेषणीभूतः हेतुगतं साम्यं दर्शयति। अथापि वक्तृगतसाम्यमपि विवक्षितम्। तदाह **वार्तिककारः** – "समीकरणार्थं प्रयोगः समः। साधर्म्यमेव समं यस्य प्रयोगस्य स साधर्म्यसमः" इति। अत्र समीकरणार्थमित्यनेन वस्तुतः साम्याभावेऽपि समीकरणोद्देशो ज्ञाप्यते। न हि सद्धेतोरसद्धेतुना निराकरणं साम्यापादनं वा भवति। केन कस्य समीकरणमिति चेत् – वादिना प्रतिवादिनः समीकरणम्। तथा च प्रतिवादिना स्वापकर्षपरिहारार्थमन्ततः समीकरणार्थं जातिप्रयोगः क्रियत इत्युक्तं भवति। **देशिकचरणास्तु न्यायपरिशुद्धौ** जातिवादिप्रयुक्तहेतोः परघातकत्ववत् स्वव्याघातकत्वमप्यस्तीति तदेव साम्यं समशब्देन प्रतिपाद्यत इति निर्वहन्ति।

एवं चतुर्विंशतिधा निर्दिष्टासु जातिषु कासांचित् जातीनां लक्षणेषु परिशील्यमानेषु समानत्वं स्थूलदृष्ट्या प्रतीयते। ततः नामभेदमात्रमिति शङ्का अवतरति। तत्रापि सूक्ष्मदृष्ट्या विचार्यमाणे लक्षणेषु भेदोऽवगन्तुं शक्यते। तदेतन्मनसि निधायाह - **अत्र ग्रन्थगौरव-**

**भयात् सूक्ष्मप्रकाराः न दर्शिताः** इति । किं च आसां जातीनां सप्ताङ्गानि भवन्तीति **उदयनाचार्यैः न्यायपरिशिष्टस्यान्ते** -

"लक्ष्यं लक्षणमुत्थितिः स्थितिपदं मूलं फलं शातनं
जातीनां सविशेषमेतदखिलं प्रव्यक्तमुक्तं रहः" ॥

इति श्लोकार्धेन प्रतिपादितम् । तत्र प्रतिवादिना यत् असदुत्तरमुच्यते तदेव लक्ष्यम् । तस्य साधर्म्यसमादिषु यत्रान्तर्भावः तल्लक्षणमेव लक्षणम् । उत्थितिर्नाम जन्म । स्थितेः पदं स्थितिपदं जात्युत्तरस्थितेः आश्रयः । असति साधनप्रयोगे जात्युत्तराप्रवृत्तेः दूष्यो हेतुरेव स्थितिपदत्वेन विवक्षितः । ईदृशजातिप्रयोगस्य मूलं साधर्म्याद्याकारदर्शनम् । फलं तु वादिनः स्वोक्तहेतौ प्रतिवादिना दुष्टत्वभ्रमोत्पादनम् । शातनं वादिना प्रतिवाद्युक्तस्यासदुत्तरस्य जातिरूपस्य निराकरणम् । **सूत्रकारस्तु** जात्युत्तरस्य निराकरणप्रकारं प्रतिजाति विशदं प्रतिपादितवान् । सप्ताङ्गकत्वं तु **न्यायपरिशिष्टे** तत्र तत्र सूचितमेव । सर्वमिदं विस्तरभयात् अत्रोपेक्षितमिति भावः ।

## दीपिका

### निग्रहस्थाननिरूपणम्

वादिनः अपजयहेतुः निग्रहस्थानम् ।

## प्रकाशिका

निग्रहस्थानं लक्षयति - **वादिन** इति । इदं च यद्यपि छलादावप्यस्ति तथाप्यर्थान्तरादिरूपनिग्रहस्थानमध्येऽन्तर्भावात् अदोषः । छलत्वादिनापि ज्ञानस्योपयोगित्वात् पृथगुपादानं हेत्वाभासवत् ।

## दीपिका

प्रतिज्ञाहानिः, प्रतिज्ञान्तरम्, प्रतिज्ञाविरोधः, प्रतिज्ञासन्न्यासः, हेत्वन्तरम्, अर्थान्तरम्, निरर्थकम्, अविज्ञातार्थकम्, अपार्थकम्, अप्राप्तकालम्, न्यूनम्, अधिकम्, पुनरुक्तम्, अननुभाषणम्, अज्ञानम्, अ-

प्रतिभा, विक्षेपः, मतानुज्ञा, पर्यनुयोज्योपेक्षणम्, निरनुयोज्यानुयोगः, अपसिद्धान्तः, हेत्वाभासाश्च निग्रहस्थानानि। शेषं सुगमम्।

## प्रकाशिका

### प्रतिज्ञाहानिलक्षणम्

तस्यावान्तरभेदान् दर्शयति– **प्रतिज्ञेत्यादिना** । यत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमः प्रतिज्ञातार्थपरित्यागो वा तत्र प्रतिज्ञाहानिः । यथा 'शब्दोऽनित्यः प्रत्यक्षगुणत्वात्' इत्यत्र 'सोऽयम् गकारः' इत्यादिप्रत्यभिज्ञाबलात्परेण बाधे उद्भाविते 'अस्तु तर्हि नित्यः शब्दः' इति नित्यत्वमङ्गीकुर्वन् वादी शब्दस्य अनित्यत्वप्रतिज्ञां जहाति ।

## बालप्रिया

प्रतिज्ञाहानिं लक्षयति - **यत्र प्रतिज्ञातार्थे**ति । प्रतिज्ञातस्य साध्यस्य यत् विरुद्धं तदङ्गीकारः प्रतिज्ञातस्य साध्यस्य त्यागो वा प्रतिज्ञाहानिः । इदं च "साध्यधर्मप्रत्यनीकेन धर्मेण प्रत्यवस्थिते प्रतिदृष्टान्तधर्मं स्वदृष्टान्तेऽभ्यनुजानन् प्रतिज्ञां जहातीति प्रतिज्ञाहानिः" इत्यादि **भाष्यानुसारि** लक्षणम् । **विश्वनाथस्तु** – "स्वपक्षे परपक्षधर्माभ्यनुज्ञा प्रतिज्ञाहानिः । स्वयं विशिष्याभिहितपरित्याग इति फलितार्थः । सेयं पक्षहेतुदृष्टान्तसाध्यतदन्यहानिभेदात् पञ्चधा भवति । यथा शब्दः अनित्यः कृतकत्वात् इत्युक्ते प्रत्यभिज्ञाबाधितविषयोऽयमित्युत्तरिते अस्तु तर्हि घट एव पक्ष इति । एवं तत्रैव शब्दोऽनित्यः ऐन्द्रियकत्वात् इत्युक्ते हेतोरनैकान्तिकत्वमिति प्रत्युक्ते अस्तु कृतकत्वादिति हेतुरिति । एवं पर्वतो वह्निमान् धूमात् आलोकवदित्युक्ते दृष्टान्तः साधनविकल इति प्रत्युक्ते अस्तु तर्हि महानसवदिति । एवं अत्रैव सिद्धसाधनेन प्रत्युक्ते अस्तु तर्हि इन्धनवानिति । अन्यहानिस्तु विशेषणहान्यादिः, यथा तत्रैव नीलधूमादित्युक्तेऽसमर्थविशेषणत्वेन प्रत्युक्ते अस्तु तर्हि धूमादिति हेतोरिति" इत्याह । तदनुसारेण **दिनकर्याम्** - 'विशिष्य प्रतिज्ञातस्य पक्षादेः परित्यागरूपप्रतिज्ञाहानेः' इति प्रोक्तम् ।

## प्रकाशिका

### प्रतिज्ञान्तरलक्षणम्

परोक्तदोषोद्दिधीर्षया पूर्वानुक्तविशेषणविशिष्टतया प्रतिज्ञातार्थकथनम् प्रतिज्ञान्तरम् । यथा – क्षित्यादिकं गुणजन्यम् कार्यत्वात् इत्यत्र अदृष्टजन्यत्वेन सिद्धसाधनोद्भावने 'सविषयक' इति गुणविशेषणदानम् ।

## बालप्रिया

प्रतिज्ञान्तरं लक्षयति - **परोक्ते**ति । **गुणविशेषणदान**मिति । सविषयकगुणजन्यत्वं साध्यम् । अदृष्टस्य तु सविषयकत्वाभावात् तज्जन्यत्वमादाय न सिद्धसाधनमिति भावः । 'प्रतिज्ञातार्थस्येत्युपलक्षणम् । हेत्वतिरिक्तार्थस्येति तत्त्वम् । तेन उदाहरणान्तरम्, उपनयान्तरम्, निगमनान्तरं च प्रतिज्ञान्तरत्वेन सङ्गृहीतं भवति' इति **विश्वनाथः** । हेत्वन्तरं तु सूत्रकारेण पृथङ्निग्रहस्थानत्वेन निर्दिष्टम् ।

## प्रकाशिका

### प्रतिज्ञाविरोधलक्षणम्

स्वोक्तसाध्यविरुद्धहेतुकथनम् प्रतिज्ञाविरोधः । यथा - द्रव्यं गुणभिन्नम् रूपादितः पृथक्त्वेन अनुपलभ्यमानत्वात् इति ।

## बालप्रिया

प्रतिज्ञाविरोधं लक्षयति – **स्वोक्तसाध्ये**ति । रूपादितः पृथक्त्वेन अनुपलभ्यमानत्वं हि गुणाभिन्नत्वव्याप्यम्, न गुणभिन्नत्वसाधकम् । अतो गुणभिन्नत्वाभावव्याप्तस्य हेतोः कथनात् प्रतिज्ञाविरोध इत्यर्थः ।

## प्रकाशिका

### प्रतिज्ञासन्न्यासलक्षणम्

स्वोक्तेऽर्थे परेण दूषिते तदपलापः प्रतिज्ञासन्न्यासः । यथा – 'शब्दोऽनित्यः ऐन्द्रियकत्वात्' इत्युक्ते परेण सामान्ये व्यभिचारमुद्भाव्य दूषिते स्वोक्तमपलपति 'केनोच्यते शब्दोऽनित्यः' इति ।

**बालप्रिया**

प्रतिज्ञासन्न्यासं लक्षयति – **स्वोक्तेऽर्थे** इति । प्रतिज्ञाहानौ प्रतिज्ञातार्थस्य त्यागः प्रतिज्ञासन्न्यासे तु तस्यापलाप इति भेदः ।

**प्रकाशिका**

**हेत्वन्तरलक्षणम्**

परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुकोटौ विशेषणान्तरोपादानम् हेत्वन्तरम् । यथा 'शब्दोऽनित्यः प्रत्यक्षत्वात्' इत्यत्र सामान्ये व्यभिचारोद्भावने 'जातिमत्त्वे सति' इति विशेषणदानम् ।

**बालप्रिया**

हेत्वन्तरं लक्षयति - **परोक्ते**ति । परोक्तदूषणोद्दिधीर्षया पूर्वोक्त-हेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनं हेत्वन्तरमित्यर्थः । जातिमत्त्वे सतीति विशेषणे दत्ते तु सामान्ये जातिमत्त्वाभावात् न व्यभिचारः ।

**प्रकाशिका**

**अर्थान्तरलक्षणम्**

प्रकृतानुपयुक्तार्थकथनम् अर्थान्तरम् । यथा-नित्यः शब्दः अस्पर्शवत्त्वात् इति हेतुः । हेतुपदं च हिनोतेस्तुनिप्रत्यये निष्पन्नम्; पदं च सुप्तिङन्तम् इत्यादि ।

**बालप्रिया**

अर्थान्तरं लक्षयति - **प्रकृतानुपयुक्ते**ति । प्रकृतानाकाङ्क्षितार्थाभिधानमित्यर्थः ।

**प्रकाशिका**

**निरर्थकलक्षणम्**

अवाचकशब्दप्रयोगो निरर्थकम् । यथा शब्दः अनित्यः जबगडदशत्वात् इत्यादि ।

**अविज्ञातार्थलक्षणम्**

परिषत्प्रतिवाद्यबोधप्रयोजकपदप्रयोगः अविज्ञातार्थम् । तच्च 'क्लिष्टान्वयं अप्रसिद्धार्थकं त्वरितोच्चारितम्' इत्यादिरूपम् ।

### बालप्रिया

अविज्ञातार्थं लक्षयति - **परिषदिति** । वादिना त्रिवारमुक्तमपि प्रतिवादिना सदस्यैश्च यन्न बुध्यते तत् अविज्ञातार्थम् । 'अवहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञातार्थम् । वाचकेत्यनेन निरर्थकापार्थकव्युदासः' इति **विश्वनाथः** । तादृशं वाक्यं 'भूस्तनं हिमभेषजवत्' इत्यादिकम् । भूस्तनमित्यस्य पर्वत इत्यर्थः । हिमस्य भेषजम् अग्निः तद्वान् इति हिमभेषजवदित्यस्यार्थः । 'अग्निर्हिमस्य भेषजम्' इति श्रुतेः ।

### प्रकाशिका

**अपार्थकलक्षणम्**

परस्परानन्वितपदसमूहः अपार्थकम् । यथा-शब्दत्वं घटः पटः नित्यं अनित्यं च प्रमेयत्वात् इत्यादि ।

### बालप्रिया

अपार्थकं लक्षयति - **परस्परेति** । अभिमतवाक्यार्थबोधानुकूलाकाङ्क्षाशून्यपदसमूहः अपार्थकमित्यर्थः ।

### प्रकाशिका

**अप्राप्तकाललक्षणम्**

अवयवानां व्युत्क्रमेण कथनम् अप्राप्तकालम् । यथा शब्दत्वात् शब्दः अनित्यः इत्यादि ।

### बालप्रिया

अप्राप्तकालं लक्षयति - **अवयवानामिति** । ''प्रतिज्ञादीनां अवयवानां यथालक्षणं अर्थवशात् क्रमः । तत्रावयवविपर्यासेन वचनं अप्राप्तकालम्'' इति **भाष्यानुसारीदं** लक्षणम् । **विश्वनाथस्तु**-अवय-

वस्य कथैकदेशस्य विपर्यासः वैपरीत्यम् । तथा च समयबन्धविषयी-भूतकथाक्रमविपरीतक्रमेणाभिधानं पर्यवसन्नम् । तत्रायं क्रमः-वादिना साधनमुक्त्वा सामान्यतो हेत्वाभासा उद्धरणीयाः इत्येकः पादः, प्रतिवादिनश्च तत्रोपालम्भः द्वितीयः पादः, प्रतिवादिनः स्वपक्षसाधनं तत्र हेत्वाभासोद्धारणं चेति तृतीयः पादः । जयपराजयव्यवस्था चतुर्थः पादः । एवं प्रतिज्ञाहेत्वादीनां क्रमः । तत्र सभाक्षोभव्यामोहादिना व्यत्यस्ताभिधानं अप्राप्तकालम्' इति प्रतिपादयति ।

## प्रकाशिका

### न्यूनलक्षणम्

यत्किंचिदवयवशून्यावयवाभिधानम् न्यूनम् । स्पष्टम् ।

### अधिकलक्षणम्

अधिकहेत्वादिकथनम् अधिकम् । यथा शब्दः अनित्यः शब्दत्वात् श्रावणत्वाच्च इत्यादि ।

### पुनरुक्तलक्षणम्

अनुवादं विना कथितस्य पुनः कथनम् पुनरुक्तम् । यथा – शब्दः अनित्यः, शब्दः अनित्यः इत्यादि ।

## बालप्रिया

पुनरुक्तं लक्षयति - **अनुवादं विनेति** । निष्प्रयोजनं पुनरभिधानं पुनरुक्तम् । अनुवादस्तु व्यख्यारूपः सप्रयोजनकः । अतो न तत्राति-व्याप्तिः । तथा च समानार्थकसमानानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनरभिधानं शब्दपुनरुक्तम् । **यथा शब्दः अनित्यः शब्दः अनित्य** इति । समानार्थकभिन्नानुपूर्वीकशब्दस्य निष्प्रयोजनं पुनः अभिधानमर्थ-पुनरुक्तम् । यथा शब्दः अनित्यः ध्वनिर्निनिरोधधर्मक इति ।

## प्रकाशिका

### अननुभाषणलक्षणम्

परिषदा त्रिरभिहितस्यापि अननुवादः अननुभाषणम् ।

### बालप्रिया

अननुभाषणं लक्षयति – **परिषदे**ति। वादिना त्रिरुक्तस्य परिषदा विज्ञातार्थस्य वाक्यस्य प्रतिवादिना अननुवादः अननुभाषणम्। अज्ञानसाङ्कर्यनिरासाय अज्ञानमनाविष्कुर्वतेति विक्षेपसाङ्कर्यनिरासाय कथामविच्छिन्दतेति च विशेषणीयम् इत्याचार्याः। न च अप्रतिभा-साङ्कर्यम्,उत्तरप्रतिपत्तावपि सभाक्षोभादिना अननुभाषणसम्भवादिति **विश्वनाथः**।

### प्रकाशिका

#### अज्ञानलक्षणम्

परिषदा विज्ञातस्य वादिना त्रिरभिहितस्यापि वाक्यार्थस्या-बोधः अज्ञानम्।

#### अप्रतिभालक्षणम्

उत्तरार्हं परोक्तं बुद्ध्वाऽपि उत्तरस्य अस्फूर्तिवशात् तूष्णीं-भावः अप्रतिभा।

### बालप्रिया

अप्रतिभां लक्षयति – **उत्तरार्ह**मिति। न चात्र अननुभाषणस्या-वश्यकत्वात् तदेव दूषणमस्त्विति वाच्यम्। परोक्ताननुवादे हि तत्। अप्रतिभायां तु परोक्तानुवादेऽपि उत्तराप्रतिपत्तिरिति विशेषात्।

### प्रकाशिका

#### विक्षेपलक्षणम्

असम्भवत्कालान्तरकार्यव्यासङ्गानुद्भाव्य कथाविच्छेदः वि-क्षेपः।

### बालप्रिया

विक्षेपं लक्षयति – **असम्भवदि**ति। कालान्तरे कर्तुं शक्यं वस्तुत इदानीं भवितुमनर्हं यत् कार्यं तत्र व्यासङ्गमुद्भाव्य कथाविच्छेदो विक्षेपः। तेन राजपुरुषादिभिराकारणे गृहजनादिभिर्वा आवश्यक-

कार्यार्थमाकारण स्वगृहदाहादिकं पश्यतो गमने वास्तवशिरोरोगादिना प्रतिबन्धे वा न विक्षेपः। 'यत्र कर्तव्यं व्यासज्य कथां व्यवच्छिनत्ति इदं मे करणीयं विद्यते तस्मिन्नवसिते पश्चात् कथयामीति विक्षेपो नाम निग्रहस्थानम्' इति **भाष्यम्** ।

## प्रकाशिका

### मतानुज्ञालक्षणम्

स्वपक्षे दोषमनुद्धृत्य परपक्षे दोषाभिधानम् मतानुज्ञा ।

## बालप्रिया

मतानुज्ञां लक्षयति - **स्वपक्ष** इति । स्वसिद्धान्ते परोक्तं दोषमङ्गीकृत्यानुद्धृत्य च परसिद्धान्तेऽपि समानो दोष इत्युद्भावनं मतानुज्ञेत्यर्थः । यथा-पुरुषत्वाच्चेदहं चोरः तत एव भवानपि चोर इत्यादिकम् ।

## प्रकाशिका

### पर्यनुयोज्योपेक्षणलक्षणम्

उद्भावनार्हपरकीयनिग्रहस्थानानुद्भावनं पर्यनुयोज्योपेक्षणम् ।

## बालप्रिया

पर्यनुयोज्योपेक्षणं लक्षयति - **उद्भावनार्हे**ति । पर्यनुयोज्यो नाम निग्रहोपपत्त्या चोदनीयः, तस्योपेक्षणं निग्रहस्थानं प्राप्तोऽसीत्यननुयोगः । एतच्च कस्य पराजय इत्यनुयुक्तया परिषदा वचनीयम् । न खलु निग्रहं प्राप्तः स्वकौपीनं विवृणुयात्' इति **भाष्यम्** ।

'ननु वादिना कथमिदमुद्भाव्यम्, स्वकौपीनविवरणस्यायुक्तत्वादिति चेत्-सत्यम् । मध्यस्थेनैव इदमुद्भाव्यम्, वादे च स्वयमुद्भावनेऽप्यदोषः' इति विश्वनाथः । शिष्टं स्पष्टम् ।

अत्र जातिनिग्रहस्थानविषये भाष्य-वार्तिक-तात्पर्यटीका-परिशुद्धि-न्यायपरिशिष्ट-न्यायमञ्जरी-तार्किकरक्षादिषु ग्रन्थेषु वेदान्त-

देशिककृतन्यायपरिशुद्धौ च बहुविवेचितमस्ति । तत्सर्वं सावधानं परामृश्य कश्चिन्महान्प्रबन्धः पृथगेव लेखनीयः । प्रकरणग्रन्थे एतावदेव पर्याप्तमिति विस्तरभयादुपरम्यते ।

## प्रकाशिका

### निरनुयोज्यानुयोगलक्षणम्

निग्रहस्थानरहिते निग्रहस्थानोद्भावनम् निरनुयोज्यानुयोगः ।

### अपसिद्धान्तलक्षणम्

एकसिद्धान्तमतमाश्रित्य कथाप्रवृत्तौ तद्विरुद्धसिद्धान्तमतमालम्ब्योत्तरदानम् अपसिद्धान्तः ।

प्रतिज्ञाहानि - अननुभाषण - अज्ञान - अप्रतिभा - विक्षेपपर्यनुयोज्योपेक्षणानामभावे, अन्येषां हेत्वाभासव्यतिरिक्तनिग्रहस्थानानां गुणे, हेत्वाभासानां च द्रव्यादिषु अन्तर्भावः यथायथं बोध्यः । अतिरिक्तः सूत्रार्थः सुगम इत्यभिप्रायेणाह - **शेषमिति** ।

## बालप्रिया

जातीनां निग्रहस्थानानां च क्लृप्तेषु सप्तसु पदार्थेषु अन्तर्भावप्रकारमाह - **प्रतिज्ञाहानीत्यादिना** । **दिनकरीग्रन्थे** प्रतिज्ञाहान्यादीनां निग्रहस्थानानां प्रत्येकमुपादानेन तत्र तत्रान्तर्भावः विशदमुक्तः तत एवावसेयः । असदुत्तररूपजातेः स्वाभिमतार्थव्याघातकस्वोत्तरवाक्यरूपतया शब्दात्मके गुणेऽन्तर्भावः ।

## दीपिका

### शक्तेरतिरिक्तपदार्थत्वखण्डनम्

ननु करतलानलसंयोगे सत्यपि प्रतिबन्धके सति दाहानुत्पत्तेः शक्तिः पदार्थान्तरमिति चेत् - न । प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात् । कारणत्वस्यैव शक्तिपदार्थत्वात् ।

## प्रकाशिका

ननु अनलसंयोगे सत्यपि मण्यादिसमवधाने दाहो न जायत इति मण्यादेः प्रतिबन्धकता वाच्या । सा च वह्नौ दाहानुकूलशक्तिस्वीकार एव निर्वहति। प्रतिबन्धकतायाः कार्यानुकूलशक्तिविघटकत्वरूपत्वात् । अतः तदन्यथानुपपत्तिसिद्धायाः शक्तेरतिरिक्तत्वात् 'सप्तैव पदार्थाः' इत्यसङ्गतमिति प्राभाकरः शङ्कते - **नन्विति** । नन्वेवं शक्तिसिद्धावपि तस्या अतिरिक्तत्वासिद्धिरिति चेत् - न । यतो न तावद्द्रव्यात्मिका शक्तिः गुणादिवृत्तित्वात् । अत एव न गुणकर्मान्यतररूपा, न च सामान्याद्यन्यतमरूपा, उत्पत्ति विनाशशालित्वात् । एवं चातिरिक्तपदार्थत्वसिद्धिरिति । ननु प्रतिबन्धकत्वं न कार्यानुकूलशक्तिविघटकत्वम्, किं तु कारणीभूताभावप्रतियोगित्वम् । तच्च मण्यभावस्य हेतुत्वादेव उपपद्यते, मणिसमवधानदशायां च तदभावरूपकारणान्तराभावादेव दाहानुत्पत्तिसम्भवः । इत्थं चातिरिक्तशक्तिस्वीकारोऽनुचित इति समाधत्ते - **प्रतिबन्धकाभावस्येति** । ननु 'दाहोत्पादे वह्निः शक्तः' इति व्यवहारान्यथानुपपत्त्या सेत्स्यति अतिरिक्ता शक्तिरित्याशङ्क्य तस्याः कारणतारूपत्वेऽपि व्यवहारोपपत्तेः नातिरिक्ता शक्तिरित्याह - **कारणत्वस्येति** । ननु मण्याद्यभावस्य हेतुत्वे मणिसमवधानदशायां सत्यप्युत्तेजके दाहो न स्यात् । मन्मते तु मण्याद्यपसारणदशायामिव उत्तेजकसमवधानदशायामपि वह्नौ दाहानुकूलशक्त्यन्तरोत्पत्तेः अङ्गीकारेण न दोष इति चेत् - न । उत्तेजकाभावविशिष्टमण्याद्यभावस्य कारणत्वाङ्गीकारेण अदोषात् । न च उत्तेजकानां अननुगतत्वात् तत्तदुत्तेजकाभावकूटविशिष्टमण्याद्यभावस्यैव कारणतायाः कल्पनीयतया गौरवमिति वाच्यम् । दाहानुकूलशक्ति प्रति एतादृशकारणतायाः तवाप्यावश्यकत्वात् अनन्तशक्तितत्प्रागभावतद्ध्वंसकल्पने गौरवादिति सङ्क्षेपः ।

**बालप्रिया**

करतलस्य अग्नेश्च संयोगे सत्यपि मणिरूपप्रतिबन्धकसत्त्वे करतलस्य दाहो न जायत इति शक्तिः पदार्थान्तरम् इत्याशङ्कितं **दीपिकायाम्** । तत्र दाहानुत्पत्तिमात्रेण शक्तेः पदार्थान्तरत्वं कथं सिध्येत्, अतः शङ्कयमनुपपन्ना इत्यतः शङ्काग्रन्थस्याशयं वदन् अवतारयति – **नन्वनलसंयोगे सत्यपी**ति । करतलस्य अनलसंयोगे सत्यपि मण्यादिसत्त्वे करतलस्य दाहो न जायते मण्याद्यसत्त्वे दाहो जायते । यत्सत्त्वे कार्यं नोत्पद्यते यदसत्त्वे चोत्पद्यते तस्य प्रतिबन्धकत्वात् मण्यादेः सत्त्वे दाहो न जायते तदसत्त्वे दाहो जायत इति मण्यादेः दाहप्रतिबन्धकत्वं वाच्यम्। प्रतिबन्धकत्वं च कार्यानुकूलशक्तिविघटकत्वम् । तथा च दाहानुकूला या अग्निनिष्ठा शक्तिः सा मणिना नाश्यते । अतः शक्तिविशिष्टवह्नेरेव दाहजनकत्वात् मणिसत्त्वे दाहशक्तेर्नाशात् शक्तिविशिष्टवह्निरूपकारणाभावात् न दाहः । इत्थं च कार्यानुकूलशक्तिविघटकत्वात् मणेः प्रतिबन्धकत्वम् । ईदृशं च प्रतिबन्धकत्वं शक्त्याख्यपदार्थं विना नोपपद्यत इत्येवमर्थापत्तिप्रमाणेन शक्तिरूपस्यातिरिक्तस्य पदार्थस्य सिद्धौ कथं सप्तैव पदार्था इत्युक्तिः सङ्गच्छत इति शङ्कितुर्भावः ।

**नन्वेवमि**ति । अर्थापत्तिप्रमाणेन पूर्वोक्तरीत्या शक्तिरूपपदार्थस्य सिद्धावपि तस्याः सप्तपदार्थातिरिक्तत्वं कथमित्यर्थः । **यतो न तावत् द्रव्यात्मिकेत्यादि** । शक्तिः द्रव्यभिन्ना गुणादिवृत्तित्वात् गुणत्वादिवत् । शक्तिर्हि रूपादिगुणेषु क्रियादौ चास्ति। अवयवरूपादौ अवयविरूपादिकारणत्वेन तदनुगुणशक्तेः सत्त्वात् तस्याः रूपादिगुणवृत्तित्वात् क्रियायाः संयोगादिजनकत्वेन तदनुकूलशक्तिमत्त्वात् शक्तेः क्रियावृत्तित्वाच्च । तथा च गुणादिवृत्तिगुणत्वक्रियात्वादिकं यथा न द्रव्यं तथा शक्तिरपि गुणादिवृत्तित्वात् न द्रव्यमित्यर्थः । **अत एवेति ।** गुणादिवृत्तित्वादेवेत्यर्थः । शक्तिः गुणकर्मान्यतरभिन्ना गुणादिवृत्तित्वात्

गुणत्वादिवत् । गुणकर्मोभयभेदस्य साध्यत्वे गुणरूपत्वे कर्मरूपत्वेऽपि च 'एकं नोभयम्' इति न्यायेन उभयभेदसम्भवात् उद्देश्यासिद्धिः स्यादित्यालोच्य अन्यतरभेदस्य साध्यत्वमनुसृतम् । यत्र गुणभेदः कर्मभेदश्च उभयमस्ति तत्रैव गुणकर्मान्यतरभेदः संभवतीति भावः ।

**न च सामान्याद्यन्यतमरूपेति** । शक्तिः सामान्याद्यन्यतमभिन्ने उत्पत्तिविनाशशालित्वात् घटादिवत् । उत्पत्तिमत्त्वमात्रस्य हेतुत्व सामान्याद्यन्यतमभेदाभाववति ध्वंसे उत्पत्तिमत्त्वसत्त्वात् व्यभिचारः । तद्वारणाय विनाशशालित्वादिति । ध्वंसस्य विनाशाभावात् न व्यभिचारः । विनाशशालित्वमात्रोक्तौ उक्तसाध्याभाववति प्रागभावे विनाशित्वसत्त्वात् व्यभिचारः । तद्वारणाय उत्पत्तिनिवेशः । प्रागभावस्यानादेः उत्पत्तिविरहात् न व्यभिचारः। तथा च उत्पत्तिविनाशोभयवत्त्वं उत्पत्तिविशिष्टविनाशवत्त्वं वा हेतुः । सामान्यादीत्यत्र आदिशब्देन विशेषसमवायाभावा गृह्यन्ते । **एवं चेति** । पूर्वोक्तानुमानैरर्थापत्त्या चानुगृहीतेन शक्तिः अतिरिक्तः पदार्थः क्लृप्तपदार्थानन्तर्भूतत्वे सति पदार्थत्वात् इति परिशेषानुमानेन शक्तेरतिरिक्तपदार्थत्वं सिध्यतीति भावः ।

ननु 'प्रतिबन्धकाभावस्य कार्यमात्रे कारणत्वेन शक्तेरनुपयोगात्' इति **दीपिकाग्रन्थः** शक्तेः पदार्थत्वखण्डनाय प्रवृत्तः । कार्यमात्रे प्रतिबन्धकाभावस्य कारणत्वमस्तु नाम । तावता शक्तेः पदार्थत्वं कुतो न भवति इति शङ्कायां **दीपिकायाः** तात्पर्यमाह-**प्रतिबन्धकत्वं नेति**। **तच्चेति**। प्रतिबन्धकत्वं चेत्यर्थः । **मण्यभावस्य हेतुत्वादेवेति** । एवकारेण कार्यानुकूलशक्तिविघटकत्वव्यवच्छेदः । तथा च मणेः कार्यानुकूलशक्तिविघटकत्वाभावेऽपि कारणीभूतो यो मण्यभावः तत्प्रतियोगित्वात् प्रतिबन्धकत्वमुपपद्यते । तथा च अन्यथानुपपत्तिरूपार्थापत्तिप्रमाणस्याभावात् न शक्तिसिद्धिरिति भावः । **तदभावरूपकारणान्तराभावादेवेति** । मण्यभावरूपं यत् कारणान्तरं तदभावादेवेत्यर्थः । अत्र अन्तरशब्दप्रयो-

गात् दाहं प्रति वह्निः मण्यभावश्च इत्युभयं पृथक् कारणम्, न तु मण्यभावविशिष्टवह्निः कारणम् । वह्निविशिष्टमण्यभावः कारणं वा मण्यभावविशिष्टवह्निः कारणं वेति विशेष्यविशेषणभावे विनिगमना-विरहेण गुरुभूतकार्यकारणभावद्वयापत्तेरिति सूचितम् ।

ननु प्रतिबन्धकत्वान्यथानुपपत्त्या शक्त्यसिद्धावपि व्यवहारा-न्यथानुपपत्त्या शक्तिः सिध्यतीति शङ्कते – **ननु दाहोत्पाद** इति । शक्तिरूपातिरिक्तपदार्थं विनापि क्लृप्तेन कारणत्वरूपपदार्थेनैव व्यवहारस्योपपत्त्या न व्यवहारानुपपत्तिरस्तीत्याह – **तस्याः कारणता-रूपत्वेऽपी**ति । ननु कारणत्वं कथं नातिरिक्तं इति चेत् - अत्राहुः । कार्यपूर्वकालनियतजातीयत्वम्, सहकार्यभावप्रयुक्तकार्याभाववत्वं वा कारणत्वमिति अग्नित्वादिजातौ वा अभावे वा कारणत्वस्यान्तर्भाव इति । स्पष्टमिदं **कुसुमाञ्जल्यादौ** ।

शङ्कते – **ननु मण्याद्यभावस्य हेतुत्व** इति । चन्द्रकान्तमणिः दाहप्रतिबन्धकः तदभावः दाहहेतुः । यत्र वह्नौ चन्द्रकान्तमणिसंयोग-काले सूर्यकान्तमणिसंयोगो वा मन्त्रोद्धेश्यत्वं वा अस्ति तदा दाहो जायते। तत्र चन्द्रकान्तमण्यभावरूपस्य कारणस्याभावात् तव मते कथं दाहः? मम मते तु मण्यभावः न दाहकारणम् । अपि तु शक्तिवि-शिष्टवह्निरेव कारणम् । चन्द्रकान्तमणिना वह्निगतशक्तेर्नाशेऽपि सूर्यकान्तमणिमन्त्रादिसमवधानदशायां पुनः वह्नौ दाहानुकूल-शक्त्यन्तरमुत्पद्यत इति स्वीकारेण शक्तिविशिष्टवह्नेः सत्त्वात् दाहः सम्भवति, अतः शक्तिः अङ्गीकरणीयेति शङ्कितुर्भावः । अत्र उत्तेजक-शब्देन प्रतिबन्धकसत्त्वेऽपि कार्योत्पत्तिप्रयोजकः सूर्यकान्तमण्यादि-रुच्यते । प्रतिबन्धकसमवधानकालिककार्योत्पत्तिप्रयोजकत्वं उत्तेजकत्व-मित्युक्तं भवति ।

समाधत्ते – **उत्तेजकाभावविशिष्टे**ति । यत्र मणिः उत्तेजकं च वर्तते तत्र उत्तेजकाभावरूपविशेषणाभावात् विशिष्टाभावरूपं कारणं

अस्तीति दाहोत्पत्तिरूपपद्यत इति शक्तेरनुपयोग इति भावः । **अननुगतत्वादिति** । अनेकत्वादित्यर्थः । **गौरवमिति** । अनेकेषां उत्तेजकाभावानां कारणतावच्छेदककुक्षौ प्रवेशादिति भावः । **दाहानुकूलशक्ति प्रतीति** । मणिसत्त्वे दाहानुकूलशक्तेर्नाशाङ्गीकारात् मण्यपसारणे तादृशशक्त्युत्पत्तेश्च अङ्गीकारात् वह्निनिष्ठां दाहानुकूलशक्तिं प्रति मण्यभावः कारणम्, तत्रापि मणिसत्त्वे शक्तिनाशात् उत्तेजके सति शक्तेरुत्पत्तेश्च उत्तेजकाभावविशिष्टमण्यभावः शक्तिं प्रति कारणमिति वाच्यम् । तदपेक्षया दाहं प्रत्येव तस्य कारणत्वमस्तु किं अनन्तानां शक्तीनां तत्प्रागभावतद्ध्वंसादीनां च कल्पनेनेति भावः । ननु उत्तेजकाभावकूटविशिष्टमण्यभावस्य दाहं प्रति हेतुत्वे मन्त्ररूपोत्तेजकदशायामपि शब्दात्मकस्य मन्त्रस्य गगननिष्ठत्वेन वह्न्याधिकरणे देशे तदभावसत्त्वात् सामानाधिकरण्यसम्बन्धेन तदुत्तेजकाभावविशिष्टमणिसत्त्वात् दाहानुत्पादप्रसङ्गः । किं च संयोगवत् संयोगेन द्रव्यस्यापि अव्याप्यवृत्तितया मणिसत्त्वेपि किंचिदवच्छेदेन संयोगेन मण्यभावसत्त्वात् दाहोत्पत्तिप्रसङ्गश्च इत्यत आह— **सङ्क्षेप** इति । अभावीयविशेषणतासम्बन्धेन दाहत्वावच्छिन्नं प्रति उद्देश्यता-दैशिकविशेषणतान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकानां तत्तदुत्तेजकाभावानां सामानाधिकरण्यरूपं यद्वैशिष्ट्यं तदवच्छिन्नस्य मण्यादेः दैशिकविशेषणता-उद्देश्यतान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्याभावीयविशेषणतासम्बन्धेन हेतुत्वमिति दिनकर्युक्तरीत्या कार्यकारणभावं परिकल्प्य पूर्वोक्तदोषौ वारणीयौ इति भावः। एतावता सहजशक्तिर्निराकृता ।

## दीपिका

### आधेयशक्तिनिरासः

ननु भस्मादिना कांस्यादौ शुद्धिदर्शनात् आधेयशक्तिः अङ्गीकार्या इति चेत् - न । भस्मादिसंयोगसमानकालीनास्पृश्यस्पर्शप्रतियोगिकयावदभावसहितभस्मादिसंयोगध्वंसस्य शुद्धिपदार्थत्वात् ।

## प्रकाशिका

ननु एवमपि कांस्यादेः अस्पृश्यवस्तुस्पर्शे सति न भोजनादिरूपकार्यार्हता शक्तिमत्कांस्यादेरेव तदर्हत्वात् । अस्पृश्यस्पर्शे सति शक्तेर्नाशात् भस्मसंयोगे तु पुनः शक्तेरुत्पादात् तदर्हता। एवं च कांस्यादौ आधेयशक्तिः स्वीकार्या। न च कांस्यादौ भोजनादिकं प्रति अस्पृश्यस्पर्शस्य प्रतिबन्धकत्वकल्पनादेव उपपत्तौ तदनङ्गीकार इति वाच्यम्। प्रकृते च अस्पृश्यस्पर्शस्य असंस्पृश्यसंयोगरूपतया सति तन्नाशे प्रतिबन्धकाभावसद्भावात्, कांस्यादौ अन्तरा भस्मादिसंयोजनं भोजनाद्यर्हतापत्तेरिति पुनः प्रत्यवतिष्ठते - **ननु भस्मादिने**ति । प्रथमेनादिपदेन अम्लादेः द्वितीयेन च ताम्रादेः परिग्रहः। क्लृप्तध्वंसविशेषेणैव कांस्यादेः शुद्धत्वोपपत्तौ अतिरिक्तशक्त्यङ्गीकारोऽनुचित इति समाधत्ते - **भस्मादिसंयोगे**ति । यत्र कांस्यादौ भस्मादिसंयोगध्वंसानन्तरं पुनरस्पृश्यस्पर्शः तत्रापि भस्मादिसंयोगध्वंसस्य सत्त्वात् शुद्ध्यापत्तिः अतः सहितान्तं ध्वंसविशेषणम्। साहित्यं चात्र सम्बन्धविशेषनियन्त्रितं सामानाधिकरण्यम् अस्पृश्यवस्तूनां अनुगमकरूपस्य दुर्वचतया सामान्यधर्मावच्छिन्नाभावनिवेशासम्भवात् यत्किंचिदस्पृश्यस्पर्शाभावस्य च तत्र सत्त्वात् तदापत्तिः तदवस्थैव इत्यतः **यावदि**ति । तथा च तत्र यावतां अस्पृश्यस्पर्शाभावानां निरवच्छिन्नविशेषणतासम्बन्धेन असत्त्वात् नोक्तदोष इति भावः। यत्र च भस्मादिसंयोगास्पृश्यवस्तुस्पर्शौ युगपदेवोत्पन्नौ विनष्टौ च तत्र तत्तदस्पृश्यस्पर्शाभावकूटसामानाधिकरण्यविशिष्टभस्मादिसंयोगध्वंसमादाय शुद्धतापत्तिः अतः भस्मादिसंयोगकालावच्छेदेन तत्र विद्यमानार्थकं कालीनान्तमभावविशेषणम्। तथा च तव भस्मादिसंयोगक्षणावच्छेदेन यावत्तदभावानामसत्त्वात् न दोष इति भावः।

## बालप्रिया

अथ प्रोक्षणादिभिः व्रीह्यादिषु भस्मादिना कांस्यादिषु आधेया शक्तिर्निराक्रियते **'ननु भस्मादिना'** इत्यादिना **दीपिकायाम्**। सहज-

शक्तिः आधेयशक्तिश्चेति शक्तिद्वयस्य मीमांसकैरङ्गीकारात् । **प्रथमेनादिपदेनाम्लादेरि**ति ।

> भस्मना शुध्यते कांस्यं ताम्रमाम्लेन शुध्यति ।
> गोमयात् शुध्यते भूमिः नारी तु रजसा तथा ।।'

इति वचनमत्रानुसंहितम् । **दीपिकायाम् भस्मादिसंयोगे**ति । भस्मादिसंयोगसमानकालीनाः यावन्तः अस्पृश्यस्पर्शप्रतियोगिकाभावाः तत्समुदायविशिष्टः भस्मादिसंयोग ध्वंस एव कांस्यादेः शुद्धिरित्यर्थः । यत्र कांस्यादौ आदौ अस्पृश्यवस्तुसंयोगः ततः भस्मादिसंयोगः ततः भस्मादिसंयोगनाशानन्तरं पुनरस्पृश्यवस्तुस्पर्शः तत्काले पूर्वतनभस्मादिसंयोगध्वंससत्त्वात् भस्मादिसंयोगध्वंसमात्रस्य शुद्धिपदार्थत्वे तदानीमपि शुद्धत्वापत्तिः । तद्वारणाय सहितान्तं भस्मादिसंयोगध्वंसे विशेषणम् । अस्पृश्यस्पर्शकाले अस्पृश्यस्पर्शप्रतियोगिकाभावो नास्तीति भस्मादिसंयोगध्वंसे अस्पृश्यस्पर्शप्रतियोगिकाभावविशिष्टत्वं नास्तीति न दोषः । साहित्यं च अत्र स्वरूपसंबन्धघटितसामानाधिकरण्यरूपम् । अतः व्यधिकरणं कालिकादिसम्बन्धेन सामानाधिकरणं वा अस्पृश्यस्पर्शप्रतियोगिकाभावमादाय तादृशस्पर्शकाले शुद्धत्वापत्तिः न भवति । कांस्यादौ यत्किंचिदस्पृश्यवस्तुस्पर्शकालेऽपि अस्पृश्यवस्त्वन्तरसंयोगाभावसत्त्वात् तद्विशिष्टः पूर्वतनभस्मादिसंयोगध्वंसोऽस्तीति शुद्धत्वापत्तिः । अतः यावत्त्वनिवेशः । तदानीं यावदभावान्तर्गतस्य यादृशास्पृश्यवस्तुस्पर्शोऽस्ति तदभावस्य असत्त्वात् न दोषः । न चाभावे यावत्त्वनिवेशापेक्षया अस्पृश्यवस्तुस्पर्शत्वावच्छिन्नाभाव एव निवेश्यतामिति वाच्यम् । विजातीयेष्वनेकेषु अस्पृश्यवस्तुष्वनुगतधर्मस्याभावात् प्रतियोगितावच्छेदकस्य सामान्यधर्मस्यात्रासम्भवात् । संयोगस्याव्याप्यवृत्तितया कांस्यादावस्पृश्यवस्तुसंयोगकालेऽपि किंचिदवच्छेदेन तदभावस्य दैशिकविशेषणतासम्बन्धेन सत्त्वात् तद्विशिष्टं पूर्वकालीनभस्मादिसंयोगध्वंस-

मादाय शुद्धत्वापत्तिवारणाय सामानाधिकरण्यघटकाधेयताय निरवच्छिन्नदैशिकविशेषणतासम्बन्धावच्छिन्नत्वं निवेश्यम् । यत्र कांस्यादिपात्रे भस्मादिसंयोगः अस्पृश्यस्पर्शश्च एककाले उत्पन्नौ विनष्टौ च तत्र भस्मादिसंयोगध्वंसः अस्पृश्यस्पर्शाभावविशिष्टो भवतीति पात्रस्य तद्वतः शुद्धत्वापत्तिवारणाय अस्पृश्यस्पर्शप्रतियोगिकाभावे भस्मादिसंयोगसमानकालीनत्वविशेषणम् । भस्मादिसंयोगावच्छेदकक्षणावच्छेदेन भस्मादिसंयोगाधिकरणे विद्यमान इति तदर्थः । एवं च तत्र विद्यमानस्य अस्पृश्यस्पर्शाभावस्य भस्मादिसंयोगध्वंसकालिकत्वेऽपि भस्मादिसंयोगक्षणावच्छेदेन विद्यमानत्वं नास्तीति न दोषः । एवं च भस्मादिसंयोगावच्छेदकक्षणावच्छिन्नतदधिकरणवृत्तिकास्पृश्यस्पर्शप्रतियोगिकयावदभावनिष्ठनिरवच्छिन्न - दैशिकविशेषणतासंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावद्वृत्ति - भस्मादिसंयोगध्वंसः शुद्धिरिति फलितम् । तदाह – **यत्र कांस्यादावित्यादिना** । **संबन्धविशेषनियन्त्रितमिति** । निरवच्छिन्नदैशिकविशेषणतासम्बन्धघटितमित्यर्थः ।

## दीपिका

### स्वत्वस्यातिरिक्तपदार्थत्वखण्डनम्

स्वत्वमपि न पदार्थान्तरम्, यथेष्टविनियोगयोग्यत्वस्य स्वत्वरूपत्वात् । तदवच्छेदकं च प्रतिग्रहादिलब्धत्वमेवेति ।

## प्रकाशिका

'चैत्रस्य इदं धनम्' इत्यादौ धनादौ यत्स्वत्वं प्रतीयते तत्पदार्थान्तरमिति मतं निरस्यति - **स्वत्वमपीति** । अपिना अनुक्तसमुच्चायकेन प्रतियोगित्वादिपरिग्रहः । ननु तर्हि स्वत्वं किंस्वरूपम् इत्यत्र आह - **यथेष्टेति** । **तदवच्छेदकं चेति** । तादृशयोग्यत्वप्रयोजकमित्यर्थः । प्रतियोगित्वं प्रतियोगिरूपं प्रतियोगितावच्छेदकरूपं वेत्यादिकं बहुतरमूहनीयम् ।

## बालप्रिया

**यत्स्वत्वं प्रतीयत इति**। षष्ठ्येति शेषः। **तत्पदार्थान्तरमिति**। स्वत्वं न द्रव्यात्मकम् गुणादिवृत्तित्वात्। अत एव न गुणकर्मान्यतरात्मकम्। न च सामान्यादिरूपम्, नित्यत्वप्रसङ्गात्। मम स्वत्वं उत्पन्नम्, तव स्वत्वं विनष्टं इत्यादि प्रतीत्या स्वत्वस्यानित्यत्वावगमेन इष्टापत्तेः कर्तुमशक्यत्वात्। नाप्यभावात्मकम्, भावत्वेन प्रतीयमानत्वात्। अतः क्लृप्तपदार्थानन्तर्भूतत्वात् स्वत्वं पदार्थान्तरमिति पूर्वपक्षः। यथेष्टविनियोगयोग्यतानियामकं प्रतिग्रहादिना लब्धत्वमेव स्वत्वम्। तच्च संयोगादिरूपम्, नातिरिक्तपदार्थ इति सिद्धान्तः।

## दीपिका

### विधिवादः

अथ विधिः निरूप्यते – प्रयत्नजनकचिकीर्षाजनकज्ञानविषयो विधिः। तत्प्रतिपादकः लिङादिर्वा। कृत्यसाध्ये प्रवृत्त्यदर्शनात्-कृतिसाध्ये प्रवृत्तिदर्शनात् कृतिसाध्यताज्ञानं प्रवर्तकम्। न च विषभक्षणादौ प्रवृत्तिप्रसङ्गः, इष्टसाधनतालिङ्गककृतिसाध्यताज्ञानस्य काम्यस्थले विहितकालशुचिजीवित्वनिमित्तज्ञानजन्यस्य नित्यनैमित्तिकस्थले प्रवर्तकत्वात्। न चाननुगमः, स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वस्यानुगतत्वादिति गुरवः। तन्न – लाघवेन कृतिसाध्येष्टसाधनताज्ञानस्यैव चिकीर्षाद्वारा प्रयत्नजनकत्वात्। न च नित्यनैमित्तिकस्थले इष्टसाधनत्वाभावात् अप्रवृत्तिप्रसङ्गः, तत्रापि प्रत्यवायपरिहारस्य पापक्षयस्य च फलत्वकल्पनात्। तस्मात् कृतिसाध्येष्टसाधनत्वमेव लिङाद्यर्थः।

## प्रकाशिका

सर्वेषां पदार्थानां उक्तपदार्थेषु यथायथमन्तर्भावं निरूप्य मूलन्यूनतां परिहर्तुं विधिं निरूपयिष्यमाणः शिष्यावधानाय तन्निरूपणं

प्रतिजानीते – **अथेति** । स्वपरमतसाधारणं विधित्वं तावत् निर्वक्ति - **प्रयत्नेति** । प्रयत्नजनिका या चिकीर्षा तज्जनकं यज्ज्ञानं तद्विषय इत्यर्थः । गुरुमते कृतिसाध्यताज्ञानस्य, स्वमते कृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य चिकीर्षाद्वारा प्रयत्नजनकत्वात् तन्मते कृतिसाध्यत्वे स्वमते कृतिसाध्यत्वविशिष्टेष्टसाधनत्वे च लक्षणसङ्गतिः । अभिधायकस्य विधिमताभिप्रायेणाह – **तत्प्रतीति** । तादृशज्ञानविषयकार्यत्वादिप्रतिपादकलिङादिरित्यर्थः । लिङादिरित्यादिना लोट्तव्यादिसङ्ग्रहः । वाकारोऽनास्थायाम् । गुरुमतमाशङ्कते – **कृत्यसाध्य** इति । कृत्यसाध्यत्वेनावगत इत्यर्थः । **प्रवर्तकमिति** । चिकीर्षाद्वारा प्रवृत्तिजनकमित्यर्थः । न च कृत्यसाध्यत्वज्ञानाभाव एव प्रवर्तकोऽस्त्विति शङ्क्यम्, कृत्यसाध्यत्वज्ञानाभावत्वेन तत्त्वे गौरवात् । कृतिसाध्यत्वाभावकृतिसाध्यभेदतत्तद्व्याप्यादिदर्शनानां प्रवृत्तौ प्रतिबन्धकत्वकल्पनेन महागौरवाच्च इति दिक् ।

ननु विषभक्षणादौ प्रवृत्त्यापत्तिः । कृतिसाध्यताज्ञानस्य तत्रापि सत्त्वादित्याशङ्कां निराचष्टे – **न चेत्यादिना** । **इष्टसाधनतालिङ्गकेति** । 'अयम् मत्कृतिसाध्यः, मत्कृतिं विना अनुपपद्यमानत्वे सति मदिष्टसाधनत्वात्' इत्यानुमानिकेत्यर्थः । **काम्यस्थल** इति । प्रवर्तकत्वादित्यनेनान्वयः । ज्योतिष्टोमयागादावित्यर्थः । **विहितकालेत्यादि** । विहितकालशुचिजीवित्वज्ञानाधीनस्य कृतिसाध्यताज्ञानस्य नित्ये सन्ध्यावन्दनादौ, आशौचादिरूपनिमित्तज्ञानाधीनस्य तस्य नैमित्तिके स्नानादौ प्रवर्तकत्वादित्यर्थः । 'अहम् एतत्कालिककृतिसाध्यसन्ध्यावन्दनकः, एतत्कालिकशुचिजीवित्वात्' इत्येवंरीत्या कृतिसाध्यत्वज्ञानस्य विहितकालशुचिजीवित्वादिज्ञानजन्यत्वमवसेयम् ।

**अननुगम** इति । प्रवृत्तिसामान्यप्रयोजकस्य एकस्याभावादिति भावः । **स्वविशेषणवत्तेत्यादि** । स्वं प्रवर्तमानपुरुषः, तस्य विशेषणं तन्निष्ठो धर्मः कामनादिः, तद्वत्तायाः स्वविषयसाधनत्वादिरूपस्य

तत्सम्बन्धस्य प्रतिसन्धानं ज्ञानं तज्जन्यत्वस्येत्यर्थः । **लाघवेनेति** । कारणतावच्छेदकलाघवेनेत्यर्थः । तन्मते कारणतावच्छेदकस्य जन्यत्वादिघटितत्वात् गौरवमिति भावः ।

**कृतिसाध्येष्टसाधनतेति** । अत्र बलवदनिष्टाननुबन्धित्वमप्यन्तर्भावनीयम् । तेन न कृतिसाध्यत्वेन तृप्तिरूपेष्टसाधनत्वेन चावगते विषसंपृक्ते भोजनादौ प्रवृत्त्यापत्तिः । विशिष्टज्ञानत्वावच्छिन्नस्य कारणत्वकथनं तु प्राचां मतेन । नव्यमते कृतिसाध्यत्वादिज्ञानानां पृथगेव दण्डचक्रादिन्यायेन कारणत्वात् । **प्रयत्नेति** । प्रवृत्तीत्यर्थः । **प्रत्यवायेति** । प्रत्यवायस्य परिहारः प्रागभावः, तस्य दुःखजनकाभावतया तन्नाशस्यैव इष्टत्वेन फलत्वमिति भावः । न च कथं तत्प्रागभावस्य फलत्वं तस्याजन्यत्वादिति वाच्यम्; यत्सत्त्वे यत्सत्त्वमिति व्यवहारलभ्यस्य स्वरूपसंबन्धरूपस्य सन्ध्यावन्दनप्रयोज्यत्वस्य तत्र सत्त्वेन फलत्वाक्षतेरित्यवधेयम् ।

## बालप्रिया

**मूलन्यूनतां परिहर्तुमिति** । न च विध्यनिरूपणेन कथं मूलस्य न्यूनता, सप्तानां षोडशानां वा पदार्थानां निरूपणेनैव 'क्रियते तर्कसंग्रहः' इति प्रतिज्ञायाः निरूढत्वादिति वाच्यम् । सर्वप्रमेयसंग्राहकेऽत्र मण्यादिग्रन्थेषु विस्तरेण निरूपितस्य विधेरनिरूपणे न्यूनतैवेत्याशयात् । **प्रयत्नजनिकेत्यादि** । प्रवृत्तिरूपप्रयत्नं प्रति 'इदं कुर्याम्' इत्याकारिका चिकीर्षा कारणम् । चिकीर्षां प्रति गुरुमते 'इदं मत्कृतिसाध्यम्' इत्याकारकं कृतिसाध्यताज्ञानं कारणम् । नैयायिकमते 'इदं मत्कृतिसाध्यत्वे सति मदिष्टसाधनम्' इत्याकारकं ज्ञानं कारणम्, तद्विषयत्वं कृतिसाध्यत्वे, कृतिसाध्यत्वविशिष्टेष्टसाधनत्वे चास्तीति विधिलक्षणस्य तयोः समन्वय इत्यर्थः । **अभिधायकस्येति** । विधिवाचकस्य लिङादेरपि विधिशब्दवाच्यत्वमिति मताभिप्रायेणेत्यर्थः । तथा च **वात्स्यायनभाष्यम्** – "यद्वाक्यं विधायकं चोदकं स विधिः" [न्या.सू-२-१-६३]

इति । "यद्वाक्यं विधायकं देशकं स विधिः" इति तत्र **वार्तिकम् ।** **वाकारोऽनास्थायामि**ति । विधिनिमन्त्रणेत्यादिपाणिनिसूत्रस्वारस्यात् लिङाद्यभिधेये एव विधिशब्दः प्रवर्तते, न त्वभिधायके इत्यवगमात् इति भावः। 'ननु कृत्यसाध्ये प्रवृत्त्यदर्शनात्' इति **दीपिकोक्तमयुक्तम्।** कृत्यसाध्येऽपि कृतिसाध्यताभ्रमेण प्रवृत्तिदर्शनादित्यत आह – **कृत्यसाध्यत्वेनावगत इत्यर्थ** इति । कृत्यसाध्ये कृतिसाध्यत्वभ्रमात् प्रवृत्तावपि कृत्यसाध्यत्वज्ञाने सति न प्रवृत्तिः अतः नासङ्गतिरिति भावः । ननु प्रवृत्तिं प्रति चिकीर्षाया एव कारणत्वात् कृतिसाध्यताज्ञानं प्रवर्तकमिति न सङ्गतमित्यत आह – **चिकीर्षाद्वारा प्रवृत्तिजनकमित्यर्थ** इति । **न च कृत्यसाध्यत्वे**ति । कृत्यसाध्यत्वज्ञानकाले प्रवृत्तिवारणाय हि कृतिसाध्यताज्ञानस्य प्रवृत्तिहेतुत्वमुक्तम् । प्रवृत्तिं प्रति कृत्यसाध्यताज्ञानाभावः कारणमित्युक्त्यैव कृत्यसाध्यत्वज्ञानकाले प्रवृत्तिर्वारयितुं शक्यते । न च लाघवानवकाश इति वाच्यम् । प्रतिबन्धकाभावस्य कार्यसामान्ये कारणतायाः क्लृप्तत्वात् कृत्यसाध्यताज्ञानाभावस्य कारणत्वं न कल्पनीयम् इति लाघवम्, कृतिसाध्यताज्ञानस्य तु अक्लृप्तं कारणत्वं कल्पनीयम् इति गौरवमिति शङ्कितुराशयात् । समाधत्ते – **कृत्यसाध्यताज्ञानाभावत्वेने**ति । कृतिसाध्यताज्ञानत्वापेक्षया कृत्यसाध्यताज्ञानाभावत्वस्य कारणतावच्छेदकस्य गुरुत्वादित्यर्थः । **कृतिसाध्यत्वाभावे**ति । प्रवृत्तिं प्रति कृतिसाध्यत्वाभावज्ञानस्य कृतिसाध्यभेदज्ञानस्य कृतिसाध्यत्वाभावव्याप्यवत्ताज्ञानस्य कृतिसाध्यभेदव्याप्यवत्ताज्ञानस्य च प्रतिबन्धकत्वात् तेषां येऽभावाः तेषां अपि कारणत्वं वक्तव्यमिति महागौरवम् । तदपेक्षया कृतिसाध्यताज्ञानस्यैकस्य कारणत्वे लाघवमिति भावः ।

**दीपिकायाम् इष्टसाधनतालिङ्गके**त्यादि । काम्यकर्मसु प्रवृत्तिं प्रति इष्टसाधनत्वलिङ्गककृतिसाध्यत्वविधेयकानुमित्यात्मकं कृतिसाध्यत्वज्ञानं हेतुः । 'इदं ज्योतिष्टोमादिरूपं काम्यकर्म मत्कृतिसाध्यम्,

मत्कृतिं विना असत्त्वे सति मदिष्टसाधनत्वात् यन्नैवं तन्नैवं यथा चैत्यवन्दनम्' इत्यनुमानं द्रष्टव्यम् । सन्ध्यावन्दनादिनित्यनैमित्तिक-कर्मसु प्रवृत्तिं प्रति निमित्तरूपलिङ्गज्ञानजन्यकृतिसाध्यत्वविधेयकानु-मित्यात्मकं कृतिसाध्यताज्ञानं कारणम् । विहितकाले शुचित्वे सति जीवित्वं सन्ध्यावन्दनादिनित्यकर्मसु निमित्तम् । स्नानादिरूपनै-मित्तिककर्मसु अशुचित्वे सति जीवित्वं निमित्तम्। तथा च तत्र 'अहम् इदानीन्तनकृतिसाध्यसन्ध्यावन्दनकः एतत्काले शुचित्वे सति जीवित्वात् यो नैवम् स नैवम् यथा बौद्धः', 'अहम् एतत्कालिककृतिसाध्यस्नानकः एतत्काले अशुचित्वे सति जीवित्वात् यो नैवं स नैवं यथा नास्तिकः इत्यनुमानं प्रवर्तते । न च क्वचित् इष्टसाधनतालिङ्गककृतिसाध्यता-ज्ञानस्य क्वचिद्विहितकालिकशुचिजीवित्वादिलिङ्गककृतिसाध्यता-ज्ञानस्य च प्रवृत्तिहेतुत्वे तयोः परस्परं विनापि प्रवृत्तेर्जायमानतया व्यतिरेकव्यभिचारात् प्रवृत्तिसामान्यं प्रति कृतिसाध्यताज्ञानस्य हेतुत्वं न सम्भवति, उभयसाधारणस्यैकस्य कारणतावच्छेदकधर्मस्या-भावादिति वाच्यम् । स्वविशेषणवत्ताज्ञानजन्यत्वस्यानुगतस्य कारण-तावच्छेदकस्य सद्भावात् । स्वं प्रवर्तमानः पुरुषः तस्य विशेषणं तद्वृत्तिधर्मः फलकामना तद्वत्त्वं तद्विषयफलसाधनत्वरूपः तत्सम्बन्धः तज्ज्ञानं 'काम्यं इष्टसाधनम्' इत्याकारकं तज्जन्यत्वं इष्टसाधनता-लिङ्गककृतिसाध्यताज्ञाने, एवं स्वं प्रवर्तमानपुरुषः तद्विशेषणं विहित-कालिकशुचित्वविशिष्टजीवित्वम् अशुचित्वविशिष्टजीवित्वं च तद्वत्ताज्ञानं 'तादृशधर्मवानहम्' इत्याकारकज्ञानं तज्जन्यत्वं सन्ध्या-वन्दनस्नानादिनित्यनैमित्तिककर्मविशेष्यककृतिसाध्यताज्ञाने निमित्त-लिङ्गकानुमित्यात्मकेऽस्तीति स्वविशेषणवत्ताज्ञानजन्यत्वस्यानुगत-कारणतावच्छेदकत्वमिति भावः ।

**प्रकाशिकायाम् अयं मत्कृतिसाध्य** इत्यादि । अयम् काम्यः ज्योतिष्टोमादिः । अत्र हेतौ मदिष्टसाधनत्वमात्रोपादाने मत्कृति-साध्यत्वरूपसाध्याभाववति वृष्ट्यादौ मदिष्टसाधनत्वरूपहेतुसत्त्वात्

व्यभिचारः । तद्वारणाय सत्यन्तम् । वृष्टयादेः मत्कृतिं विनापि सत्त्वात् मत्कृतिं विना असत्त्वं नास्तीति न व्यभिचारः । अनुपपद्यमानत्वे सति इत्यस्य असत्त्वे सतीत्यर्थः । मत्कृतिं विनेत्यत्र मत्पदानुपादाने मदिष्टसाधने परकृतपाकादौ मत्कृतिसाध्यत्वरूपसाध्याभाववति कृतिं विना अनुपपद्यमानत्वे सति मदिष्टसाधनत्वरूपहेतुसत्त्वात् व्यभिचारः । तद्वारणाय तत्र मत्पदम् । परकृतपाकस्य मत्कृतिं विनापि परकीयकृत्या उपपद्यमानतया सत्यन्ताभावात् न व्यभिचारः । दुःखविशेषरूपे श्रमे स्वेच्छाधीनकृतिसाध्यत्वरूपसाध्याभाववति मत्कृतिं विना असत्त्वरूपहेतुसत्त्वात् व्यभिचारः । तद्वारणाय इष्टसाधनत्वादिति विशेष्यम् । मदीयश्रमे मच्छत्रोरिष्टसाधनत्वात् व्यभिचारतादवस्थ्यम् । तद्वारणाय मदिष्टसाधनत्वादिति । मदीयश्रमस्य मच्छत्रिष्टसाधनत्वेऽपि मदिष्टसाधनत्वं नास्तीति न व्यभिचारः । अत्र साध्ये कृतौ स्वेच्छाधीनत्वं विशेषणं देयम् । अन्यथा नान्तरीयकश्रमेऽपि उक्तहेतुज्ञानजन्यकृतिसाध्यताज्ञानसत्त्वेन तदुद्देशेन प्रवृत्त्यापत्तेः । स्वपदं यत्र प्रवर्तते तत्परम् । नान्तरीयकश्रमे तु न तद्विषयकेच्छाधीनकृतिसाध्यताज्ञानमिति न तत्र प्रवृत्त्यापत्तिः । एवं च हेतावपि मत्कृतिं विनेत्यत्रापि कृतौ स्वेच्छाधीनत्वं विशेषणं देयम् । अन्यथा अन्येच्छाधीनमत्कृतिसाध्ये मदिष्टसाधने नान्तरीयकजलसंयोगादौ व्यभिचारापत्तेः । न चैवं सति नान्तरीयकश्रमे स्वेच्छाधीनमत्कृतिं विना सत्त्वेन सत्यन्ताभावादेव व्यभिचारवारणसम्भवे इष्टसाधनत्वादिति विशेष्यदलवैयर्थ्यम् इति वाच्यम् । इष्टापत्तेः । अस्य हेत्वन्तरत्वात् न दोष इति वदन्ति । **विहितकालशुचिजीवित्वज्ञानाधीनस्ये**ति । विहितकालिकं यत् शुचित्वविशिष्टजीवित्वं तद्विषयकज्ञानजन्यस्येत्यर्थः । **आशौचम्** । अशुचित्वम् । **तस्य** कृतिसाध्यताज्ञानस्य । **प्रवृत्तिसामान्यप्रयोजकस्ये**ति । प्रवृत्तित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकस्येत्यर्थः । **कारणतावच्छेदकलाघवेनेत्यर्थ** इति । स्वविशेषणवत्ताज्ञानजन्यत्वापेक्षया कृतिसाध्यत्व-

विशिष्टेष्टसाधनत्वज्ञानत्वरूपस्य कारणतावच्छेदकस्य लघुत्वेनेत्यर्थः । लघुत्वमेवोपपादयति — **तन्मत** इति । गुरुमत इत्यर्थः । जन्यत्वादि-घटितत्वादित्यत्र आदिपदेन कार्यताज्ञानत्वं परामृश्यते । तथा हि – स्वविशेषणवत्ताज्ञानजन्यत्वमात्रं न प्रवृत्तिकारणतावच्छेदकम्, तादृशज्ञानविषयकानुव्यवसायस्यापि तज्जन्यत्वेन प्रवृत्तिं प्रति कारणत्वापत्तेः । अपि तु स्वविशेषणवत्ताज्ञानजन्यकृतिसाध्यताज्ञानत्वेनैव कारणत्वं वाच्यम् । तत्र च नियमघटितजन्यत्वस्य कृतिसाध्यताज्ञानत्वस्य च प्रवेशात् गौरवमिति भावः ।

ननु कृतिसाध्यत्वविशिष्टेष्टसाधनत्वप्रकारकज्ञानस्य प्रवृत्तिहेतुत्वे मधुविषसम्पृक्तान्नभोजनेऽपि इदं मत्कृतिसाध्यत्वे सति मत्तृप्तिरूपेष्टसाधनमिति ज्ञानसत्त्वात् प्रवृत्त्यापत्तिरित्यत आह - **अत्र बलवदनिष्टे**ति । तथा च बलवदनिष्टाजनकत्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनत्वप्रकारकज्ञानं प्रवृत्तिहेतुः । मधुविषसम्पृक्तान्नभोजने तु तत्काले तृप्तिरूपेष्टसाधनत्वेऽपि कालान्तरे मरणरूपबलवदनिष्टसाधनमितिज्ञानस्यैव सत्त्वेन तत्र न प्रवृत्तिरिति भावः । बलवदनिष्टाननुबन्धित्वं नाम इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम् । बलवद्द्वेषविषयदुःखाजनकत्वं वा । ननु बलवदनिष्टाजनकत्वविशिष्टकृतिसाध्यत्वविशिष्टेष्टसाधनताज्ञानस्य कारणत्वे बलवदनिष्टाजनकत्वादीनां विशेष्यविशेषणभावे विनिगमनाविरहात् गुरुभूताः अनेके कार्यकारणभावाः प्रसज्यन्त इति कथं तत्कारणत्वं **दीपिका**कारेणोक्तमित्याशङ्क्य प्राचीनमतानुसारेण तथोक्तमित्याह - **विशिष्टज्ञानत्वावच्छिन्नस्ये**ति । **नव्यमत** इति । पूर्वोक्तास्वारस्यात् न विशिष्टज्ञानत्वावच्छिन्नस्य कारणत्वम् । किन्तु बलवदनिष्टाननुबन्धित्वज्ञानत्वावच्छिन्नस्य कृतिसाध्यताज्ञानत्वावच्छिन्नस्य इष्टसाधनताज्ञानत्वावच्छिन्नस्य च पृथगेव कारणत्वम् । यथा दण्डचक्रादीनां घटं प्रति दण्डत्वचक्रत्वादिना पृथगेव कारणत्वम् न तु दण्डविशिष्टचक्रत्वादिना तद्वदिति भावः । निष्फले प्रवृत्त्यभावात् इष्टसाधनताज्ञानस्य-

इष्टसाधनत्वेन ज्ञायमानेऽपि मधुविषसम्पृक्तान्नभोजने अप्रवृत्तेः बलवदनिष्टाननुबन्धित्वज्ञानस्य, कृत्यसाध्ये सुमेरुशृङ्गानयनादौ प्रवृत्त्यभावात् कृतिसाध्यताज्ञानस्य चेति त्रयाणामपि प्रवृत्तिहेतुत्वमावश्यकमिति भावः। निवृत्त्यात्मकप्रयत्नव्यावर्तनायोक्तम् **प्रवृत्तीत्यर्थ इति**। न हि निवृत्तिरूपयत्नं प्रति कृतिसाध्येष्टसाधनताज्ञानस्य हेतुत्वमिति भावः। **दुःखजनकाभावतये**ति। दुःखजनकप्रतियोगिकाभावतयेत्यर्थः। प्रत्यवायस्य दुःखजनकतया तदभावस्य दुःखजनकाभावत्वम्। **स्वरूपसम्बन्धरूपस्ये**ति। सिद्धस्य संरक्षणरूपो यः तत्कारणत्वमत्र विवक्षितम्। अतः प्रत्यवायप्रागभावसत्तारूपः क्षेमः सन्ध्यावन्दन प्रयोज्यत्वेनाभिमत इति भावः।

## दीपिका

### अपूर्वस्य लिङर्थत्वखण्डनम्

ननु 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यत्र लिङा स्वर्गसाधनमपूर्वं कार्यं प्रतीयते। यागस्य आशुतरविनाशिनः कालान्तरभाविस्वर्गसाधनत्वायोगात् तद्योग्यं स्थायि कार्यमपूर्वमेव लिङाद्यर्थः। कार्यं कृतिसाध्यम्। कृतेः सविषयत्वात् विषयाकाङ्क्षायां यागो विषयत्वेनान्वेति। 'कस्य कार्यम्' इति नियोज्याकाङ्क्षायां स्वर्गकामपदं नियोज्यपरतयान्वेति। कार्यबोद्धा नियोज्यः। तेन 'ज्योतिष्टोमनामकयागविषयकम् स्वर्गकामस्य कार्यम्' इति वाक्यार्थः सम्पद्यते। वैदिकलिङ्त्वात् 'यावज्जीवमग्निहोत्रं जुहुयात्' इति नित्यवाक्येऽप्यपूर्वमेव वाच्यम् कल्प्यते। 'आरोग्यकामो भेषजपानम् कुर्यात्' इत्यादि लौकिकलिङः क्रियाकार्ये लक्षणा इति चेत् – न। यागस्याप्ययोग्यतानिश्चयाभावेन इष्टसाधनतया प्रतीत्यनन्तरं तन्निर्वाहार्थम् अवान्तरव्यापारतया अपूर्वकल्पनात्। कीर्तनादिना नाशश्रुतेः न यागध्वंसो व्यापारः।

## प्रकाशिका

लिङादेः कार्य एव शक्तिरिति गुरुमतं आशङ्कते - **नन्विति**। इच्छाविशेषरूपस्य यागस्य आशुतरविनाशिनः स्वर्गसाधनत्वेन भानं

न सम्भवति, अयोग्यत्वादित्यपूर्वरूप एव कार्ये शक्तिरङ्गीकार्येत्याह - **यागस्येति** । **आशुतरविनाशिनः** - तृतीयक्षणवृत्तिध्वंसप्रतियोगिनः । **स्थायि** - फलपर्यन्तस्थायि । अन्वयप्रकारं दर्शयति - **कार्यं कृतिसाध्यमिति** । यागे कृतिसाध्यत्वं साक्षात् । अपूर्वं तु यागद्वारेति बोध्यम् । **कार्यबोद्धेति** । इदम् मत्कृतिसाध्यमिति ज्ञानवानित्यर्थः । विध्यर्थमुख्यविशेष्यकं शाब्दबोधं दर्शयति - **तेनेति** । स्वर्गकामस्य लिङर्थे कार्ये तदेकदेशे च यागस्य अन्वयेनेत्यर्थः । न्यायमते तु तत्र 'कृतिसाध्यबलवदनिष्टाजनकेष्टसाधनयागानुकूलकृतिमान् स्वर्गकामः' इति वाक्यार्थबोधः । ननु अपूर्वस्य पूर्वमनुपस्थिततत्वात् कथं तत्र शक्तिग्रह इति चेत्, अत्र प्रवदन्ति अभिज्ञाः - तन्मते तद्धर्मावच्छिन्नविषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नविषयकशक्तिग्रहस्य तादृशोपस्थितेश्च हेतुता, न तु समानविषयकत्वेन हेतुहेतुमद्भावः । एवं च कार्यत्वावच्छिन्ने यत्र कुत्रचित् शक्तिग्रहः । योग्यताबलाच्च अपूर्वरूपकार्यस्य शाब्दबोधे भानं,न हि यागविषयकमन्यत्कार्यं सम्भवतीति । ननु नित्ये फलाभावात् कथं तत्र अपूर्वबोधकता इत्यत आह - **यावज्जीवमिति** । **अपूर्वमेवेति** । कार्यत्वेनेत्यादिः । पण्डापूर्वमित्यर्थः । लौकिकस्थले अपूर्वभानासम्भवादाह - **आरोग्येति** । **क्रियाकार्य** इति । धात्वर्थनिष्ठकार्यत्व इत्यर्थः । लौकिकालौकिकसाधारण्येन कार्यत्वादावेव लिङादेः शक्तिरङ्गीकार्येत्याशयेन समाधत्ते - **यागस्येति** । अयोग्यत्वात् यागस्य स्वर्गसाधनत्वेन भानं न सम्भवतीत्युक्तदोषं निराचष्टे - **अयोग्येति** । अयोग्यतासंशयसत्त्वेऽपि तस्याविघटकत्वात् शाब्दबोधो भवत्येवेति भावः । वाक्यादिष्टसाधनत्वेन यागेऽवगते तस्याशुतरविनाशिनः व्यापारं विना फलजनकत्वासम्भवात् तन्निर्वाहाय अपूर्वं कल्प्यत इत्याह - **तन्निर्वाहार्थमिति** । ननु यागध्वंसस्यैव व्यापारत्वमस्तु किमपूर्वकल्पनेनेत्यत आह-**कीर्तनादिनेति** । आदिना

"कर्मनाशाजलस्पर्शात्करतोयाविलङ्घनात् ।
गण्डकीबाहुतरणात् धर्मः क्षरति कीर्तनात् ॥"

出典 ... M Bhārata ?

Karmanāśā ... yāga- ... wane ... perish ... bāhu-tarana ... crossing a river

इत्यत्रोक्तकर्मनाशाजलस्पर्शादिपरिग्रहः । ध्वंसस्य व्यापारत्वे स्वर्गधारापत्तिरित्यपि दूषणान्तरं विभावनीयम् । कर्मनाशा, करतोया, गण्डकी इति नदीविशेषाः । to be clearly perceived / to be convicted

## बालप्रिया

**मूले अपूर्वं कार्यं प्रतीयत** इति । अपूर्वं कार्यत्वेन प्रतीयत इत्यर्थः । लिङो हि कार्यत्वावच्छिन्ने शक्तिः । **प्रकाशिकायाम् अयोग्यत्वादि**ति । स्वर्गसाधनत्वान्वययोग्यताविरहादित्यर्थः । द्वितीयक्षणवृत्तिध्वंसप्रतियोगित्वरूपस्य क्षणिकत्वस्य बौद्धैरेवाङ्गीकारादाह-**तृतीयक्षणे**ति । मासादिपर्यन्तस्थायित्वस्यानुपयोगादाह् - **फलपर्यन्तस्थायी**ति । स्वर्गोत्पत्तिपर्यन्तं वर्तमानमित्यर्थः । **विध्यर्थमुख्यविशेष्यकमि**ति । लिङर्थकार्यमुख्यविशेष्यकमित्यर्थः । **स्वर्गकामस्ये**त्यादि । लिङः कृतिसाध्यमित्यर्थः । कृतौ स्वर्गकामस्य समवेतत्वसम्बन्धेनान्वयः, विषयतासम्बन्धेन यागस्यान्वयः । तथा च स्वर्गकामसमवेता यागविषयिणी या कृतिः तत्साध्यम् (अपूर्वम्) इत्याकारको बोध इत्याशयः। स्वर्गकामस्य कार्येऽन्वय इत्युक्तावपि प्राप्ताप्राप्तविवेकेन कृतावन्वय एव विवक्षितः । **तदेकदेश** इति । कार्यैकदेशे कृतावित्यर्थः । **न्यायमते त्वि**ति । तन्मते लिङ्त्वेन रूपेण लिङा कृतिसाध्यत्वं बलवदनिष्टाजनकत्वं इष्टसाधनत्वं च अभिधीयते । आख्यातत्वेन रूपेण कृतिरभिधीयते कृतिसाध्यत्वादीनां त्रयाणां धात्वर्थे यागे आश्रयतासम्बन्धेनान्वयः । यागस्यानुकूलतासम्बन्धेन आख्यातार्थकृतावन्वयः । कृतेराश्रयतासम्बन्धेन प्रथमान्तार्थे स्वर्गकामेऽन्वयः । तथा च कृतिसाध्यत्व-बलवदनिष्टाजनकत्व-इष्टसाधनत्वाश्रय-यागानुकूलकृतिमान् स्वर्गकाम इति बोधः । **न तु समानविषयकत्वेने**ति । तद्धर्मावच्छिन्नतद्विषयकशाब्दबोधं प्रति तद्धर्मावच्छिन्नतद्विषयकशक्तिज्ञानस्य तद्धर्मावच्छिन्नतद्विषयकोपस्थितेश्च हेतुतेति नेत्यर्थः । **यत्र कुत्रचिदि**ति । यागादिक्रियायामित्यर्थः । **योग्यताबलादि**ति । स्वर्गसाधनत्वान्वययोग्यताबलादित्यर्थः । **पण्डापूर्वमि**ति । निष्फलमपूर्वं पण्डापूर्वमित्युच्यते । नित्यस्थले तस्य स्वतः

प्रयोजनत्वं प्राभाकरैरुच्यते । क्रियारूपस्य कार्यस्य धातुनैव लाभात् तत्र लक्षणोक्तिरसङ्गतेत्यत आह - **धात्वर्थनिष्ठकार्यत्व** इति । कार्य-शक्तस्य लिङः तत्र कार्यत्वे लक्षणेत्यर्थः । 'भेषजपानरूपक्रियाजन्ये आरोग्यसाधनभेषजप्रतियोगिनाडीनिष्ठविलक्षणसंयोगे लक्षणेत्यर्थः' इति **नृसिंहशास्त्रिणः** प्राहुः । **वाक्यादिष्टसाधनत्वेनेत्या**दि । 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्यात् 'ज्योतिष्टोमयागः स्वर्गसाधनम्' इति शाब्दबोधः आदौ जायते । तदनन्तरं द्विक्षणावस्थायिनो यागस्य श्रुतिबोधितं स्वर्गसाधनत्वं अनुपपन्नमित्यनुपपत्तिप्रतिसन्धानात् कल्पितस्य अपूर्वस्य प्रथमोत्पन्नशाब्दबोधाविषयतया अपूर्वस्य लिङर्थत्वं न सम्भवतीति तात्पर्यम् । **कर्मनाशे**ति । कर्मनाशा, करतोया, गण्डकी, इति नदीविशेषाणां संज्ञाः ।

## दीपिका

### आख्यातस्य यत्नार्थकत्वस्थापनम्

लोकव्युत्पत्तिबलात् क्रियायामेव कृतिसाध्येष्टसाधनत्वं लिङा बोध्यत इति लिङ्त्वेन विध्यर्थकत्वम्, आख्यातत्वेन यत्नार्थकत्वम् । पचति पाकं करोतीति विवरणदर्शनात्, किं करोति इति प्रश्ने पचतीत्युत्तराच्च आख्यातस्य प्रयत्नार्थकत्वनिश्चयात् । रथो गच्छतीत्यादौ अनुकूलव्यापारे लक्षणा । 'देवदत्तः पचति', 'देवदत्तेन पच्यते तण्डुलः' इत्यादौ कर्तृकर्मणोः नाख्यातार्थत्वम् । किन्तु तद्गतैकत्वादीनामेव । तयोराक्षेपादेव लाभः ।

## प्रकाशिका

**लोकव्युत्पत्ती**ति । लोकव्यवहारेत्यर्थः । स च यो यत्र प्रवर्तते स कृतिसाध्यत्वेनेष्टसाधनत्वेन च तज्ज्ञानवानित्येवंरूपः । केचित्तु यदिच्छया यत्र प्रवृत्तिः तत्तत्साधनमिति लोकव्यवहार इत्याहुः । नव्याः पुनः लोके पचेतेत्यादिलिङादिसमभिव्याहारस्थले क्रियायामेव कृतिसाध्यत्वविशिष्टेष्टसाधनत्वबोध इति नियमबलादिति तदर्थः । सर्व-

त्वेति शेष इति व्याचख्युः । **आख्यातत्वेनेति** । तच्च सङ्केतसम्बन्धेनाख्यातपदवत्त्वं तिप्त्वादिकमेव शक्ततावच्छेदकमिति तु नव्याः । **यत्नार्थकत्वम्** - कृतित्वावच्छिन्नवाचकत्वम् । **किं करोतीति** । कृतित्वावच्छिन्ने जिज्ञासितसम्बन्धबोधकं तत्प्रश्नवाक्यम् । उत्तरवाक्यस्य कृतित्वावच्छिन्ने पाकसम्बन्धबोधकत्व एव तन्निवर्तकत्वं नान्यथेति भावः । ननु रथो गच्छति इत्यादौ आख्यातस्य कृतिबोधकत्वासम्भवात् तदनुरोधेन व्यापार एव शक्तिः वक्तव्येत्यत आह - **रथो गच्छतीत्यादाविति** । व्यापारे अनुकूलत्वोत्कीर्तनं तु तेन सम्बन्धेन व्यापारे गमनस्यान्वयलाभाय । नव्याः पुनः गच्छतीत्यत्र आख्यातस्य जानातीत्यादाविव आश्रयत्वे निरूढलक्षणा । न चाश्रयतासम्बन्धेनैव प्रथमान्तार्थे गमनादेरन्वयेन निर्वाहे आश्रयत्वे निरूढलक्षणाकल्पनं निरर्थकमिति वाच्यम् । नामार्थयोरिव धात्वर्थनामार्थयोरभेदातिरिक्तसम्बन्धेनान्वयस्याव्युत्पन्नत्वात् तत्र तथान्वयासम्भवात् । स्तोकं पचतीत्यादौ स्तोकादेः धात्वर्थे पाकेऽन्वयात् अभेदातिरिक्तेति ध्येयम् । वैयाकरणमतं निराचष्टे - **देवदत्त** इति । **नाख्यातार्थत्वमिति** । आख्यातस्य कर्त्रादौ शक्तिस्वीकारेऽनन्तकृत्यादेः शक्यतावच्छेदकत्वमङ्गीकर्तव्यम् । कृत्यादौ शक्तिस्वीकारे तु कृतित्वादिजातेः शक्यतावच्छेदकत्वात् लाघवमिति भावः । **तद्वैतकत्वादीनामेवेति** । आख्यातार्थत्वमिति पूर्वेणान्वयः । आदिना कृत्यादिपरिग्रहः । ननु तर्हि कर्तृकर्मणोः कथं लाभ इत्यत आह - **तयोरिति** । **आक्षेपादेवेति** । परमतेन । स्वमते तु प्रथमान्तपदेनैव तल्लाभात् । 'देवदत्तः तण्डुलं पचति' इत्यत्र 'तण्डुलकर्मकपाकानुकूलकृतिमान् देवदत्तः' इत्यन्वयबोधः । 'देवदत्तेन पच्यते तण्डुल' इत्यत्र तु 'देवदत्तसमवेतकृतिजन्यपाककर्मीभूतस्तण्डुलः' इति शाब्दबोधः । न च 'देवदत्तः पचति' इत्यत्र तृतीया, 'तण्डुलः पच्यते' इत्यत्र च द्वितीया स्यात् । तत्र कर्तृकर्मणोः आख्यातेनानभिधानादिति वाच्यम् । अनभिहिते कर्तृत्वे तृतीयायाः तादृशे च कर्मत्वे द्वितीयाया विधानेनादोषादिति ध्येयम् ।

**यो यत्रे**ति । यः पुरुषः यत्र यागादौ प्रवर्तते स पुरुषः कृति-साध्यत्व-इष्टसाधनत्वप्रकारकयागविशेष्यकज्ञानवानित्येवंरूपात् लोक-व्यवहारात् यागादिक्रियायामेव लिङा कृतिसाध्यत्वमिष्टसाधनत्वं चावगम्यत इत्यर्थः । व्यवहारपरतया व्युत्पत्तिपदं व्याख्याय, नियम-परतया व्युत्पत्तिपदं व्याचक्षाणानां नव्यानां मतमाह - **नव्याः पुनरि**ति । **तच्च सङ्केतसंबन्धेने**ति । आख्यातपदस्य यत्र तिबादौ पाणिन्यादीनां इच्छाविशेषात्मकः सङ्केतोऽस्ति स तिबादिः सङ्केतसंबन्धेन आख्या-तपदवान् । आख्यातपदवत्त्वं तिबादिनिष्ठम् । तत् शक्ततावच्छेदक-मित्यर्थः । यथा तिबादिषु अष्टादशसु आख्यातपदस्य पाणिनेरन्यस्य वा सङ्केतः तथा शब्दान्तरसंकेतस्यापि अन्यपुरुषीयस्य सम्भवात् तत्तच्छब्दवत्त्वस्यापि विनिगमनाविरहेण शक्ततावच्छेदकत्वं स्यादि-त्यालोच्य नवीनाः तिप्त्वादिकमेव कृतिशक्ततावच्छेदकमित्याहुः । तन्मतमाह - **तिप्त्वादिकमेवे**ति । अत्र "तिबादेरेव यत्न वाचकताग्रहः तदनुरोधेन पचतीत्याद्यानुपूर्वीज्ञानस्य तिबादिजन्योपस्थितिसहकारेण शाब्दबोधोपधायकताकल्पनस्य आवश्यकतया तिबादेरेव ताद्रूप्येण शक्तताकल्पनायाः उचितत्वम्" इति **व्युत्पत्तिवादग्रन्थो**ऽनुसन्धेयः । कर्त्रर्थकत्वापेक्षया यत्नार्थकत्वे शक्यतावच्छेदकलाघवमस्तीति सूचनाय कृतित्वावच्छिन्नवाचकत्वं इत्युक्तम् । **दीपिकायां पचति पाकं करोतीति** । तत्समानार्थकपदान्तरेण तदर्थकथनं विवरणम् । 'पचति' इति विवरणीयपदे पच् ति इति भागद्वयमस्ति । 'पाकं करोति' इति विवरणवाक्ये 'पाकम्'इत्यनेन धातोः विवरणम्,'करोति' इत्यनेन 'ति' इत्याख्यातस्य विवरणम् । यत्नः कृधातोरर्थः । तथा च करोतिना विवरणात् आख्यातस्य यत्नार्थकत्वम् । एवं 'किं करोति' इति प्रश्नस्य पचति इत्युत्तरं दीयते । तत्र प्रश्नवाक्ये किं शब्दस्य जिज्ञासाविषय-धर्मावच्छिन्नोऽर्थः । द्वितीयायाः विषयत्वमर्थः । तत्राधेयतासम्बन्धेन किंपदार्थस्यान्वयः । विषयत्वस्य निरूपकतासम्बन्धेन कृतावन्वयः ।

तथा च जिज्ञासाविषयधर्मावच्छिन्ननिष्ठविषयतानिरूपककृतिरिति बोधो जायते । 'पचति' इति वाक्येन पाकनिष्ठविषयतानिरूपककृतिरिति बोधो भवति । तथा च जिज्ञासितधर्मावच्छिन्नविषयककृतिवाचकस्य प्रश्नस्य विशेषधर्मावच्छिन्नविषयकयत्नवाचकशब्द एवोत्तरं भवितुमर्हतीति आख्यातस्य यत्नवाचकत्वमिति भावः । **प्रकाशिकायाम् जिज्ञासितसम्बन्धबोधकमि**ति । जिज्ञासाविषयधर्मावच्छिन्नप्रतियोगिकविषयत्वरूपसम्बन्धबोधकमित्यर्थः । **पाकसम्बन्धबोधकत्व** इति । पाकविषयकत्वबोधकत्व इत्यर्थः । **तन्निवर्तकत्वमि**ति । जिज्ञासानिवर्तकत्वमित्यर्थः । **कृतिबोधकत्वासम्भवादि**ति । अचेतने रथे यत्नरूपकृतेर्बाधितत्वादिति भावः । ननु रथो गच्छतीत्यादौ आख्यातस्यानुकूलव्यापारे लक्षणेत्युक्तिर्न युक्ता । अनुकूलत्वस्य संसर्गतया भानसम्भवेन तदंशे शब्दवृत्तेरनावश्यकत्वात् व्यापारमात्रे लक्षणायाः वक्तुमुचितत्वादित्याशङ्क्य **दीपिकाया** अपि तथैव तात्पर्यमित्याह - **व्यापारे अनुकूलत्वोत्कीर्तनमि**ति । **नव्याः पुनरि**ति । दीधितिकारादयः इत्यर्थः । मणिकृन्मतमाशङ्कते - **न चाश्रयतासम्बन्धेनैवे**ति । **अव्युत्पन्नत्वादि**ति । अन्यथा 'चैत्रः पच्यते' इत्यत्र धात्वर्थपाकस्य कर्तृतासम्बन्धेन चैत्रे, तण्डुलः पचतीत्यादौ कर्मतासम्बन्धेन तण्डुलस्य धात्वर्थे पाकेऽन्वयापत्तेरिति भावः ।

**वैयाकरणमतमि**ति । 'देवदत्तः तण्डुलं पचति' इत्यत्र तण्डुलपदोत्तरद्वितीयायाः कर्म अर्थः तत्राभेदेन तण्डुलस्यान्वयः । कर्मणः स्वनिष्ठकर्मतानिरूपकत्वसम्बन्धेन धात्वर्थे पाकेऽन्वयः । 'पचति'इत्यत्र तिपः कर्ता अर्थः । तत्र देवदत्तस्याभेदेनान्वयः । कर्तुः धात्वर्थपाके स्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धेनान्वयः । तथा च देवदत्ताभिन्नकर्तृकः तण्डुलाभिन्नकर्मकः पाकः इति धात्वर्थमुख्यविशेष्यको बोधः । देवदत्तेन पच्यते तण्डुलः इत्यत्र तृतीयायाः कर्ता अर्थः । तत्र देवदत्तस्य अभेदेनान्वयः, कर्तुश्च पाकेऽन्वयः । आख्यातस्य कर्म अर्थः तत्र तण्डुल-

स्याभेदेन कर्मणश्च धात्वर्थेऽन्वयः । देवदत्ताभिन्नकर्तृकः तण्डुलाभिन्न-कर्मकः पाक इति शाब्दबोधः ।

नैयायिकमते तु देवदत्तः तण्डुलं पचति इत्यत्र द्वितीयायाः कर्मत्वमर्थः । तत्राधेयतासम्बन्धेन तण्डुलस्यान्वयः । कर्मत्वस्य निरूपकतासम्बन्धेन धात्वर्थे पाकेऽन्वयः । आख्यातस्य कृतिरर्थः । तत्रानुकूलतासम्बन्धेन धात्वर्थपाकस्यान्वयः । कृतेराश्रयतासम्बन्धेन देवदत्तेऽन्वय इति तण्डुलनिष्ठकर्मतानिरूपकपाकानुकूलकृतिमान् देवदत्त इति प्रथमान्तार्थमुख्यविशेष्यको बोधः । देवदत्तेन पच्यते तण्डुल इत्यत्र तृतीयायाः कृतिरर्थः । तत्र देवदत्तस्य समवायेनान्वयः । कृतेर्जन्यतासम्बन्धेन धात्वर्थपाकेऽन्वयः । आख्यातस्य कर्मत्वमर्थः । तत्र निरूपितत्वसम्बन्धेन पाकस्यान्वयः । कर्मत्वस्याश्रयतासम्बन्धेन प्रथमान्तार्थे तण्डुलेऽन्वय इति देवदत्तसमवेतकृतिजन्यपाकनिरूपितकर्मतावान् तण्डुल इति बोधः ।

भाट्टमीमांसकानां मते देवदत्तः ओदनं पचति इत्यत्राख्यातस्य कृतिरूपा भावना अर्थः । ओदनपदोत्तरद्वितीयायाः अखण्डोपाधिरूपं कर्मत्वमर्थः । तत्राधेयतासम्बन्धेन तण्डुलस्यान्वयः । कर्मत्वस्य स्वनिरूपकधात्वर्थपाकानुकूलत्वसम्बन्धेन आख्यातार्थकृतावन्वयः । देवदत्तस्यापि तत्रैवान्वयः । धात्वर्थपाकस्य करणत्वसम्बन्धेन कृतावन्वयः । स्वनिष्ठकरणतानिरूपकौदनोद्देश्यकत्वसम्बन्धेन पाकस्य कृतावन्वय इति पर्यवस्यति । तथा च देवदत्तसमवेता तण्डुलकर्मकपाकानुकूला पाककरणिका कृतिरिति बोधः । एतेषां मते आख्यातर्थकृतिः शाब्दबोधे मुख्यविशेष्यतया भासते । पाकस्य कृतौ करणत्वं च कृतिं प्रति उद्देश्यभूतौदनकरणत्वात् । यत्र तु द्वितीयान्तं विना पचति इत्येतावन्मात्रमुक्तम् तत्र धात्वर्थपाकस्य कर्मतासम्बन्धेन कृतावन्वयः । देवदत्तसमवेता पाककर्मिका कृतिरिति बोधः । चैत्रेण ओदनः पच्यते इत्यत्रापि तृतीयायाः कर्तृत्वमर्थः । तस्य स्वनिरूपकपाकानु-

कूलत्वसम्बन्धेन आख्यातार्थकृतावन्वयः। धात्वर्थस्य पाकस्य स्वकरण-कौदनोद्देश्यकत्वसम्बन्धेन कृतावन्वयः। आख्यातस्य तत्र कर्मत्वं भावना चार्थः। कर्मत्वे ओदनस्यान्वयः। कर्मत्वस्य स्वनिरूपक-पाकानुकूलत्वसम्बन्धेन भावनायामन्वयः। तथा च देवदत्तकर्तृकपा-कानुकूला ओदनकर्मकपाकानुकूला पाककरणकौदनोद्देश्यिका भावनेति शाब्दबोध इति।

**पूर्वेणान्वय** इति। तथा च कर्तृकर्मगता एकत्वादिसङ्ख्या कृतिः कालश्च आख्यातार्थः। अस्मिन् मते अनभिहिते इति सूत्रस्य कर्तृकर्म-गतसङ्ख्यायामनभिहितायामित्यर्थः। अथ वा कर्तृत्वे कर्मत्वे चानभिहिते इत्यर्थः। नातः देवदत्तः पचति इत्यत्र देवदत्तपदोत्तरं तृतीयायाः, तण्डुलः पच्यते इत्यत्र तण्डुलपदोत्तरं द्वितीयाया वा आपत्तिः। अग्रे च स्पष्टमिदम्। **कृत्यादिपरिग्रह** इति। आदिना कालो गृह्यते। **परमतेनेति**। मीमांसकमतेनेत्यर्थः। 'कर्ता चाक्षेपलभ्यः' इति **न्यायप्रकाशादौ** निरूपितत्वात्। upasarga preposition, prefix

## दीपिका

### उपसर्गाणां द्योतकत्वम्

प्रजयति इत्यादौ धातोरेव प्रकर्षे शक्तिः। उपसर्गाणां द्योत-कत्वमेव, न तत्र शक्तिः।

## प्रकाशिका

उपसर्गाणां वाचकत्वमतं निरस्यति **प्रजयतीत्यादाविति**। ननु धातुनैव प्रकर्षादेर्बोधे प्रशब्दादेर्वैयर्थ्यमत आह - **उपसर्गाणामिति**। **द्योतकत्वम्** - तात्पर्यग्राहकत्वम्। तेन 'इतरनिपातानाम् वाचकत्वम्' इति सूचितम्। तथा हि-एवकारस्य अयोगव्यवच्छेदोऽर्थः 'शङ्खः पाण्डुर एव' इत्यादौ, अन्ययोगव्यवच्छेदश्च 'पार्थ एव धनुर्धर' इत्यादौ इत्यादिकं बहुतरमूहनीयम्।

**तात्पर्यग्राहकत्वम्** - यत्र प्र इति उपसर्गः धातुना सह उच्चार्यते तत्र धातोः प्रकर्षे तात्पर्यमिति ग्रहो भवति । अतः धातोरर्थविशेषे तात्पर्यग्रहजनकत्वमुपसर्गाणामिति भावः । **इतरनिपातानामिति** । उपसर्गातिरिक्तनिपातानामित्यर्थः । **इत्यादिकं बहुतरमूहनीयमिति** । 'नीलम् सरोजं भवत्येव' इत्यादौ एवकारस्य अत्यन्तायोगव्यवच्छेदोऽर्थ इत्यूहनीयमित्यर्थः ।

अत्रेदं बोध्यम् - एवकारार्थस्त्रिविधः-अन्ययोगव्यवच्छेदः, अयोगव्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्चेति । विशेष्यसङ्गतैवकारस्य अन्ययोगव्यवच्छेदोऽर्थः । यथा पार्थ एव धनुर्धर इत्यादौ पार्थान्यस्मिन् धनुर्धरत्वयोगो व्यवच्छिद्यते । तत्र अन्यः, योगः, अभावश्चेति त्रयः एवकारस्य पृथक् शक्याः । अन्यशब्दार्थः भेदवान् । भेदे पार्थस्य प्रतियोगितासम्बन्धेनान्वयः । सम्बन्धरूपे योगे प्रकृते तादात्म्यात्मके प्रतियोगित्वेन धनुर्धरस्यान्वयः । योगस्याभावे प्रतियोगित्वेनान्वयः । अभावस्य स्वरूपसम्बन्धेन अन्यस्मिन्नन्वयः । एवं धनुर्धरस्य अभेदसम्बन्धेन पार्थेऽन्वयः । तथा च पार्थप्रतियोगिकभेदवान् (पार्थान्यः) धनुर्धरप्रतियोगिकतादात्म्याभाववान् (धनुर्धरत्वाभाववान्) पार्थः धनुर्धराभिन्नश्चेति शाब्दबोधो जायते । पार्थस्य विशेष्यतया अन्यविशेषणतया च द्विर्भानम् । एवं धनुर्धरस्य एवकारार्थयोगविशेषणतया पार्थविशेषणतया च द्विर्भानम् ।

विशेषणसङ्गतैवकारस्य अयोगव्यवच्छेदोऽर्थः । यथा 'शङ्खः पाण्डर एव' इत्यादौ शङ्खे पाण्डरायोगो व्यवच्छिद्यते । तत्रैवकारस्य योगाभावे अभावे च शक्तिः । सम्बन्धात्मके योगे पाण्डरस्य प्रतियोगितया अन्वयः । योगाभावस्य प्रतियोगितया अभावेऽन्वयः । अभावस्य स्वरूपसंबन्धेन शङ्खेऽन्वयः । तथा च शङ्खः पाण्डरयोगाभावाभाववान् इति शाब्दबोधः ।

क्रियासङ्गतैवकारस्य अत्यन्तायोगव्यवच्छेदोऽर्थः । यथा 'नीलं सरोजं भवत्येव' इत्यादौ सरोजे नीलभवनात्यन्तायोगो व्यवच्छिद्यते । अत्यन्तत्वं अभावश्च तत्र एवकारार्थः । अत्यन्तत्वं च व्यापकत्वम् । तच्च भेदप्रतियोगितानवच्छेदकत्वम् । भेदे सरोजस्याधेयतासम्बन्धेनान्वयः । भेदप्रतियोगितानवच्छेदकत्वस्य प्रतियोगितया अभावेऽन्वयः । अभावस्य स्वरूपसम्बन्धेन अयोगेऽन्वयः । एवं नीलकर्तृकभवनस्य नीलत्वात्मकस्य अयोगैकदेशे योगे प्रतियोगित्वेनान्वयः । तथा च सरोजनिष्ठभेदप्रतियोगितानवच्छेदकत्वाभाववान् नीलत्वप्रतियोगिकसम्बन्धाभावः इति शाब्दबोधः । नीलत्वसम्बन्धाभावे सरोजत्वव्यापकत्वस्यासम्भवेन सरोजत्वव्यापकत्वविशिष्टायोगाभावस्य बोधयितुमशक्यत्वात् अयोगे सरोजत्वव्यापकत्वव्यवच्छेदबोधो वर्णित इति । अधिकम् **दीधिकारीयैवकारार्थविवेचने जयरामन्यायपञ्चाननकृतपदार्थमालायां** च द्रष्टव्यम् ।

## दीपिका

### पदार्थतत्वज्ञानस्य मोक्षहेतुत्वनिरूपणम्

पदार्थज्ञानस्य परमप्रयोजनं मोक्षः । तथा हि– 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुत्या श्रवणादीनाँ आत्मसाक्षात्कारहेतुत्वबोधनात् श्रुत्या देहादिविलक्षणात्मज्ञाने सत्यप्यसम्भावनानिवृत्तेः युक्त्यनुसन्धानरूपमननसाध्यत्वात् । मननोपयोगिपदार्थनिरूपणद्वारा शास्त्रस्यापि मोक्षोपयोगित्वम् । तदनन्तरं श्रुत्युपदिष्टयोगविधिना निदिध्यासने कृते तदनन्तरं देहादिविलक्षणात्मसाक्षात्कारे सति देहादौ अहमित्यभिमानरूपमिथ्याज्ञाननाशे दोषाभावात् प्रवृत्त्यभावे धर्माधर्मयोरभावे जन्माभावे पूर्वधर्माधर्मयोरनुभवेन नाशे चरमदुःखध्वंसलक्षणमोक्षो जायते । ज्ञानमेव मोक्षसाधनम् । मिथ्याज्ञाननिवृत्तेर्ज्ञानमात्रसाध्यत्वात् । 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुत्या साधनान्तरनिषेधाच्च ।

## प्रकाशिका

प्रेक्षावत्प्रवृत्तये सकलकामनाविषयमुक्तिप्रयोजनकतां ग्रन्थस्य दर्शयति – **पदार्थज्ञानस्ये**ति । पदार्थतत्त्वज्ञानस्येत्यर्थः । अन्येषामवान्तरप्रयोजनानामपि सद्भावादाह – **परमे**ति । श्रुतेरयमर्थः – अरे मुमुक्षुणा आत्मा द्रष्टव्यः मुमुक्षोः आत्मदर्शनमिष्टसाधनमिति यावत् । आत्मदर्शनोपायं दर्शयति — **श्रोतव्य** इत्यादिना । आर्थक्रमेण शाब्दक्रमः त्यक्तो भवति, 'अग्निहोत्रं जुहोति' 'यावगूं पचति' इत्यादिवत् । **असम्भावनानिवृत्ते**रिति । अप्रामाण्यज्ञाननिवृत्तेरित्यर्थः । **युक्त्यनुसन्धाने**ति । अयं भावः— युक्तिभिरनुचिन्तनं मननम् । तच्च आत्मन इतरभिन्नत्वेनानुमानम् । तच्च भेदप्रतियोगीतरज्ञानसाध्यम् । तदर्थं सकलपदार्थनिरूपणमिति । मोक्षोपयोगित्वं विशदयति— **तदनन्तरमि**ति । मननानन्तरमित्यर्थः । श्रुतस्यार्थस्य नैरन्तर्येणानुसन्धानरूपनिदिध्यासनस्य उपायमाह– **योगविधिने**ति । इन्द्रियाणि विषयेभ्यः प्रत्याहृत्य इन्द्रियेभ्यो मनः प्रत्याहृत्य साक्षात्कर्तव्ये वस्तुनि मनः प्रणिधानं योगः । **तदनन्तरम्**– निदिध्यासनानन्तरम् । **मिथ्याज्ञाननाशे**– वासनासहितमिथ्याज्ञाननाशे । **दोषः**- रागादिः । **ज्ञानमि**ति । एवकारेण कर्मव्यवच्छेदः । **मिथ्याज्ञाने**ति । शुक्त्यादौ रजतभ्रमो विशेषदर्शनेनैव यथा निवर्तते तथा प्रकृतेऽपीति भावः ।

## बालप्रिया

**सकलकामनाविषये**ति । अपुनर्भवरूपत्वात् सर्वेषामपीष्टः यो मोक्षः तत्प्रयोजनकत्वमित्यर्थः । यदपेक्षया अन्यत् प्रयोजनं न भवति तत् परमप्रयोजनम् । यदपेक्षया अन्यत् प्रयोजनं भवति तत् अवान्तरप्रयोजनम् । प्रयोजनान्तरासाधनत्वे सति प्रयोजनत्वं परमप्रयोजनत्वम् । प्रयोजनान्तरसाधनत्वे सति प्रयोजनत्वं अवान्तरप्रयोजनत्वम् । ननु "आत्मा वा अरे द्रष्टव्यः श्रोतव्यः" इति श्रुतौ पाठक्रमानुसारेण दर्शनस्यैव श्रवणसाधनत्वमवगम्यते न तु श्रवणादेर्दर्शनसाधनत्वमित्याशङ्क्याह - **आर्थक्रमेणे**ति । प्रयोजनवशेन यः क्रमः सः आर्थक्रमः ।

यथा अग्निहोत्रयवागूपाकयोः । अत्र हि यवाग्वाः होमप्रयोजनकत्वेन तत्पाकः प्रयोजनवशेन पूर्वमनुष्ठीयते । पदार्थबोधकवाक्यानां यः क्रमः सः पाठक्रमः । तेन च पदार्थानां क्रमः आश्रीयते । **अप्रामाण्यज्ञाननिवृत्ते-रिति** । श्रुतिवाक्यजन्ये देहादिविलक्षणात्मविषयकशाब्दबोधात्मकश्रवणे अप्रामाण्यज्ञानस्य निवृत्तिः मननेन भवति । मननं चानुमित्यात्मकम् । आत्मा देहादिभिन्नः ज्ञानेच्छाद्याश्रयत्वात् यन्नैवं तन्नैवम् इति व्यति-रेक्यनुमानप्रयोगो द्रष्टव्यः । **भेदप्रतियोगीतरज्ञानसाध्यमिति** । आत्मानु-योगिकभेदप्रतियोगिभूताः ये आत्मेतरपदार्थाः तद्विषयकज्ञानजन्य-मनुमित्यात्मकं मननमित्यर्थः । **तदर्थमिति** । आत्मेतरपदार्थविषयक-ज्ञानोत्पादनार्थमित्यर्थः । **प्रत्याहृत्य**-निगृह्य, विषयसंयुक्तानि यथा न भवेयुस्तथा कृत्वेत्यर्थः । **मनःप्रत्याहृत्य** - मनः इन्द्रियसंयुक्तं यथा न स्यात् तथा कृत्वा । साक्षात्कर्तव्ये आत्मनि मनसः प्रणिधानं स्थापनं योगः । **विशेषदर्शनेनैवेति** । रजतव्यावर्तकस्य शुक्तिगतस्यासाधारण-धर्मस्य शुक्तित्वस्य दर्शनेनैवेत्यर्थः । **तथा प्रकृतेऽपीति** । आत्मगतस्य तदितरव्यावर्तकस्य धर्मस्य दर्शनेनैव देहादिभ्रमरूपं मिथ्याज्ञानं निवर्तते इत्यर्थः ।



## तर्कसंग्रहः

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नम्भट्टेन विदुषा रचितस्तर्कसङ्ग्रहः ॥

॥ इति तर्कसंग्रहः समाप्तः ॥



## दीपिका

### ज्ञानकर्मसमुच्चयवादनिरासः

ननु 'तत्प्राप्तिहेतुर्विज्ञानं कर्मचोक्तं महामुने' इति कर्मणोऽपि मोक्षसाधनत्वस्मरणात् ज्ञानकर्मणोः समुच्चय इति चेत् - न ।

"नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षयम् ।
ज्ञानं च विमलीकुर्वन्नभ्यासेन च पाचयेत् ॥
अभ्यासाच्च क्वचिज्ज्ञानात् कैवल्यं लभते नरः" ॥

इत्यादिना कर्मणो ज्ञानसाधनत्वप्रतिपादनात् ज्ञानद्वारैव कर्मणो मोक्षसाधनत्वं न साक्षात् । तस्मात् पदार्थतत्त्वज्ञानस्य मोक्षः परमप्रयोजनमिति सर्वं रमणीयम् ॥

**इति तर्कसंग्रहदीपिका समाप्ता**



## प्रकाशिका

**'कैवल्यं लभते नरः'** **इत्यादिने**ति । आदिना 'क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे' इत्यादिश्रुतेः 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इत्यादिस्मृतेश्च संग्रहः । **ज्ञानद्वारैवे**ति । अत्रायं क्रमः -- निष्कामनया भगवत्प्रीत्यर्थं कृतैः कर्मभिः दुरितक्षयरूपात्मशुद्धिर्भवति । ततो विषयेषु वैराग्यम् । ततः श्रवणादौ प्रवृत्तिः । ततः श्रवणादिक्रमेण तत्त्वज्ञानोत्पत्तौ पूर्वोक्तमिथ्याज्ञाननाशादिक्रमेण मोक्षनिष्पत्तिः । अधिकम् अस्मदीय**चिन्तामणिदीधितिव्याख्याया**मनुसन्धेयं तर्ककर्कशविचारचातुरीधुरीणैरिति ।

कौण्डिन्यगोत्रसम्भूतो नीलकण्ठाख्यपण्डितः ।
कृतिमार्पिपदेतस्मै चन्द्रचूडाय मङ्गलम् ॥

**इति प्रकाशिका समाप्ता**



## बालप्रिया

**क्षीयन्ते चे**ति । **परावरे**– परे अवरा यस्मात् तस्मिन् परमात्मनि साक्षात्कृते सति पुण्यपापरूपाणि कर्माणि नश्यन्तीत्यर्थः । **ज्ञानाग्निरि**ति । ज्ञानरूपोऽग्निः सर्वाण्यपि पुण्यपापरूपाणि कर्माणि भस्मीकरोतीत्यर्थः ।

**दीपिकायाम् आत्मसाक्षात्कारे सतीत्यादि** । "दुःखजन्मप्रवृत्तिदोष-मिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः" इति न्याय-सूत्रमत्राभिसंहितम् । प्रथमतः अविच्छिन्नतैलधारावत् श्रवणमनन-समानविषयकानवरतात्मानुसन्धानरूपे निदिध्यासने सति आत्मा देहादिभिन्नत्वेन साक्षात्क्रियते । अयं साक्षात्कार एव तत्त्वज्ञानमि-त्युच्यते । अनेन तत्त्वज्ञानेन देहादौ आत्माभेदभ्रमरूपं मिथ्याज्ञानं निवर्तते । तादृशमिथ्याज्ञाननिवृत्तौ रागद्वेषमोहरूपा दोषाः नोत्प-द्यन्ते । तादृशदोषाणामनुत्पत्तौ विहितनिषिद्धकर्मसु प्रवृत्तिः न भवति । प्रवृत्त्यभावाच्च पुण्यपापरूपौ धर्माधर्मौ नोत्पद्येते । धर्मा-धर्मयोरनुत्पत्तौ च शरीरप्राणसंयोगरूपं जन्म आत्मनो न भवति । जन्मान्तराभावे अस्मिन् जन्मनि प्रारब्धयोः पुण्यपापयोरनुभवेन विनाशे च चरमदुःखस्य ध्वंसरूपो मोक्षो भवति इति भावः ।

**तमेव विदित्वेति** । तं परमात्मानं विदित्वैव ज्ञात्वैव पुमान् मृत्युं संसारं अत्येति अतिक्रामति । आत्मतत्त्वज्ञानवानेव संसार-नाशवान् भवतीत्यर्थः । अयनाय-मोक्षप्राप्तये अन्यः तत्त्वज्ञानादन्य पन्थाः उपायः न विद्यते इत्यर्थः । **साधनान्तरनिषेधादिति** । आत्म-तत्त्वज्ञानादन्यस्य साधनस्य निषेधादित्यर्थः । **तत्प्राप्तिहेतुरिति** । मोक्षप्राप्तेः तत्त्वज्ञानं भगवत्प्रीणनयागादिरूपं कर्म चोभयं साधन-मित्यर्थः । **समुच्चय इति** । ज्ञानकर्मसमुदायः मोक्षसाधनम् । परस्पर-सहकारेण ज्ञानकर्मणोरुभयोः मोक्षसाधनत्वं न ज्ञानमात्रस्येत्यर्थः । **ज्ञानं च विमलीकुर्वन्निति** । देहेन्द्रियादिविलक्षणात्मज्ञानं मननेनाप्रा-माण्यज्ञानानास्कन्दितं कुर्वन्नित्यर्थः । **अभ्यासेनेति** । इन्द्रियनिग्रह-पूर्वकासकृत्स्मरणरूपनिदिध्यासनेन पाचयेत् फलोन्मुखं कुर्यादित्यर्थः । **प्रकाशिकायां तर्ककर्कशेति** । तर्कमूलकः यः कर्कशः कठिनतरः विचारः विमर्शः तत्र या चातुरी चातुर्यं तया तत्र वा धुरिणैः समर्थैरित्यर्थः । **चन्द्रचूडाय मङ्गलमिति** । मङ्गलमिति समर्पणक्रियाविशेषणम् । मङ्गलं यथा स्यात् तथा चन्द्रचूडाय समार्पयदित्यर्थः । यथा ईश्वरार्पणबुद्ध्या

क्रियमाणं यागदानादि मङ्गलकरं तथा तत्त्वज्ञानद्वारा सकलोज्जीवकस्य ग्रन्थस्य ईश्वराय समर्पणमपि स्वस्य परेषां च मङ्गलकरमिति भावः ॥

निरञ्जनाञ्जनाद्रीशश्रीनिवासकृपाबलात् ।
सदाचार्यकटाक्षाच्च व्याख्येयं समपूर्यत ॥
प्रौढविद्वन्मनस्तुष्टिं व्याख्यैषा जनयेन्न वा ।
बालानां तु मनः प्रीतिं परामावक्ष्यति ध्रुवम् ॥

**इति श्रीकृष्णताताचार्यात्मजस्य श्रीदेवनाथताताचार्यकटाक्षलब्धसामान्यविशेषशास्त्रविज्ञानस्य चतुश्शास्त्रशिरोमणेः विद्यावारिधेः नावल्पाकम् - शठकोपरामानुजताताचार्यस्य कृतिषु प्रकाशिकाव्याख्या बालप्रिया समाप्ता**



Krsna-tatacarya 1F

॥ श्रीगुरुचरणारविन्दाभ्यां नमः ॥

# ॥ प्रकाशिकाव्याख्या प्रसारणा ॥

## मङ्गलवादः

[पृ.१] **निधाये**त्यादिश्लोकस्यायं वाक्यार्थः । तथा हि - **हृदि** इत्यत्र सप्तम्याः निरूपितत्वमर्थः । तस्य च वृत्तित्वप्रकारकाहार्यज्ञानरूपनि-पूर्वकधाधात्वर्थघटकवृत्तित्वेऽन्वयः । [१] **विश्वेशमि**त्यत्र निरूपकतया ज्ञानान्वयि आश्रयतया तदन्वयि वा विशेष्यत्वं विशेष्यित्वं वाऽर्थः । प्रकृत्यर्थस्य विशेष्यत्वे आधेयतया विशेष्यित्वे वा निरूपितत्वसम्बन्धे-नान्वयः । ल्यपः समानकर्तृकत्वसहितोत्तरकालीनत्वपरत्वात् ल्यप्-प्रत्ययस्य ध्वंसोऽर्थः । तत्र प्रकृत्यर्थस्य प्रतियोगितयाऽन्वयः । ध्वंसस्य च स्वप्रतियोगिसमानकर्तृकत्वस्वाधिकरणकालवृत्तित्वोभयसम्बन्धेन क्रियत इत्यत्र कृधात्वर्थकृतावन्वयः । [१] **गुरुवन्दनमि**त्यत्र स्वोच्चार-यितृतावच्छेदकैककालीनोभयावृत्तिजातित्वोपलक्षितजातियुक्तशरीरा-वच्छिन्नचेतननिष्ठापकर्षावधित्वप्रकारकबोधानुकूलतादृशचेतनकर्तृको व्यापारो वन्दनम् । गुरुपदस्य समासान्तर्गततया लुप्तषष्ठीकस्य वि-शेष्यतानिरूपितोऽर्थः । तस्य चाभेदसम्बन्धेन प्रकारतायामन्वयः । प्रकृत्यर्थस्याधेयतया विशेष्यत्वेऽन्वयः । विपूर्वकधाधात्वर्थकृत्यन्वितं विधेयत्वं विधेयित्वं वा द्वितीयार्थः । अत्रापि ल्यपः पूर्ववदेवार्थः । [१]**बालाना**मित्यत्र षष्ठ्याः बोधान्वयि समवेतत्वम् अर्थः । तत्र निरूपि-तत्वसम्बन्धेन प्रकृत्यर्थस्यान्वयः ।[१]**सुखबोधाये**त्यत्र सुखं यथा स्यात्तथा बोधः । सुखश्चासौ बोधश्चेति समानाधिकरणसमासः । **दीपिकायाम्** [१]**सुखेन बोध** इति व्याख्यानम् अर्थप्रदर्शनमात्रपरम् । अन्यथा तृतीया-समासानुपपत्तेः । सुखशब्दश्च 'भारापगमे सुखी संवृत्तोऽहम्' इतिवत् दुःखाभावे उपचर्यते । स चेह धर्मिपरः । बोधायेत्यत्र 'एधानाहर्तुं व्रज-ति'इत्यर्थे 'एधेभ्यो व्रजति'इतिवत्'बोधं जनयितुं क्रियत'इत्यर्थे 'बोधाय

क्रियत' इति "क्रियार्थोपपदस्य च कर्मणि स्थानिन" इति सूत्रेण प्राप्ता चतुर्थी उत्पत्त्यनुकूलव्यापारविषयकेच्छां बोधयति। तस्याः स्वविषयत्वमामकर्तृकत्वस्वप्रयोज्येच्छाविषयत्वोभयसम्बन्धेन कृतावन्वयः। उत्पत्तौ च बोधान्वयः। आख्यातस्याधेयतया प्रकृत्यर्थान्वितो वर्तमानक्षणः, आश्रयतया प्रथमान्तार्थान्वयि, विधेयत्वं चार्थः। विशिष्टबोधः स्पष्टः। **दीपिकायाम्**[१]**विश्वेश्वरमि**ति। स्वनिष्ठकमोंसाधारणहेतुप्रयत्नवत्त्वसम्बन्धेनाम्बासहितमूर्तिविशिष्टाभिन्ननिखिलविद्योपदेशकर्त्र-भिन्नविश्वेश्वरविशेष्यकस्वापकर्षावधित्वप्रकारकज्ञानानुकूलस्वीयव्या-पारध्वंसविशेषिततर्कसङ्ग्रहप्रतिपाद्यार्थविषयकज्ञानजनकाभिन्नबालसमवेतानायासविशिष्टद्रव्यादिपदार्थविषयकबोधजनकाभिन्नव्याख्यान - विधेयकवर्तमानकालीनकृतिमानहं इति बोधः। व्यापारध्वंसवैशिष्टचं च स्वप्रतियोगिसमानकर्तृकत्वस्वाधिकरणकालवृत्तित्वोभयसम्बन्धेन।

**प्रकाशिकायाम्** [२] **वन्दे शिवमि**त्यादि। पूर्वार्धस्य उपदेष्टृभिन्नाम्बाविशिष्टाभिन्नदक्षिणामूर्तिशिवविशेष्यकस्वापकर्षावधित्वप्रकारकबोधानुकूलव्यापारानुकूलकृतिमानहमिति बोधः। [२] **यद्वन्दनेने**त्याद्युत्तरार्धस्य यन्नमस्कारप्रयोज्यगुरुनिरूपितसादृश्यप्रतियोगिकसम्बन्धाश्रयो मन्दोऽपीति बोधः। अपिशब्दार्थः स्वसमभिव्याहृतपदार्थतावच्छेदकमन्दत्वादिविरोधः, स चैकक्षणावच्छेदेन एकाधिकरणावृत्तित्वं सादृश्यान्वयि। उपदेशश्चाज्ञातज्ञापनं, विषयताविशिष्टशब्दरूपम्। वैशिष्टचं स्वनिरूपकज्ञानजनकत्वस्वसामानाधिकरण्योभयसम्बन्धेन। सामानाधिकरण्यघटकचरमवृत्तित्वं स्वप्राक्कालावच्छिन्नज्ञानविषयत्वाभावसम्बन्धेन। 'अस्यार्थस्योपदेश' इत्यादौ षष्ठ्यर्थ आधेयत्वम्। तस्य चोपदेशपदार्थघटकविषयतायामन्वय इति बोध्यम्।

**दीपिकायाम्** [१] **चिकीर्षितस्ये**त्यादि। कृञ्धातोः कृतिरर्थः। सनः इच्छा। निष्ठायाश्च कृतिनिष्ठविशेष्यतानिरूपितविषयतासम्बन्धावच्छिन्नप्रकारताश्रयोऽर्थः। कृतेः विशेष्यतासम्बन्धेनेच्छायामन्वयः।

तस्याश्च निरूपितत्वसम्बन्धेन प्रकारतायामन्वयः। सा च इच्छा 'ग्रन्थविषयककृतिर्भवतु'इत्याकारिका। [१] **निर्विघ्नपरिसमाप्त्यर्थमित्यत्र** निर्विघ्नं यथा तथा समाप्तिरिति विग्रहः। [२] **निर्विघ्नपरिसमाप्तय** इत्यत्र तु पूर्ववदुत्पादकव्यापारेच्छैव चतुर्थ्यर्थः। व्यापारश्च प्रतिभादिरूपः। समाप्तिश्च चरमवर्णध्वंसः तदन्वितषष्ट्यर्थः ग्रन्थस्येत्यत्र सम्बन्धः स्वघटकचरमवर्णप्रतियोगित्वरूपः। एतत्तत्त्वम**स्मद्विरचितसमाप्ति** [विचारे] द्रष्टव्यम्।

[१] **शिष्यशिक्षार्थं** – शिष्यान् शिक्षयितुमित्यर्थः। 'तुमर्थाच्च भाववचनात्'इति सूत्रेण चतुर्थी। 'पक्तुं वजति' इत्यर्थे 'पाकाय व्रजति'इत्यादिवत्। तत्रेच्छैव चतुर्थ्यर्थः। तस्याश्च स्वविषयसमानकर्तृकत्वस्वप्रयोज्येच्छाविषयत्वोभयसम्बन्धेन निबन्धपदार्थज्ञानजनकशब्दरूपनिबन्ध**नेऽन्वयः**। 'शिष्या अप्येवं कुर्युः' इत्याकारकानुग्रहरूपेच्छैव शिक्षापदार्थः। तत्र शिष्याणां विशेष्यतासम्बन्धेनान्वयः। 'अवश्यकर्तव्यत्वप्रकारकज्ञानं शिक्षा' इति तु **अस्मद्दिनकरटिप्पण्या**मतिविस्तरेण निरस्तम्। क्तप्रत्ययस्य विशेष्यतानिरूपितविषयतासम्बन्धावच्छिन्नप्रकारताश्रयोऽर्थः। धात्वर्थः आद्यकृतिः। कृतावाद्यत्वं च ध्वंसविशिष्टान्यत्वपर्यवसितम्। वैशिष्ट्यं स्वोत्तरत्वस्वप्रतियोगिकृतिविशिष्टत्वोभयसम्बन्धेन। कृतिवैशिष्ट्यं स्वसामानाधिकरण्यस्वविषयग्रन्थविषयकत्वोभयसम्बन्धेन। अत्र मङ्गलतद्रूपनिबन्धनयोः फलदर्शनात् 'तयोराचरणे तत्तद्धर्मिकेष्टविशेषसाधनताभ्रमप्रयुक्ते मङ्गलाचरणरूपत्वात्, भ्रान्तपुरुषीयजलताडनाद्याचरणवत्' इत्यनुमानं निरस्तम्।

यत्तु – 'मङ्गलादिकमननुष्ठेयम् निष्फलत्वात्' इत्यनुमानप्रदर्शनम् – तत्तुच्छम्। भ्रान्तपुरुषीयानुष्ठानविषयतया बाधापत्तेः। इष्टसाधनत्वप्रमाधीन[1]कृतिविशिष्टत्वाभावसाधनेऽपि कृतौ प्रमा-

1. कृतिविशिष्टत्वाभावेति। कृतिविशिष्टत्वं च विषयतासम्बन्धेन।

धीनत्वाभाव एव पर्यवसानेन तदपेक्षया अस्मदुक्तस्यैव युक्तत्वात् । यदपि 'मङ्गलाद्याचरणं पापजनकम्' इत्यनुमानम् तदपि हेयम् । व्यापारस्य निष्फलत्वे तदाचरणफलासिद्ध्या अभ्रान्तानां फलविशेषसाधनताज्ञानादेव प्रवृत्त्युपपत्तौ तदाचरणेन पापोत्पत्तिकल्पने प्रमाणाभावात् । यद्यपि प्रतिज्ञायां न कुर्यादित्यस्यापि इष्टसाधनताज्ञानाभावाधीनाभ्रान्तपुरुषीयप्रवृत्त्यभावानुवादित्वात्, प्राप्तार्थेऽपि 'भुञ्जते' इत्यादौ विधिप्रत्ययदर्शनात्, कृतेः 'करोमि', 'क्रियते', 'कुर्व' इत्यादिरूपाया निष्फलत्वात् तदाचरणमयुक्तमिति शङ्का सम्भवति, तथापि तस्याः शिष्यावधानफलकत्वात् न दोषः । अत एव 'शिष्यावधानाय प्रतिजानीत' इत्यादिलेखनं ग्रन्थकृतां तत्र तत्र सङ्गच्छते । अवधानं च मनसो विक्षेपराहित्यं विजातीयमनोयोग इति यावत् । चतुर्थ्यर्थः उत्पत्त्यनुकूलव्यापारेच्छा । अन्यत् पूर्ववत् । स च व्यापारः 'मया प्रतिज्ञा कृता, भवद्भिस्सावधानेन भवितव्यम्' इति शिष्यान् प्रति गुरोः शब्दप्रयोगः । [२] **स्वग्रन्थस्य इतरग्रन्थेने**त्यादि । स्वग्रन्थविशेष्यकेतरग्रन्थजन्यप्रयोजनजनकत्वाभावप्रकारकज्ञानजनकशब्दानुकूलकृतिमानित्यन्वयबोधः ।

दीपिकायाम् [१] **मङ्गलस्य समाप्तिसाधनत्वं नास्ती**ति । मङ्गलं समाप्तिसाधनत्वाभाववदित्यर्थः । तादृशसाधनत्वाभावो मङ्गलवृत्तिरिति वा ।

[१] **अन्वयव्यतिरेकाभ्यां व्यभिचारादि**ति । अन्वयव्यभिचारश्च कारणसत्त्वेऽपि कार्यानुत्पत्तिरूपः, तन्निष्कर्षश्च [1]स्वावच्छिन्नव्याप्यतान-

---

1. स्वावच्छिन्नेत्यादि । स्वपदेन यद्धर्मावच्छिन्नसत्त्वेऽपि कार्यं न जायते तद्ग्राह्यम् । तच्च कपालाकाशसंयोगत्वं तदवच्छिन्नव्याप्यतावच्छेदकं कपालद्वयसंयोगत्वं व्याप्यतानवच्छेदकं यत् कारणतावच्छेदकं दण्डत्वादि तदवच्छिन्नकारणकूटवति कपालद्वयसंयोगशून्ये प्रदेशे वर्तते यः घटाभावः तत्प्रतियोगितावच्छेदकघटत्वकत्वस्य कपालाकाशसंयोगत्वे सत्वात् तद्वतः कपालाकाशसंयोगस्य अन्वयव्यभिचारित्वम् । अत्र कारणतावच्छेदके व्याप्यतानवच्छेदकान्तानुपादाने कपालाकाशसंयोगस्यान्वयव्यभिचारित्वं न निर्वहति । अतस्तदुपादानम् ।

वच्छेदककारणतावच्छेदकावच्छिन्नकारणकूटवन्निष्ठाभावीयकार्यताव-च्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदककार्यतावच्छेदककत्वम्, कार्यतावच्छेदकनिरूपिततादृशावच्छेदकसम्बन्धावच्छेदकत्वाभिमतधर्मवत्त्वम्। व्यतिरेकव्यभिचारश्च कारणाभावेऽपि कार्योत्पत्तिरूपः। कार्यतावच्छेदकसम्बन्धेन कार्यतावच्छेदकावच्छिन्नाधिकरणविशिष्टकारणतावच्छेदकवत्त्वम्। वैशिष्ट्यं[1]स्वनिष्ठाभावीयकारणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकत्वस्वावच्छिन्नव्याप्यतानवच्छेदक-यावदवच्छिन्नाधिकरणकूटवत्त्वसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्धेन। तादृशकूटवत्त्वं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताक प्रतियोगिताकभेदवत्त्वसम्बन्धेन स्वविशिष्टत्वपर्यवसितम्। स्वाधिकरणता स्वविशिष्टकरणतावच्छेदकधर्मावच्छिन्ननिरूपिताधिकरणतात्वसम्बन्धेन। स्ववैशिष्ट्यं स्वावच्छिन्नव्याप्यतावच्छेदकत्वसम्बन्धावच्छिन्नत्वस्वनिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्त्वसम्बन्धेन। प्रतियोगितावच्छेदकता चाधेयतासम्बन्धेन। तादृशाधेयताशून्यकारणतावच्छेदकधर्मवत्त्वम् अन्वयसहचारः। निरुक्तोभयसम्बन्धेन कार्याधिकरणविशिष्टान्यकारणतावच्छेदकवत्त्वं व्यतिरेकसहचारः । अन्वयव्यभिचारग्रस्तकपालाकाशसंयोगवारणायान्वयसहचारग्रहः कारणताग्रहहेतुः। व्यतिरेकव्यभिचारग्रस्तरासभादिवारणाय व्यतिरेकसहचारग्रहः तथा। [2]व्यभिचार ग्रहौ च क्रमेण सहचारग्रहप्रतिबन्धकौ।

**प्रकाशिकायाम्** [३] **अतो न व्यभिचार इत्यनेनान्वय** इति। अतो न व्यभिचार इत्युत्तरवाक्येनान्वय इत्यर्थः। विघ्नान्यूनसंख्या-

---

1. स्वनिष्ठाभावीयेत्यादि। प्रथमस्वपदं कार्यतावच्छेदकावच्छिन्नाधिकरणपरम्। द्वितीयस्वपदं कारणतावच्छेदकपरम्। एवमुपरितनस्वपदानि कारणतावच्छेदकधर्मपराणि।

2. व्यभिचारग्रहौ चेति। अन्वयव्यभिचारग्रहः अन्वयसहचारग्रहप्रतिबन्धकः, व्यतिरेकव्यभिचारग्रहः व्यतिरेकसहचारग्रहप्रतिबन्धक इत्यर्थः।

कत्वस्य कारणतावच्छेदकत्वे गौरवमभिसन्धाय कल्पान्तरमाह - **बलवत्तरस्येति** । **विघ्नध्वंसद्वारेति** । स्वजन्यविघ्नध्वंससम्बन्धेनेत्यर्थः । एवमग्रेऽपि । अत एव विघ्नबहुत्वेऽपि यत्र बलवत्तरमेकं मङ्गलं वर्तते तत्रापि समाप्तिर्भवति । बलवत्तरत्वं च वैजात्यविशेषः ।

[ ३ ] **आहुः** इत्यस्वरसस्सूचितः। तद्बीजन्तु 'सकृदुच्चरितः शब्दः सकृदेवार्थं गमयति' इति न्यायात् **अत** इत्यादिपदानामावृत्तानामर्थ-द्वयबोधकत्वानुपपत्तिरेव । ननु शिष्टाचारानुमितश्रुतिबोधितकर्तव्य-ताकमित्यनेन शिष्टाचारस्य मङ्गलकर्तव्यताबोधकश्रुत्यनुमापकत्वं लभ्यते । तच्च नोपपद्यते । शिष्टाचारमात्रस्य श्रुतिबोधिताप्रवृत्त-प्रवृत्तिविषयत्वलक्षणकर्तव्यतारहितभोजनसाधारणत्वात् । 'स्नात्वा भुञ्जीत'इत्यादिः तत्कर्तव्यताबोधिकेति वाच्यम् । तस्याः भोजने स्ना-नोत्तरकालीनतामात्रविधानपरत्वात् । भोजनस्य रागप्राप्ततया तद्वि-धिपरत्वासम्भवात् । 'अप्राप्ते हि शास्त्रमर्थवत्' इति न्यायेनेत्याशयेन शङ्कते - [ १ ] **ननु मङ्गलस्य कर्तव्यत्व** इति । **कर्तव्यत्वे** कृतिविधेयत्वे । किं शब्दः क्षेपे । तथा च मङ्गलकर्तव्यताप्रमितिकरणं न किमपीत्यर्थः । शिष्टाचारस्योक्तयुक्त्या श्रुत्यनुमापकत्वासम्भवात् इति भावः । यत्तु कर्तव्यत्वं कृतिविधेयताप्रयोजकत्वमित्यर्थः इति, तदपहास्यम् । वि-षयतात्मकगौणकर्मार्थकस्य तव्यादिप्रत्ययस्य विषयताप्रयोजकधर्मवद-र्थकतायां प्रमाणाभावात् । अन्यथा बोद्धव्यशब्दादावपि तथा प्रस-ङ्गात् । अत एव [ ३ ] **मङ्गलस्य श्रुतिबोधितकर्तव्यताकत्वं व्यवस्थापयितुं शङ्कत** इत्यवतरणिकादानमपि सङ्गच्छते । अप्रामाण्यज्ञानानास्कन्दि-तनिश्चयानुकूलसमीचीनयुक्तिकथनं व्यवस्थापनम् । तुमुनः इच्छैवार्थः । तस्य [1] स्वविषयसमानकर्तृकत्वस्वप्रयोज्येच्छाविषयत्वोभयसम्बन्धेन शङ्कायामन्वयः ।

---

1. स्वविषयेत्यादि । स्वं व्यवस्थापनेच्छा तद्विषयः व्यवस्थापनं तत्समानकर्तृकत्वं शङ्कायाम् , तथा स्वं व्यवस्थापनेच्छा तत्प्रयोज्या शङ्काविषयकेच्छा तद्विषयत्वं च शङ्कायाम् । मङ्गलस्य श्रुतिबोधितकर्तव्यताकत्वं व्यवस्थापयेयमितीच्छया पूर्वपक्षं कुर्यामिति पूर्वपक्षेच्छा जायत इति भावः ।

**दीपिकायां** समाप्ते- [१] **शिष्टेत्यादि** । हेतुसाध्यादिप्रदर्शनपूर्वक-मनुमानस्वरूपं विवृणोति - [१] **तथाहीत्यलौकिकाविगीतशिष्टाचारविषयत्वादिति** । अत्रालौकिकत्वसमानाधिकरणाविगीतत्वसमानाधिकरण-शिष्टाचारविषयत्वादित्याशयः । कर्मधारयोपरि श्रूयमाणभावप्रत्ययस्य पूर्वपदार्थतावच्छेदकसमानाधिकरणोत्तरपदार्थतावच्छेदकबोधकत्वव्यु - त्पत्तेः । ननु शिष्टाचारानुमितश्रुतेरित्यत्र शिष्टसमवेतकृतिविषयक-परामर्शजन्यानुमितिविधेयत्वं श्रुतौ बोधितं न संघटते । 'मङ्गलं श्रुति-बोधितकर्तव्यताकम्' इत्यनुमितिविधेयत्वस्य श्रुतिबोधितकर्तव्यताकत्व एव सत्त्वात् । श्रुतेश्च [1]तदवच्छेदककोटिप्रविष्टत्वात् । विधेयकोटिप्र-विष्टत्वेऽपि विधेयत्वं न स्वीकर्तुं शक्यम् । तथा सति वह्नित्वमनुमित-मिति व्यवहारप्रसङ्गात् इत्याशङ्कायाँ श्रुतेर्विधेयत्वमुपपादयति - [ ३ ] **अत्रायमाशय** इत्यादिना । **अनुमितेः पूर्वमसिद्धत्वादिति** । अनुमितिप्रा-क्कालीनज्ञानविषयतानवच्छेदकत्वादित्यर्थः। तेन परामर्शविषयत्वेऽपि महानसीयवह्न्यादेः न विधेयतानुपपत्तिः । अत्र च मङ्गलकर्तव्यता-बोधकश्रुतिरूपविशेषस्तु पक्षे साध्यसम्बन्धसिद्धिमात्रेणैव सम्भवति । पर्वतो वह्निमानित्यादौ पर्वतीयवह्न्यादिवदित्यवधेयम् ।

ननु [ १ ] **शिष्टाचारनुमितश्रुतेरेवेति दीपिका**वाक्यस्थेनैवकारेण ता-दृशश्रुत्यतिरिक्तस्य मङ्गलकर्तव्यतायां प्रमाणत्वं व्यवच्छिद्यते । तच्च न युज्यते । 'मङ्गलं कर्तव्यं समाप्तिफलकत्वात्'इत्यनुमानस्य तत्र प्रमा-णत्वं सम्भवतीत्यत आह -[३]**एवकारोऽप्यर्थक** इति । **आहु**रित्यस्वरसः । तद्बीजन्तु वृत्त्यनियामकसम्बन्धस्य व्यापकताघटकत्वसामानाधिकर-ण्यघटकत्वयोरसम्भवः । यथाश्रुत**दीपिका**वाक्यार्थास्वारस्यं चेति । **विधिमन्तरा रागादीति** । अत्र चान्तराशब्दस्याभावोऽर्थः । तस्य सामा-नाधिकरण्यसम्बन्धेन रागे अन्वयः । तत्र च विधेः स्वबोधितकर्तव्यता-कत्वसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनान्वयः । सामानाधि-

1. तदवच्छेदकेति । विधेयतावच्छेदकेत्यर्थः ।

करण्यघटकद्वितीयवृत्तिविषयतया । तसिलः प्रयोज्यत्वमर्थः । प्राप्तिः प्रवृत्तिः । क्तप्रत्ययार्थः विधेयः । तथा च विद्ध्यभावसमानाधिकरणरागाधीनप्रवृत्तिविधेयभिन्नत्वमिति फलितम् । यद्यपि मङ्गले श्रुतिबोधितकर्तव्यताकत्वसन्देहेन तादृशरागाधीनप्रवृत्तिविषयत्वस्य सन्दिग्धतया विशिष्टहेतोः साध्याविशेषो दुर्वारः, निश्चितहेतोरेव निश्चायकत्वात्, तथापि प्रवृत्तिविषयत्वेन उभयवादिमतसिद्धं यद्यद्भोजनादिकं तत्तद्भिन्नत्वनिवेशे तात्पर्यम् । अत एव रात्रिश्राद्धादिवारणायाविगीतत्वविशेषणमपि सफलम् । अन्यथा तत्र श्रुतिबोधितकर्तव्यत्वविरहे विधिमन्तरा रागतः प्राप्तत्वेन तद्वैयर्थ्यात् । अविगीतत्वं धर्मशास्त्राद्यधीननिवृत्तिविषयभिन्नत्वम् । आदिपदेन निष्फलत्वप्रमासङ्ग्रहः । तेन 'न कुर्यात् निष्फलम्' इत्यादेः अनुवादरूपत्वे व्युत्क्रमकृतदर्शादौ न व्यभिचारः । एतत्सर्वमभिप्रेत्याग्रे [४] **सङ्क्षेप** इत्युक्तम्।

[३] **वेदोक्तत्वज्ञानेने**ति । वेदोक्तत्वज्ञानजन्यवेदविहितकर्मानुकूलकृतिमत्त्वं शिष्टत्वमित्यर्थः । वेदाविहितहिंसादिकर्माणि वेदोक्तत्वभ्रमेण यः करोति तद्वारणाय वेदोक्तत्वज्ञानं प्रमारूपमिति भावः ।[३]**अहिंसादिकर्तरी**ति । [1]अत्राहिंसाशब्देन हिंसाविरोधिव्यापारो विवक्षितः । **दीपिकायाम्** [ १ ] **निषिद्धत्वादि**ति । इदं चापाततः । न कुर्यादित्यादेरनुवादरूपतायाः प्रागेवोक्तत्वात् । [४] **तर्कपदस्ये**त्यादिषष्ठ्याः विशेष्यत्वमर्थः । तस्य भ्रमेऽन्वयः । भ्रममित्यत्र निवृत्त्यन्वयि प्रतियोगित्वं द्वितीयार्थः । निवृत्त्यनुकूलव्यापारो वारणं, तुमर्थ इच्छा, तस्याश्च स्वविषयसमानकर्तृकत्वस्वप्रयोज्येच्छाविषयत्वोभयसंबन्धेन निवंचनेऽन्वयः । **दीपिकायाम् सङ्क्षेपेणे**ति । स्वल्पत्वेनेत्यर्थः । वैशिष्ट्ये तृतीया, तच्च कथनान्वितम् ।

---

1. अत्राहिंसाशब्देनेति । अहिंसाशब्दस्य हिंसाभावार्थकत्वे अभावस्य कृत्यविषयत्वात् अहिंसाकर्तरीत्यनुपपन्नं स्यात् । अतः हिंसाविरोधिव्यापारोऽहिंसेत्यर्थः । नञोऽत्र विरोध्यर्थकत्वं 'तदन्यतद्विरुद्धतदभावेषु नञ्' इति शास्त्रकृद्वचनात् ।

[१५] **पदसम्बन्धित्वांशस्येति**। न च विषयत्वेऽभिधारूपितत्वस्य व्यर्थत्वात् किं तदभिधानेनेति वाच्यम्। [1]अभिधानिरूपितविषयत्वस्यापि विषयस्य सत्त्वात् अभिधीयविषयत्वस्य पदार्थसामान्यलक्षणता न संभवतीति भ्रमवारणाय विषयतायामभिधानिरूपितत्वस्य निवेशेनादोषात्। पदसम्बन्धिन्याश्चाभिधायाः विषयतासंबन्धेनैव विषयसंबद्धत्वात् यद्यपि विषयतासम्बन्धेन अभिधावत्त्वस्यैव लक्षणत्वं वक्तुमुचितमिति तस्याः प्रकारविधया निवेशो विफलः, तथापि "व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्"इत्युक्तरीत्या व्यवहारसाधने विषयतायाः वृत्त्यनियामकतया हेतुतावच्छेदकसम्बन्धत्वं सविवादमित्यभिप्रायः। न चैवं स्वसमानाधिकरणव्याप्यतावच्छेदकविषयतारूपधर्मान्तरघटितत्वात् अभिधेयत्वत्वस्य व्याप्यतानवच्छेदकतया व्याप्यत्वासिद्धिरिति वाच्यम्। अभिधाविषयत्वस्य निरूपितत्वसम्बन्धेनाभिधाविशिष्टत्वेन लक्षणत्वादित्याशयादिति।

**दीपिकायाम्**[१५]**पदार्थान् विभजते** इति। विंपूर्वकभजधातोः स्वसमभिव्याहृतद्वितीयान्तपदोपस्थाप्यतावच्छेदकव्याप्यधर्मप्रकारकज्ञान-जनकशब्दोऽर्थः। द्वितीयान्तपदोपस्थाप्यतावच्छेदकत्वमुपलक्षणम्। एवमुत्तरत्रापि बोध्यम्। ननु पृथिव्यादिपदार्थानामनन्तत्वात् कथं पदार्थानां सप्तत्वकथनं संग्रहे सङ्गच्छत इत्याशङ्क्य सप्तपदस्य द्रव्यत्वादिरूपसप्तोपाध्यन्यतमवत्परतया समाधत्ते **प्रकाशिकायाम्** [१५] **द्रव्यत्वादिरूपा** इति। **सप्तोपाधय** इति। नन्वत्रोपाधिषु किं नाम सप्तत्वम्? न तावत् सङ्ख्यारूपं सम्भवति उक्तयुक्तेः। एकत्वस्य सङ्ख्यारूपत्वेऽपि द्रव्यत्वादिविशेषणसप्तत्वस्य सङ्ख्यारूपत्वायोगात्। न च भ्रममादाय तदुपपत्तिरिति वाच्यम्। अभ्रान्तानाँ तादृशभ्रमासम्भवेन तेषामुपाधिषु सप्तव्यवहारानुपपत्तिप्रसङ्गात्। तथापि एक-

---

1. अभिधानिरूपितेति। अभिधया अनिरूपितं विषयत्वं यस्येत्यर्थः।
अभिधीयविषयत्वस्येति। अभिधया निरूपितं यत् विषयत्वं तस्येत्यर्थः।

मात्रवृत्तिधर्म एकत्वम् । एकमात्रवृत्तित्वं च स्ववृत्तित्वस्वभिन्नवृत्तित्वोभयसम्बन्धेन किंचिद्विशिष्टान्यत्वम् । स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वोभयसम्बन्धेन भेदवदन्यत्वं वा । तथा चायमनुगमः-स्वीयैकत्वप्रकारतानिरूपितद्रव्यत्वनिष्ठविशेष्यत्वस्वीयैकत्वप्रकारतानिरूपितगुणनिष्ठविशेष्यत्वाद्यन्यतमवद्धर्मविशिष्टत्वं सप्तत्वम् । अथात्र स्वीयैकत्वप्रकारतानिरूपितद्रव्यत्वादिनिष्ठविशेष्यत्वादिसम्बन्धावच्छिन्न- स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदसप्तकवत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन विशिष्टत्वं वाच्यम् । एवं च तत्रापि भेदेषु सप्तत्वस्योक्तरित्या अपेक्षाबुद्धिविशेषस्यैव वक्तव्यतया अनवस्थाप्रसङ्गादिति चेत् - न । अत्रापेक्षाबुद्धिविशेषविषयत्वं च द्रव्यत्वनिष्ठविशेष्यतानिरूपितएकत्वनिष्ठप्रकारत्वविशिष्टं यद्गुणत्वनिष्ठविशेष्यतानिरूपितैकत्वप्रकारतानिरूपकत्वं तदादिविशिष्टा या बुद्धिः विशेष्यतासम्बन्धेनतद्वत्त्वं, विशिष्टायास्तस्याः विशेष्यतासम्बन्धेन द्रव्यत्वादावेव सत्त्वोपगमात् न समूहालम्बनज्ञानमादायातिप्रसङ्गः । वैशिष्ट्यं सामानाधिकरण्यसम्बन्धेनेति । [१५] **एवमग्रिमग्रन्थस्यापीति** । **नवैव द्रव्याणी**त्यादिरेत्यर्थः । **दीपिकायाम् अधिकसंख्यान्यवच्छेदार्थकत्वादिति** । अत्राधिकसंख्याशब्दः अष्टमपदार्थपरः । व्यवच्छेदो नाम निषेधसिद्धिः । तथा च 'त्रीन् ब्राह्मणान् आनय' इत्यादौ चतुर्थादिब्राह्मणनिषेधवत् अष्टमपदार्थनिषेधसिद्धिरिति भावः । [1]स्वाश्रयवृत्तित्वस्वानाश्रयवृत्तित्वोभयसम्बन्धेन प्रकृतसप्तत्वविशिष्टसंख्या अधिकसख्यापदार्थः । [१५] **नन्वतिरिक्तः पदार्थ इति** । यद्यपि अतिरिक्तपदार्थरूपधर्म्यप्रसिद्धिः प्रमितत्वाभावकोटचप्रसिद्धिश्चेति विकल्पोऽयं नोपपद्यते, तथापि प्रमितः पदार्थः पदार्थविभाजकधर्मः अतिरिक्तो वा न वेत्यर्थः ।

---

1. स्वाश्रयवृत्तित्वेति । स्वं सप्तत्वसंख्या स्वाश्रयाः सप्तपदार्थाः तद्वृत्तित्वं अष्टत्वसंख्यायाम्, एवं स्वं सप्तत्वं तदनाश्रयः अष्टमपदार्थः तद्वृत्तित्वं अष्टत्वसंख्यायाम् ।

अतिरिक्तत्वं च द्रव्यत्वाद्यभावत्वान्तान्यतमाधिकरणवृत्तित्वम् । तथा च पदार्थविभाजकधर्मः तादृशाधिकरणवृत्तिर्नवेत्यर्थो लभ्यत इति धर्मिप्रसिद्धया कोटिप्रसिद्धया च विकल्पसिद्धिः ।

यत्तु 'द्रव्यादिभेदकूटवत्त्वस्य तादृशभेदकूटात्मकस्य कूटघटक-प्रत्येकानतिरिक्ततया प्रमितपदार्थवृत्तित्वाभावस्य दुर्घटत्वात् । विकल्पेऽन्यतरकोटेरबाधितत्वनियमात् व्यासज्यवृत्तिधर्मावच्छिन्नानु-योगिताकैकदेशवृत्तिप्रतियोगिताकाभावस्याप्रामाणिकत्वात् तादृश-कूटाधिकरणत्वस्य चाप्रसिद्धत्वात् कूटत्वस्य दुर्वचत्वाच्च । प्रमितः पदार्थः द्रव्यादिभेदकूटवान् न वेति विकल्पार्थः इत्यपि न। भेदानामेक-विशिष्टापरत्वेन निवेशेऽप्रसिद्धिप्रसङ्गेन तावद्विषयकधीविषयत्वस्य प्रत्येकमेव भेदेषु सत्त्वात् । [१६] **इति व्यवच्छेदार्थकत्वादि**ति । इत्या-कारकनिश्चयफलकत्वादित्यर्थः । न च तादृशनिश्चय एव मास्तु इति शङ्कनीयम् । षोडशपदार्थानां क्लृप्तपदार्थान्तर्भावसाधने तादृश-व्याप्तिनिश्चयस्यावश्यापेक्षितत्वात् । [१५] **संग्रहे द्रव्यगुणेत्यादि**। अत्र च द्रव्याद्यन्यतमत्वसम्बन्धेन'एकत्र द्वयम्'इति रीत्या पदार्थत्वाव-च्छिन्ने द्रव्याद्यन्वयो व्युत्पत्तिवैचित्र्यात् । 'पदार्थत्वं द्रव्यादिसप्तान्यत-मत्वव्याप्यम्' इति बोधस्तु औत्तरकालिको मानस एव । प्रपञ्चितं चेददस्माभिरन्यत्र ।

**दीपिकायाम्** [१५] **द्रव्यादिसप्तान्यतमत्वं नामे**त्यादि । अत्राय-माशयः— सामानाधिकरण्यसंबन्धेन द्रव्यभेदविशिष्टो यो गुणभेदः तद्विशिष्टो यः कर्मभेदः तद्विशिष्टो योऽयं सामान्यभेदः तद्विशिष्टो योऽयं विशेषभेदः तद्विशिष्टो योऽयं समवायभेदः तद्विशिष्टो योऽय-मभावभेदः तस्याभावत्वावच्छिन्नानुयोगिताकस्वरूपसंबन्धावच्छिन्न-प्रतियोगिताकाभाव एव द्रव्याद्यन्यतमत्वं, एवं वैपरीत्यमप्येवमूह्यम् । अन्यथा द्रव्यादिभेदसप्तत्वावच्छिन्नप्रतियोगिताकाभावरूपत्वे सप्त-त्वस्य दुर्वचतया तादृशाभावस्यापि अप्रसिद्धयापत्तेः । यद्यपि सप्त-त्वस्य तद्विषयकधीविशेषविषयत्वरूपत्वं सुवचम् । तथापि विषयत्वस्य

व्यासज्यवृत्तित्वे मानाभावः तदवच्छिन्नात्यन्ताभावः द्रव्यादिषु प्रत्येकं वर्तते । अस्मत्पक्षे तु तादृशभेदं प्रति तादृशसंबन्धस्य व्यधिकरणतया व्यधिकरणसम्बन्धावच्छिन्नप्रतियोगिताकाभावप्रसिद्धिसौलभ्यमिति सुधीभिः विभावनीयम् । [१६]**वस्तुतस्त्वित्यादि** । इदमत्र चिन्त्यम्–पदार्थत्वं द्रव्याद्यन्यतमत्वव्याप्यम्, सप्तत्वं च तद्विषयकधीविषयत्वरूपमित्युक्त्यैव सामञ्जस्ये द्रव्यपदस्य द्रव्यत्वपरत्वं अन्यतमपदस्यान्यतमवत्परत्वं च विना लक्षणाँ न निर्वहतीति लक्षणाश्रयणमयुक्तम् । किंचिल्लक्षणा हि शक्यसम्बन्धरूपा द्रव्याद्यन्यतमस्य शक्यार्थत्वाभावात् तादृशान्यतमवति लक्षणा न शक्यते । तथा शक्त्यप्रसिद्धिः उपपादनायैव ।

**द्रव्यविभागः**

[२२] **द्रव्यमिति जात्येकवचनमिति** । नन्वत्र किं नाम जातिगतमेकत्वम् ? न तावत् गुणः । तत्र तदनङ्गीकारात् । नापि सजातीयद्वितीयराहित्यम्, सिद्धयसिद्धिभ्यां व्याघातात् इति चेत्, उच्यते-एकमात्रवृत्तिधर्मावच्छिन्ने एकवचनस्य शक्तिः । व्यक्त्येकत्वपरवाक्यस्थले 'पशुना यजेत' इत्यादौ [1]स्वाश्रयत्वस्ववृत्तिप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन प्रकृत्यर्थेऽन्वयः । अवच्छेदकत्वं च स्वकरणकयागकरणीभूतपश्वादिवृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन अवच्छेदकता चाश्रयतासम्बन्धेन। जात्येकत्वपरवाक्यस्थले द्रव्यमित्यादौ तु [2]स्वाश्रयाश्रयत्वस्वकर्मकविभागकर्मीभूतद्रव्यवृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगितावच्छेदकताकत्वोभयसम्बन्धेन प्रकृत्यर्थेऽन्वयः। सा च स्वाश्रयाश्रयत्वसम्बन्धेन। एकत्वमन्यत्रापि बोध्यम्।

---

1. स्वाश्रयत्वेति । स्वं एकत्वम्, तदाश्रयत्वं प्रकृत्यर्थे पशौ, एवं स्वं एकत्वं तद्वृत्तिः पशुमद्भेदः तत्प्रतियोगितावच्छेदकत्वं च पशौ । स्वकरणकेत्यत्र स्वशब्दः प्रकृत्यर्थपशुपरः ।

2. स्वाश्रयाश्रयत्वेत्यादि । प्रथमस्वशब्दः एकत्वपरः । द्वितीयस्वशब्दः तृतीयस्वशब्दश्च प्रकृत्यर्थद्रव्यपरः । स्वनिष्ठप्रतियोगितावच्छेदकताकत्वमित्यस्य स्वनिष्ठा या भेदप्रतियोगितावच्छेदकता तत्कत्वमित्यर्थः । स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वमिति यावत् ।

[२४] **मीमांसकमतमित्यादि । दूषणं** अनुपपन्नत्वप्रकारकज्ञानानुकूलयुक्तिकथनम् । तुमुन इच्छैवार्थः, तस्याः उपन्यासे [1]पूर्ववदेवाऽन्वयः । [२४] **अतिरिक्तत्वं व्यवस्थापयितुम्** इत्यत्रापि उक्तरीतिरेव । निराकरणं तु अभावप्रकारकज्ञानानुकूलशब्दः । [२४] **अन्तर्भावमित्यत्र** द्वितीयायाः प्रतियोगित्वमर्थः । तस्य निराकरणैकदेशेऽभावेऽन्वयः । **दीपिकायां** [२४] **प्रतीतिबलादित्यत्र** बलशब्देन विषयसाधकत्वं द्योत्यते । अतः तस्या भ्रमत्वे न विषयसाधकत्वमिति शङ्कानिरासायाबाधितेत्युक्तम् । **नीलेत्यादि** । अत्र च द्रव्यसाधकहेतुद्वयकथनं [2]न्यूनाधिकदृष्टान्तमभिसन्धाय । [२४] **कालिकादिसम्बन्धेनेति** । अत्रादिपदेन विषयतासम्बन्धस्य परिग्रहः । न तु दैशिकविशेषणतायाः, तथा सति मूर्तेषु साध्यसत्त्वेन व्यभिचारानवकाशात् । [२४] **अतिप्रसक्तत्वेऽपीति** । जन्यगुणदावित्यादिः । **द्रव्यत्वे सिद्धे सतीति** । अत्र द्रव्यत्व इति सप्तम्याः अनुमितिरूपसिद्धिरर्थः । तस्या उत्तरकालीनत्वसम्बन्धेन निराकरणेऽन्वयः । **दीपिकायाम्** [२३] **तमसो नाकाशादिपञ्चकेऽन्तर्भाव** इति। आकाशादिपञ्चकान्यतमत्वत्वावच्छिन्नप्रतियोगिताकाभावः तमोवृत्तिरित्यन्वयबोधः । [२३] **न वायाविति** पृथक्करणं वायावनन्तर्भूतत्वसाधकहेत्वन्तरसत्त्वात् । न हि स्पर्शाभावादेरपि आकाशाद्यनन्तर्भूतत्वसाधकत्वं सम्भवति, [3]व्यभिचारात् । नवीनमतमनुसृत्य **प्रकाशिकायाम्** [२४] **वस्तुतस्त्विति** ।

---

1. पूर्ववदेवान्वय इति। स्वविषयसमानकर्तृकत्वस्वप्रयोज्येच्छाविषयत्वोभयसंबन्धेनान्वयः इत्यर्थः ।

2. न्यूनाधिकदृष्टान्तमभिसन्धायेति । तमसो द्रव्यत्वसाधकनीलत्वहेतोः नीलद्रव्याण्येव दृष्टान्तः, तमसो द्रव्यत्वसाधकक्रियावत्त्वहेतोस्तु सर्वाणि मूर्तद्रव्याणि दृष्टान्त इत्येवं तात्पर्यम् ।

3. व्यभिचारादिति । तमः आकाशाद्यनन्तर्भूतं स्पर्शाभावादिति हि प्रयोक्तव्यम् । तत्र च साध्याभाववति आकाशादौ स्पर्शाभावसत्त्वात् व्यभिचार इत्यर्थः ।

[२४] **विषमव्याप्तमिति** । विषमव्याप्तत्वं च साध्याव्यापकत्वे सति साध्यव्याप्यत्वम् । समव्याप्तत्वं च साध्यव्यापकत्वे सति साध्यव्याप्यत्वम् । ननु सदागतिमत्त्वाभावादित्यत्र हेतौ सदागतिशब्देन योगव्युत्पत्त्या सार्वकालिकगमनं लभ्यते । सार्वकालिकत्वं च कालत्वनिरूपितकालिकसंबन्धावच्छिन्नव्यापकत्वं, प्रलयादौ जन्यवायोरभावात् तदीयक्रियायाः तदानीं विरहेण कालत्वव्यापकगमनरूपसदागतिशब्दार्थस्य जन्यवायावभावेन [1]तदभावेन वाय्वनन्तर्भूतत्वसाधने व्यभिचार इत्यत आह – [२४] **सदागतिः विजातीयक्रियेति** । एवं च वैजात्यविशेषस्य जन्यवायुक्रियायामपि सत्त्वात् न दोष इति भावः । **क्लृप्तद्रव्येष्वनन्तर्भावादित्यर्थ** इति । इदमत्र परिशेषानुमानं विवक्षितम् - तमः पृथिव्यादिभेदकूटद्रव्यत्वोभयवत् पृथिव्याद्यनन्तर्भूतत्वद्रव्यत्वोभयस्मात् यन्नैवं तन्नैवं यथा घट इति । अत्राभावरूपतया तमसः नैयायिकैरभ्युपगमात् सिद्धसाधनवारणाय साध्यकोटौ द्रव्यत्वनिवेशः । गुणादौ व्यभिचारवारणाय हेतुकोटौ द्रव्यत्वनिवेशः । गुणादौ व्यभिचारवारणाय हेतुकोटौ द्रव्यत्वनिवेशः । पृथिव्यादौ व्यभिचारवारणाय पृथिव्यादीति ।

यत्तु-सामानाधिकरण्यसम्बन्धेन पृथिव्यादिभेदकूटविशिष्टद्रव्यत्वं साध्यं पृथिव्याद्यनन्तर्भूतत्वविशिष्टद्रव्यत्वं हेतुरिति । तन्न । नैयायिकमतेऽनुमितेः प्राक् साध्यहेत्वोरप्रसिद्धतया व्यतिरेकव्याप्तेर्दुर्ग्रहत्वादिति । **दीपिकायाम्** [२३] **प्रौढेत्या**दि । प्रौढत्वमुत्कृष्टत्वं महत्त्वाश्रयत्वम्,तेजःपरमाणुवारणाय महत्वनिवेशः। तेजस्त्रुटिवारणयोत्कृष्टत्वनिवेशः । प्रकाशकत्वं चोद्भूतानभिभूतरूपवत्त्वम् । चक्षुरादिवारणायोद्भूतेति । सुवर्णादिवारणायानभिभूतेति । घटादिवारणाय तेजःपदम् । यद्यपि उद्भूतत्वस्य वक्ष्यमाणरीत्या तत्तदनुद्भूतत्वाभावकूटरूपतया प्रतियोगितानवच्छेदकाननुगमात् तमःपदार्थनानात्वं प्रसज्यते,

---

1. तदभावेनेति । सदागतिमत्त्वभावेने त्यर्थः ।

तथापि महाप्रभावत्वावच्छिन्नप्रतियोगिताकाभाव एव तमः । प्रौढ-प्रकाशकतेजःशब्देन च महाप्रभैव विवक्षितमिति अभिप्रेत्यैवाग्रे **दिगित्युक्तम्** । **प्रकाशिकायाम्** [२४] **आलोकासहकृते**ति । आलोकाजन्य-चाक्षुषनिरूपितलौकिकविषयत्वादिति पर्यवसितार्थः । तेनान्यत्र चक्षुषः आलोकरूपसहकारिकारणविशिष्टत्वेऽपि न क्षतिः ।

ननु तमः प्रत्यक्षेऽपि कालविधया आलोकस्य कारणत्वात् असिद्धिरिति चेत् - न । कालत्वावच्छिन्नालोकनिष्ठजनकताकत्वाभावस्य निवेशात् । स्पार्शनमादाय घटादौ व्यभिचारवारणाय चाक्षुषेति । विषयतायां लौकिकत्वनिवेशे प्रयोजनमाह -[२४]**तमसश्चाक्षुषेऽपि घटादीनामि**त्यादिना। 'घटे तम' इत्याकारकप्रत्यक्षेऽलौकिक्या ज्ञानप्रत्यासत्त्या घटादीनां विषयत्वेऽपि न तत्र व्यभिचार इत्यर्थः ।

अत्र चाधुनातनेषु पुस्तकेषु 'तमोवान् घटः' इति पाठोऽनुपपन्नः । "अस्माया मेधास्रजोविनिः" इति सूत्रेण तस्मस्वीत्येव रूपनिष्पत्तेः । मतुप् गुणयोरसम्भवात्। उपनीतं विशेषणतयैवेति नियमेनालौकिकज्ञान-प्रत्यासत्त्या घटादीनां विशेष्यतया भानासंभवेनालौकिकविषयता-मादाय घटादौ व्यभिचारासम्भवाच्च । अतस्तादृशपाठो भ्रान्ततमः प्रक्षिप्त इति विदाङ्कुर्वन्तु विद्वांसः । [२४] **विशेषाभावं** व्याप्य-धर्मावच्छिन्नप्रतियोगिताकाभावम् । इदं च पक्षदृष्टान्तयोरभेदशङ्का-निरासाय । अयमत्र भावः - कार्यतावच्छेदककोटौ तमोभिन्नत्वस्य द्रव्यविशेषणत्वमुपगम्य तमोभिन्नद्रव्यवृत्तिलौकिकविषयतासम्बन्धेन चाक्षुषं प्रति संयोगेनालोकस्य कारणत्वे यद्यपि न दोषः, तथापि तमसो द्रव्यत्वे कार्यतावच्छेदककोटौ तमोभिन्नत्वनिवेशात् गौरवमनन्ता-वयवकल्पनयापि । तत्तमश्चाक्षुषस्याकस्मिकत्ववारणाय असाधारण-कारणान्तरकल्पनस्यावश्यकतया गौरवमिति । [२५] **प्रागभावादी**-त्यादिपदेनध्वंसपरिग्रहः । [२५] **आवश्यके**ति । इदं च तमोभाव एव तेजः किं न स्यादिति विनिगमनाविरहशङ्कानिरासाय । अन्यथा 'उष्णं तेजः' इति उष्णस्पर्शप्रतीत्यनुपपत्तिप्रसङ्गात् ।

**दीपिकायाम्** [३१] **द्रव्यत्वजातिमत्त्वमिति** । अत्र जातिपदं समवायेन द्रव्यत्वस्य लक्षणत्वलाभाय । न तु तदपि लक्षणघटकं, तथा सति स्वसमानाधिकरणव्याप्यतावच्छेदकधर्मान्तरघटिततया व्याप्यतानवच्छेदकत्वेन व्याप्यत्वासिद्ध्यापातात् । **प्रकाशिकायाम्** [३१] **संयोगजनकतावच्छेदकतयेति** । अत्रेदमनुमानमभिमतम् - संयोगनिष्ठसमवायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसम्बन्धाव - च्छिन्नकारणता किंचिद्धर्मावच्छिन्ना कारणतात्त्वात् दण्डादिनिष्ठघटादिकारणतावदिति ।'सिध्यतो धर्मस्य जातित्वे लाघवम्' इति तर्कसहकृताज्जातित्वे बाधकाभावसहिताच्च परामर्शाद् द्रव्यत्वजात्यवच्छिन्नत्वसिद्धिः । किंचिज्जात्यवच्छिन्नत्वस्य साध्यत्वे प्रतिबन्धकाभावनिष्ठकारणतायां व्यभिचारः स्यादिति तदुपेक्षितम् । न च सत्तां पृथिवीत्वादिकां च जातिमादायानुमानपर्यवसानात् अर्थान्तरमिति वाच्यम् । तत्समनियतधर्मस्यैव तदवच्छेदकत्वात् सत्तादौ तद्व्याप्यत्वादिग्रहस्य प्रकृते सत्त्वेन तदादायानुमानपर्यवसानासम्भवात् । 'सत्तादिकं यदि संयोगसमवायिकारणतावच्छेदकं स्यात् तर्हि संयोगसमवायिकारणतासमनियतं स्यात्' इति तर्कबलात् सत्तादिजात्यवच्छिन्नत्वानुमित्यसम्भवात् । एवमुत्तरत्रापि बोध्यम् । समवायेन संयोगं प्रति तादात्म्येन द्रव्यत्वेन कारणत्वं गुणादौ समवायेन संयोगापत्तिवारणाय बोध्यम् ।

[३१] **लक्षणलक्ष्यतावच्छेदकयोरभेद** इति । तथा सति लक्षणेनेतरभेदानुमाने परामर्शकाले इतरभेदसमानाधिकरणद्रव्यत्वं द्रव्यत्वव्यापकेतरभेदः इत्याकारकसिद्धिसत्त्वात् अनुमित्यनुपपत्तिः । असमानाकारकनिश्चयस्यापि प्रतिबन्धकत्वात् । सिषाधयिषानुधावने च प्रयासगौरवमित्यभिप्रायः ।

यत्तु - लक्षणलक्ष्यतावच्छेदकयोरभेदे उपनयवाक्यात् शाब्दबोधानुपपत्तिः प्रकृतेऽपि सम्भवति इति, तत्तुच्छम् - द्रव्यत्वस्य स्व-

रूपतो लक्ष्यतावच्छेदकत्वात् , द्रव्यत्वत्वेन च लक्षणत्वात् 'द्रव्यत्ववत् द्रव्यम्' इत्याकारकप्राचीनमतोपनयस्य बाधकाभावात् । तद्धर्मनिष्ठप्रकारतानिरूपितविशेष्यतानिरूपितावच्छेदकतावच्छेदकतासम्बन्धेन शाब्दबुद्धिं प्रत्येव तद्धर्मभेदस्य कारणत्वस्य वक्तव्यत्वात् । अन्यथा 'द्रव्यं जातिमत्' इत्यादिप्रयोगानुपपत्तेः ।

**अव्याप्त्यादिलक्षणम्**

[३३] **लक्षणतावच्छेदकत्वाभिमतसंबन्धेन यत्किंचिल्लक्ष्यावृत्तित्वमित्यर्थ इति** । लक्ष्यतावच्छेदकसमानाधिकरणाभावीयलक्षणतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वे सति लक्ष्यतावच्छेदकाधिकरणनिरूपितलक्षणतावच्छेदकसंबन्धेनाधेयत्वमव्याप्तिरिति निष्कर्षः । अन्यथा यथाश्रुते लक्ष्यैकदेशमात्रसाधारणानुगताननतिप्रसक्तस्य दुर्वचतया असम्भवापत्तेः । असम्भविनो वारणाय द्वितीयदलम्, गन्धादिसल्लक्षणवारणाय प्रथमदलम्, पृथिव्यादौ संयोगादिना गन्धाद्यभावस्य सत्त्वात् अभावप्रतियोगितायां लक्षणतावच्छेदकसम्बन्धावच्छिन्नत्वनिवेशः । कालिकसम्बन्धेन गवावृत्तावेकशफादौ तद्वारणाय द्वितीयदलघटकाधेयतायां तत्सम्बन्धावच्छिन्नत्वनिवेशः ।

न चैवमपि गन्धघटोभयाभावघटादिवृत्तित्वविशिष्टगन्धाद्यभावादेर्घटादौ सत्त्वात् तद्दोषतादवस्थ्यमिति वाच्यम् । तादृशाभावप्रतियोगितावच्छेदकः तादृशाधेयतावच्छेदकश्च यो लक्षणतावच्छेदकधर्मः तस्य विवक्षितत्वात् । यद्यपि तादृशाभावप्रतियोगितावच्छेदकं घटत्वगन्धत्वादिकमपि, तथापि तादृशप्रतियोगितावच्छेदकतापर्याप्त्यधिकरणत्वविवक्षया न दोषः । [३३] **अलक्ष्ये लक्षणस्येति** । [1]विशेषणताविशेषेण लक्ष्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदवन्निरूपितलक्षणताघटकसम्बन्धावच्छिन्नाधेयत्वमित्यर्थः । घटादौ घटादिभेदासत्त्वात् गन्धादौ नातिव्याप्तिः । न वा कालिकेन जलादौ गन्धसत्त्वमादाय ।

---

1. विशेषणताविशेषेणेत्यस्य भेदवत्त्वेऽन्वयः ।

नापि पृथिव्यादावेव पृथिव्यादिभेदस्य कालिकसंबन्धेन सत्त्वात् तद्दोषतादवस्थ्यम् । **लक्ष्यमात्रावृत्तित्वमिति दीपिकावाक्यात्** मात्रपदस्येतरव्यवच्छेदपरत्वे लक्ष्येतरावृत्तित्वविशिष्टलक्ष्यवृत्तित्व-स्याभावः असम्भव इति लभ्यते । तच्च न युज्यते - अतिव्याप्तधर्मेऽ-तिप्रसङ्गात् इत्यतः **प्रकाशिकायां** मात्रपदं कृत्स्नार्थकतया व्याचष्टे [३३]**मात्रपदमिति** । [३३]**सम्बन्धविशेषेरयादि** । लक्षणतावच्छेदकसम्ब-न्धावच्छिन्नाधेयताप्रतियोगिताकस्वरूपमेवात्रसंबन्धविशेषः । लक्षण-तावच्छेदकसम्बन्धावच्छिन्नाधेयताप्रतियोगिकस्वरूपसम्बन्धावच्छिन्न–लक्ष्यवृत्तित्वत्वावच्छिन्नप्रतियोगिताकाभावोऽसम्भव इति पर्यवसितम् । तेन द्वित्वाद्यवच्छिन्नाधेयताप्रतियोगिताकस्वरूपस्य गुणादिवृत्तित्वं प्रति व्यधिकरणत्वात् । अत्र च मात्रपदस्य समभिव्याहृतपदार्थताव-च्छेदकव्यापकत्वार्थकतया निरूपकतासम्बन्धावच्छिन्नलक्ष्यतावच्छेद-कव्यापकत्वं आधेयत्वे लभ्यते । तथा सत्यतिव्याप्तधर्मेऽतिप्रसङ्गात् यावत्यो लक्ष्यव्यक्तयः तत्तद्व्यक्तित्वाभावकूटवत्त्वं तु दुर्ज्ञेयम्, विनि-गमनाविरहाभ्यां विवक्षितुमशक्यं चेत्यालोच्य एतत् [३३] **लक्ष्यवृत्ति-त्वसामान्याभावस्फोरकमिति** ।

वस्तुतस्तु लक्ष्यतावच्छेदकव्यापकाभावीयलक्षणताघटकसम्ब-न्धावच्छिन्नप्रतियोगितावच्छेदकलक्षणतावच्छेदकधर्मवत्त्वमसम्भवः । लक्ष्यतावच्छेदकव्यापकत्वं च लक्ष्यतावच्छेदकसमानाधिकरणात्य-न्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम्, न तु तादृशाभावाप्रतियोगि-त्वम्; सर्वेषामेव द्वित्वाद्यवच्छिन्नप्रतियोगितया असम्भवापत्तेः । एतेन विशेषरूपेण संसर्गत्वानभ्युपगमेऽपि न क्षतिः । लक्ष्यतावच्छेदकता-घटकसम्बन्धादिना लक्ष्यतावच्छेदकादिप्रकारेणैवाधिकरणप्रवेशः । तेन सम्बन्धान्तरेण लक्ष्यतावच्छेदकाद्यधिकरणमादाय न दोषः । न वाऽ-नवस्था ।

[३३] **एकशफवत्त्वमितीति** । यद्यपि शते पञ्चाशन्न्यायेन गवादेरप्येकशफवत्त्वमक्षतम् , तथाप्येकत्वमत्र न सङ्ख्यारूपम् । अपि

तु स्वाश्रयपादवृत्तित्वस्वभिन्नत्वोभयसम्बन्धेन शफविशिष्टान्यत्वरूपं पारिभाषिकं ज्ञेयम् । अतिव्याप्तिशरीरे लक्ष्यवृत्तित्वनिवेशनमनावश्यकमित्यभिप्रायेण [३३] **दुष्टसङ्करेपी**ति, **न्यायादि**ति । दुष्टस्वरूपैक्येऽपि दोषस्वरूपयोः परस्परं भिन्नत्वात् तन्निवेशनमनावश्यकमिति भावः ।

अत्र क्वचित् प्राचीनग्रन्थेषु **दिगि**ति दृश्यते । तत्र चायं भावः - असम्भविन्येकशफवत्त्वादौ 'इदमत्रातिव्याप्तम्' इति व्यवहाराभावात् लक्ष्यवृत्तित्वमवश्यं निवेशनीयमिति न तत्रोक्तन्यायावकाशः । एकत्रासम्भविन एवान्यत्र व्यवहारे बाधकाभावात् तत्रोक्तन्यायावकाश इति ।

**लक्षणलक्षणविचारः**

ननु [३०] 'एतद्दूषणत्रयरहितो धर्मः' इति **दीपिका**वाक्यात् तादृशदोषत्रयत्वावच्छिन्नप्रतियोगिताकाभाव एव लक्षणलक्षणमिति लभ्यते । तच्च न युज्यते । अव्याप्त्यादिप्रत्येकदोषग्रस्तधर्मेऽपि तत्सत्त्वेनातिव्याप्तेः इत्यत आह [३८] **उक्तदूषणाभावत्रयविशिष्ट इत्यर्थ** इति । यावत् प्रत्येकाधिकरणस्यैव कूटाधिकरणत्वात् न दोष इति भावः । [३८] **अव्याप्त्यादीत्या**दिपदेनासम्भवपरिग्रहः । [३८] **अन्यादृशमि**ति । तथा च असाधारणपदं वक्ष्यमाणार्थे पारिभाषिकमिति । साधारणं न भवतीत्यसाधारणं इति व्युत्पत्त्या साधारणपदार्थः लक्ष्यवृत्तित्वविशिष्टालक्ष्यवृत्तित्वरूपः तदभावरूपासाधारणपदार्थस्य यौगिकस्याव्याप्त्यसम्भवग्रस्तयोः सत्त्वेन तादृशार्थानुपपत्तिः, किं च 'एतद्दूषणत्रयरहितधर्मो लक्षणम्' इति ग्रन्थेन विरोधश्च इत्यस्वारस्यद्वयं मनसि निधाय पारिभाषिकं निर्वक्तीत्यपि बोध्यमिति प्रकाशिकावतरणिकातात्पर्यम् । 'अव्याप्त्यसम्भवग्रस्तयोर्वारणाय सत्यन्तम्' इति पाठः प्रामादिकः । एकशफवत्त्वादिरूपस्यासम्भविनः स्वव्यापकतत्कत्वरूपलक्ष्यतावच्छेदकव्याप्यत्वविरहेण तत्राव्याप्त्यप्रसक्तेः। [३८] **अव्याप्तस्ये**ति प्राचीनकोशेषु पाठो दृश्यते । स एव युक्तः ।

यत्तु - पृथिव्यादिकं समवायेन लक्षणमित्यादावसम्भविनि गगनदावतिव्याप्तिः । लक्ष्यतावच्छेदकाभाववद्वृत्तित्वरूपस्य लक्ष्यतावच्छेदकव्याप्यत्वस्य तत्र सत्त्वात् इत्यव्याप्त्यसम्भवग्रस्तयोरिति पाठोऽपि साधुरिति - तन्न - अभिधेयत्वादावतिव्याप्तेः वक्ष्यमाणायाः असङ्गतिप्रसङ्गात् स्वव्यापकतत्कत्वरूपव्याप्यत्वस्यावश्यं निवेशनीयतया तत्पाठसाधुत्वासम्भवात् । यदि च तत्पाठसाधुत्वेऽप्याग्रहः, तदा स्वाभाववद्वृत्तित्वसम्बन्धावच्छिन्न लक्ष्यतावच्छेदकनिष्ठप्रतियोगितावच्छेदकनिष्ठाभावीयस्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नप्रतियोगित्वरूपव्याप्यत्वस्य निवेशेन तदुपपादनीयम् । [३८] **स एवासाधारण धर्म इत्युच्यत** इति **दीपिका**वाक्यात् असाधारणत्वे सति धर्मत्वमिति लभ्यते, तत्र धर्मत्वांशस्य निवेशनमफलम् अवृत्तिगगनादेः लक्ष्यतावच्छेदकव्यापकत्वविरहात् तत्राव्याप्तेरप्रसरात् अतः तत्पदस्य सार्थक्यमाह - [३८]**धर्मपदमि**ति । [३८] **लक्षणताघटकसम्बन्धेने**ति । लक्ष्यतावच्छेदकसम्बन्धेन लक्ष्यतावच्छेदकाधिकरणवृत्त्यभावीयलक्षणतावच्छेदकसंबन्धावच्छिन्नप्रतियोगितानवच्छेदकः लक्षणतावच्छेदकसम्बन्धेन स्वावच्छिन्नाधिकरणवृत्तिभेदप्रतियोगितानवच्छेदक क्ष्यतावच्छेदककश्च यो लक्षणतावच्छेदकधर्मः तद्वत्त्वं विवक्षणीयमित्यर्थः । [३८] **व्यापकत्वा**दित्यादिना व्याप्यत्वपरिग्रहः । तथा च लक्ष्यतावच्छेदकविशिष्ट लक्षणतावच्छेदकवत्त्वं असाधारणत्वमिति निष्कर्षः । वैशिष्ट्यं च स्ववृत्तिभेदप्रतियोगितावच्छेदकत्वस्वाधिकरणवृत्त्यभावीयतादृशप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । [1]अवच्छेदकत्वं लक्षणताघटक-

---

1. अवच्छेदकत्वमिति । प्रथमसम्बन्धघटकमवच्छेदकत्वमित्यर्थः । तथा च लक्ष्यतावच्छेदके गोत्वे यो भेदः सास्नादित्ववद्भेदः, तथा हि एवं सास्नादित्वरूपं लक्षणतावच्छेदकं तदवच्छिन्नस्य सास्नादेः लक्षणतावच्छेदकसमवायसम्बन्धेन यदधिकरणं गोः तद्वृत्तिभेदप्रतियोगितावच्छेदकत्वस्य गोत्वेऽभावात् तादृशभेदप्रतियोगितावच्छेदकत्वसम्बन्धेन न सास्नादित्ववत् गोत्वं इति गोत्ववृत्तिः सास्नादित्ववद्भेदः भवति तत्प्रतियोगितावच्छेदकत्वं सास्नादित्वे । एवं एवं गोत्वं तदधिकरणवृत्त्य-

सम्बन्धेन स्वावच्छिन्नाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धेन । संयोगादिना गन्धाद्यभाववारणाय व्यापकतायां लक्षणताघटकसंबन्धावच्छिन्नत्वनिवेशः । जलादौ कालिकादिना गन्धादिसत्त्वात् व्याप्यतायां तन्निवेशः । अन्यच्च स्वयमूह्यम् । [३८] **असाधारणत्वस्य विघटका इति** । अत्र विपूर्वघटधातोः अभावोऽर्थः । ण्वुलस्सम्पादकः । तथा च लक्ष्यतावच्छेदकव्यापकत्वसहितलक्ष्यतावच्छेदक[1]व्याप्यत्वरूपविशिष्टाभावसम्पादका इत्यर्थः । तादृशाभावश्चातिव्याप्ते[2]विशेष्याभावप्रयुक्तः । अव्याप्त्यसम्भविनोश्च विशेषणाभावप्रयुक्त इत्यभिप्रेत्याह - [३८] **अतिव्याप्ताविति** । पक्षतावच्छेदकसामानाधिकरण्यमात्रेण हेत्वभाववत्त्वं भागासिद्धिः । तदवच्छेदेन तदभाववत्त्वं स्वरूपासिद्धिरिति विवेकः । अत्र च भागासिद्धेः अवच्छेदकावच्छेदेन पक्षे हेतुमत्ताज्ञानविरोधितया, स्वरूपासिद्धेः अवच्छेदकावच्छेदेन सामानाधिकरण्येन च पक्षे हेतुमत्ताज्ञानविरोधितया द्वयोरपि पक्षधर्मताज्ञानं प्रति विरोधितया हेत्वाभासत्वमिति ध्येयम् ।

[३९] **व्यावृत्तिरेवेति** । अयमाशयः - 'व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्' इति । व्यावृत्तिः इतरभेदः । व्यवहारः ज्ञानजनकशब्दः । प्रयोजनं ज्ञाप्यम् । तथा च व्यावर्तकत्वम् इतरभेदानुमापकत्वम् । व्यावहारिकत्वं व्यवहारानुमापकत्वम् । प्रकृते च व्यावृत्तिरेव लक्षणज्ञाप्या इत्येकं मतम् । व्यावृत्तिव्यवहारोभयं ज्ञाप्यमित्यपरं मतम् । तत्राद्यपक्षे व्यावर्तकत्वस्यैव लक्ष्यतावच्छेदकतया वक्ष्यमाण-

---

भावप्रतियोगितावच्छेदकत्वं सास्नादित्वे नास्तीति तादृशप्रतियोगितावच्छेदकत्वसम्बन्धेन गोत्ववद्भेदः सास्नादित्वेऽस्तीति उभयसम्बन्धेन लक्ष्यतावच्छेदकगोत्वविशिष्टत्वं लक्षणतावच्छेदके सास्नादित्वे द्रष्टव्यम् । एवं च प्रथमद्वितीयतृतीयस्वपदानि लक्ष्यतावच्छेदकपराणि, चतुर्थस्वपदं लक्षणतावच्छेदकपरमिति विवेकः ।

1. व्याप्यत्वरूपविशिष्टेति । व्याप्यत्वरूपं यत् विशिष्टं तदभावसंपादकाः ।

2. विशेष्याभावेति । लक्ष्यतावच्छेदकव्याप्यत्वरूपं यद्विशेष्यं तदभावप्रयुक्त इत्यर्थः । विशेषणाभावेति । लक्ष्यतावच्छेदकव्यापकत्वरूपं यद्विशेषणं तदभावप्रयुक्त इत्यर्थः ।

रीत्या अतिव्याप्तिरिति । व्यावर्तकस्येत्यत्र व्याङ्पूर्वकवृतुधातोरितर-भेदोऽर्थः । अकप्रत्ययस्यानुमितिजनक इत्यभिप्रायेणाह [३९] **इतरभेदानुमितिजनकस्येत्यर्थ** इति । अनुमितिजनकत्वं लिङ्गपरामर्शस्यैव, न तु परामृश्यमानलिङ्गस्य । तथा च गन्धादेर्व्यावर्तकत्वानुपपत्तिः । न चेतरभेदानुमितिजनकज्ञानविषयत्वं व्यावर्तकत्वमिति न दोष इति वाच्यम् । एवमपि समूहालम्बनपरामर्शविषयोदासीनावरणात्, अभिधेयत्वादावतिव्याप्तिकथनासङ्गतेश्च । तस्याप्युक्तरीत्या लक्ष्यत्वात् । न च तादृशजनकतावच्छेदकविषयताश्रयत्वं तदिति वाच्यम्। एवमपि इतरभेदव्याप्तिघटकाभावादावतिव्याप्तेः गोत्वाद्यवच्छेदेन गवेतरभेदव्यापककपिलरूपवती गौः इत्याद्याकारकभ्रमात्मकपरामर्शविषयतामादाय कपिलरूपादेरपि व्यावर्तकतापत्तेश्च । तथा च धर्मत्वमेव लक्षणलक्षणमित्याशङ्कायां निष्कर्षार्थमाह [३९] **इतरभेदविधेये**-त्यादि । इतरभेदविधेयकानुमितिजनकज्ञानीय पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितविषयतेत्यर्थः ।

यत्तु - भ्रमीयविषयतामादाय दोषवारणाय भ्रमानिरूपितत्वं निवेश्यमिति - तदसत् । समानाकारकज्ञानेषु विषयताभेदाभावेन उदासीनांशे समूहालंबनमादायासम्भवस्य दुर्वारत्वात् । सामानाधिकरण्यघटकपक्षविशेष्यतानिरूपितां इतरभेदप्रकारतामादाय इतरभेदेऽतिप्रसङ्गवारणाय पक्षतावच्छेदकावच्छिन्नत्वनिवेशः । किंचिदवच्छिन्नत्वनिवेशेऽपि पक्षस्य सामानाधिकरण्यघटकत्वेन तद्दोषतादवस्थ्यमिति तदुपेक्षितम् । वस्तुतस्तु मुख्यविशेष्यतानिरूपितत्वमेव प्रकारतायां निवेशनीयम् । अन्यथा भावस्याधेयत्वं लक्षणमित्यादौ भावत्वाभावहेतुकानुमितिजनकतावच्छेदकव्याप्तिनिष्ठविशेष्यतानिरूपितप्रकारतामादायाधेयत्वेऽतिप्रसङ्गात् । अत्र चेतरभेदविषयकत्वस्यानुमितौ निवेशे 'इतरभेदः प्रमेयः अभिधेयत्वात्' इत्यनुमितिजनकतां आदाय अभिधेयत्वादौ व्यावर्तकताप्रसङ्गः। अत इतरभेदविधेयकत्वस्य तत्र निवेशः । इतरभेदत्वावच्छिन्नविधेयताकत्वं विवक्षणीयम् । 'घटः स्वरूपसम्बन्धेन अभिधेय-

त्ववान् प्रमेयत्वात्' इत्यनुमितिजनकतामादाय तद्दोषात् विधेयतायां पक्षतावच्छेदकव्यापकत्वविशेषितस्वरूपसम्बन्धावच्छिन्नत्वं निवेश्यम्। अन्यथा गोत्वादिसामानाधिकरण्यमात्रावगाहिगौरितरभिन्नेत्याकारकानुमितिहेतुभूतप्रमात्मकतादृशपरामर्शीयजनकतामादायाव्याप्तिग्रस्तधर्मेऽतिप्रसङ्गात्। तादृशविधेयताकत्वसहितानुमितित्वावच्छिन्नजन्यताप्रतियोगिकजनकता निवेश्या। अन्यथा पक्षतावच्छेदकावच्छेदेन तत्सामानाधिकरण्यमात्रेण चेतरभेदावगाहिसमूहालम्बनानुमितिजनकसामानाधिकरण्यमात्रावगाहिपरामर्शीयजनकतामादाय तद्दोषतादवस्थ्यम्। अथैवमपि पृथिवीतरभेदव्याप्यघटेतरभेदादिमत्ताज्ञानसाधारण्येन कालिकादिसम्बन्धेन पृथिवीतरभेदव्याप्यपृथिवीतरभेदवत्ताज्ञानसाधारण्येन वा कल्पनीयानुमितिजनकतामादाय पृथिवीतरभेदादावतिव्याप्तिर्दुर्वारैव। न च तादृशानुमित्युपधायकज्ञानीयत्वस्य विषयतायां निवेशात् न दोष इति वाच्यम्। एवमपि पृथिवीतरभेदाद्यंशेऽप्रामाण्यज्ञानास्कन्दितस्य 'पृथिवीतरभेदव्याप्यपृथिवीतरभेदवती तद्व्याप्यद्रव्येतरभेदवती च पृथिवी'इत्याकारकज्ञानस्य तथात्वात्। तादृशानुमित्यनुपधायकज्ञानवृत्तित्वस्य तादृशानुमित्यनुपधायकसंशयादिसाधारणगन्धादिविषयत्वासङ्ग्राहकतया निवेशासंभवात् इति चेन्न। तादृशानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदिका तादृशानुमित्युपधायकज्ञानवृत्तिर्या अप्रामाण्यज्ञानानास्कन्दितज्ञानीयविषयता तदाश्रयत्वस्य विवक्षितत्वात्। तादृशजन्यताविशिष्टविषयत्वमिति निष्कर्षः। वैशिष्टचं स्वनिरूपितजनकतावच्छेदकत्वस्वाश्रयानुमित्युपधायकाप्रामाण्यज्ञानानास्कन्दितज्ञानीयत्वोभयसम्बन्धेन। अप्रामाण्यज्ञानानास्कन्दितत्वं विषयत्वसामानाधिकरण्यकालिकविशेषणत्वत्रितयसम्बन्धेन भ्रमविशिष्टान्यत्वम्। स्वप्रतियोगिनिष्ठत्वस्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वावच्छिन्नत्वत्रयसम्बन्धेन संसर्गविशिष्टान्यप्रकारतानिरूपकत्वमिति **मदेकपरिशीलितः पन्थाः**।

[३९] **एवेनेति**। एवकारेणेत्यर्थः। ननु सास्नादीनां गवादि-लक्षणत्वस्य कथं अतिव्याप्तिप्रयोजकत्वं, पृष्ठताडनेन दण्डभङ्ग-न्यायात्; अत आह [३९] **उक्तलक्षणेति** [३९] **अभिधेयत्वादि-भिन्नत्वं चेति**। इदमत्र चिन्त्यम् – व्यावर्तकमात्रस्योक्तलक्षणलक्ष्यत्वे लक्ष्यतावच्छेदकाभाववदवृत्तित्वरूपलक्ष्यतावच्छेदकव्याप्यत्वनिवेशेनै-वव्यावहारिकवारणे स्वव्यापकतत्कत्वरूपलक्ष्यतावच्छेदकव्याप्यत्वं नि-वेश्याभिधेयत्वादावतिव्याप्तिं संपाद्य तद्वारणाय तद्भिन्नत्वनिवेशनं प्रक्षालनादिन्यायेनायुक्तम्।

यत्तु - पृथिवित्वादिरूपलक्ष्यतावच्छेदकशून्ये जलादौ कालि-कादिना सत्त्वात् अतिव्याप्तिः - इति, तन्न। घटादिलक्षणे ज्ञानवद-न्यत्वादावेव लक्षणगमनात्। अतो लक्ष्यतावच्छेदकाभावव्यापकीभूता-भावीयलक्षणताघटकसम्बन्धावच्छिन्नप्रतियोगित्वरूपलक्ष्यतावच्छेदक-व्याप्यत्वस्य विवक्षितत्वादिति। [३९] **न तावत्सामान्यतो भेदानुमा-पकत्वमिति**। सामान्यतो भेदत्वेन। तसिलोऽवच्छिन्नत्वमर्थः। तस्य च भेदानुमापकत्वघटकभेदविधेयतायामन्वयः। [३९] **यत्किंचिदुभयत्वा-वच्छिन्नप्रतियोगिताकेति**।'घटः घटपटोभयभिन्नः अभिधेयत्वात्', 'पृथि-वी घटपटोभयभिन्ना पृथिवीतरभेदात्' इत्याद्यनुमितिजनकतामादाय तत्र व्यावर्तकत्वस्य सूपपादत्वात् इति भावः। यद्यपि 'घटो भेदवान् अभिधेयत्वात्' इत्याद्यनुमितिजनकतामादाय तत् सुवचं इति द्वित्वा-वच्छिन्नभेदसाध्यकानुमानपर्यन्तानुधावनं विफलम्, तथापि किंचिद्ध-र्मावच्छिन्नप्रतियोगिताकत्वसहितभेदत्वावच्छिन्नविधेयतापर्यन्तनिवेशे-ऽपि कथं दोषो भवति इत्येतदर्थं व्यावृत्तिसाधारण्यार्थमपि तथोक्तिः। अन्यथा सिद्धसाधनापत्तेः इति ध्येयम्।

ननु व्यासज्यवृत्त्यतिरिक्तकिञ्चिद्धर्मावच्छिन्नप्रतियोगिताकत्व-सहितभेदत्वावच्छिन्नविधेयतानिवेशात् न कोऽपि दोष इत्यत आह – [३९]**सर्वेषामपि व्यतिरेकिधर्माणां यकिंचिद्व्यावर्तकतयेति**। गौः पटभिन्ना-

शृङ्गित्वात्', 'कपिलगौः घटभिन्ना कपिलरूपवत्त्वात्' इत्याद्यनुमिति-जनकतामादाय शृङ्गित्वकपिलरूपादौ तदुपपादनसम्भवादिति भावः । [३९] **नापि विशिष्येत्यादि** । पृथिवीव्यापकत्वविशिष्टस्वरूपसम्बन्धावच्छिन्नपृथिवीत्वाद्यवच्छिन्न - इतरभेदत्वावच्छिन्नविधेयताकानुमिति-जनकतावच्छेदकनिरुक्तविषयताश्रयत्वमित्यर्थः । यद्यपि'कपिलगौः घट-भिन्ना कपिलरूपवत्त्वात्' इत्यनुमितिमादाय कपिलरूपादेर्व्यावर्तकता-प्रसंगः , तथापि धर्मितावच्छेदकेत्यादिन्यायेन न दोषः । [४०] **गोत्वादिसमनैयत्यस्य तत्रासत्त्वादिति** । पदार्थत्वसमनियतत्वस्य लक्ष्या-प्रसिद्धया अलक्षणत्वेन तत्र तत्सत्त्वस्याकिञ्चित्करत्वात् इति भावः ।

[४०] **गोत्वावच्छिन्नेतरभेदानुमापकत्वे साध्य** इति । स्वावच्छिन्नेतर-भेदानुमापकत्वसम्बन्धेन गोत्वे साध्य इत्यर्थः । तेनाग्रेऽभिधेयत्वादौ व्यभिचारकथनं संगच्छते । अन्यथा पदार्थत्वावच्छिन्नेतराप्रसिद्ध्या तद्घटितसाध्याभावस्य सुतरामप्रसिद्धत्वेन साध्याभाववद्वृत्तित्वरूप-व्यभिचारस्य दुर्वचत्वात् । अस्मत्पक्षे तु पदार्थत्वं प्रति उक्तसम्बन्धस्य व्यधिकरणतया साध्याभावस्य प्रसिद्धत्वेन व्यभिचारः सुवच एव ।

[४०] **अभिधेयत्वादिभिन्नत्वं चेति** । चकारो वाकारार्थः । अन्यथा तद्धर्मावच्छिन्नेतरभेदभिन्नत्वस्य निवेशेनैव पदार्थेतराप्रसिद्ध्या अभिधे-यत्वादौ व्यभिचारवारणेन अभिधेयत्वादिभिन्नत्वस्व हेतुकोटौ नि-वेशस्य निष्फलतया तत्समुच्चायकत्वासम्भवादसङ्गतेः । अत्र सामा-न्यव्याप्तिस्थले तद्धेतुधर्मिकतत्तत्साध्यव्याप्तिग्रहाभावविशिष्टतत्तत्सा-ध्यहेतूभयस्थितेः अनुमितिप्रमायाः **सिद्धान्तलक्षणप्रामाण्यवादयोरुक्त**त्वात् **न प्रकृतेऽनुमितिसम्भवः** इत्यभिप्रेत्याह - [४०] **अधिकविचार** इति ।

[४०] **तेन रूपेण व्यवहर्तव्यज्ञानं विनेति** । इतरभेदादिप्रकारेण पक्षविषयकपरामर्शं विनेत्यर्थः । **तद्रूपावच्छिन्नेति** । लक्ष्यतावच्छेदक-पृथिवीत्वाद्यवच्छिन्नप्रतिपादकेत्यर्थः । **व्यवहारासम्भवात्** - व्यवहारानु-मानासम्भवात् । तथा च तद्धर्मावच्छिन्नबोधकशब्दरूपव्यवहारवि-

धेयकानुमितिजनकतावच्छेदकत्वं तद्धर्मावच्छिन्नव्यावहारिकत्वम् । तच्च 'घटः पृथिवीति व्यवहर्तव्यः, पृथिवीतरभेदात्', 'घटः पदार्थ इति व्यवहर्तव्यः, अभिधेयत्वात्' इत्याद्यनुमितिमादाय व्यावृत्त्यभिधेयत्वादावपि अक्षतमिति भावः । एतेन **दीपिकायां लक्षणप्रयोजनत्वे** लक्षणज्ञाप्यत्वे व्यवहारसाधनत्वात् व्यवहारानुमापकत्वादित्यर्थो बोध्यः ।

**गुणवत्त्वस्य द्रव्यलक्षणत्वस्थापनम्**

ध्वंसप्रागभाववति अत्यन्ताभावस्य प्राचीनैरननुमतत्वात् नात्यन्ताभावघटिता व्याप्तिः सम्भवति । यद्वा प्रतियोगिव्यधिकरणलक्ष्यनिष्ठाभावप्रतियोगित्वस्यैव व्याप्तिशरीरे प्रविष्टत्वात् गन्धाद्यभावस्य चातथात्वात् नाव्याप्तिरित्याशयेन शङ्कते – **प्रकाशिकायाम्** [५३] **नन्वित्यादि** । **गुणाश्रयत्वलक्षणमि**ति । गुणात्मकलक्षणमित्यर्थः। आश्रयत्वकथनं लक्षणताघटकसम्बन्धप्रदर्शनाय। एतेन - गुणाधिकरणत्वस्याप्युत्पत्तिकालावच्छेदेनाभावसत्त्वात् कथमव्याप्तिवारणम् । अव्याप्यवृत्तिनिरूपिताधिकरणताया अव्याप्यवृत्तित्वात् । गुणप्रतियोगिकत्वोपलक्षितसमवायेन गुणवत्त्वस्य समवायैक्यपक्षे गुणादावतिव्याप्तिः । तत्प्रतियोगिकत्वविशिष्टसमवायस्योत्पत्तिकालावच्छेदेनाभावसत्त्वात् अव्याप्तिः इति दूषणमनवकाशम् । सत्ताविशेषणत्वभ्रमवारणाय [५३] **जातिविशेषणमि**ति । अत्र च गुणसमानाधिकरणत्वं गुणनिष्ठसमवायसम्बन्धावच्छिन्नाधेयतानिरूपकनिरूपितसमवायसम्बन्धावच्छिन्नाधेयत्वं, तेन कालिकेन गुणवद्गुणसमवेतस्य, कालिकेन गुणसमवायिवृत्तेर्गुणत्वस्य व्युदासः । [५३] **भाव** इति । अथ 'एकं रूपं रसात् पृथक्' इति व्यवहारस्य सामानाधिकरण्यसम्बन्धेन गुणे गुणविषयकत्वस्योपगमे रूपादावपि स्वस्मात् पृथग्व्यवहारप्रसङ्गः । स्वावधिकपृथक्त्वसामानाधिकरण्यस्य स्वस्मिन्नप्यबाधात् इति चेत् - न । सामानाधिकरण्यस्य स्वस्मिन् स्वावधिकपृथक्त्वसम्बन्धत्वानुपगमात् । कल्पनाकल्पनयोश्च फलानुरोधित्वात् । वस्तुतस्तु 'रूपं रसात् पृथक्' इत्यादौ पृथक्त्वस्य स्वनिरूपकतावच्छेदकावच्छिन्नभिन्नत्वसा-

मानाधिकरण्योभयसम्बन्धेन भानाभ्युपगमात् न दोष इति । [५३] **कालिकादीत्यादि**पदेन समवायस्वरूपोभयघटितसामानाधिकरण्यपरिग्रहः ।

[५६] **हेतुधर्मितावच्छेदकके**ति । हेत्ववच्छिन्नविशेष्यताकेत्यर्थः । असमानाकारकसिद्धेश्चाविरोधित्वादिति भावः । [५६] **सङ्क्षेप** इति । अयमत्राशयः - व्यतिरेकव्याप्तेरनुमानाङ्गत्वेन न काप्यनुपपत्तिः । उपनयवाक्यात् शाब्दबोधानुपपत्तिरपि परार्थानुमानस्थल एव दोषः न स्वार्थानुमानस्थलेऽपीति लक्षणप्रयोजनसिद्धिर्निराबाधैवेति ।

ननु भूतत्वस्य जातित्वाभावात् कथं तत्सङ्करस्य बाधकत्वम् उपाधिसङ्करस्यादोषत्वादित्यत आह - [५७] **जातित्वेनाभिमते**ति । जातित्वेनापादितेत्यर्थः । तथा च तुल्ययुक्त्या भूतपदशक्यतावच्छेदकतया भूतत्वजातिसिद्ध्या न सांकर्यं दोष इति भावः । [५७]**व्यक्तेरभेद इत्यादि श्लोके** इति पदाध्याहारेण ज्ञानजनकस्वल्पशब्दरूपसङ्ग्रहाभेदबोधो वर्णनीयः । प्रथमत्रिकस्य जातित्वे द्वितीयत्रिकस्य जातिमत्त्वे बाधकत्वमिति विशेषसूचनाय मध्येऽथशब्दः । व्यक्तेरित्यादिश्लोकोक्तजातिबाधकत्वं च जातिजातिमत्त्वान्यतरप्रकारकज्ञानप्रतिबन्धकज्ञानविषयत्वम् ।

**व्यक्तेरभेदः** [1]स्वसमवेतत्वस्वभिन्नसमवेतत्वोभयसम्बन्धेन प्रमेयविशिष्टान्यत्वं स्वप्रतियोगिसमवेतत्वस्वानुयोगिसमवेतत्वोभयसम्बन्धेन भेदवदन्यत्वं वा । तज्ज्ञानस्य तद्वदन्यत्वज्ञानविधया उक्तोभयसम्बन्धेन प्रमेयविशिष्टत्वादिरूपानेकसमवेतत्वघटितजातित्वज्ञानप्रतिबन्धकत्वम् ।

---

1. स्वसमवेतत्वेति । स्वं नीलघटः तत्समवेतत्वं घटत्वे, एवं स्वं नीलघटः तद्भिन्नपीतघटसमवेतत्वं च घटत्वे इति उक्तोभयसम्बन्धेन नीलघटरूपप्रमेयविशिष्टं घटत्वं तद्भिन्नत्वमाकाशत्वे । एवं स्वं नीलघटभेदः तत्प्रतियोगिनीलघटसमवेतत्वं घटत्वे, स्वं नीलघटभेदः तदनुयोगिपीतघटसमवेतत्वं च घटत्वे इति तादृशोभयसंबन्धेन भेदवत् - नीलघटभेदवत् घटत्वे तदन्यत्वमाकाशे इति बोध्यम् ।

**तुल्यत्वं** स्वभिन्नजातिसमनियतत्वम् , स्वभिन्नत्वस्वसमनियतत्वोभयसम्बन्धेन जातिविशिष्टत्वपर्यवसितम् । तच्च जातित्वाभावव्याप्यमिति तद्ग्रहस्य तदभावव्याप्यवत्ताग्रहविधया कलशत्वादेः घटत्वादिजातिभिन्नजातित्वोपगमे विरोधित्वम् । तस्य च जातित्वाभावव्याप्यत्वं घटत्वकलशत्वयोर्भिन्नजातित्वे घटादिपदस्य धर्मद्वयावच्छिन्ने शक्तिद्वयकल्पनं कार्यकारणभावद्वयकल्पनं च नान्यथेति लाघवमिति धीसहकृतेन जातिविशिष्टत्वपक्षकजातित्वाभावव्याप्यतदभावान्यतरसाध्यकप्रमेयत्वादिहेतुकानुमानेन सिद्धम् ।

**सङ्करश्च** स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणाभावप्रतियोगित्वत्रयसम्बन्धेन जातिविशिष्टत्वम् । तदपि च जातित्वाभावव्याप्यमेव । तस्य तथात्वं च धर्मशास्त्रसिद्धम् । विरुद्धजातीनां परस्परं व्याप्यजात्या व्यापकजातेः, व्यापकजात्या व्याप्यजातेश्च जातिसाङ्कर्यवारणाय संबन्धत्रयनिवेशः ।

**अनवस्थितिः** अनवस्था च जात्यनाश्रयवृत्तिपदार्थविभाजकोपाधिपरम्परारोपाधीनजातिविशिष्टबुद्धिनिरूपिततत्तज्जातिज्ञानकारणतानन्त्यरूपानिष्टप्रसञ्जनरूपेह विवक्षिता । तस्याश्च तदापादककापत्तिविधया जातिर्जातिमतीत्याकारकज्ञानविरोधित्वम् ।

**रूपहानिः** स्वतोव्यावृत्तत्वरूपलक्षणस्वरूपस्य हानिः । स्वतोव्यावृत्तत्वं च विशेषाणां स्वतःसिद्धपरस्परभेदवत्त्वम् तस्य विशेषाणां जातिमत्त्वेऽनुपपत्तिः । सजातीयानां पदार्थानाँ परस्परं भेदः प्रत्यक्षेण व्यावर्तकान्तरेण वा सिद्ध्यतीति न्यायात् विशेषो यदि जातिमान् स्यात् स्वतोव्यावृत्तत्ववान् न स्यात् इत्यापत्तिविषयतया विशेषस्य जातिमत्त्वे बाधकत्वम् । 'अयं परमाणुः तत्परमाणुभिन्नः एतद्विशेषात्'इत्यनुमानेन विशेषस्य जातिमत्त्वे जात्याश्रयस्य जातिपुरस्कारेणैव व्यावर्तकत्वं इति नियमेन जातिपुरस्कारेणैव व्यावर्तकताया व्यभिचारापत्तेः ।

**असंबन्धः** असमवेतत्वम् । तच्च बहुव्रीहिबलात् समवेतत्वसामान्याभावपर्यवसितम् । तज्ज्ञानस्य नित्यानेकसमवेतत्वरूपजात्यभावव्याप्यवत्ताज्ञानविधया नित्यानेकसमवेतरूपजातिमत्ताज्ञानविरोधित्वम् । एतत्सर्वमभिप्रेत्यैव[५७]**सङ्क्षेप** इत्युक्तम् । **दीपिकायाम्** [५६]**लघुत्वस्य गुरुत्वाभावरूपत्वादि**ति । न च गुरुत्वस्य लघुत्वाभावरूपत्वमादाय विनिगमनाविरह इति वाच्यम् । स्वतन्त्रेच्छस्येति न्यायेनादोषात् इति भावः ।

**कर्मविभागः**

[६२] **असमवायी**ति । न चात्र संयोगभिन्नत्वे सति असमवायिकारणमास्तामिति वाच्यम् । आद्यपतनासमवायिकारणादौ अतिव्याप्तिवारणाय संयोगांशस्यापि सार्थक्यात् ।

**सामान्यविभागः**

[६३] **सत्तायाः द्रव्यत्वापेक्षयेत्यादि** । अपेक्षाशब्दस्य प्रतियोगितानिरूपकत्वमर्थः । तृतीयायाश्च वैशिष्टचम् । अधिकदेशवृत्तित्वं च स्वप्रतियोग्यधिकरणवृत्तित्वस्वाधिकरणवृत्तित्वोभयसम्बन्धेनाभावविशिष्टत्वम् । एकदेशेऽभावे तृतीयान्तार्थद्रव्यत्वनिष्ठप्रतियोगितानिरूपितत्वविशिष्टत्वान्वयः । अधिकदेशवृत्तित्वेनेत्यत्र तृतीयाया अभेदोऽर्थः । द्रव्यत्वनिष्ठप्रतियोगिताकाभाववैशिष्टचाभिन्नं द्रव्यत्वापेक्षया परत्वमिति वाक्यार्थः । [६३] **द्रव्यत्वादीनां सत्तातोऽपरत्वमि**ति । तच्च [1]स्वाश्रयाधिकरणवृत्त्यभावप्रतियोगित्वरूपम् ।

**विशेषविभागः**

[६३]**विशेषास्त्वनन्ता एवे**ति वाक्ये अनन्तत्वं च न विद्यते अन्तः सङ्ख्यात्वव्याप्यधर्मावच्छिन्नप्रकारताकास्मदादिसमवेतनिश्चयः विशेष्यतासम्बन्धेन येषु नास्तीति विग्रहात् सङ्ख्यात्वव्याप्यधर्मावच्छिन्नप्रकारताकतादृशनिश्चयविशेष्यत्वाभाववत्त्वम् । **प्रकाशिकायाम्** [६३]

---

1. स्वाश्रयेति । स्वं सत्ता तदाश्रयः गुणः तन्निष्ठाभावः द्रव्यत्वाभावः तत्प्रतियोगित्वं द्रव्यत्वे इति द्रव्यत्वस्य सत्तातोऽपरत्वमिति भावः ।

**विवेक इति** । तथा च सामान्यं त्रिविधम् — केवलपरम्,केवलापरम्, परापरम् चेति । **सङ्ग्रहे** च केवलपरापरप्रदर्शनादेव परापरजातेः, स्फुटतया लाभात् तदकथनमिति भावः । ननु सत्तायाः केवलपरत्व-कथनमनुपपन्नम् । प्रेमयत्वादिजातिसत्त्वात् सत्तायाः [1]परापरत्वादित्यत आह— **दीपिकायाम्** [६३] **सामान्यादिचतुष्टय इति** ।

**समवायलक्षणम्**

[६४]**समवायस्त्वेक एवेत्यत्र सङ्ग्रह**पङ्क्तौ समवायस्यैकत्वं समवाय-निष्ठभेदप्रतियोगितानवच्छेदकधर्मवत्त्वं न तु सङ्ख्यारूपम्, समवाया-वृत्तित्वात् अव्यावर्तकत्वात् च । एवकारश्च ईदृशपारिभाषिकत्वे तात्पर्यग्रहः । यद्वा एकत्वमुभयावृत्तिधर्मः । उभयावृत्तित्वं च स्वप्रतियोगि-वृत्तित्वस्वभिन्नवृत्तित्वोभयसम्बन्धेन किंचिद्विशिष्टान्यत्वम् । एवका-रस्य चाधेयताश्रयभेदप्रतियोगितावच्छेदकत्वम् अभावश्च खण्डशोऽर्थः । आधेयतायाँ व्युत्पत्तिवैचित्र्येण प्रथमान्तपदोपस्थाप्यस्यापि समवायस्य निरूपितत्वसम्बन्धेनान्वयः । समवायनिरूपिताधेयताश्रयभेदप्रतियो-गितावच्छेदकत्वस्य च विधेयतावच्छेदकत्वाभिमतसम्बन्धावच्छिन्नाव-च्छेदकताकप्रतियोगिताकस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकत्वसम्ब-न्धेनाभावेऽन्वयः । तादृशाभावस्यचैकपदार्थेऽन्वयः । तथा च समवायः समवायनिरूपिताधेयताश्रयभेदप्रतियोगितावच्छेदकत्वविशेषिताभावव-दभिन्न इति बोधः इति अभिप्रायेणावतारयति - **दीपिकायाम्** [६४] **समवायस्य भेदो नास्तीत्याहेति** । अत्र च भेदः आधेयताश्रयभेदप्रतियो-गितावच्छेदकधर्मः । समवायस्येत्यत्र षष्ट्या निरूपितत्वमर्थः । तस्य च भेदपदार्थघटकाधेयतायामन्वयः । असधात्वर्थाधेयतायामपि व्युत्प-त्तिवैचित्र्यादन्वयः । असधात्वर्थाधेयतायाश्च नञर्थाभावे तस्य च प्रथमान्तपदार्थे भेदेऽन्वयः । तथा च समवायनिरूपिताधेयताश्रयभेद-

---

1. **परापरत्वादिति । सत्तायाः प्रमेयत्वापेक्षया अपरत्वम्, द्रव्यत्वाद्यपेक्षया परत्व-मिति रीत्या परापरत्वमिति भावः ।**

प्रतियोगितावच्छेदकधर्मः समवायनिरूपिताधेयत्वाभाववानिति बोधः। अनुयोगितावच्छेदकावच्छेदेनाभावबोधकताया नञः व्युत्पन्नतया समवायद्वित्वपक्षेऽप्युक्तवाक्यार्थसङ्गतिः। यद्वा भेदः अन्योन्याभावः। समवायस्येत्यत्र षष्ठ्याः एकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकत्वमर्थः। समवायस्येति पुनरावृत्त्या तदर्थस्य समवायवृत्तित्वस्यासधात्वर्थाधेयतायामन्वयः। तथा च समवायनिष्ठा या एकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिता तन्निरूपितान्योन्याभावः समवायनिरूपितवृत्तित्ववानिति बोधः। इतिशब्दस्य इत्याकारकमर्थः। तस्य चाभेदसम्बन्धेन ज्ञानोत्पत्तिप्रयोजकशब्दरूपब्रूञर्थैकदेशे ज्ञानेऽन्वयः। तस्य चाख्यातार्थकृतावन्वयः। अनुकूलतासम्बन्धेन तादृशज्ञानं च प्रकृते मानसरूपं बोध्यम्। तेन प्रकृते तस्य शब्दरूपत्वासंभवेऽपि न क्षतिः।

**प्रकाशिकायाम्** [६४] **रूपसमवायेति**। अयमत्राशयः-तत्सम्बन्धेन तत्प्रकारकभ्रमत्वं च तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभाववद्विशेष्यकत्वावच्छिन्नतत्सम्बन्धावच्छिन्नप्रकारकत्वम्। तच्च 'वायुः समवायेन रूपवान्' इति ज्ञानेऽक्षतमेव। तेन सम्बन्धेन तत्प्रकारकप्रमात्वं च न तत्प्रमोपलक्षिततत्सम्बन्धानुयोगिविशेष्यताकत्वघटितम्, किं तु तत्प्रतियोगिकत्वावच्छिन्ननिरूपकताकतत्सम्बन्धानुयोगिताश्रयविशेष्यताकत्वघटितम्। वायौ रूपशून्ये रूपप्रतियोगिकत्वावच्छिन्ननिरूपिता समवायानुयोगिता न स्वीकृता इति न तादृशज्ञानस्य प्रमात्वप्रसङ्गः। एवं तत्प्रतियोगित्वविशिष्टतन्निरूपितस्य तत्सम्बन्धानुयोगित्वस्य तेन सम्बन्धेन तत्सत्त्वव्याप्यत्वस्वीकारात् न वायौ रूपप्रतियोगित्वोपलक्षितसमवायवति समवायेन रूपवत्ताप्रसङ्गः इत्यभिप्रेत्य[६४]**दिगित्युक्तम्**।

### पृथिवीनिरूपणम्

**दीपिकायाम्** [६५] **उद्देशक्रमानुसारादि**त्यादि। पञ्चम्याः प्रयोज्यत्वमर्थः। तादृशानुसारप्रयोज्यजलादिलक्षणकथनप्राक्कालीनाभिन्नपृथिव्यादिसमुदायघटकीभूतपृथिवीविशेष्यकलक्षणप्रकारकज्ञानोद्देशप्र-

योज्यशब्दानुकूलकृतिमानिति बोधः। **प्रकाशिकायाम्** [६५] **प्राथम्ये** - प्रथमवक्तव्यत्वे। [६६] **लक्षणीयवस्तुपरमिति**। प्रकृतलक्षणाश्रययावद्वस्तुपरमित्यर्थः। तेन न घटादिपदे प्रकृतलक्षणाश्रयघटादिप्रतिपादकेऽतिप्रसङ्गतादवस्थ्यम्। तथा च प्रकृतलक्षणाश्रययावद्वस्तुनिष्ठविषयताशालित्वं बोधविशेषणं देयमिति भावः।

[६६] **मात्रपदमितीति**। अत्र केचित्— लक्ष्यतावच्छेदकेतराप्रकारकत्वं मात्रपदलभ्यम्। लक्षणवाक्यस्य तदितरलक्षणप्रतिपादकत्वान्न तत्रातिव्याप्तिरिति भावः- इत्याहुः। तत्तुच्छम्। मात्रपदस्य समभिव्याहृतपदार्थेतरसंबन्धव्यवच्छेदबोधकतया 'अत्र भूतले घटोऽस्ति' इत्यादौ व्युत्पन्नतया शब्दे लक्षणाप्रतिपादकत्वस्यैव तल्लभ्यत्वात्। लक्ष्यतावच्छेदकेतरसंबन्धव्यवच्छेदबोधकतायां व्युत्पत्तिविरोधस्य स्पष्टत्वात्। पदार्थद्वयसंसर्गबोधस्यैव शाब्दबोधरूपतया अन्ततः प्रकृत्यर्थसंङ्ख्याप्रकारकस्यापि पृथिव्यादिविशेष्यकशाब्दबोधस्य संभवात् लक्ष्यतावच्छेदकेतराप्रकारकशाब्दबोधाप्रसिद्धेश्च। एवं च लक्ष्यतावच्छेदकप्रकारकशाब्दजनकतावच्छेदकयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकसमुदायत्वम् उद्देशलक्षणम्। अतो न पृथिव्यादिभागेऽतिव्याप्तिः। तादृशसमुदायत्वं च तादृशसमुदायत्वनिष्ठन्यूनवृत्तितानिरूपकत्वेन विशेषणीयम्। तेन न लक्षणादिवाक्येऽतिव्याप्तिः। तादृशसमुदायत्वं च व्याप्तिसम्बन्धेन उद्देशपदप्रवृत्तिनिमित्तम्। तेनाश्रयतया तस्यैकदेशसाधारणत्वेऽपि न क्षतिः। समुदायत्वस्य व्यासज्यवृत्तित्वेन निवेशः। अतः धीविशेषविषयत्वरूपस्य तस्याननुगमेऽपि न क्षतिः। यदि च विषयत्वमव्यासज्यवृत्तीति नायं प्रकारः साधीयानित्युच्यते, तदा तादृशवर्णत्वव्यापकधर्मवत्त्वमेवोद्देशलक्षणं वक्तव्यम्। तादृशधर्मत्वेन च विशेष्यतावच्छेदकधर्मबोधकत्वव्युत्पत्तेः स्वीकारान्नातिप्रसङ्गावकाशः। यद्यपि पर्यायपदान्तराधीनशाब्दबोधे व्यभिचारवारणाय तत्तत्पदज्ञानाव्यवहितोत्तरत्वस्य कार्यतावच्छेदककोटौ अवश्यं निवेश्यतया तत्र विषयनिवेशे प्रयोजना-

भावेन लक्ष्यतावच्छेदकीभूतपृथिवीत्वादिप्रकारकत्वावच्छिन्नत्वस्य जन्यतायामसंभवः। तथापि तत्तत्पदज्ञानाव्यवहितोत्तरशाब्दत्वावच्छिन्नजन्यतैव लक्षणे निवेश्या, अतो न दोषः। पृथिवीपदज्ञानाव्यवहितोत्तरशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकतावच्छेदकयत्किंचिज्ज्ञानीयविषयताश्रयवर्णत्वव्यापकः तादृशव्यापकसमुदायनिष्ठन्यूनवृत्तितानिरूपितश्च योऽयं धर्मः स एव पृथिव्युद्देशलक्षणमितिरीत्या तत्तदुद्देशलक्षणं बोध्यम्। न च किंचित्त्वनिवेशादननुगम इति वाच्यम्। तादृशजनकतानिरूपिताधिकरणताविशिष्टधर्मवत्त्वस्य विवक्षितत्वात्। वैशिष्टयं च स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन स्वाधिकरणतास्वविशिष्टविशिष्टविषयताश्रयवर्णत्वसम्बन्धेन। विषयतायां स्वविशिष्टवैशिष्टयं च स्वनिरूपकजनकतावच्छेदकत्वस्वाश्रयज्ञानीयत्वोभयसम्बन्धेन। तादृशधर्मनिष्ठन्यूनवृत्तितानिरूपकभिन्नत्वं च स्वावच्छिन्नप्रतियोगिताकभेदवद्वृत्तित्वस्वसामानाधिकरण्योभयसंबन्धेन तादृशधर्मविशिष्टान्यत्वम्। अधिकरणतावैशिष्टयघटकतया स्वविशिष्टधर्मविशिष्टत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धः पर्यवसितः। अत एव 'पृथिवी गन्धवती' इति वाक्ये नातिप्रसङ्ग इति **मदेकपरिशीलितः पन्थाः**।

[६५] **ननु सुरभ्यसुरभ्यवयवारब्ध** इति **दीपिकावाक्ये** तादृशावयवाभ्यामारब्धमिति विग्रहात् तादृशावयवसमवेताद्यकृतिमत्त्वं लभ्यते। आङ्पूर्वकस्य रभतेः आद्यकृतिबोधकत्वात्। क्तप्रत्ययस्य विधेयत्वमर्थः। तच्चासङ्गतम्। कृतेः आत्ममात्रधर्मत्वादित्यत आह– [६६] **आरब्धे जन्य इति**। [६६] **परस्परविरोधेनेतीति**। विरोधः प्रतिबन्धकत्वम्, तत्र परस्परत्वं च स्वाश्रयनिरूपितप्रतिबन्धकताश्रयनिरूपितत्वं प्रतिबन्धकताविशिष्टत्वपर्यवसितम् स्वनिरूपकवृत्तित्वस्वाश्रयवृत्तित्वोभयसम्बन्धेन। [६६] **सुरभिगन्धं प्रति असुरभिगन्धस्येत्यादि**।

अत्र समवायेन सुरभिगन्धं प्रति समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्यासुरभिगन्धाभावस्य समवायसंबन्धावच्छिन्नप्रतियोगिताकस्य सुरभिगन्धाभावस्यैव वा कार्यकालवृत्तितया कारणत्वेन प्रतीतिबलेन सुरभ्यसुरभ्युभयोरसंबन्धयोरेव समवायेनोत्पत्तौ कार्यकालावच्छेदेन प्रतिबन्धकाभावरूपकारणाभावात् नोभयगन्धोत्पत्तिरिति भावः ।

यत्तु - समवायेन सुरभिगन्धं प्रति स्वसमवायिसमवेतसमवायेन असुरभिगन्धादेः प्रतिबन्धकत्वर्णनं - तत्तु प्रतिबन्धकतावच्छेदकसंबन्धगौरवादनादेयम् । [६६] **स्वाश्रयसमवेतत्वसंबन्धेनेत्यादि**रिति । अत्रावच्छिन्नसंसर्गताकत्वं तृतीयार्थः । तच्च प्रतीतिसंभवेनेत्यत्र प्रतीतावन्वेति । तृतीयायाः प्रयोज्यत्वमर्थः । तस्य समवायेन गन्धप्रतीतौ भ्रमदोषविधया प्रयोजकत्वं बोध्यम् । **दीपिकायाम्** [६५] **चित्रगन्धानङ्गीकारा**दिति । तथा च चित्रगन्धस्यासत्त्वादव्याप्तिरस्त्येवेति भावः ।

[६६] **प्रकाशिकायाम् तुष्यतु दुर्जन इति न्यायेने**ति । अत्रायमाशयः– सुरभ्यसुरभिगन्धवत्परमाणुभ्यां द्वयणुकमारब्धम् । ततस्त्र्यणुकादिक्रमेण महावयविपर्यन्तमुत्पन्नम्। तत्र घटे गन्धप्रतीतिर्नोपेयत एव तदवयवकपालादौ गन्धाभावेन तत्र गन्धासंभवात् परमाणुगन्धस्य चाप्रत्यक्षत्वात् । वस्तुतस्तु परमाणुगन्धस्य लौकिकप्रत्यक्षविषयत्वाभावेऽपि स्वसमवायिघटितपरंपरासंबन्धेन तत्र परमाणुगन्धविषयकालौकिकप्रत्यक्षं संभवत्येव । यदि चायं गन्धवानिति लौकिकप्रतीतिर्जायते इत्याग्रहस्तदास्तु चित्रगन्ध इति। [६५] **गन्धसमानाधिकरणे**ति । अत्रापि पूर्ववदेवार्थो बोध्यः । अन्यथा पूर्वरीत्या दोषात् ।

ननु द्रव्यत्वापरत्वं द्रव्यभिन्नभिन्नत्वम्, तथा च कथमसंभववारणमित्यत आह - [६६] **द्रव्यत्वन्यूनवृत्तीत्यर्थक**मिति । द्रव्यत्वाभाववदवृत्तित्वमेव सत्तावारणाय कुतो न निवेश्यत इत्यत आह - [६६] **तेने**ति । [६६] **द्रव्यत्वव्युदास** इति । द्रव्यत्वस्य स्वाभाववदवृत्ति-

त्वेऽपि स्वसमानाधिकरणाभावप्रतियोगित्वविरहात् । कालिकसंबन्धेन तादृशधर्मवत्त्वमादायातिव्याप्तिवारणाय [६५] **जातीति** । नित्यत्वमात्रमत्र विवक्षितम् । अनेकसमवेतत्वस्य प्रकृतेऽव्यावर्तकत्वात् । पृथिवीजलान्यतरत्वस्य समवायसंबन्धघटितसामानाधिकरण्यविरहात् । कालिकसंबन्धेन तादृशधर्मवत्त्वमादायातिव्याप्तिवारणाय समवायेन तादृशधर्मवत्त्वस्य विवक्षणीयतया उक्तान्यतरत्वमादाय दोषाप्रसक्तेश्च । पृथिवीजलद्वित्वादीनामपि अपेक्षाबुद्धिविशेषविषयत्वरूपतया नित्यत्वविरहेणैव वारणं बोध्यम् । [६६] **स्वाश्रयसंयुक्तत्वसंबन्धेनेत्यादिरिति** । अत्रापि पूर्ववदेवार्थो वर्णनीयः । [६६] **अनुगतरूपेण** - स्वनिष्ठाधेयतावच्छेदकातिरिक्तत्वेनेत्यर्थः । सर्वनिष्ठाधेयतानवच्छेदकसंबन्धेन घटादेः कपालादिलक्षणत्वे भूतलादौ घटादिसंयोगिनि अतिव्याप्तेः । एवं समवायादीनां तादृशरूपेण संबन्धत्वमप्यप्रामाणिकम् । [६६] **वस्तुतस्त्विति । बोध्यमिति** । पृथिव्याः समवायेन गन्धो लक्षणं, समवायेन कपालस्य घटो लक्षणमिति भावः ।

### पृथिवीविभागः

**संग्रहे** [६९] **सा द्विविधा नित्या अनित्या चेति** । द्वे विधे यस्याः सा द्विविधा, विधा नाम विभाजकधर्मः, उद्देश्यतावच्छेदकपृथिवीत्वादिसाक्षाद्व्याप्यधर्म इति यावत् । बहुव्रीहावुत्तरपदस्यान्यपदार्थे निरूढलक्षणायाः सर्वसंमततया द्वित्वसंख्याश्रयविभाजकधर्मवति प्रकृते विधापदस्य निरूढलक्षणा । द्विपदं तात्पर्यग्राहकम् । नित्यानित्ययोः नित्यानित्यान्यतरत्वसंबन्धेनान्वयः पृथिव्याम् । सर्वत्र विभागवाक्यस्थले तथा व्युत्पत्तेः स्वीकारात् । इति शब्दः हेतुगर्भविशेषणद्योतकः। तथा च यतः तथा ततः पृथिवी द्वित्वाश्रयतादृशधर्मवतीति बोधः । अत एव नित्यानित्यपदयोः स्त्रीलिङ्गत्वमुपपन्नम्, तयोः पृथिवीपदसमानाधिकरणत्वात् । यत्तु-नित्यानित्यपदे नित्यत्वानित्यत्वपरे । तयोरभेदसंबन्धेन विभाजकधर्मेऽन्वय - इति, तत्तुच्छम् । उभयाभेदस्य विभाजकधर्मेऽसंभवात् । अन्यतरत्वबोधकपदाभावेन नित्यत्वानित्य-

त्वान्यतरभेदबोधासंभवात् तयोर्लक्षणायां मानाभावात् । यादृशार्थस्य लक्षणया यत्किंचित्पदार्थबोधः तादृशार्थबोधस्य शक्तादपि पदादानुभाविकत्वेन पृथिवी द्विविधा नित्यत्वमनित्यत्वमिति प्रयोगापत्तेः । विधापदार्थतावच्छेदकविभाजकधर्मनिष्ठविशेष्यतानिरूपिताभेदसंबन्धावच्छिन्नप्रकारतासबन्धेन शाब्दबोधं प्रति विधापदसमभिव्याहृतइतिपदसमभिव्याहृतयत्किंचित्पदनिरूपितशक्तिज्ञानादेः प्रतिबन्धकत्वादिकल्पने महागौरवापत्तेः ।

अथ परमाणुर्द्विविधः-नित्योऽनित्यश्च । द्रव्यं द्विविधम्-पृथिवी जलं चेति प्रयोगापत्तिरिति चेत्-न । द्विविधेत्यादिबहुव्रीहौ विधापदार्थतया यावन्तो धर्माः प्रतीयन्ते तावद्धर्ममात्रविषयकधीविशेषविषयत्वरूपद्वित्वादिविशेषितधर्मवति निरूढलक्षणा । विशेषितत्वं च स्वव्यापकपृथिवीत्वादिसाक्षाद्व्याप्यव्याप्यत्वाश्रयत्वस्वाश्रयत्वोभयसम्बन्धेनेत्यदोषः । उद्देश्यतावच्छेदकीभूतपृथिवीत्वाद्यवच्छेदेन तादृशधर्मवदन्वयस्वीकारात् न द्रव्यं द्विविधम् पृथिवी जलं चेत्यादिप्रयोगः । यद्यपि नित्यत्वानित्यत्वयोर्जलादिसाधारणतया न पृथिवीत्वादिव्याप्यत्वं तथापि पृथिवीत्वाद्यन्यतमत्वविशिष्टस्वरूपादिसम्बन्धेन तयोस्तथात्वमक्षतम् । साक्षात्पदं च 'पृथिवी त्रिविधा नित्यानित्यपटश्चेति' इत्यादि प्रयोगवारणाय । 'आपो द्विविधाः- नित्यानित्याश्चेति' इत्यादावप्युक्तैव रीतिः ।

यदि च'पुनस्त्रिविधा - शरीरेन्द्रियविषयभेदात्'इत्यादेः पृथिवीसामान्यविभागपरतामते 'तादृशभेदप्रयुक्तत्रित्वसङ्ख्याविशिष्टपृथिवीत्वसाक्षाद्व्याप्यधर्मवती पृथिवी' इत्यादिरीत्यैव बोधस्य वक्तव्यतया शरीरत्वादीनां तादृशव्याप्यताविरहेणासङ्गतिरिति विभाव्यते, तदा उद्देश्यतावच्छेदकपृथिवीत्वादिसाक्षाद्व्याप्यत्वं नोपादेयम् । विभाजकधर्माणां परस्परं वैयधिकरण्यभानव्युत्पत्तेः द्विविधेत्यादौ स्वीकारात् 'पृथिवी त्रिविधा,नित्यानित्यघटश्च'इति प्रयोगानवकाशः । एवं च बहु-

व्रीहौ तादृशद्वित्वविशिष्टाश्रयधर्मवति निरूढलक्षणा। **वैशिष्टयं**[1]**स्वसे-**त्यादिभेदवत्त्वतादात्म्योभयसम्बन्धेन। भेदप्रतियोगितावच्छेदकता उद्देश्यतावच्छेदकपृथिवीत्वादिसमानाधिकरणनिष्ठत्वविशेषितस्वनिष्ठा - वच्छेदकताकप्रतियोगिताकभेदवत्त्व अवच्छेदकतानिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्त्वोभयसम्बन्धावच्छिन्ना तत्रैकावच्छेदकता नित्य-त्वातिरिक्ता स्वाश्रयाधिकरणकालवृत्तित्वसम्बन्धावच्छिन्नस्वनिष्ठा-वच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन।

ननु पुनस्त्रिविधेति पृथिवीसामान्यविभागो वा कार्यपृथिवी-विभागो वा। नाद्यः, नित्यपृथिव्याः शरीरादावन्तर्भावासम्भवात्। नापि द्वितीयः, पुनश्शब्दस्वारस्यविरोधात्। तेन हि यद्धर्मावच्छिन्नस्य प्राग्विभागः कृतः तद्धर्मावच्छिन्नस्यैव रूपान्तरेण - विभजनं सूच्यत इत्यत आह **प्रकाशिकायाम्** [७०] **अत्रे**ति। तथा च 'पुनस्त्रिविधा' इत्यादौ पृथिवीसामान्यस्यैव विभागः। 'विषयो मृत्पाषाणादिः' इत्यत्र आदिपदेन परमाणुपरिग्रहसम्भवात्। **भौमदिव्यौदर्याकरजभे-दादि**ति तैजसविषयविभागस्थलेऽपि भूमेरिदं भौममिति विग्रहात् भूमिसम्बन्ध्यादिपरत्वात् तेनैव तैजसपरमाणुसङ्ग्रहादिति भावः। [७०] **वर्णयन्ती**ति। अत्र पुनश्शब्दास्वारस्यमवसरबीजम्। इदमत्र बोध्यम् - अत्र 'पुनः त्रिविधा शरीरेन्द्रियविषयभेदात्' इत्यत्र शरीरप्रतियोगिकत्वेन्द्रिय - प्रतियोगिकत्वान्यतरवन्निष्ठाधेयत्वशरीर-प्रतियोगिकत्वविषयप्रतियोगिकत्वान्यतरवन्निष्ठाधेयत्वान्यतमसम्बन्धेन शरीरादेरेकत्र द्वयमिति रीत्या भेदपदार्थे अन्योन्याभावे अन्वयः। पञ्चम्याः प्रयोज्यत्वमर्थः। शरीरादिविशेषितभेदवृत्तित्रित्वविशिष्ट-विभाजकधर्मवतीति बोधः। भेदस्य प्रयोजकत्वं च स्वज्ञानाधीनापेक्षा-बुद्धिद्वारा। उक्तरीत्या अन्यत्रापि बोधः ऊह्यः। वैशिष्टयं च पूर्व-

---

1. **स्वसेत्यादिभेदवत्त्वेति। स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धाव-च्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वेत्यर्थः।**

वदिति । [६९] **विषयो मृत्पाषाणादिरिति** । मृत्पाषाणावादी यस्येति व्युत्पत्त्या मृत्पाषाणादिनिष्ठादितानिरूपकः पार्थिवविषय इति बोधः । तद्धर्मावच्छिन्नस्य तदादित्वं नाम उद्देश्यतावच्छेदकनिष्ठतन्निरूपिता-धेयताविशिष्टत्वम् । वैशिष्टयं स्वाश्रयधर्मताविशिष्टतद्धर्मवत्त्वसम्ब-न्धेन । वैशिष्टयं च स्वव्याप्यधर्मावच्छिन्नबोधकपदपूर्वपदप्रतिपाद्य-तावच्छेदकत्वस्वव्याप्यत्वोभयसम्बन्धेन ।

केचित्तु - स्वविषयकज्ञानविषयसमुदायघटकत्वं आदित्वम् । स्वं पार्थिवादिविषयः । तथा च मृत्पाषाणादिविषयकज्ञानविषयसमु-दायघटकतानिरूपकः मृत्पाषाणादिघटितसमुदायविषयकज्ञानविषयः पार्थिवविषय इत्यर्थः-इति व्याचक्रुः । अतस्तन्तुसमुदायत्वस्य धीवि-शेषविषयत्वरूपतया विशिष्य तत्तत्पदार्थज्ञाने समुदायत्वस्यैव दुर्नि-रूपत्वात् । तत्तत्पदासर्वज्ञजोवेऽसम्भवात् । सम्बन्धकोटौ स्वव्या-प्यत्वोपादनात्, विषयो मृत्पाषाणजलादिरिति वाक्यस्य न प्रामाण्यम्। व्याप्यत्वं चात्र तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वे सति तत्सामानाधिकरण्यम्, न तु तदभाववदवृत्तित्वम् । तेन 'प्रमेयः पृथि-व्यादिः' इत्यादिवाक्यस्य न प्रामाण्यानुपपत्तिः । सत्यन्तनिवेशाच्च 'पृथिवी द्रव्यादि गन्धवदादिः पृथिव्यादि'रित्यादिवाक्यस्य न प्रामा-ण्यम् । सामानाधिकरण्यनिवेशाच्च मृत्पाषाणादिरिति वाक्यस्य न प्रामाण्यम् इत्यलमतिविस्तरेण । [७०] **अन्त्येति** । द्रव्यसमानाधि-करणभिन्नत्वमन्त्यावयवित्वमिह विवक्षितम् ।

ननु शरीरस्य शरीरत्वजातिरेव कुतो लक्षणतया नोक्ता । एवमिन्द्रियस्यापि इन्द्रियत्वजातिमत्त्वम् । न च शरीरत्वादेर्जातित्वे मानाभावः । [1]पदवाच्यतापक्षकानुमानस्यैव तथात्वात् अत आह -

---

1. पदवाच्यतापक्षकानुमानस्येति । शरीरपदवाच्यता किंचिद्धर्मावच्छिन्ना पदवाच्यता-त्वात् घटपदवाच्यतावत् इत्यनुमानस्येत्यर्थः ।

**शरीरत्वमिति** । शब्देतरेत्यादीन्द्रियलक्षणे विशेषपदवैयर्थ्यं संयोगस्योद्भूतत्वरूपजात्यनाक्रान्तत्वात् । अतः तत्पदं सार्थकयितुमाह-[७०]**उद्भूतत्वं न जातिरिति** ।[७०]**शुक्लत्वादिना साङ्कर्यादि**ति । सङ्कर एव साङ्कर्यम् । चातुर्वर्ण्यादित्वात् स्वार्थे ष्यञ् । तेन पृथिवीत्वादिना सङ्करादिति पूर्वग्रन्थेनाविरोधः । [७०]**कारणत्वानुपपत्तेरि**ति । इदमत्र चिन्त्यम्-शुक्लत्वादिव्याप्यनानोद्भूतत्वाभ्युपगमेऽपि तत्तदुद्भूतान्यतमत्वेन चाक्षुषं प्रति एकहेतुत्वं सुवचम् । अन्यतमत्वघटकभेदानां मिथो विशेषणविशेष्यभावे विनिगमनाविरह इति तु नाशङ्कनीयम् । उद्भूतत्वस्य तत्तदनुद्भूतत्वाभावकूटरूपत्वपक्षेऽपि कूटत्वस्य तत्तद्विषयकधीविशेषविषयत्वरूपरूपतया तत्तद्विषयकत्वानां विशेषणविशेष्यभावे विनिगमनाविरहस्य तुल्यत्वात् । संयोगादिकमादायाकाशादिचाक्षुषवारणाय रूपत्वस्य कारणतावच्छेदककोटौ अन्तर्भावनीयतया रूपत्वतादृशोद्भूतत्वयोः विशेषणविशेष्यतावच्छेदकभावे विनिगमनाविरहेण महागौरवप्रसङ्गाच्चेति ।[७१]**विशेषेती**ति । सामान्यगुणभिन्नेत्यर्थः । तेन द्रव्यत्वादिकमादायासम्भववारणाय गुणपदमिति ध्येयम् । **रूपाभावे**ति । उद्भूतरूपाभावेत्यर्थः । तेन नाभावस्य योग्यतानुपपत्तिः ।[७१]**सन्निकर्षघटकतये**ति । अयमत्र भावः - ज्ञानकारणत्वं ज्ञाननियतपूर्ववृत्तित्वं तच्च कालचक्षुस्संयोगेऽक्षतमेव । अन्यथा चक्षुस्संयोगविशिष्टनिरूपितविशेषणताविरहेण काले रूपाभावप्रत्यक्षानुपपत्तेरिति ।[७१]**मनःपदमि**ति । काले सुखं नास्तीति प्रत्यक्षन्तु न सम्भवत्येव, विजातीयात्ममनस्संयोगस्य ज्ञानमात्रं प्रति हेतुत्वस्वीकारात् । तथा च तत्तद्भेदकूटनिवेशगौरवभयेन सर्वमतसाधारण्यायोक्तविशेषणं निवेशितमिति भावः । [७१]**प्रयोजनकथनपरतये**ति । एतेन घ्राणेन्द्रियेऽनुमानप्रमाणमपि सूचितम् । तथा हि गन्धसाक्षात्कारः मनोभिन्नेन्द्रियकरणकः मानसान्यप्रत्यक्षसामान्यसाक्षात्कारत्वात् । घटादिचाक्षुषज्ञानसामान्यं प्रति समवायिकारणत्वात् सिद्धसाधनवारणाय साध्यशरीरे मनोभिन्नेति मानससाक्षात्कारे व्यभिचारवारणाय हेतुकोटौ मानसान्येति ।

[७१] **एवमुत्तरत्र ज्ञेयमिति**। शीतस्पर्शसमानाधिकरणेति पदं शीतत्वं स्पर्शनिष्ठजातिविशेष इति सूचनाय। शीतस्पर्शवत्यः आपः इत्यादि-सङ्ग्रहवाक्येऽपि एवमेव बोध्यम्। न तु तदपि लक्षणप्रविष्टम्। एवं उत्तरत्रापि।

### तेजोनिरूपणम्

**सङ्ग्रहे** [७६] **अविन्धनं विद्युदादि** आपः इन्धनानि यस्येति बहुव्रीहिं वर्णयति।

केचित्तु-करणे ल्युडन्तस्येन्धनशब्दस्याप्शब्दसमानाधिकरणत्वे विशेष्यनिघ्नत्वे न स्त्रीलिङ्गत्वापत्त्या 'टिड्ढाणञि'त्यादिना ङीप् प्रसङ्गेन अविन्धनमिति रूपानिष्पत्तेः अविन्धनिकमित्येव वक्तव्यत्वात् इन्धनशब्दस्य पूर्वनिपातापत्तेश्च इन्धनशब्दस्या[1]तथात्वादित्यभिप्रायेण व्यधिकरणबहुव्रीहिं प्रदर्शयति अद्भिः इन्धनमित्यादिना। तथा च इन्धनशब्दः भावे ल्युडन्त इति भावः-इत्याहुः।

### सुवर्णतैजसत्ववादः

[७७] **सुवर्णस्येत्यादि**। सुवर्णविशेष्यकतैजसत्वप्रकारकनिश्चयानुकूलपरमतनिराकरणपूर्वक[2]व्यापारविषयकेच्छाविशिष्टपूर्वपक्षानुकूलकृतिमानिति बोधः। वैशिष्ट्यं च स्वप्रयोज्येच्छाविषयत्वस्वविषयसमानकर्तृकत्वोभयसम्बन्धेन। [७८] **सुवर्णं पार्थिवमिति दीपिकावाक्यम्** सर्वं वाक्यमसति बाधके सावधारणमिति न्यायेनावधारणगर्भ-

---

1. अतथात्वात्-अप्शब्दसमानाधिकरणत्वाभावात् विशेष्यनिघ्नत्वाभावाच्चेत्यर्थः।

2. व्यापारविषयकेत्यादि। व्यापारः स्वमतस्थापनरूपः। स्वप्रयोज्येति। स्वं व्यापारविषयकेच्छा तत्प्रयोज्या इच्छा पूर्वपक्षं कुर्यामित्याकारा तद्विषयत्वं पूर्वपक्षानुकूलकृतौ, एवं स्वं व्यापारविषयकेच्छा तद्विषयः व्यापारः तत्समानकर्तृकत्वं च तादृशकृतौ।

   सुवर्णविशेष्यकेत्यादि। प्रथमविशिष्टान्तस्य शङ्कानिवृत्त्यनुकूलव्यापारे द्वितीयविशिष्टान्तस्य कृतौ चान्वयः। प्रथमवैशिष्ट्यं स्वप्रयोज्यत्वस्वसामानाधिकरण्योभयसंबन्धेन। द्वितीयवैशिष्ट्यं स्वप्रयोज्येच्छाविषयत्वस्वविषयसमानकर्तृकत्वोभयसंबन्धेन।

मित्याशयेनावतारयति - [७७]**पार्थिवत्वसाधकमित्यादिना** । तेन गुरुत्वस्य जले व्यभिचारेण पार्थिवत्वसाधकत्वासम्भवात् तैजसत्वाभावसाधकत्वस्यैव वक्तव्यत्वेन तैजसत्वाभावस्य च प्रतिज्ञावाक्येनालाभात् तत्साधकहेतुकथनमनुचितमिति शङ्का निरवकाशा । सुवर्णं पार्थिवमेवेत्येव प्रतिज्ञार्थस्य वाच्यतया तत्र चैवकारेण तैजसत्वाभावलाभात् । [७७]**एतेन** तैजसत्वाभावसाधकहेतुकथनेन ।[७७]**दिगिति** । अयं भावः- समवायेन पीतरूपं प्रति तादात्म्यसम्बन्धेन पृथिवीत्वेन कारणतायाः क्लृप्तत्वात् सुवर्णस्य तैजसत्वे विजातीयपीतरूपं प्रति कारणतान्तरं कल्पनीयम् ।तस्य पार्थिवत्वे तु न तत्कल्पनावश्यम्भाव इति लाघवमिति तर्कानुगृहीतं 'सुवर्णं पार्थिवत्वतदभावान्यतरवत् प्रमेयत्वात्'इत्यनुमानं तस्य पृथिवीत्वसाधकप्रमाणतया सम्भवतीति ।

[७७]**सुवर्णस्य पीतिमगुरुत्वाश्रयत** इत्यादि। सुवर्णविशेष्यकपीतिमगुरुत्वाश्रयव्यतिरिक्तत्वप्रकारकाप्रामाण्यग्रहानास्कन्दितनिश्चयानुकूलयुक्तिकथनविषयकेच्छाविशिष्टानुमानविशेष्यकाप्रयोजकत्वप्रकारकशङ्कानिवृत्त्यनुकूलव्यापारविषयकेच्छाविशिष्टानुकूलतर्कव्यवस्थापनानुकूलकृतिमानिति बोधः । [७७]**असति प्रतिबन्धक** इत्यादि। प्रतिबन्धकात्यन्ताभावविशिष्टात्यन्तानलसंयोगविशिष्टद्रवत्वादित्यर्थः । अग्निसंयुक्तघटे व्यभिचारवारणाय द्रवत्वनिवेशनम् । वैशिष्ट्यद्वयं एकक्षणावच्छिन्नैकाधिकरणवृत्तित्वरूपम् । [७७] **अत्यन्तानलसंयोगी पीतिमाश्रय** इत्यादि । अत्र चात्यन्तानलसंयोगीति पक्षविशेषणानुपादाने जलमध्यस्थपीतरूपाश्रयद्रवद्रव्यविशेषे सामानाधिकरण्येन सिद्धसाधनवारणायावच्छेदकावच्छेदेनानुमितेरुद्देश्यतया वक्तव्यत्वेन हरिद्रायां सामानाधिकरण्येन बाधः स्यादिति तदुपादानम् । जलमध्यस्थघृते सामानाधिकरण्येन सिद्धसाधनवारणायावच्छेदकावच्छेदेनानुमितेरुद्देश्यताया वाच्यत्वेन घटदावंशतो बाधवारणाय पीतिमाश्रयत्वमुपात्तम् । यद्यप्येवमपि पीतरूपवति तादृशघटादौ बाधः तथापि स्वाव्यवहितोत्तरक्षणावच्छिन्नसामानाधिकरण्यसंबन्धेन विजतीयाग्निसंयोगविशिष्टपी-

तद्रूपवत्त्वस्यैव पक्षतावच्छेदकत्वस्वीकारात् न दोष इति भावः। स्वाव्यवहितोत्तरक्षणावच्छिन्नैकाधिकरणवृत्तित्वलक्षणसामानाधिकरण्यसंबन्धेनाग्निसंयोगविशिष्टद्रवत्वसहितगुरुत्वं हेतुः। स्वसमवेतद्रवत्वनाशप्रतिबन्धकद्रवद्द्रव्यान्तरसंयुक्तत्वं साध्यम्। न च दृष्टान्तपक्षसाधारणस्वत्वाननुगमात् पक्षे बाधो दृष्टान्ते साध्यवैकल्यं वा। एवं द्रवद्द्रव्यान्तरेत्यत्र स्वान्योन्याभावाश्रयद्रवद्द्रव्यविवक्षायां अनुपयोगः अन्यथासिद्धिश्चेति वाच्यम्। [1]स्वसंयुक्तत्व-स्वप्रतिबध्यनाशप्रतियोगिद्रवत्वसमवायित्वस्वासमवेतजातिमत्त्वत्रितयसम्बन्धेन द्रवद्द्रव्यविशिष्टत्वस्य साध्यत्वाभ्युपगमात् साध्यशरीरे उद्देश्यसिद्धये तृतीयसंबन्धनिवेशः। सिध्यति द्रव्ये व्यभिचारवारणाय हेतुकोटौ गुरुत्वनिवेशः।

यद्यपि तादृशद्रव्यसिद्धितः प्राक् तत्र व्यभिचाराग्रहस्य न सम्भवः, तथापि यद्यत्यन्तानलसंयोगविशिष्टद्रवत्वमुक्तसाध्यव्याप्यं स्यात् तर्हि प्रकृतपक्षतावच्छेदकावच्छेदेन दर्शितसाध्यसाधकं स्यादिति रीत्या अनवस्था स्यादिति गुरुत्वोपादानम्[७७]**जलादिकमादायेति।** अत्र आदानं ग्रहणम्। तच्च प्रकृते विषयतारूपम्। ल्यपः समानकर्तृकत्वमात्रमर्थः विषयतारूपपर्यवसानशब्दार्थान्वितम्। समानकर्तृकत्वं चेह तन्निरूपकनिरूपितत्वम्। जलादिकमित्यत्र द्वितीयायाः आधेयत्वमर्थः। तथा च जलादिनिष्ठं यद्विषयत्वं तन्निरूपकनिरूपितानुमानविषयत्वरूपार्थान्तरधर्मिकसंभवित्वप्रकारकज्ञानानुकूलव्यापारकर्तेति वाक्यार्थः।

---

1. स्वसंयुक्तत्वेत्यादि। स्वं द्रवद्द्रव्यं जलं तत्संयुक्तत्वं घृते, स्वं जलं तत्प्रतिबध्यः द्रवत्वनाशः तत्प्रतियोगि द्रवत्वं तत्समवायित्वं घृते, स्वं जलं तदसमवेतपृथिवीत्वजातिमत्त्वं च घृते इति जलमध्यस्थघृते समन्वयः। पक्षे तु स्वं सुवर्णगततेजोभागः तत्संयुक्तत्वं पार्थिवभागे, स्वं तेजोभागः तत्प्रतिबध्यो यो द्रवत्वनाशः तत्प्रतियोगि द्रवत्वं तत्समवायवत्त्वं पार्थिवभागे, स्वं तेजोभागः तदसमवेता पृथिवीत्वजातिः तद्वत्त्वं पार्थिवभागे इति समन्वयः।

**दीपिकायां** [८२]**स्पर्शानुमेयो वायुरि**ति। अत्र च स्पर्शपदं स्पर्शत्व-परम्। तेन पर्वतानुमेयो वह्निरिति व्यवहारवारणाय तृतीयायाः विशेष्यतार्थकत्वमपहाय प्रकारतार्थकत्वस्योपगन्तव्यतया स्पर्शानुमेयो वायुरित्यसंगतमित्यपास्तम्। यद्वा तादात्म्यसंबन्धेन स्पर्शस्यैव हेतुत्वं विवक्षितमिति नासंगतिः। अनुमानप्रकारश्च 'उपलभ्यमानस्पर्शः क्वचिदाश्रितः स्पर्शत्वात्,तादात्म्येन स्पर्शाद्वा,पार्थिवादिस्पर्शवत्'इति। [८२]**वायौ वाती**ति। अत्र च वायौ इति सप्तम्याः गगनमर्थः। तस्य च समानकालीनत्वसम्बन्धेन उपलम्भेऽन्वयः। यद्यपि गुणत्वाद्रूपवदिति हेतुदृष्टान्तयोरभिधानं [न] युक्तम्; स्पर्शानुमेय इत्यत्र प्रागुक्तवि-रोधात्; तथापि स्पर्शत्वादिहेतुकानुमानमुपलक्षणमित्यभिप्रायेण गुणत्वहेतुकानुमानान्तरमप्युक्तमिति ध्येयम्।

अत्र चोपलभ्यमानस्पर्शविशिष्टः [यदि]पृथिवी स्यात् तर्ह्युद्भू-तरूपवान् स्यात्, यदि जलादिकं स्यात् तर्ह्यनुष्णाशीतस्पर्शवान्न स्यात्, यद्ययं स्पर्शः आकाशादिचतुष्टयान्यतमसमवेतः स्यात् तर्हि देशान्त-रस्थजनसमवेतलौकिकप्रत्यक्षविषयः स्यात्, यदि मनस्समवेतः स्यात् तर्हि लौकिकप्रत्यक्षविषयो न स्यात्। यद्ययमुद्भूतस्पर्शः पृथिवीसमवेतः स्यात् उद्भूतरूपवद्वृत्तिः स्यात्, यदि जलादिसमवेतः स्यात् अनुष्णा-शीतो न स्यात्, उद्भूतस्पर्शाश्रयो यदि विभुः स्यात् देशान्तरस्थ-जनसमवेतप्रत्यक्षविषयस्पर्शकः स्यात्, यदि मनः स्यात्, प्रत्यक्षाविषय-स्पर्शकः स्यात् इति तर्कैः 'अयं स्पर्शः पृथिव्यादिभिन्नकिंचित्समवेतः' इत्याकारकानुमितिर्जायत इति भावः।

[८२]**उद्भूतस्पर्शवदित्यादि**। अत्र च घ्राणेन्द्रिये व्यभिचारवारणाय प्रथममुद्भूतेति। उद्भूतत्वस्याभावकूटात्मकस्य द्रव्यत्वेऽपि सत्त्वात् तद्दोष इत्यतः स्पर्शपदम्। वायौ तद्वारणाय पार्थिवत्वनिवेशः। वाया-वप्यनुद्भूतरूपसत्त्वात् द्रव्यत्वसत्त्वाच्च उद्भूतरूपनिवेशः। अत्र चोप-

लभ्यमानस्पर्शाश्रयस्य पृथिवीत्वादिकं प्रसक्तं न तु पृथिव्यादेस्तदाश्रयत्वम्। अतोऽप्रसक्तप्रतिषेधपरिहाराय योजनमाह-[८२]**अस्ये**त्यादि। **दीपिकायां**[८३]**न विभुचतुष्टयमि**ति। तदन्यतमं नेत्यर्थः। अन्यथा सिद्धसाधनप्रसंगात्, एकत्रोभयादिभेदसत्त्वादिति ध्येयत्। नवीनास्तु वायोः प्रत्यक्षतां वर्णयन्ति। तन्मतमाक्षेप्तुमनुवदति–[८३]**ननु वायुः प्रत्यक्ष** इत्यादिना। ननु प्रत्यक्षत्वं प्रत्यक्षविषयत्वं, तथा च वायोरपि अलौकिकमानसप्रत्यक्षविषयत्वाभ्युपगमात् सिद्धसाधनमत आह-**प्रकाशिकायां** [८३]**प्रत्यक्षः-बहिरिन्द्रियजन्यप्रत्यक्षविषय** इति। यद्यप्यलौकिकतादृशप्रत्यक्षविषयत्वमपि वायोरस्तीति तद्दोषतादवस्थ्यम्, तथापि मानसानिरूपितलौकिकविषयत्वस्य साध्यत्वे तात्पर्यान्न दोषः। अनिरूपितान्तं च मानसविषयतामादायार्थान्तरवारणाय। अत एव वक्ष्यमाणोपाधेरात्मनि साध्यव्यापकताभङ्गस्य नावकाशः। [८३]**प्रत्यक्षेती**ति। लौकिकविषयताश्रयेत्यर्थविवक्षणान्नालौकिकप्रत्यक्षविषयस्पर्शवति त्वगिन्द्रिये व्यभिचारतादवस्थ्यम्। स्पर्शपदं तु लौकिकविषयताश्रयद्रव्यत्वादिकमादाय। लौकिकविषयताश्रयगुणेत्युक्तावपि श्रावणप्रत्यक्षविषयशब्दमादाय आकाशे व्यभिचारव्युदासाय। स्पर्शस्य समवायेन हेतुत्वसूचनाय आश्रयत्वकथनम्।

**दीपिकायाम्**[८३]**उद्भूतरूपस्ये**ति। अत्रोद्भूतपदं प्राचीनैकदेशिभिः वायावप्यनुद्भूतरूपस्वीकारात् उपाधेः साधनाव्यापकत्वोपपत्त्यर्थम्। **प्रकाशिकायां**[८३]**साध्यव्यभिचारोन्नयनसम्भवादि**ति। यद्यपि व्यापकतावच्छेदकत्वाभिमतरूपावच्छिन्ननिरूपितव्यभिचारस्य व्याप्यतावच्छेदकत्वाभिमतरूपावच्छिन्ननिरूपितव्यभिचारस्यानुमापकतया प्रकृते च द्रव्यत्वात्मकपक्षधर्मविशिष्टप्रत्यक्षत्वव्यभिचार एव तद्विशिष्टसाध्यव्यापकव्यभिचारेणानुमातुं शक्यते, न तु शुद्धसाध्यव्यभिचारोऽपि,व्याप्तिग्रहविरहात्। तथापि तादृशोपाधिव्यभिचारेण विशिष्टसाध्यव्यभिचारसिद्धौ विशेषणवद्विशिष्टाभाववद्वृत्तित्वेन हेतुना विशेष्याभाववद्वृत्तित्वं पश्चादनुमातुं शक्यमिति भावः। अथ वा पक्षधर्मवति

साधनाव्यापकत्वेन शुद्धसाध्यव्यभिचार एवानुमातुं शक्यः । पक्षधर्मवति साधनाव्यापकत्वं च साधनाश्रयपक्षधर्मवन्निष्ठात्यन्ताभावप्रतियोगित्वम् । एवं पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं च साध्याश्रयपक्षधर्मवन्निष्ठाभावाप्रतियोगित्वमिति । एवमुपाध्यन्तरेऽपि द्रष्टव्यम् ।

वस्तुतस्तु [1]उद्भूतरूपशून्यत्वद्रव्यत्व(द्रव्यत्व)उभयाभावः समवायसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावीयद्रव्यनिष्ठाधिकरणतासंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वससंबन्धेन उद्भूतरूपं वा उपाधिः । तस्य रूपादावपि सत्त्वेन साध्यव्यापकत्वात् पक्षभूतवायावसत्त्वेन साधनाव्यापकत्वाच्च । उपदर्शितधर्मविशेषस्य उपाधित्वसूचनायैव पक्षधर्मावच्छिन्नसाध्यव्यापकत्वकीर्तनम् । उपाधिचातुर्विध्यकथनमपि तत्र तत्र विवक्षितधर्मविशेषस्य उपाधित्वलाभाय विवक्षितसम्बन्धविशेषस्य उपाधितावच्छेदकत्वलाभाय वेति **मदेकपरिशीलितः पन्थाः** ।

केचित्तु विशेषणाव्यभिचारित्वनिश्चयसहकृतविशिष्टव्यभिचारित्वव्याप्तिग्रहात् विशेष्यव्यभिचारसिद्धिः इति वदन्ति । तदसत् । यतो विशिष्टव्यभिचारः विशिष्टाभाववद्वृत्तित्वमेव । न तु विशेषणव्यभिचारसहितविशेष्यव्यभिचारः । प्रत्यक्षस्पर्शवत्त्वादौ तदसंभवात् ।

---

1. उद्भूतरूपशून्यत्वेति । रूपादिगुणे द्रव्यत्वाभावप्रयुक्तोभयाभावस्य सत्त्वात्. घटादिद्रव्ये उद्भूतरूपशून्यत्वाभावप्रयुक्तोभयाभावसत्त्वाच्च अस्य बहिरिन्द्रियजन्यप्रत्यक्षविषयत्वरूपसाध्यव्यापकत्वम् ।

समवायसंबन्धेत्यादि । स्वाभावीयेत्यस्य स्वाभावनिरूपितेत्यर्थः । द्रव्यनिष्ठाधिकरणतायामन्वयः । रूपादिनिष्ठाधिकरणतायां उद्भूतरूपाभावनिरूपितत्वसत्त्वेऽपि द्रव्यनिष्ठत्वं नास्तीति स्वाभावनिरूपितद्रव्यनिष्ठाधिकरणतासंबन्धेन स्ववत्त्वं (उद्भूतरूपवत्त्वं) रूपादौ नास्तीति तेन संबन्धेन स्ववद्भिन्नत्वस्य रूपादौ सत्त्वात् स्ववद्भिन्नत्वसंबन्धेन उद्भूतरूपं तत्रास्तीति साध्यव्यापकत्वमिति भावः । घटादिनिष्ठाधिकरणतायां द्रव्यनिष्ठत्वसद्भावेऽपि उद्भूतरूपाभावनिरूपितत्वं नास्ति । अतः स्वाभावनिरूपिताधिकरणतासंबन्धेन स्ववद्भिन्नत्वसत्त्वात् तत्संबन्धेन उद्भूतरूपं घटादावस्तीति साध्यव्यापकता बोध्यः ।

तथा चोपदर्शितपरामर्शात् विशिष्टव्यभिचारसिद्धौ न किंचिदपि बाधकं पश्याम इति विशिष्टसाध्यव्याप्तिकोपाधेः शुद्धसाध्यव्यभिचारोन्नायकत्वानिर्वाह एवेति ।

**दीपिकायां**[८२]**प्राणस्य क्वचान्तर्भाव** इत्यादि। तथा च दशमद्रव्यत्वं प्राणस्य, वायावन्तर्भावेऽपि कार्यवायुचातुर्विध्यं वा प्रसज्येतेति भावः । शरीरेत्यादिविशेषणेन शरीरेन्द्रियभिन्नत्वरूपविषयलक्षणाक्रान्तत्वात् न चतुर्विध्यम्, वाय्वन्तर्भावाच्च न दशमद्रव्यत्वमित्याशय इति भावश्च । "स चैकोऽप्युपाधिभेदात् प्राणादिसंज्ञाभेदं लभत" इति संग्रहवाक्ये उपाधिभेदादित्यत्र पञ्चम्याः प्रयोज्यत्वमर्थः। तस्य 'लभत' इत्यत्र धात्वर्थसम्बन्धेऽन्वयः । स चेह वाच्यत्वरूपः। एकोऽपीत्यत्र एकत्वं प्राणत्वन्यूनवृत्तिधर्मशून्यत्वम्। अपिरत्र विरोधार्थकः। विरोधश्च समभिव्याहृतपदार्थतावच्छेदकैकत्वाधिकरणनिरूपितोपाधिभेदानवच्छिन्नवृत्तिकत्वाभावः । तस्य च सम्बन्धे अन्वयः । तथा च एकत्वविरुद्धोपाधिभेदप्रयुक्तप्राणापानादिसंज्ञानिरूपितसंबन्धाश्रयः स इति बोधः ।

केचित्तु अपिशब्दस्य विरोधार्थकतामाहुः । तदसत् । धर्मिणि तादृशसम्बन्धाश्रयत्वभानेनैव तादृशसम्बन्धाश्रयत्वे एकत्वाविरोधलाभेन पृथक्कथनवैयर्थ्यात् । अस्मन्मते तु विरोधतत्सामानाधिकरण्ययोरेकत्र संभवप्रदर्शनपरतया तत्सार्थक्यात्। के ते उपाधय इत्याशङ्कायामुपाधिशब्दार्थमाह **दीपिकायाम्** [८२] **स्थानेति**। तत्र प्रमाणमाह **प्रकाशिकायाम्**[८२]**हृदि प्राण इत्यादि** इति ।

**सृष्टिसंहारप्रक्रिया**

**दीपिकायाम्** [८५] **चिकीर्षावशादिति**। यद्यपीश्वरेच्छा नित्यैव, तथाप्येतत्काले परमाणौ क्रिया भूयादिति रीत्या तस्याः कालविशेषावगाहितया तत्काल एव तत्र क्रियोत्पत्तिः नान्यदेति नियम उपपद्यते । एवं संजिहीर्षावशादित्यत्रापि बोध्यम् । चाक्षुषद्रव्यत्वादित्यत्र चाक्षुषं

यत् द्रव्यत्वमित्यर्थविवक्षायामात्मनि व्यभिचारतादवस्थ्यमभिसन्धाय द्रव्यपदेन कर्मधारयं [1]'कर्मधारयोपरि' इत्यादिन्यायं चाभिप्रेत्यार्थमाह - [८५] **चाक्षुषत्वे सतीत्यादि** ।[८५] **रूपादाविति** । इदं च जन्यद्रव्यत्वस्य साध्यताभिप्रायेण। द्रव्यसमवेतत्वरूपसावयवत्वसाधने तु घटाभावादौ व्यभिचारो बोध्यः। एतत्संग्राहकमेवादिपदमिति ध्येयम्। [८५] **कार्यत्वेऽनवस्थाप्रसङ्गादिति** । अवयवत्वव्यापकसावयवत्वकत्वरूपाव्यवस्थितपरम्पराधीनमेरुसर्षपगतपरिमाणतारतम्यानुपपत्तिरूपानिष्टप्रसज्जनादित्यर्थः । तथा च 'द्व्यणुकावयवः सावयवः महदारम्भकत्वात्' इत्यत्र उक्ततर्कबलात् नित्यावयवसमवेत इत्यनुमितिरुत्पद्यत इति भावः ।

[८६] **प्रकाशिकायां संक्षेप इति** । अयमत्र भावः। यद्यपि त्रुटिमहत्त्वस्य नित्यत्वोपगमे अवयवसंख्यायाः नापेक्षेति दर्शितानुमानस्याप्रयोजकत्वशङ्का दुर्वारा , तथापि—

'जालसूर्यमरीचिस्थं यत्सूक्ष्ममुपलभ्यते ।
तस्य षष्ठतमो भागः परमाणुः प्रकीर्तितः ॥'

इति स्मृतिप्रामाण्यबलात् द्व्यणुकपरमाण्वोः स्वीकार आवश्यक इति । **दिगिति** । अत्रायमाशयः– सर्वशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वार्थकतया कार्यद्रव्यत्वव्यापकत्वमवान्तरप्रलयस्य, भावकार्यत्वव्यापकत्वं महाप्रलस्य च लक्षणम्। व्यापकत्वं च स्वनिष्ठध्वंसप्रतियोगितासंबन्धेन । स्वनिष्ठत्वं च कालिकसंबन्धेन । एतेन कार्याणां भावकार्याणां चानन्तानां विशिष्यासर्वज्ञदुर्ज्ञेयत्वेन तावद्ध्वंससमुदायत्वस्य सुतरां परिज्ञानासम्भवात् एतल्लक्षणकथनमसंगतमित्यपास्तमिति ।

**आकाशनिरूपणम्**

[८८] **द्योतनायेति** । तथा च **शब्दगुणकमिति संग्रहवाक्ये** 'सर्वं वाक्य'मिति न्यायेन शब्द एव गुणो विशेषगुणो यस्मिन्निति बहुव्रीहि-

---

1. **कर्मधारयोपरीत्यादिन्यायमिति । कर्मधारयोपरि विद्यमानः भावार्थकप्रत्ययः सामानाधिकरण्यबोधक इति न्यायमित्यर्थः ।**

रिति भावः । ननु **तच्चैकमिति संग्रह**वाक्ये आकाशस्यैकत्वमुक्तम्, तन्न युक्तम्, घटाकाशो मठाकाश इत्यादिव्यवहारस्य आकाशानेकत्व-साधकस्य सत्त्वात्, व्यवहारभेदे व्यवहर्तव्यभेदस्यैव नियामकत्वात् । तथा च 'घटाकाशव्यवहारः मठाकाशत्वावच्छिन्नभिन्ननिष्ठव्यवहर्तव्य-ताकः मठाकाशत्वभिन्नधर्मावच्छिन्नव्यवहर्तव्यताकव्यवहारत्वात्, यो यद्धर्मभिन्नधर्मावच्छिन्नव्यवहर्तव्यताकव्यवहारः स तद्धर्मावच्छिन्नभिन्न-निष्ठव्यवहर्तव्यताकः' इति सामान्यव्याप्त्युपष्टभ्यमनुमानमत्र मान-मित्याशङ्कायां 'व्यवहर्तव्यतावच्छेदकभेद एव व्यवहारभेदनियामकः, अन्यथा प्राणापानादिव्यवहारभेदानुपपत्तेः । एवं च दर्शितानुमाने प्राणापानादिव्यवहारमादाय व्यभिचारः । तथा च प्रकृते घटमठादि-रूपव्यवहर्तव्यतावच्छेदकभेदेन तादृशव्यवहारोपपत्तौ न तस्याकाशभे-दसाधकत्वम्' इति समाधानमभिसन्धायाह-[८८]**घटाकाशो मठाकाश इत्यादीति** । [८८]**अनेकत्वे** - आकाशत्वन्यूनवृत्तिधर्मवत्त्वे । [८८]**प्रमा-णम्** - प्रमा, तस्य विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावादि-त्यर्थः । तथा च 'आकाशं आकाशत्वन्यूनवृत्तिधर्मशून्यं,तादृशधर्मवत्त्व-प्रकारकप्रमाविशेष्यत्वाभावात्, यन्नैवं तन्नैवम्' इति व्यतिरेक्यनुमान-माकाशस्य एकत्वे प्रमाणमुपदर्शितम् ।[८८]**एकत्वादेवेति** । आकाश-त्वन्यूनवृत्तिधर्मशून्यत्वादेवेत्यर्थः । केचित्तु - आकाशत्वव्याप्यधर्मविरु-द्धधर्माव्यापकाकाशत्वकत्वमेव आकाशे एकत्वम् । अत्रायमनुगमः-भेदविशिष्टाकाशत्वकत्वं तत् । वैशिष्ट्यं च स्वप्रतियोगितावच्छेद-कत्वस्वाश्रयत्वोभयसम्बन्धेन । अवच्छेदकता स्वव्याप्यधर्मविशिष्टत्व-सम्बन्धेन । वैशिष्ट्यं च स्वविरुद्धधर्मविशिष्टत्वसम्बन्धेन । वैशिष्ट्यं च स्वसेत्यादिभेदवत्त्वसम्बन्धेन - इत्याहुः ।

यत्तु विभाजकधर्मद्वयशून्यत्वं तदिति । तत्तुच्छम् । पदार्थवि-भाजकद्रव्यत्व - द्रव्यविभाजकाकाशत्वयोः सत्त्वेनासम्भवापत्तेः । आकाशविभाजकत्वनिवेशने च सिद्ध्यसिद्धिभ्यां व्याघातापत्तेरिति ध्येयम् । आकाशकालदिगात्मनां साधारणं विभुत्वं न जातिः ।

तत्साधिकायाः अनुगतप्रत्यक्षधियोऽसंभवात्, तेषु रूपाद्यभावात्, अनन्यथासिद्धलिङ्गानुपलम्भेनानुमानासम्भवात्। शब्दस्य चाप्तोक्तत्वानिश्चयेन सन्दिग्धप्रामाण्यकत्वात्, अन्यथा वैपरीत्यस्यापि सुवचत्वात्। न च विभुपदवाच्यतावच्छेदकतया विभुत्वजातिसिद्धिरिति वाच्यम्। [1]तुल्ययुक्त्या भूतत्वस्यापि सिद्ध्यापत्त्या प्रागुक्तत्रितयसम्बन्धेन तद्विशिष्टत्वरूपजातिसांकर्यस्य जातित्वाभावव्याप्यतया गृहीतस्य जातिबाधकस्य सत्त्वेन तस्य जातित्वासिद्धेः।

यत्तु परममहत्परिमाणवत्त्वं विभुत्वमिति। तन्न। 'वैभवात् महानाकाशस्तथा चात्मा' इति सूत्रे कणादेन परममहत्त्वसाधकलिङ्गत्वेन विभुत्वस्योक्तत्वात् परममहत्परिमाणवत्त्वस्य तत्स्वरूपतायाः सूत्रकारानभिमतत्वात् इत्यभिप्रायेण प्रकारान्तरेण विभुत्वं निर्वक्ति - [८८] **सर्वमूर्तेति**। अत्र च पटादिसंयुक्तघटादिवारणाय सर्वपदम्। विभूनां क्रियाविरहेण परस्परसंयोगाभावात् असंभवनिरासाय मूर्तपदम्। मूर्तत्वस्य क्रियासमवायिकारणतावच्छेदकतया सिद्धजातिविशेषरूपत्वपक्षे प्राचीनाभिमतोत्पन्नविनष्टद्रव्यमादायासम्भववारणाय द्रव्यपदं संयोगवदर्थकम्। अत एवोक्तदोषवारणाय मूर्तपदं नित्यमूर्तपरमिति प्रलपितमनादेयम्। द्रव्यपदवैयर्थ्यापाताच्च। 'क्रियावत्त्वं मूर्तत्वम्' इति मते उत्पन्नविनष्टद्रव्यानुपगन्तृनये वा नोपादेयमेव तत्।

अथ 'सर्वमूर्तद्रव्यसंयोगित्वम्'इत्यस्य सर्वाणि यानि मूर्तद्रव्याणि तावत्प्रतियोगिकसंयोगवत्त्वार्थकत्वे तावत्प्रतियोगिकैकसंयोगाप्रसिद्ध्या असम्भवः। तावतां प्रत्येकप्रत्येकप्रतियोगिकसंयोगसमुदायवत्त्वार्थकत्वे घटपटसंयोगादेरपि तादृशसमुदायघटकतया तद्घटितसमुदायवत्त्वस्य आकाशादावभावात् स एव दोषः। यत्तु - यावन्ति मूर्तद्रव्याणि तेषां

1. तुल्ययुक्त्येति। भूतपदवाच्यतावच्छेदकतयेत्यर्थः। प्रागुक्तेति। स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्यस्वसमानाधिकरणात्यन्ताभावप्रतियोगित्वैतत्त्रितयसंबन्धेनेत्यर्थः।

प्रत्येकप्रतियोगिकैकसंयोगघटितसमुदायवत्त्वं तदिति - नैष दोषः। न च मूर्तत्वजातिपक्षे उत्पन्नविनष्टपृथिव्यादेरपि तदाश्रयतया सर्वमूर्तान्तर्गतत्वेन तत्प्रतियोगिकसंयोगाप्रसिद्धया न तद्घटितसंयोगसमुदायवत्त्वमाकाशादावित्यसम्भवतादवस्थ्यमिति वाच्यम्। द्रव्यपदस्य संयोगवदर्थकतायाः प्रागेवावेदिततया तादृशपृथिव्याद्यसंग्रहात् मूर्तपदस्य क्रियावत्परत्वे सुतरामदोषाच्चेति। तत्तुच्छम्। अपेक्षाबुद्धिविशेषविषयत्वरूपस्य आकाशादिचतुष्टयघटकप्रत्येकमात्रसमवेतसंयोगसमुदायपर्याप्तसमुदायत्वस्य भिन्नभिन्नतया तादृशैकैकसमुदायत्वावच्छिन्नवत्त्वस्य विभुसामान्यलक्षणत्वोपगमे वाच्यतासम्बन्धेन विभुपदवत्त्वरूपलक्ष्यतावच्छेदकवत्यन्यस्मिन् तस्यासत्त्वात् अव्याप्तेः। तत्तत्समुदायचतुष्टयवत्त्वस्य लक्षणत्वे असंभवापत्तेः। तस्य कुत्राप्यसत्त्वात्। तावदन्यतमवत्त्वस्य तथात्वे तादृशान्यतमत्वस्य तत्तत्समुदायत्वावच्छिन्नभेदचतुष्टयवदन्यत्वरूपतया व्यासज्यवृत्तिधर्मावच्छिन्नानुयोगिताकाभावानुपगमे असम्भवापत्तेः। तदुपगमे च घटाकाशादिसंयोगस्यापि तादृशान्यतमत्वाश्रयतया घटादावतिव्याप्तेः कथमिदं संगच्छते।

यदपि 'सर्वमूर्तद्रव्यसंयोगित्वम्' इत्यनेन मूर्तद्रव्ये गगनादिसंयुक्तत्वं नास्तीति लभ्यते। एवं च स्वासंयुक्तमूर्तद्रव्यकं यद्यत्स्वं तत्तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदकूटवत्त्वं लक्षणं फलितम्। अत्र गगनाद्यसंयुक्तमूर्ताप्रसिद्धया स्वपदेन गगनाद्युपादानासम्भवात् गगनादौ लक्षणसमन्वयः। गगनादेरपि स्वासंयुक्तगुणादिकत्वादसम्भववारणाय मूर्तेति। मूर्तत्वजातिपक्षे तदाश्रयोत्पन्नविनष्टघटादेरपि स्वासंयुक्तत्वादसम्भववारणाय संयोग्यर्थकं द्रव्यपदम्। तादृशघटादेश्च गगनाद्यसंयुक्तत्वेऽपि संयोगित्वविरहान्नासम्भवः। न चैवं मूर्तपदवैयर्थ्यम्, गुणादेरतथात्वादिति वाच्यम्। तथापि गगनादेः स्वासंयुक्तगगनादिकत्वात् तद्दोषवारणाय तस्यावश्यकत्वादिति - तदप्यसत्। कालान्तरीणपुरुषान्तरीयमूर्तपदार्थव्यक्तीनां विशिष्यास्माभिर्ज्ञातुमशक्यतया तादृशभेदकूटघटितलक्षणस्य दुष्करत्वात्। स्वासंयुक्तमूर्तसं-

युक्तकत्वतादात्म्योभयसम्बन्धेन प्रमेयविशिष्टान्यत्वस्यानुगतस्य लक्षणत्वसम्भवेऽपि स्वसंयुक्ताप्रसिद्धया संयुक्तत्वसंबन्धेन स्वावच्छिन्नभिन्नत्वघटितलक्षणस्य रूपादावतिव्याप्तेः, स्वातन्त्र्येण द्रव्यत्वनिवेशेन तद्वारणेऽपि उत्पन्नविनष्टपृथिव्यादावतिव्याप्तेः । द्रव्यत्वस्थले संयोगित्वं निवेश्य तत्परिहारेऽपि महागौरवात् वक्ष्यमाणरीत्या यथाश्रुतशब्दलभ्यार्थस्य निर्दोषस्य संभवे तत्परित्यागेनार्थान्तरं परिकल्प्य तत्र दोषान्तरव्युदासाय विशेषणान्तरनिवेशस्य [1]प्रक्षालनाद्धिन्यायेनायुक्तत्वाच्च ।

एतेन स्वासंयुक्तेत्यनेन स्वनिष्ठसंयुक्तत्वसम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावविवक्षणान्नोत्पन्नविनष्टपृथिव्यादावतिव्याप्तिः । एवं क्रियावदवृत्तिद्रव्यविभाजकधर्मवत्त्वं मूर्तत्वजातिव्यधिकरणद्रव्यविभाजकधर्मवत्त्वं वा सर्वमूर्तद्रव्यसंयोगित्वमित्यनेन विवक्षितम् । तादृशधर्मवत्ता च स्वरूपसमवायान्यतरसम्बन्धेन । नातः कालात्मादावव्याप्तिरित्यपि परास्तम् । उदक्षरताया दुर्वारत्वात् । अन्यतरत्वघटकयोर्भेदयोर्मिथो विशेषणविशेष्यभावे विनिगमनाविरहेण विभुपदार्थद्वैविध्यप्रसङ्गाच्च ।

अत्रोच्यते - सर्वमूर्तेत्यादेर्मूर्तद्रव्यत्वव्यापकत्वमर्थः । सर्वशब्दस्य समभिव्याहृतपदार्थतावच्छेदकव्यापकत्वार्थकत्वात् । व्यापकता च स्वानुयोगिकसंयोगप्रतियोगित्वसंबन्धेन । एतल्लाभायैव संयोगीत्युक्तम्। यद्यपि स्वानुयोगिकसंयोगप्रतियोगित्वसम्बन्धेन मूर्तद्रव्यत्वव्यापकत्वं मूर्तद्रव्यनिष्ठात्यन्ताभावीयतादृशसम्बन्धावच्छिन्नप्रतियोगिताशून्यत्व - पर्यवसितम्, वृत्त्यनियामकसम्बन्धस्यात्यन्ताभावप्रतियोगितानवच्छेदकत्वमते न प्रसिद्ध्यति, तथापि मूर्तद्रव्यनिष्ठभेदप्रतियोगितानिरूपितनिरुक्तसम्बन्धावच्छिन्नावच्छेदकताशून्यत्वरूपं तदिह विवक्षितम् । अत्यन्ताभावप्रतियोगितानवच्छेदकस्यापि वृत्त्यनियामकसंबन्धस्या-

---

1. प्रक्षालनाद्धिन्यायेति । 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायेनेत्यर्थः ।

न्योन्याभावप्रतियोगितावच्छेदकतावच्छेदकतायाः सर्वसंमतत्वादिति **मदेकपरिशीलितः पन्थाः** ।

ननु परिमाणे परिच्छिन्नत्वं नापकर्षरूपम्, येनोक्तदोषः स्यात् । अपि त्वाकाशाद्यन्यतमासमवेतत्वम् ।

यत्तु - विभ्वसमवेतत्वं तदिति – तदसत् – विभुत्वस्य मूर्तत्वघटितत्वेनान्योन्याश्रयप्रसङ्गात् । अतो न परमाणुषु अव्याप्तिरिति मनसि निधायाह – **प्रकाशिकायाम्** [८८] **वस्तुतस्त्विति** ।

**काकनिरूपणम्**

[८९] **अनागतादी**त्यादिना वर्तमानपरिग्रहः । [९०] **घटकतये**ति । अतीतादिव्यवहारं प्रति [1]अतीतत्वादिप्रकारकज्ञानस्य कारणतया तादृशव्यवहारजनकतावच्छेदकप्रतियोगित्वप्रकारतानिरूपितध्वंसप्रकारतानिरूपिताधेयत्वप्रकारतानिरूपितप्रकारताद्याश्रयतयेत्यर्थः, अभेदस्तृतीयार्थहेतुत्वान्वितः । वस्तुतस्तु अतीतत्वं स्ववृत्तिध्वंसप्रतियोगित्वसम्बन्धेन, 'अतीत' इति शब्दप्रयोगाधिकरणकालवत्त्वम् । भविष्यत्वं च स्ववृत्तिप्रागभावप्रतियोगित्वसम्बन्धेन भविष्यतीति शब्दप्रयोगाधिकरणकालवत्त्वम् । वर्तमानत्वं च आधेयतासम्बन्धेन वर्तत इति शब्दप्रयोगाधिकरणकालवत्त्वम् । एवं च व्यवहारे व्यवहर्तव्यतावच्छेदकप्रकारकज्ञानस्य कारणतया तदवच्छेदकविषयतावत्त्वरूपं व्यवहारहेतुत्वं कालस्याक्षतमेव । घटकतयेत्यस्यापि तादृशविषयताश्रयतयेत्यर्थः । अभेदस्तृतीयार्थः । प्रागभावानुपगमे पुनः भविष्यतीति शब्दप्रयोगाधिकरणक्षणध्वंसावच्छिन्नकालोत्पत्तिकत्वरूपं स्वध्वंसावच्छिन्नकालोत्पत्तिकत्वसंबन्धेन तादृशक्षणविशिष्टत्वपर्यवसितं निर्वाच्यमिति ध्येयम् । जनकतावच्छेदिका च विषयता मुख्यविशेष्यतानिरू-

---

1. अतीतत्वादिप्रकारकज्ञानस्येति । घटः वर्तमानकालवृत्तिध्वंसप्रतियोगी इत्याकारकज्ञानस्येत्यर्थः । तादृशव्यवहारजनकतावच्छेदकेत्यस्य अन्तिमप्रकारतायामन्वयः । प्रतियोगित्वनिष्ठप्रकारतानिरूपिता या ध्वंसनिष्ठप्रकारता तन्निरूपिता या आधेयत्वनिष्ठप्रकारता तन्निरूपिता या वर्तमानकालनिष्ठप्रकारता तदाश्रयतयेत्यर्थः ।

पितप्रकारत्वरूपा पूर्वकल्पे । चरमकल्पे तु मुख्यविशेष्यतानिरूपित-प्रकारत्वमुख्यविशेष्यतानिरूपितसंसर्गतानिरूपितोत्पत्तिविषयतानिरू-पितविषयत्वान्यतररूपा ग्राह्या, अतो नातिप्रसङ्ग इति । [९०] **अनुगतस्येत्यादि** । प्रतिक्षणदिनादिकं सूर्यपरिस्पन्दादेर्भिन्नभिन्नत्वात् तत्रातीतादिव्यवहारानुपपत्तेरिति भावः ।

[९०] **दिगिति** । यद्यपि अतीतादिव्यवहारस्यानुगतकालवि-षयकत्वे वर्तमानादावपि तादृशव्यवहारापत्त्याननुगतसूर्यपरिस्पन्दादि-रूपोपाधिविषयकत्वमेवानायत्या स्वीकर्तव्यमिति नोक्तरीत्या अति-रिक्तकालसिद्धिः । तथापि कालिकपरत्वाद्यसमवायिकारणसंयोगा-श्रयतया आकाशादीनां प्रत्येकं विनिगमनाविरहात् अतिरिक्तकालः सिध्यतीति कालिकसम्बन्धेन सर्वाधारत्वस्य क्रियादावतिव्याप्तिभ्रमं निराकरोति – [९०] **अत्रेत्यादिना** । प्रतीच्यादीत्यादिना उदीचीदक्षि-णयोः परिग्रहः ।

### आत्मनिरूपणम्

[९२] **समवायेन ज्ञानवदित्यर्थ** इति । अन्यथा कालिकादिना ज्ञानवति कालादावतिव्याप्तिरिति भावः । [९२] **विरोध इतीति** । [1]तया ईश्वरस्य ज्ञानस्वरूपत्वबोधनादिति भावः । '(नित्यं) विज्ञा-नम्' इति श्रुतौ विज्ञानपदस्य अर्शआद्यजन्तत्वं वा नन्द्यादित्वात् कर्तरिल्युप्रत्ययान्तत्वं वाऽभिप्रेत्याह - [९३] **विज्ञानवदर्थकतेति** । न-न्वीश्वरे सुखाभावात् कथमुक्तश्रुतेः प्रामाण्यमित्याशङ्क्याह - [९३] **अत्रेति** । [९३] **सुखी संवृत्तोऽहमितिवदिति** । तादृशवाक्यस्थसुख-शब्द इवेत्यर्थः । **अत्र**-उक्तश्रुतौ, **आनन्दः** - आनन्दशब्दः **दुःखाभावे** उपचर्यत इति । सप्तम्या आधेयत्वमर्थः । उपचारो लक्षणा । निरूपक-त्वमाख्यातार्थः । तथा च दुःखाभावनिष्ठलक्षणानिरूपकः उक्तश्रुति-स्थानन्दशब्द इति फलितम् ।

---

1. तयेति । 'नित्यं विज्ञानमानन्दं ब्रह्म' इति श्रुत्येत्यर्थः ।

श्रुतिवाक्यस्थपदस्यासति बाधके लक्षणा न युक्तेत्यानन्दशब्द-स्य मुख्यार्थपरत्वं वर्णयतां नवीनानां मतमाह [९३] **नवीनास्त्विति** । नन्वीश्वरे जन्यसुखाभावात् कथमानन्दशब्दस्य मुख्यार्थकत्वमत आह –[९३] **नित्यसुखमिति** । दर्शितश्रुतिबलादित्यादिः । [९३] **विजातीयेति** । अन्यथा परात्मनः परेण मनसा प्रत्यक्षापत्तेरिति भावः ।

इदमत्र बोध्यम् - 'आत्मा बाह्यप्रत्यक्षीयलौकिकविषयताशून्यः उद्भूतरूपशून्यद्रव्यत्वात्', 'जीवगतसुखाद्यतिरिक्तं मानसीयलौकिक-विषयत्वाभाववत् विजातीयमनोयोगतदाश्रयसमवेतत्वादिशून्यत्वात्, गगनादिवत्'इत्यनुमानद्वयं विवक्षितम्। तेन न चार्वाकमते पक्षाप्रसिद्धिः। अवच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यत्वात् नांशतस्सिद्धसाधनम्। [९२] **नाप्यनुमानम् लिङ्गाभावादि**त्यत्रापि प्रमेयसामान्यं स्वव्यतिरिक्तात्मसा-धकत्वसम्बन्धावच्छिन्नजीवनिष्ठप्रतियोगिताकात्यन्ताभाववत् वस्तु-त्वादित्यनुमानमवसेयमिति ।

[९३] **दिगिति** । अयमत्र भावः - यद्यपि कुलालकृतित्वाद्यव-च्छिन्नसत्त्वे घटत्वाद्यवच्छिन्नसत्त्वं तदभावे तदभाव इत्यन्वयव्यति-रेकाभ्यां घटत्वादिकुलालादिकृतित्वाभ्यामेव कार्यकारणभावस्सिध्यति, तथापि यद्विशेषयोरितिव्याप्तिबलात् कार्यत्वावच्छिन्नं प्रति कृतित्वेन कारणत्वमप्यावश्यकम् । एवं कार्यत्वावच्छिन्नं प्रति ज्ञानत्वेच्छात्वा-भ्यामपि तथात्वं तादृशान्वयव्यतिरेकाविशेषात् । एवं च 'कार्यं कृति-जन्यं कार्यत्वात्' इत्यनुमानमिव 'कार्यं ज्ञानजन्यं इच्छाजन्यञ्च का-र्यत्वात्' इत्यनुमानद्वयमपि विवक्षितमिति, [९३] **अपरोक्षज्ञाना-देरि**त्यादिपदेन चिकिर्षापरिग्रहः । [९३] **चिकिर्षादिक**मित्यादिपदेन कृतिपरिग्रहः । ननु'यः सर्वज्ञः सर्ववित्'इति श्रुतौ सर्वज्ञशब्देनैव ईश्व-रस्य सर्वविषयकज्ञानत्वलाभे पुनः सर्ववित्पदं व्यर्थमित्याशङ्क्याह - [९३] **सर्वविदि**तीति । वस्तुतस्तु सर्वविदित्यस्य सर्वं विदन्तीति व्युत्पत्त्या सर्वव्याप्त इत्यर्थः । विद लाभ इति धातोः क्विपि तादृशा र्थसम्भवादिति ध्येयम् ।

ननु [९२] **जीवस्य लक्षणमाह - जीव इतीति दीपिकायाम्** [९१] **जीवस्तु प्रतिशरीरं भिन्न इति संग्रहवाक्या**वतरणमयुक्तम् । प्रतिशरीरं भिन्नत्वस्य इन्द्रियादिसाधारणतया जीवलक्षणत्वासम्भवात्, अतो लक्षणपदस्य बहुलग्रहणसामर्थ्यात् लक्ष्यत इदमिति व्युत्पत्त्या कर्मणि ल्युडन्तत्वमाश्रित्य स्वरूपपरत्वमभिसन्धाय व्याचष्टे - [९३] **स्वरूपमाहेत्यर्थ** इति । [९३] **मूले प्रति शरीरं भिन्न** इति । अत्र च प्रतिपदसमभिव्याहृतद्वितीयायाः आधेयताश्रयभेदप्रतियोगितावच्छेदकत्वमभावश्च खण्डशोऽर्थः। अन्यथा सामान्यतो व्यापकत्वस्य व्याप्यविशेषाघटितस्य दुर्वचत्वेन द्वितीयार्थतानुपपत्तेरिति ध्येयम् ।

ननु 'प्रतिशरीरं भिन्न' इति वाक्यात् प्रतिद्रव्यं सत्तेत्यादिषु द्रव्यत्वव्यापिका सत्तेत्याद्यर्थवत् प्रतिपदसमभिव्याहृतशरीरपदस्य शरीरत्वव्यापकत्वार्थकतया शरीरत्वव्यापकभेदप्रतियोगीत्यर्थो लभ्यते। तच्च न घटते । जीवात्मन्येकत्वोपगमेऽपि ईदृशार्थनिर्वाहात् आत्मभेदस्य शरीरत्वव्यापकत्वाक्षतेः । अत्रोच्यते - न हि भेदस्य शरीरत्वव्यापकत्वं स्वरूपसंबन्धेन विवक्षितम् । येनैवं स्यात् । अपि [तु] स्वसमानाधिकरणभोगावच्छेदकत्वस्वप्रतियोगितावच्छेदकत्वोभयसंबन्धेन, अवच्छेदकता स्वविशिष्टयोगजधर्माद्यजन्यशरीरावच्छिन्नभोगवत्त्वसंबन्धेन । शरीरे स्ववैशिष्ट्यं च स्वभिन्न[त्व]स्वसमानकालीनत्वोभयसंबन्धेन । अतो नोक्तदोषः । एतदेवाभिप्रेत्याह - [९३] **समानकालिके**त्यादि । किं तर्हि जीवलक्षणमित्याशङ्कायामाह - **दीपिकायाम्** [९२] **सुखादिकं जीवलक्षण**मिति । अत्र सुखोपादानं प्राचीनमतमनुसृत्य । अन्यथा नवीनमते उक्तरीत्या ईश्वरेऽतिव्याप्तेः । आदिना दुःखद्वेषयोः परिग्रहः ।

**प्रकाशिकायाम्** [९३] **अन्यथा**-शरीरातिरिक्तस्यात्मत्वे । सिद्धान्ते मनुष्यादिशब्दस्य स्ववृत्तिचेष्टासाधारणकारणयत्नवत्त्वसंबन्धेन

मनुष्यादिशरीरावच्छिन्नात्मपरतया मनुष्योऽहमित्यादिप्रतीत्युपपत्ति-रित्यभिसन्धायोक्तम् [९३] **अभिमान** इति ।

[९४] **यन्मध्यमपरिमाण**मित्यादि । परिमाणे मध्यमत्वं च परमाणुत्वपरमहत्त्वभिन्नत्वम् । तथा चात्मनस्तथात्वे यथादेहं तस्यापि सङ्कोचविकासशालित्वापत्त्या अनित्यत्वप्रसङ्ग इति भावः ।

[९४] **दिगिति** । अयमत्र भावः - यदि च कायव्यूहस्थले शरीरान्तरेऽपि सुखादिसाक्षात्कारोपपत्तये प्रभाप्रसरणमङ्गीक्रियते, तदा अन्यत्रादृष्टस्येह कल्पनमनुपपन्नम्; दृष्टानुरोधेनैव कल्पनस्य सर्वसम्मतत्वात् । एकग्रहवर्तिदीपप्रसरणस्य ग्रहान्तरेऽदृष्टेः । एवं व्यापित्वप्रतिपादकागमोऽपि तत्र प्रमाणमिति ।

**मनोनिरूपणम्**

**दीपिकायाम्** [९८] **स्पर्शरहितत्वे सतीति** । वायावतिव्याप्तिभिया रूपादिरहितत्वोपेक्षणम् । सङ्ग्रहे [९८] **प्रत्यात्मनियतत्वादिति** ।

अत्र केचित् - यावन्तः आत्मानः तावतां मनसां वाच्यत्वात् मनसोऽनन्तत्वमिति विशिष्टार्थः । तल्लाभः कथमिति चेत् इत्थम् - प्रतिपदसमभिव्याहृतमात्मपदं प्रातिस्विकरूपेण तत्तदात्मव्यक्तिपरम् । तन्नियतत्वं च तदन्यासम्बन्धित्वम् तच्च तदन्यसमवेतज्ञानाजनकत्वम् । तथा च स्वजन्यज्ञानाश्रययत्किंचिदात्मभिन्नसमवेतज्ञानाजनकत्वादित्यर्थः । एकैकस्य मनस इति शेषः । ज्ञानज्ञाप्यत्वं पञ्चम्यर्थः अनन्तत्वे अन्वेतीति - तत्तुच्छम् । आत्मशब्दस्यात्मत्वजातिविशिष्टशक्तितया तत्तद्व्यक्तित्वावच्छिन्नपरत्वे तस्य लक्षणाप्रसङ्गात् । आत्मनामनन्तत्वेन विशिष्य दुर्ज्ञेयत्वाच्च ।

वस्तुतस्तु नियतत्वमत्र भेदाश्रयत्वम्; भेदे चात्मनः प्रतिपदसमभिव्याहारबलात् [1]स्वसेत्यादिभेदवत्त्वरूपव्यापकतासंबन्धेन अन्वयः।

1. स्वसेत्यादिभेदवत्त्वेति । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नत्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेनेत्यर्थः ।

स्वाधिकरणता तादात्म्यसंबन्धेन । भेदः स्वभिन्नसमवेतज्ञानजनकत्व-सम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकत्वस्वाश्रयमनोजन्यज्ञानसमवा-यित्व-उभयसंबन्धेन । एवं चात्मपदस्य मुख्यार्थपरतापि सुतरां सङ्ग-च्छते । अत एव **सङ्ग्रहटिप्पण्यामुक्त**मर्थान्तरमपि दूरतोऽपास्तम् । ननु लाघवात् सर्वेषामप्यात्मनां एकमेव मन आस्तामित्यत्राह - [९९] **सर्वात्मनामित्या**दि । ननु मनसोऽणुत्व एव उक्तदोषः स्यात् । न हि वयं तस्**या**णुत्वं स्वीकुर्महे । अपि तु विभुत्वमेव । तथा **च** सर्वात्मनां मनस एकत्वेऽपि सर्वेन्द्रियैरेकदा संयोगसम्भवात् नैकस्य पुंसः ज्ञानदशायां अपरस्य तदनुपपत्तिरित्यभिप्रायेण शङ्कते - **दीपिकायाम्** [९९] **ननु मन** इत्यादिना । [९९] **स्पर्शरहितत्वे सती**त्यादि । पृथिव्यादौ व्यभि-चारवारणाय सत्यन्तम् । गुणादौ व्यभिचारनिरासाय विशेष्यम् । अत्र **च** मनसोऽणुत्वे आनन्त्यं कल्पनीयम् । विभुत्वे तु न तथेति ला-घवमिति तर्कसत्त्वात् नास्यानुमानस्याप्रयोजकत्वमिति भावः । सम-वायेन संयोगं प्रति समवायेन क्रियायाः कारणत्वात् विभुषु च क्रिया-विरहेण नोक्तसंयोगोपपत्तिरित्याशयेनाह - **प्रकाशिकायां** [९९] **विभु-द्वये**ति । [९९] **क्रियादी**त्यादिना संयोगपरिग्रहः । **दीपिकायाम्** [९९] **तदा सुषुप्ति**रिति । इदमत्र बोध्यम् - सुषुप्तिः स्वापः पुरीतन्नाडीप्रदेशा-वच्छिन्नात्मानुयोगिकःमनःप्रतियोगिकसंयोगः न तु तादृशदेशानुयो-गिकमनःप्रतियोगिकसंयोगः । तथा सति 'चैत्रः स्वपिति', 'मैत्रः सुषुप्तः' इत्यादिवाक्यानामप्रामाण्यापातात् । तत्र चैत्रादिपदस्य तत्तच्छरीरा-वच्छिन्नात्मपरतया आत्मनि च तादृशसंयोगविरहात् । कर्तृप्रत्ययस्य चाश्रयत्वबोधकत्वात् । अत एवोक्तम् **व्युत्पत्तिवादटिप्पण्याम् कृष्णम्भ-ट्टेनापि** 'तत्रैकस्मिन् स्वापे निद्रानाड्यवच्छिन्नमनोयोगरूपे' इति । 'धात्वर्थस्वापे निद्रानाड्यवच्छिन्नात्ममनोयोगरूपे' इति च ।

यत्तु - स्वपितीत्यादौ पुरीतत्प्रदेशमनोयोगानुकूलकृतिमानिति बोधवर्णनम् - तदयुक्तम् - स्वापदशायामात्मनि तादृशकृतेरभावात् जीवनयोनिरूपयत्नस्य च प्राणक्रियामात्रहेतुत्वेन तादृशसंयोगानुकूल-

त्वविरहात् इष्टसाधनताज्ञानजन्यतावच्छेदकप्रवृत्तित्वजातेरेवाख्याता-र्थतावच्छेदकतायाः **गदाधरेण** उक्ततया जीवनयोनियत्नस्याख्यातार्थताप्रसक्तेरेवाभावाच्च । यद्यपि तादृशमनोयोगस्य स्वापरूपत्वे मनः स्वपितीत्यादिवाक्यप्रामाण्यापत्तिः, तथाप्यनुयोगिताया एव तत्र प्रत्ययार्थत्वस्वीकारेण तस्याश्च प्रतियोगिन्यनभ्युपगमात् नोक्तापत्तिः । यद्यप्याख्यातादेराश्रयत्वाद्यर्थकताया अप्यन्यत्र क्लृप्तत्वात् तत्तात्पर्येण मनः स्वपिति इत्यादिप्रयोगापत्तिः दुर्वारैव । तथापि कृत्यादावेवाख्यातस्य शक्तिः, आश्रयत्वादौ तु निरूढलक्षणेति सर्वानुमतम् । तत्र स्वपिधातुसमभिव्याहृतप्रत्ययस्यानुयोगित्व एवानादितात्पर्यं कल्प्यते । अतो न दोषः । अथानुयोगित्वादेस्संसर्गतया भानेनैवोपपत्तौ किमाख्यातादेस्तदर्थकतामुपगम्य प्रकारविधया तद्भानस्वीकारेण ? अन्यथा तत्संसर्गस्यापि शाब्दबोधविषयत्वकल्पनापत्त्या गौरवात् । न चैवं चैत्रो न स्वपितीत्यादौ नञर्थाभावान्वयानुपपत्तिः । प्रतियोगितावदनुयोगिताया अपि वृत्त्यनियामकत्वेनाभावप्रतियोगितानवच्छेदकत्वादिति वाच्यम् । वृत्त्यनियामकस्याप्यभावप्रतियोगितावच्छेदकताघटकसम्बन्धत्वोपगमेनादोषात् । न च वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्यातिरिक्तस्य कल्पने गौरवमिति वाच्यम् । तादृशसम्बन्धावच्छिन्नप्रतियोगिताकतदभावस्य तदीयतादृशसम्बन्धाभावसमनियतत्वेन तदभिन्नतया अतिरिक्तकल्पनाविरहात् । न चैवमपि वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगिताकल्पने गौरवमिति वाच्यम् । भवन्मतेऽपि प्रागुक्तगौरवसत्त्वेन साम्यात् । न च राजपुरुषवादोक्तयुक्त्यानुयोगित्वस्य शाब्दबोधे प्रकारत्वमावश्यकमिति वाच्यम्। तादृशयुक्तीनां **विस्तरेणान्यत्रास्माभिर्निरस्तत्वात्** । स्वपितीत्येतावन्मात्रस्य बोधकत्वोपपत्तये आख्यातादेरनुयोगितार्थकताया आवश्यकत्वात्। यद्यपि चैत्रः स्वपितीत्यादौ अनुयोगितायाः पदार्थत्वेऽपि शाब्दबोधे संसर्गतया भाने न कोऽपि दोषः । तथापि तात्पर्यार्थविशेषानुरोधेन तत्संसर्गको वा तत्प्रकारको वा बोधो भवत्विति न तत्रास्माकमाग्रहः ।

चैत्रो जानातीत्यादावप्येवमेव बोध्यम् । एवं भवन्मते पुरीतत् स्वपितीत्यादिप्रयोगस्य प्रामाण्यं दुर्वारम् । अस्मन्मते तु नेति **मदेकपरिशीलितः पन्थाः** ।

[९८] **सुखाद्युपलब्धिसाधनमिन्द्रियं मन** इति **सङ्ग्रहः** । अत्र च घटाद्युपलब्धिसाधनीभूतचक्षुरादिनिरासाय सुखादीति । आत्मन्यतिव्याप्तिवारणाय विशेष्यम् । यदि च तादृशोपलब्धिसाधनत्वं तादृशोपलब्धिनिष्ठानुभवत्वव्याप्यधर्मावच्छिन्नजन्यतानिरूपितजनकत्वम्, अन्यथा कालविधया तज्जनके चक्षुरादावतिव्याप्तेः । तथा च नात्मन्यतिव्याप्तिरिति इन्द्रियत्वविशेषणं व्यर्थमिति विभाव्यते, तदाप्याह - **प्रकाशिकायाम् आत्ममनोयोगादी**ति । आदिपदेन सुखादिपरिग्रहः । तथा च सुखादिमानसत्वावच्छिन्नं प्रति मनसः करणता निर्वाहार्थं आत्ममनोयोगस्यात्मसमवेतयोग्यविशेषणत्वेन सुखादेर्वा व्यापरताकल्पनस्यावश्यकतया तद्वारणाय तत्सार्थक्यमिति भावः । [९९] **अणुत्वसिद्धि**रिति । इदमत्र प्रमाणाभिमतम् 'मनः अणुत्वतदभावान्यतरवत् प्रमेयत्वात्' इत्यनुमानं मनसोऽनणुत्वे उक्तरीत्या सुषुप्त्यनुपपत्तिरिति तर्कसहकृतमिति ।

### रूपनिरूपणम्

[१००] **चक्षुर्मात्रग्राह्यो गुणो रूपमिति संग्रह**वाक्यम् । अत्र च **चक्षुर्मात्रग्राह्य** इत्यनेन चक्षुर्विशिष्टधर्माश्रयग्राह्य इति बोधः । वैशिष्ट्यं च लौकिकप्रत्यासत्त्या स्वग्राह्यरूपग्राहकेन्द्रियवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वचक्षुष्ट्वनिष्ठाधेयत्वोभयसम्बन्धेन । **अधिकम् अन्यत्र प्रपञ्चितं अस्माभिः** । **प्रकाशिकायाम्** [१०१] **न रूपे सम्भवती**ति । रूपस्यात्ममनोग्राह्यत्वादिति भावः । [१०१] **तथापि त्वगिन्द्रिये**ति । यद्यपि चक्षुरितरनिरूपितज्ञानत्वानवच्छिन्नजन्यताश्रयज्ञानीयलौकिकविषयताशून्यत्वरूपचक्षुरितराग्राह्यत्वविवक्षणे न दोषः । तथापि त्वगादेः चाक्षुष-

प्रत्यक्षं प्रति कालादिविधया जनकतामादायासम्भववारणाय जनकतायां कालत्वाद्यनवच्छिन्नत्वस्य वा जन्यतायामेव वा ज्ञानत्वव्याप्यधर्मावच्छिन्नत्वस्य वा विवक्षणीयतया चक्षुस्संयुक्तसमवायमादायासम्भववारणाय चक्षुरितरस्य द्रव्यत्वेन विशेषणीयतया च गौरवमित्यालोच्य तत्परित्यागः । [१०१] **त्वग्ग्राह्यत्वे**त्यादि । त्वाचनिरूपितलौकिकविषयताशून्यत्वं चाक्षुषनिरूपितलौकिकविषयतावत्वं च जातिविशेषणमत्र वक्तव्यम् । तेन त्वाचप्रत्यक्षे रूपत्वस्योपनयमर्यादया भानेऽपि त्वचश्च कालविधया रूपचाक्षुषज्ञानजनकत्वेऽपि न क्षतिः । एवं गुरुत्वादेः चाक्षुषे उपनयमर्यादया भानेऽपि नातिव्याप्तिः । अत्र रसादिवारणाय चाक्षुषेति । प्रभादिवारणाय गुणविभाजकेति । गुणत्वव्याप्येत्यर्थः । ननु प्रभाभित्तिसंयोगेऽतिव्याप्तिवारणाय गुणपदमेव विशेषगुणपरं किं नोक्तमित्यशङ्कायाम् आह- [१०१] **अत एवे**त्यादि । तथा च दर्शितातिव्याप्तिवारणाय चक्षुर्मात्रग्राह्यसांसिद्धिकद्रवत्वविशेषेऽतिव्याप्तिनिरासाय च जातिघटितपरिष्कारस्यावश्यकतया त्वगग्राह्यत्वादेः तद्विशेषणतयैवोपपत्तौ लक्षणे विशेषत्वनिवेशनं गौरवावहमिति भावः ।

**दीपिकायाम्** [ १०० ] **अव्याप्यवृत्तिनीलादी**ति । अत्राव्याप्तिवृत्तित्वविशेषणं परस्परवैयधिकरण्याशङ्कानिरासाय दैशिकाव्याप्यवृत्तित्वमिह विवक्षितम् । तच्च [1]स्वप्रतियोगित्वस्वाधिकरणनिरूपितकिंचिद्देशावच्छिन्नाधेयत्वोभयसंबन्धेनाभावविशिष्टत्वम् । ननु [१००] **रूपस्य व्याप्यवृत्तित्वनियमादिति दीपिकोक्ति**रसङ्गता । उत्पन्नं द्रव्यमिति न्यायेन रूपादीनां कालिकाव्याप्यवृत्तित्वस्यावश्यकत्वादित्यत आह - **प्रकाशिकायाम्** [१०१] **व्याप्यवृत्तित्वेति । दैशिकव्याप्यवृत्तित्वेत्यर्थ इति** । दैशिकव्याप्यवृत्तित्वं च पूर्वोक्तोभयसम्बन्धेनाभावविशिष्टान्य-

---

1. **स्वप्रतियोगित्वेत्यादि । स्वं कपिसंयोगाभावः तत्प्रतियोगित्वं कपिसंयोगे, एवं स्वं कपिसंयोगाभावः तदधिकरणं वृक्षः तन्निरूपिताग्रदेशावच्छिन्नवृत्तित्वं कपिसंयोगेऽस्तीति समन्वयः ।**

त्वम् । [1]अत्र च नीलादिसमुदायः चित्ररूपमिति प्रतीतिविषयत्वतदभावान्यतरवान् प्रमेयत्वादित्यनुमानं नीलादिसमुदायो यदि प्रतीतिविषयः स्यात् तर्ह्यव्याप्यवृत्तिः स्यादिति तर्कसहकृतं प्रमाणं वाच्यम् । तत्र रूपस्य व्याप्यवृत्तित्वनियमे विप्रतिपन्नं प्रति दूषणान्तरमाह - [१०१] **इदमुपलक्षणमि**त्यादिना । एवं च दर्शितगौरवज्ञानसहकृत मुक्तानुमानमेव चित्ररूपस्यातिरिक्तत्वे प्रमाणमिति भावः । प्रागभावादीत्यादिना ध्वंसपरिग्रहः । ननु चित्रपटे रूपवत्ताप्रतीतेः [2]सामानाधिकरण्यसम्बन्धेनावयवरूपमादायोपपत्तेः अतिरिक्तचित्ररूपं नोपेयते । परस्परविरोधेन व्याप्यवृत्तिनीलादिसमुदायोऽपि न तत्रोत्पत्तुमर्हतीति आशङ्कते [१००] **ननु चित्रे**त्यादिना **दीपिकायाम्** । सामानाधिकरण्येन तत्र रूपसत्त्वादाह - **प्रकाशिकायाम्** [१०१] **समवायेनेत्यादि**रिति । [3]समवेतत्वीयसम्बन्धस्य स्वरूपस्य कारणतावच्छेदकत्वाकल्पनया लाघवमभिसन्धायाह - [१०१] **स्वाश्रयसमवेतत्वसम्बन्धेन रूपमि**ति । ज्ञानगतप्रत्यक्षत्वजातौ प्रयोजकत्वासम्भवादाह - [१०१] **प्रत्यक्षविषयत्वे**ति । ननु द्रव्यवृत्तिलौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति समवायेन रूपस्य कारणत्वे चित्रपटस्थलेऽतिरिक्तरूपतत्प्रागभावतद्ध्वंसानां कल्पनया महागौरवमिति तदपेक्षया स्वाश्रयसमवेतत्वसम्बन्धेनैव रूपस्य कारणत्वमुचितमित्यतो दूषणान्तरमाह - [१०१] **चित्रावयवावयवके**त्यादिना । **दीपिकायाम्** [१०१] **तस्मात् पटस्ये**त्यादि । अयमत्र भावः — अयं पटः रूपतदभावान्यतर-

---

1. अत्र चेति । नीलादिसमुदायस्य चित्ररूपत्वाभाव इत्यर्थः । यद्वा रूपस्य व्याप्यवृत्तित्व इत्यर्थः । अथवा चित्ररूपस्यातिरिक्तत्व इत्यर्थः ।

2. सामानाधिकरण्यसंबन्धेनेति । स्वाधिकरणवृत्तित्वसंबन्धेनेत्यर्थः । स्वं अवयवतन्तुरूपं तदधिकरणं तन्तवः तद्वृत्तित्वं पटस्येति तेन संबन्धेन पटस्य तन्तुरूपवत्त्वम् ।

3. समवेतत्वीयेति । रूपवत्समवेतत्वस्य प्रत्यक्षत्वप्रयोजकत्वे तस्य स्वरूपसंबन्धेनैव प्रयोजकत्वं वाच्यमिति समवेतत्वप्रतियोगिकस्वरूपसंबन्धस्य कारणतावच्छेदकसंबन्धत्वं वक्तव्यम् । स्वाश्रयसमवेतत्वसंबन्धेन रूपस्य कारणत्वे तु समवेतत्वमेव कारणतावच्छेदकसंबन्धः न तु तदीयस्वरूपमिति लाघवमिति । कारणतावच्छेदकधर्मलाघवमप्यत्र बोध्यम् ।

वान् प्रमेयत्वादित्यनुमानेन यद्ययं रूपशून्यः स्यात् तर्ह्यप्रत्यक्षः स्यादिति तर्कसहकृतेन सिद्धं रूपं पूर्वोक्तयुक्त्या अतिरिक्तत्वसिद्धेः चित्ररूपमिति व्यवह्रियत इति । चित्ररसासिद्धौ हेतुमाह - [१०१] **द्रव्यलौकिके**त्यादि । तथा चायं रसतदभावान्यतरवान् प्रमेयत्वादित्यनुमानमनुकूलतर्कविरहादप्रयोजकमिति भावः । अत्र च नानारसवदवयवद्वयारब्धे वस्तुनि अत्र रस इति प्रतीत्युपपत्तये चित्ररसाङ्गीकार आवश्यक इति त्वनाशङ्कनीयम् । तत्रावयवरसस्यैव [1]सामानाधिकरण्येन भानाभ्युपगमात् । यत्र च नानारसवत्परमाणुद्वयारब्धद्वयणुकादिक्रमेण महावयविपर्यन्तं उत्पन्नं तत्र रसप्रतीतिर्नोपेयत एव । धर्मिणः रासनप्रत्यक्षे उपनयमर्यादयैव भानाभ्युपगमात् । परमाणुरसस्यापि विशेष्यविधयाऽलौकिकप्रत्यक्षासम्भवात् । उपनीतं विशेषणतयैवेति नैयायिकसिद्धान्तादिति । वस्तुतस्तु रसस्य व्याप्यवृत्तित्वनियमे प्रमाणाभावात् देशभेदावच्छेदेन एकस्मिन्नेव वस्तुनि नानारसोत्पत्तिसम्भवात् समवायेनात्र रस इति प्रतीतेः प्रमारूपाया नानुपपत्तिः । सर्वमिदमभिसन्धायोक्तम् [१०१] **सङ्क्षेप** इति ।

### रसनिरूपणम्

ननु [१०३] **रसनग्राह्यो गुणो रस** इति लक्षणवाक्ये परमाणुरसेऽव्याप्तिः । रसनग्राह्यजातिमत्त्वविवक्षायामपि सत्तादिकमादाय रूपादावतिव्याप्तिरत आह - [१०४] **रसने**त्यादि । [१०४] **गुणविभाजके**ति । [2]गुणत्वन्यूनवृत्तित्वं विवक्षितम् ।

### स्पर्शनिरूपणम्

ननु त्वगिन्द्रियमात्रग्राह्य इत्यादिलक्षणेऽसम्भवः । स्पर्शस्य त्वगितरात्मादिग्राह्यत्वात् । एवं परमाणुस्पर्शेऽव्याप्तिः । त्वगग्राह्य-

---

1. सामानाधिकरण्येनेति । स्वाश्रयसमवेतत्वसंबन्धेनेत्यर्थः ।

2. ननु गुणविभाजकत्वं गुणत्वव्याप्यत्वम्, तच्च गुणत्वस्याप्यक्षतमिति तदादाय रूपादावतिव्याप्तिरित्यत आह - गुणत्वन्यूनवृत्तित्वं विवक्षितमिति । गुणत्वन्यूनवृत्तित्वं च गुणत्वसमानाधिकरणत्वे सति गुणत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वम् । तच्च गुणत्वस्य नास्तीति भावः ।

त्वात् इत्यत आह - [१०५] **चक्षुरग्राह्ये**त्यादि । चक्षुरग्राह्यत्वं च चाक्षुषनिरूपितलौकिकविषयताशून्यत्वम् । त्वगिन्द्रियग्राह्यत्वं च त्वाचनिरूपितलौकिकविषयतावत्त्वम् । नातः [1]पूर्ववद्दोषः । गुणविभाजकत्वं च वायुप्रत्यक्षतावादिनवीनमते वायुत्वजातिमादाय वायावतिव्याप्तिवारणाय उपात्तम् ।

### पाकप्रक्रियानिरूपणम्

[१०६] **परावृत्त्यादी**त्यादिना रूपान्तरपरिग्रहः । ननु [१०५] **आमनिक्षिप्ते घट** इति **दीपिका**वाक्ये सप्तम्यन्तघटपदस्योत्तरत्रान्वयासम्भवात् असङ्गतिरित्यतो योजनामाह – [१०६] **घटे आमनिक्षिप्ते सती**ति । तथा च घटपदोत्तरसप्तम्या आमसंयोगोऽर्थः । तस्य चोत्तरकालीनत्वसंबन्धेन श्यामघटनाशे अन्वय इति भावः ।

ननु परमाणुषु रूपोत्पत्तौ श्यामघटनाश इति **दीपिका**वाक्यात् श्यामघटनाशे परमाणुनिष्ठरूपोत्पत्त्युत्तरकालीनत्वं लभ्यते । तच्चायुक्तम् - अवयविनाशानन्तरमेव परमाणुषु रूपान्तरोत्पत्तेः वैशेषिकैः स्वीकारात् अतो योजनया अन्वयमाह – [१०६] **श्यामघटनाश** इत्यादि । जात इति शेषः । तथा च नाशपदोत्तरसप्तम्याः उत्पत्तिरर्थः । तस्याश्चोत्तरकालीनत्वसम्बन्धेन रूपान्तरोत्पत्तावन्वय इति भावः । [१०६] **स्वतन्त्रेष्वि**ति । विशकलितेष्वित्यर्थः । आरम्भकसंयोगरहितेष्विति यावत् । [१०६] **अपरावयवी**ति । पूर्वविनष्टावयविव्यतिरिक्तावयवीत्यर्थः । [१०६] **अत एवे**ति । अवयविन्यपि परमाणुवत् पाकाङ्गीकारादेवेत्यर्थः । ननु सोऽयं घट इति प्रत्यभिज्ञा साजात्यमवलम्बते । निर्वापितारोपितदीपे सेयं दीपज्वालेति प्रत्यभिज्ञावत् न त्वेकस्या एव व्यक्तेः कालद्वयसम्बन्धम् । अतो न विरोध इत्यतो दूषणान्तरमाह - [१०५] **अनन्तावयवी**त्यादि । नाशादीत्यादिना प्रागभावपरिग्रहः । [१०७] **वारणसम्भवादि**ति । वैजात्यस्याव-

1. **पूर्ववद्दोष इति । चाक्षुषे उपनयमर्यादया स्पर्शत्वस्य, त्वाचे गुरुत्वस्योपनयमर्यादया भानेऽपि नासम्भवः अतिव्याप्तिर्वेत्यर्थः ।**

यवरूपाजन्यावयविरूपव्यावृत्तत्वादिति भावः। [१०७]**यथायोग्यमि**ति। तथा च रूपादिचतुष्टयपदं तादृशचतुष्टयान्यतमपरमिति भावः।

ननु उद्भूतत्वस्य जातिरूपताया इन्द्रियलक्षणावसरे निरस्तत्वात् अत्र च जातिरूपत्वोक्तेः पूर्वोत्तरग्रन्थविरोध इत्याशङ्क्य मतभेदनोभयग्रन्थसङ्गतिरिति तस्य जातिरूपत्वमेवेत्याह - [१०७] **उद्भूतत्वं जाति**रित्यादिना। **गुणगते**ति। गुणघटितेत्यर्थः। [१०७] **न दोषः** - न पूर्वोत्तरग्रन्थविरोध इत्यर्थः। अयं भावः - साङ्कर्यस्य जातिबाधकतायां प्रमाणभूते धर्मशास्त्रे द्रव्यगतसांकर्यस्यैव जातिबाधकत्वोक्तेः। स्वाधिकरणद्रव्यवृत्तित्वस्वाभावाधिकरणद्रव्यवृत्तित्वस्वाधिकरणद्रव्यवृत्त्यभावप्रतियोगित्वत्रितयसंबन्धेन जातिविशिष्टत्वरूपद्रव्यघटितजातिसाङ्कर्यस्यैव जातित्वाभावव्याप्यताया उपगमेन जातिबाधकत्वं स्वीक्रियते। न तु गुणादिसाधारणस्वाधिकरणघटितजातिसाङ्कर्यस्येति।

वस्तुतस्तु प्रागुक्तसम्बन्धेन द्रव्यत्वव्याप्यजातिविशिष्टत्वमेव जातित्वाभावव्याप्यमित्युपगमात् गुणत्वव्याप्यजातिवैशिष्टयस्य चातथाभूतस्य न जातिबाधकत्वमिति ध्येयम्। जातिसाङ्कर्यसामान्यस्यैव जातिबाधकत्वमभ्युपेत्य प्रकृतग्रन्थमुपपादयतां मतमाह - **केचित्त्वि**ति। **आहु**रित्यनेनास्वरसः सूचितः। तद्बीजन्तूद्भूतत्वस्य तत्तदनुद्भूतत्वाभावकूटरूपत्वे तस्य गगनादिसंयोगसाधारणतया गगनादिप्रत्यक्षभिया प्रत्यक्षप्रयोजकत्वासम्भवात् उद्भूतत्वं प्रत्यक्षप्रयोजकमिति**दीपिका**-ग्रन्थासङ्गतिरिति।

### परिमाणनिरूपणम्

[१०८] **भावप्रधान** इति। भावः प्रधानं मुख्यविशेष्यः यस्मिन्निति व्युत्पत्त्या धर्मनिष्ठमुख्यतानिरूपकत्वं भावप्रधानत्वम्, निरूपकत्वं च ज्ञानद्वारकम्, एवं चाणुमहदादिशब्दः **सङ्ग्रह**वाक्यस्थः अणुत्वमहत्वादिकं लक्षणया बोधयतीति भावः।

[११०] **साधारणकारणत्वेन** - कार्यत्वावच्छिन्नकार्यतानिरूपितकारणत्वेन। ननु **स्वात्यन्ताभावसमानाधिकरणत्वमव्याप्यवृत्तित्वमिति दीपिका**वाक्ये स्वपदस्य यत्राव्याप्यवृत्तित्वं स्थाप्यम् तद्व्यक्तिपरताया आवश्यकतया संयोगादिव्यक्तीनामानन्त्यात् एकव्यक्त्युपादानेऽपरव्यक्त्यसंग्रहः। स्वात्यन्ताभावसमानाधिकरणं यद्यत्स्वं तावदन्यतमत्वं तु सर्वज्ञेनैव ज्ञेयम्, महागौरवं च, अतो निष्कृष्टार्थमाह – [११०] **स्वप्रतियोगित्वे**त्यादि। यद्यपि स्वात्यन्ताभावसमानाधिकरणत्वतादात्म्योभयसंबन्धेन प्रमेयविशिष्टत्वमनुगतम्,तथापि तादात्म्यादिरूपाधिकपदार्थनिवेशात् गौरवमिति तदुपेक्षितम्। अथात्र संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताक-घटत्वाद्यभावाद्यधिकरणे समवायादिना घटत्वादेस्सत्त्वात् तत्रातिव्याप्तिः। न च तत्सम्बन्धावच्छिन्नप्रतियोगिताकतदभावाधिकरणे तत्सम्बन्धेनाधेयत्वस्य विवक्षया न दोष इति वाच्यम्। यत्त्वतत्त्वाननुगमेन लक्षणस्य तत्तद्व्यक्तिविश्रमापातात्।

न चाभावविशिष्टत्वं तत्, वैशिष्ट्यं च स्वप्रतियोगित्वस्वविशिष्टाधेयत्वोभयसंबन्धेन। आधेयतायां स्ववैशिष्ट्यं स्वप्रतियोगितावच्छेदकसम्बन्धावच्छिन्नत्वस्वाधिकरणनिरूपितत्वोभयसंबन्धेन। अतो नाननुगम इति वाच्यम्, एवमपि संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकघटत्वाद्यभावस्याव्याप्यवृत्तिताप्रसङ्गात्। स्वस्य संयोगादिना योऽभावः तदीयपूर्वक्षणादिवृत्तित्वविशिष्टस्वाभावनिष्ठप्रतियोगितावच्छेदकस्वरूपसंबन्धेन पटादौ तत्सत्त्वात्।

न च स्वस्मिन् स्वाभावीयं यत्प्रतियोगित्वं तदवच्छेदकसंबन्धेन स्वाभावाधिकरणवृत्तित्वनिवेशात् नायं दोषः इति वाच्यम्। यत्त्वतत्त्वाननुगमस्य दुर्वारत्वात्।

न च अधिकरणताविशिष्टत्वं तत्, वैशिष्ट्यं च स्वाश्रयाश्रयत्वस्वविशिष्टाधेयत्वोभयसंबन्धेन। आधेयतायां स्ववैशिष्ट्यं च स्व-

निरूपकाभावाधिकरणनिरूपितत्वस्वाश्रयावच्छेदकसंबन्धावच्छिन्नत्वो-भयसंबन्धेन। अधिकरणता च स्वनिरूपितप्रतियोगितात्वसम्बन्धाव-च्छिन्ना। अतो न कोऽपि दोषः। यद्वा प्रतियोगिताविशिष्टत्वं तत्, वैशिष्टचं च स्वाश्रयत्वस्वविशिष्टाधेयत्वोभयसंबन्धेन। स्ववै-शिष्टचं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वनिरूपकाभावाधिकरण-निरूपितत्वोभयसम्बन्धेनेति वाच्यम्।

एवमपि द्रव्यान्यत्वविशिष्टसत्ताभावादावतिव्याप्तेः। तदभाव-रूपविशिष्टसत्तायाः शुद्धसत्तानतिरिक्ततया तदधिकरणे घटादौ तत्स-त्त्वात्। न चाभावत्वविशिष्टत्वं अधिकरणताविशिष्टत्वं वा तत्। प्रथमे वैशिष्टचं च स्वनिरूपितप्रतियोगित्वस्वविशिष्टाधेयत्वोभयसम्ब-न्धेन। स्ववैशिष्टचं च स्वावच्छिन्नाधिकरणनिरूपितत्वस्वनिरूपितप्र-तियोगितावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन। द्वितीये अधि-करणता स्वनिरूपितप्रतियोगितात्वसम्बन्धेन। वैशिष्टचं च स्वा-श्रयाश्रयत्वस्वविशिष्टाधेयत्वोभयसम्बन्धेन। स्ववैशिष्टचं च स्वनि-रूपकाभावत्वावच्छिन्नाधिकरणनिरूपितत्वस्वाश्रयावच्छेदकसम्बन्धाव-च्छिन्नत्वोभयसम्बन्धेन। अतो न दोषः। अत्र द्रव्यान्यत्वविशिष्टसत्ता-भावो नास्तीत्यप्रत्ययात् गुणादौ तादृशसत्ताभावाभावत्वेन वृत्त्यनुपग-मादिति वाच्यम्। एवमप्यभावत्वस्यानुगताखण्डोपाधिरूपताया अन्यत्र व्यवस्थापितत्वेन तस्य सर्वत्राभिन्नतया तद्दोषतादवस्थ्यात्।

अत्रोच्यते - अधिकरणताविशिष्टत्वमव्याप्यवृत्तित्वम्। अधि-करणता च स्वविशिष्टप्रतियोगितात्वसम्बन्धेन। स्ववैशिष्टचं च स्वविशिष्टाभावनिरूपितत्वस्वनिरूपित - किंचिद्धर्मावच्छिन्नप्रकारता-निरूपितसंसर्गत्वोभयसम्बन्धेन। अभावे स्ववैशिष्टचं च स्वाश्रयत्व-[1]स्वसेत्यादिभेदवत्त्वोभयसम्बन्धेन। स्वाधिकरणता च स्वावच्छेदकता-

---

1. स्वसेत्यादिभेदवत्त्वेति। स्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छि-न्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वेत्यर्थः।

सम्बन्धेन । भेदप्रतियोगितावच्छेदकता च आधेयतासम्बन्धेन । अधिकरणताविशिष्टत्वं स्वाश्रयाश्रयत्वस्वविशिष्टाधेयत्वोभयसम्बन्धेन । स्ववैशिष्टचं च स्वाश्रयावच्छेदकसम्बन्धावच्छिन्नत्वस्वविशिष्टाधिकरणनिरूपितत्वोभयसम्बन्धेन । अधिकरणे स्ववैशिष्टचं च स्वसेत्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणत्वं च स्वनिरूपकविषयतावच्छेदकतासम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वरूपसम्बन्धावच्छिन्नाधेयतावच्छेदकतासम्बन्धेन । यद्यपि कालिकसम्बन्धेन घटत्वाभावादिविशिष्टस्य ध्वंसस्य घटादौ सम्भवात् अतिप्रसङ्गः, तथापि स्वविशिष्टाधिकरणनिरूपितत्वस्थाने स्वविशिष्टाधिकरणतावन्निरूपितत्वं निवेश्यम् । स्ववैशिष्टचं च स्वावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वस्वसेत्यादिभेदवत्त्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वविशिष्टावच्छेदकतासम्बन्धेन । वैशिष्टचं च स्वाश्रयनिरूपितस्वरूपसम्बन्धावच्छिन्नाधेयत्वनिरूपितत्वस्वनिरूपकविषयतावच्छेदकतावच्छेदकसम्बन्धावच्छिन्नत्वोभयसम्बन्धेन ।

वस्तुतस्तु [1]प्रतियोगिताविशिष्टत्वमव्याप्यवृत्तित्वम् । वैशिष्टचं च स्वाश्रयत्वस्वविशिष्टाधेयत्वोभयसम्बन्धेन । स्ववैशिष्टचं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपकाभावाधिकरणनिरूपितत्वत्रितयसम्बन्धेन । [2]तेन विशिष्टसत्त्वस्य नाव्याप्यवृत्तित्वमिति ध्येयम् ।

---

1. प्रतियोगिताविशिष्टत्वमित्यादि । प्रतियोगिता कपिसंयोगनिष्ठा तद्विशिष्टत्वं कपिसंयोगे स्वाश्रयत्वसंबन्धेनास्ति, कपिसंयोगस्य प्रतियोगिताश्रयत्वात् । एवं प्रतियोगितावच्छेदकसमवायसंबन्धावच्छिन्ना प्रतियोगितावच्छेदककपिसंयोगत्वावच्छिन्ना प्रतियोगितानिरूपककपिसंयोगाभावाधिकरणवृक्षनिरूपिता च कपिसंयोगनिष्ठाधेयता भवति इति त्रितयसंबन्धेन प्रतियोगिताविशिष्टमाधेयत्वं च कपिसंयोगेऽस्तीति कपिसंयोगस्याव्याप्यवृत्तित्वम् ।

2 तेन विशिष्टसत्त्वस्येति । विशिष्टसत्तानिष्ठायाः विशिष्टसत्तानिष्ठप्रतियोगितानिरूपकाभावाधिकरणगुणनिरूपिताधेयतायाः प्रतियोगितावच्छेदकविशिष्टसत्तात्वावच्छिन्नत्वविरहात् उक्तत्रितयसम्बन्धेन प्रतियोगिताविशिष्टत्वाभावादिति भावः

[१११]**केचिदि**त्यस्वरसस्सूचितः। तद्बीजन्तु जन्यमात्रस्य कालत्वपक्षे जन्यरूपादावतिव्याप्तिरिति। **परे त्वि**त्यादि।अत्र चावच्छिन्नान्तेन जन्यताविशेषणेन घटितमेकं लक्षणम्। समवायसम्बन्धावच्छिन्नत्वेन कारणताविशेषणेन घटितमपरं लक्षणम् इति विवेकः। अन्यथा एकत्र लक्षणे उभयनिवेशने प्रयोजनाभावात्। तत्तद्ध्वंसव्यक्तित्वावच्छिन्नं प्रति तादात्म्येन तत्तत्प्रतियोगिव्यक्तेः कारणतयैव संयोगा[द्य](दि)तिव्याप्तिवारणादिति बोध्यम्।

ननु कार्यसामान्यं प्रति तादात्म्येन हेतुभूते कालादौ अतिव्याप्तिविरहात् गुणपदवैयर्थ्यमित्याशङ्कां तस्य दर्शितार्थतात्पर्यग्राहकत्वोपगमेन परिहरति - [१११] **एतत्तात्पर्ये**ति।

परत्वापरत्वनिरूपणम्

ननु परापरव्यवहारासाधारणकारणे परत्वापरत्वे इति **सङ्ग्रह**वाक्यात् उभयव्यवहारासाधारणकारणत्वमुभयलक्षणमिति लभ्यते। तच्चासम्भवि, परत्वादेः प्रत्येकमपरव्यवहाराद्यसाधारणकारणत्वविरहात्, अतो व्याचष्टे - [११२] **दीपिकायां परव्यवहारे**त्यादि। असमवायिकारणत्वमात्रस्य गुरुत्वलक्षणत्वे तन्तुद्वयसंयोगादावतिव्याप्तिः। पतनकारणत्वस्य तथात्वेऽपि आश्रयतया पतनसमवायिकारणे फलादावतिव्याप्तिः स्फुटैवेत्यालोच्याद्यपदस्य कृत्यमाह - [११३] **द्वितीयादी**ति। नन्वाद्यत्वमिहादौ भवमिति व्युत्पत्त्या पूर्वकालोत्पन्नत्वं, तच्च द्वितीयादिपतनस्यापि तृतीयादिपतनपूर्वकालोत्पन्नतया अक्षतमिति कथं तद्वारणसम्भव इत्यत आद्यत्वमन्यादृशं निर्वक्ति - [१११] **प्रकाशिकायाम् आद्यत्वमिहे**ति। **स्वसमानाधिकरणे**त्यादि। अथात्र स्वपदमनुयोगिपरम् वा प्रतियोगिपरम् वा। नाद्यः, आद्यपतनव्यक्तीनामानन्त्यात्। तेनैकोपादाने इतरासङ्ग्रहात्। स्वसमानाधिकरणपतनप्रतियोगिकध्वंसासमानकालीनं यद्यत्त्वं तावदन्यतमत्त्वं तु असर्वज्ञदुर्ज्ञेयम्। अन्यतमत्त्वघटकभेदानां मिथो विशे-

षणविशेष्यभावे विनिगमनाविरहश्च । नाप्युत्तरः, तादृशयत्किंचिदेकपतनव्यक्तिभेदस्य द्वितीयादिपतनसाधारणत्वात् । तादृशं यद्यत्त्वं तत्तद्व्यक्तित्वावच्छिन्नभेदकूटवत्त्वस्य तावदन्यतमत्वावच्छिन्नभेदवत्त्वस्य वा प्रागुक्तदोषदूषितत्वात् ।

अत्रोच्यते - [1]तादात्म्यस्वसमानाधिकरणपतनप्रतियोगिकध्वंससमानकालीनत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन पतनविशिष्टत्वमाद्यत्वमिति अनुयोगिनि स्वत्वान्तर्भावे स्थूलानुगमः । [2]स्वसमानाधिकरणपतनध्वंससमानकालीनत्वसम्बन्धावच्छिन्नस्वप्रतियोगितावच्छेदकत्वाश्रयत्वोभयसंबन्धेनभेदविशिष्टत्वमिति सूक्ष्मानुगमः । [3]प्रतियोगिनि स्वत्वादरे तु स्वसमानाधिकरणपतनध्वंससमानकालिकत्वतादात्म्योभयसंबन्धेन पतनविशिष्टान्यत्वमिति स्थूलानुगमः । [4]स्वसमानकालीकत्वस्वसमानाधिकरणपतनप्रतियोगिकत्वसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्धेन ध्वंसविशिष्टा-

---

1. तादात्म्येत्यादि । स्वं प्रथमपतनं तत्समानाधिकरणम् यत् द्वितीयपतनं तद्ध्वंससमानकालिकत्वं प्रथमपतने नास्तीति तादृशसमानकालिकत्वसम्बन्धेन स्ववच्छिन्नत्वस्य स्वतादात्म्यस्य च प्रथमपतने सत्वात् तस्य आद्यत्वोपपत्तिः ।

2. स्वसमानाधिकरणेत्यादि । प्रथमस्वशब्दः आद्यपतनपरः । द्वितीयस्वशब्दः आद्यपतनवच्छेदपरः । आद्यपतनसमानाधिकरणं यत् द्वितीयपतनं तत्प्रतियोगिकध्वंससमानकालिकत्वसम्बन्धेन यः आद्यपतनवच्छेदः तदाश्रयत्वं तत्प्रतियोगितावच्छेदकत्वं चाद्यपतनेऽस्तीति समन्वयः ।

3. प्रतियोगिनीत्यादि । स्वं द्वितीयपतनं तत्समानाधिकरणं यत् प्रथमपतनं तद्ध्वंससमानकालिकत्वं तादात्म्यं च द्वितीयपतनेऽस्तीति उक्तोभयसम्बन्धेन द्वितीयपतनविशिष्टं तदेव, तदन्यत्वं प्रथमपतनेऽस्तीति समन्वयो बोध्यः ।

4. स्वसमानकालिकत्वेत्यादि । ध्वंसपदेन प्रथमपतनध्वंसो ग्राह्यः । तद्विशिष्टत्वं द्वितीयपतने तदन्यत्वं प्रथमपतन इति समन्वयो वाच्यः । तथाहि - प्रथमस्वपदं प्रथमपतनध्वंसपरम् । तादृशध्वंससमानकालिकत्वं द्वितीयपतनेऽस्ति । द्वितीयस्वपदं द्वितीयपतनपरम् । द्वितीयपतनं हि स्वसमानाधिकरणपतनप्रतियोगिकत्वसम्बन्धेन प्रथमपतनध्वंसेऽस्ति इति द्वितीयपतननिष्ठा प्रथमपतनध्वंसनिरूपिता आधेयता स्वसमानाधिकरणपतनप्रतियोगिकत्वसम्बन्धावच्छिन्ना भवति । तथा च तादृशाधेयतासम्बन्धेन प्रथमपतनध्वंसविशिष्टं द्वितीयपतनं तदन्यत्वमाद्यपतने इति बोध्यम् ।

न्यत्वमिति सूक्ष्मानुगमः । तादृशाधेयःवस्थाने [1]स्वप्रतियोगिपतनसमानाधिकरणत्वं वा निवेश्यमिति न कोऽपि दोषः। एवमन्यत्रापि। यद्यपि वृक्षात् सौधे पतितस्य फलादेः सौधात्पतनदशायां तत्र निरुक्तमाद्यत्वमसम्भवि । तथापि तत्र सौधावधिकपतनं तादृशफलादिगतम् न तावत् सामान्यत आद्यम् , परन्तु सौधावधिकपतनेषु प्राथमिकपतनस्याद्यत्वं सम्भवति । तच्च स्वसमानाधिकरणसौधावधिकपतनध्वंसासमानकालीनत्वादिरूपमित्यवधिविशेषघटितमाद्यत्वं वाच्यम् । एवं च वृक्षावधिकपतनस्य स्वसमानाधिकरणवृक्षावधिकपतनप्रागभावासमानकालीनत्वादिरूपं अवधिविशेषघटितमेव चरमत्वं निर्वाच्यम् । **प्रकाशिकोक्त**मवधिविशेषाघटितमाद्यत्वन्तु सम्भवस्थलाभिप्रायेणेत्यवधेयम् ।

### शब्दनिरूपणम्

**दीपिकायाम्** [११३] **गुणपदमिति** । न चैवमदृष्टवारणाय पिण्डीभावासाधारणकारणत्वस्य विवक्षणीयतया गुणपदमिति व्यर्थमिति वाच्यम् । असमवायिकारणभूतचूर्णादिवारणाय तदावश्यकत्वात् । **प्रकाशिकायाम्** [११३] **पिण्डीभावस्संयोगविशेष** इति । धारणकर्षणादियोग्य इत्यर्थः । शब्दमात्रे आकाशस्य समवायिकारणतायाः स्पष्टत्वादाह - [११३] **आद्ये असमवायिकारण**मित्यादि ।

### बुद्धिनिरूपणम्

ननु [११४] **सर्वव्यवहारहेतुर्ज्ञानं बुद्धिरिति संग्रह**वाक्ये सर्वव्यवहारहेतुत्वं बुद्धिलक्षणं फलितम् । तच्च न घटते । शुकाद्युच्चरितव्यवहारहेतुत्वस्य बुद्धावभावात् । बुबोधयिषाधीनव्यवहारं प्रति हेतुत्वोक्त्या व्यभिचारविरहेऽपि येन ज्ञानेन प्रतिबन्धकवशात् व्यवहारो न जनितः तस्य व्यवहारोपधायकत्वाभावात् तत्राव्याप्तिः । स्वरूपयोग्यतारूपहेतुत्वस्य निवेशेऽपि घटादिज्ञानेषु पटादिव्यवहारहेतुत्वाभावात् नैकज्ञानस्य सर्वव्यवहारहेतुत्वमित्यत आह - [११४] **ज्ञानत्व-**

1. स्वप्रतियोगीति । अत्र स्वपदं प्रथमपतनध्वंसपरम् । तत्प्रतियोगि प्रथमपतनम् , तत्समानाधिकरणत्वं द्वितीयपतने ।

**मात्रं लक्षणमिति** । ननु तर्हि **सङ्ग्रहे** सर्वव्यवहारहेतुरिति किमर्थमुक्त-मित्यत्राह - **इदं चेति**। [११४] **संस्कारस्य त्रिविधत्वादिति** । तथा च इह संस्कारपदेन वेगस्थितस्थापकयोर्विवक्षणे स्मृतावसम्भव इति भावः। [११४] **भावनाख्य इतीति** । तथा च भावनायाः स्मृतिहेतु-त्वात् नायं दोष इति भावः । [११४] **संस्कारजन्यत्वस्य सत्त्वेनेति** । अयं भावः - ज्ञानप्रत्यासत्तेः अनुद्बुद्धसंस्कारान्यसविषयकत्वेन हेतुत्व-मावश्यकम्, अन्यथा इच्छाद्यनुव्यवसायेन घटादिभानानुपपत्तेः। एवं च संस्कारस्यापि उपनयविधया हेतुत्वमिति संस्कारजन्यत्वमिति तेन नानुमित्यादावतिव्याप्तिरिति भावः। [११५] **तथापि चक्षुरादीति** । न चात्र मनोजन्यत्वाभावानिवेशे 'योऽहं घटमद्राक्षम् सोऽहं इदानीं स्पृशामि' इति मानसप्रत्यभिज्ञायामतिव्याप्तिः । तन्निवेशे त्वसम्भवः । ज्ञानसामान्ये मनसः करणत्वात्। एवं चक्षुरादेः कालादिविधया स्मृ-तिहेतुत्वादसम्भवश्चेति वाच्यम् । चाक्षुषत्वमानसत्वादिरूपजात्यव-च्छिन्नप्रतियोगिताकभेदकूटवत्त्वस्य प्रत्यक्षत्वावच्छिन्नप्रतियोगिताक-भेदस्य वा निवेश्यत्वात् ।

इदमत्र चिन्त्यम् - मात्रपदघटितयथाश्रुतशब्दलभ्यस्य संस्कारे-तरनिरूपितज्ञानत्वव्याप्यधर्मावच्छिन्नजन्यताशून्यत्वस्य लघोः निवे-शेनैवोपपत्तौ उक्तरीत्या भेदनिवेशे उदक्षरतापत्तिरिति ।

**यथार्थानुभवलक्षणम्**

ज्ञानत्वनिवेशेनापीच्छादिवारणसम्भवादाह - **स्मृतीति** ।[११६] एतत्फलमनुभवत्वनिवेशप्रयोजनम् । [११६]**यत्रेतीति** । अत्र च 'घटपटो-भयं घट' इत्यादिज्ञानानामपि आंशिकप्रमात्वस्येष्टत्वात् न तत्रातिव्या-प्तिशङ्केति भावः ।

केचित्तु-'घटपटोभयं घट'इत्यादिज्ञानस्यालक्ष्यत्वेऽपि तत्र नाति-प्रसङ्गः । तत्सम्बन्धावच्छिन्नतदधिकरणतावच्छेदकधर्मावच्छिन्नविशे-ष्यतानिवेशात् तत्प्रतियोगिकतत्सम्बन्धानुयोगितावच्छेदकधर्मावच्छि-

न्नविशेष्यतानिवेशाद्वा घटपटोभयत्वादेः निरुक्ताधिकरणतानवच्छेद-कत्वात् निरुक्तानुयोगितानवच्छेदकत्वाच्च तादृशोभयत्वादेः तादृशा-धिकरणतादिन्यूनवृत्तित्वात् । न च निर्धर्मितावच्छेदककप्रमायामव्या-प्तिरिति वाच्यम् । तादृशाधिकरणताद्यनवच्छेदकधर्मानवच्छिन्नवि-शेष्यतानिवेशात् । न च तथा सति निर्धर्मितावच्छेदककभ्रमेऽतिव्या-प्तिरिति वाच्यम् । तादृशभ्रमस्याप्रामाणिकत्वात् - इत्याहुः ।

तदसत् - रजतत्वादिना शुक्त्याद्यवगाहिनः रजतत्वाद्यंशे निर्ध-र्मितावच्छेदककस्य इह रजतमस्तीत्याद्याकारकस्य भ्रान्तजनानामनुभव-सिद्धत्वात् उक्तपरिष्कारे तत्रातिव्याप्तेः दुर्वारत्वात् ।

अन्ये तु - प्रसक्ताधिकरणताद्यवच्छेदकधर्मानवच्छिन्नत्वावच्छि-न्नत्वोभयाभावस्य विशेष्यतायां निवेशात् उक्तरीत्या 'घटपटोभयं घट' इत्यादिभ्रमे नातिप्रसङ्गः । नापि निर्धर्मितावच्छेदकप्रमायामव्याप्तिः । यत्तु - व्यासज्यवृत्तिधर्मानवच्छिन्नविशेष्यतानिवेशात् नेयमतिव्याप्ति-रिति - तत्तुच्छम् । 'एतद्घटतद्घटोभयं घट' इति प्रमायामव्याप्तेरिति वदन्ति । तदप्यसत् । उक्ताव्याप्तेरेवावरणात् । एतद्घटतद्घटोभय-त्वादेः घटत्वादिन्यूनवृत्तितया घटत्वाद्यधिकरणतानिरूपितस्वरूप-सम्बन्धरूपावच्छेदकत्वे मानाभावात् तदन्यूनानतिप्रसक्तस्यैव तद-वच्छेदकत्वोपगमात् । अन्यथा अनन्तानां तादृशोभयत्वादीनां तद-वच्छेदकत्वे महागौरवप्रसङ्गात् । अनतिरिक्तवृत्तित्वरूपतदवच्छेदक-त्वनिवेशे द्रव्यत्वादिसामानाधिकरण्यमात्रेण घटत्वाद्यवगाहिन्यां 'द्रव्यं घट' इत्यादि प्रमायामव्याप्तेः ।

[११६] **ननु तद्वतीत्यस्ये**त्यादि । निरूपकतासम्बन्धस्य वृत्त्यन-वच्छेदकत्वेनाभावप्रतियोगितानवच्छेदकतया नञर्थान्वयानुपपत्तेः विशेष्यतार्थकत्वासम्भवादाह- [११५] **सप्तम्यर्थो विशेष्यित्व**मिति । यद्वा भूतलं वह्निमत्, पर्वतो घटवानित्यादि समूहालम्बनतो वैलक्षण्य-सिद्धये पर्वतो वह्निमानित्यादिज्ञाने विशेष्यत्वप्रकारत्वयोः निरूप्यनि-

रूपकभावः स्वीकार्य इत्येकं मतम् । तन्निरूपितविषयितारूपयोः विशेष्यित्वप्रकारित्वयोरवच्छेद्यावच्छेदकभावस्तथेत्यपरं मतम् । तत्र द्वितीयमतमनुसृत्याह - **विशेष्यित्वमिति** । अत्र च विशेष्यतायाः सप्तम्यर्थत्वे प्रकारताविशिष्टविशेष्यतानिरूपकानुभवत्वं प्रमात्वम् । विशेष्यितायास्तदर्थत्वे तु प्रकारिताविशिष्टविशेष्यितावदनुभवत्वं तत् । प्रथमे वैशिष्ट्यं च [1]स्वावच्छेदकसंबन्धेन स्वाश्रयवन्निष्ठत्वस्वनिरूपितत्वोभयसम्बन्धेन । द्वितीये वैशिष्ट्यं च स्वावच्छिन्नत्वस्वनिरूपितप्रकारताविशिष्टविशेष्यतानिरूपितत्वोभयसम्बन्धेन । प्रकारतावैशिष्ट्यं च स्वावच्छेदकसम्बन्धेन स्वाश्रयवन्निष्ठत्वसम्बन्धेनेति ध्येयम् । [११६]**तद्वतीत्यस्य तत्संबन्धिनीत्यर्थ** इति । प्रथमे प्रकारताविशिष्टविशेष्यतानिरूपकानुभवत्वम् । वैशिष्ट्यं च [2]स्वनिरूपितत्वस्वविशिष्टप्रतियोगितानिरू-

---

1. स्वावच्छेदकेत्यादि । रजते इदं रजतमिति ज्ञाने समन्वयः क्रियते । स्वं रजतत्वनिष्ठप्रकारता तदवच्छेदकसंबन्धः समवायः तेन संबन्धेन प्रकारताश्रयरजतत्ववत् रजतं तन्निष्ठत्वं विशेष्यतायाम्, एवं स्वं रजतत्वनिष्ठप्रकारता तन्निरूपितत्वं च विशेष्यतायाम् इति तादृशविशेष्यतानिरूपकानुभवत्वं इदं रजतमिति ज्ञानेऽस्तीति । द्वितीयानुगमे स्वं प्रकारिता रजतत्वनिष्ठप्रकारतानिरूपिता ज्ञाननिष्ठा तदवच्छिन्नत्वं रजतनिष्ठविशेष्यतानिरूपितज्ञाननिष्ठविशेष्यितायामस्ति, एवं स्वं प्रकारिता तन्निरूपिता या रजतत्वनिष्ठा प्रकारता तदवच्छेदकसमवायसम्बन्धेन प्रकारताश्रयरजतत्ववन्निष्ठविशेष्यतानिरूपितत्वं च विशेष्यितायामस्ति, तदाश्रयानुभवत्वम् इदं रजतमिति प्रमायामस्तीति समन्वयः ।

2. स्वनिरूपितत्वेत्यादि । स्वं रजतत्वनिष्ठप्रकारता तन्निरूपितत्वं रजतनिष्ठविशेष्यतायाम् । एवं स्वं प्रकारता तद्विशिष्टा रजतत्वनिष्ठा प्रतियोगिता (समवायसंबन्धनिरूपिता) तन्निरूपिता अनुयोगिता रजतनिष्ठा रजतत्वसमवायं प्रति रजतस्यानुयोगित्वात् तदाश्रयरजतनिष्ठत्वं विशेष्यतायाम् । रजतत्वनिष्ठप्रकारतावैशिष्ट्यं च रजतत्वनिष्ठप्रतियोगितायामेवमुपपादनीयम् - स्वं प्रकारता स्वाश्रयः रजतत्वं तन्निष्ठत्वं प्रतियोगितायाम् । एवं स्वं प्रकारता तस्याः स्वावच्छेदकतावच्छेदकतासंबन्धेनाधिकरणं समवायत्वं, तन्निष्ठो यो भेदः स्वनिरूपकतावच्छेदकतासंबन्धेन प्रतियोगितावच्छेदो न भवति, समवायस्य रजतत्वनिष्ठप्रतियोगितानिरूपकतया समवायत्वे रजतत्वनिष्ठप्रतियोगितानिरूपकतावच्छेदकत्वसत्त्वात् तेन संबन्धेन प्रतियोगितावति समवायत्वे तद्भेदासंभवात् । अपि तु अन्यो भेदः तत्प्रतियोगितावच्छेदकत्वं प्रतियोगितायां नास्तीति स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धेन स्ववच्छिन्नत्वरूपं स्वसेत्यादिभेदवत्त्वं च प्रतियोगितायामस्ति । तथा चोक्तोभयसंबन्धेन प्रकारताविशिष्टा प्रतियोगिता भवतीति । एवमुत्तरत्रापि ऊहनीयम् ।

पितानुयोगिताश्रयनिष्ठत्वोभयसंबन्धेन । प्रतियोगितायां स्ववैशिष्ट्यं च स्वाश्रयनिष्ठत्वस्वसेत्यादिभेदवत्त्वोभयसम्बन्धेन। स्वाधिकरणत्वं च स्वावच्छेदकतावच्छेदकतासम्बन्धेन । भेदप्रतियोगितावच्छेदकतास्वनिरूपकत्वीयविलक्षणावच्छेदकतासम्बन्धेन । तेन समवायैक्यवादिप्राचीनमते 'वायुः समवायेन रूपवान्' इति भ्रमे नातिव्याप्तिः । न वा 'गुणाद्यन्यत्वविशिष्टसत्तावान् गुण' इत्यादिभ्रमे विशिष्टनिरूपितत्वावच्छिन्नसमवायस्य संसर्गतापक्षेऽतिव्याप्तिः। यद्यपि संयोगसमवायादीनां स्वरूपतः संसर्गतापक्षेऽसम्भवः, तथापि तन्मते स्वावच्छेदकसंबन्धनिरूपितत्वमेव प्रतियोगितायां निवेश्यम् । विशिष्टसत्तावानिति भ्रमे तु वैशिष्ट्यावच्छिन्नसमवायनिष्ठनिरूपकताकाधिकरणताया एव विलक्षणायाः संसर्गत्वमिति नातिप्रसङ्गः । यदि चैवं सति संयोगसमवायोभयसम्बन्धेन घटत्वादिप्रकारकज्ञानेऽतिव्याप्तिः तादृशोभयसम्बन्धावच्छिन्नप्रकारतामादाय दुर्वारेत्युच्यते । तदा प्रतियोगितायां स्ववैशिष्ट्यं च स्वाश्रयनिष्ठत्वस्वसेत्यादिभेदवत्त्वोभयसम्बन्धेन । स्वाधिकरणता स्वावच्छेदकसंसर्गतासम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वनिरूपकतासम्बन्धेन ।

यत्तु - प्रतियोगितायां स्ववैशिष्ट्यघटकतया स्वावच्छेदकपर्याप्तावच्छेदकतावत्वं निवेश्यम् । तच्च स्वसेत्यादिभेदवत्त्वपर्यवसितम् । स्वाधिकरणावच्छेदकता च अवच्छेदकतासम्बन्धेन । न चैवमनवच्छिन्नघटत्वादिप्रकारताकप्रमायामव्याप्तिरिति वाच्यम् । निरुक्तस्वसेत्यादिसम्बन्धेन स्ववैशिष्ट्यमनिवेश्य स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वसम्बन्धेन स्ववैशिष्ट्यनिवेशनादोषात् । अनवच्छिन्नप्रकारतां प्रत्युक्तसंबन्धस्य व्यधिकरणत्वात् । तथा च विशिष्टसत्तावानिति भ्रमे नातिप्रसङ्गः । अथ वा प्रतियोगितायां स्ववैशिष्ट्यं च स्वाश्रयनिष्ठत्वस्वावच्छेदकसम्बन्धनिरूपितत्वस्वनिष्ठभेदप्रतियोगितावच्छेदकत्वत्रितयसंबन्धेन । अवच्छेदकत्वं स्वविशिष्टधर्मावच्छिन्नत्वसम्बन्धेन । स्ववैशि-

ष्टयं चावच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिता-कभेदवत्त्वसम्बन्धेन । स्वानवच्छेदकधर्मानवच्छिन्नत्वं तु न शक्यनिवेशम् । स्वानवच्छेदकत्वस्य स्वावच्छेदकभिन्नत्वरूपत्वे स्वावच्छेदकाप्रसिद्धया प्रागुक्तप्रमायामव्याप्तेः । अवच्छेदकसंबन्धावच्छिन्नस्वनिष्ठ-प्रतियोगिताकाभावरूपत्वेऽपि प्रतियोगितायां तादृशधर्मावच्छिन्नत्व-सत्त्वेन तद्दोषानिरासादिति ।

तन्न । 'विशिष्टसत्तावान् गुण' इत्यादिभ्रमेऽतिव्याप्तेः । गुणाद्यन्यत्वोपलक्षितसत्तावान् गुण इत्यादिज्ञानस्य प्रमारूपतायाः सर्वसंमततया गुणाद्यन्यत्ववैशिष्ट्यस्यापि गुणादिनिरूपिताधेयतावच्छेदकत्वानपायात् । आधेयतादिविशेषणस्यैव आधेयताद्यवच्छेदकत्वात् । अत एव विशिष्टाभावप्रतियोगितावच्छेदकसम्बन्धत्वादिकं विशिष्टनिरूपितत्वावच्छिन्नसमवायस्योपलक्षिताभावप्रतियोगितावच्छेदक - सम्बन्धत्वादिकम् अनवच्छिन्नसमवायस्य च स्वीकृतं **गदाधरेण सिद्धान्तलक्षणे** । अन्यथा विशेषणस्य प्रतियोगितावच्छेदकत्वतदभावाभ्यामेव विशिष्टाभावोपलक्षिताभावयोः वैलक्षण्यनिर्वाहे दर्शितरीत्या तदुपपादनस्यासङ्गतत्वापातात् । गुणाद्यन्यत्वविशिष्टसत्तावानित्याकारकगुणाद्यन्यत्ववैशिष्ट्योपलक्षितसमवायसंसर्गकप्रतीत्यादेर - प्रामाणिकतया मन्मते दर्शितदोषानवकाशात् । अन्यथा उक्तरीत्या अव्यवस्थापत्त्या **सिद्धान्तलक्षण**विरोधापत्तेरिति ध्येयम् ।

[ ११६ ] **प्रमाणान्तरतापत्ते**रिति । प्रत्यक्षादिचतुष्टयातिरिक्तप्रमाणतापत्तेरित्यर्थः । भावनारूपसंस्कारात्मकव्यापारवत्त्वे सति असाधारणकारणत्वस्य तत्र सत्त्वादिति भावः ।

**अयथार्थानुभवनिरूपणम्**

[ ११९ ] **सङ्ग्रहे तदभाववती**त्यादि । अत्र च प्रकारताविशिष्टविशेष्यतानिरूपकत्वविशेषितं प्रकारिताविशिष्टविशेष्यितावत्त्वविशे-

षितं वाऽनुभवत्वं भ्रमत्वम् । प्रथमे वैशिष्टयं च [1]स्वविशिष्टैकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववन्निष्ठत्वस्वनिरूपितत्वोभयसम्बन्धेन । स्ववैशिष्टयं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वाश्रयनिष्ठत्वोभयसम्बन्धेन । द्वितीये वैशिष्टयं चोक्तरीत्या [2]स्वयमूह्यम् । अत्र संसर्गमध्ये स्वाश्रये व्याप्यवृत्तित्वस्य निवेशनीयतया नाव्याप्यवृत्तिप्रकारकप्रमायामतिप्रसङ्गः । वस्तुतस्तु निरवच्छिन्नाधिकरणतायामभावीयत्वेन निवेशात् न कोऽपि दोष इति सारम् । स्वाभावस्य स्वावच्छेदकतया भ्रमे भानविरहादाह - **दीपिकायाम्** [१२०] **संयोगाभावेति**। ननु तदभावावच्छेदकदेशावच्छिन्नविशेष्यतेत्यादिभ्रमलक्षणस्य शुक्ताविदं रजतमित्यादिव्याप्यवृत्तिरजतत्वादिप्रकारकभ्रमेऽव्याप्तिरित्यत आह - [१२०] **अत्रेदमवधेयमि**त्यादि । इदमत्र चिन्तनीयम् - प्रकारताविशिष्टविशेष्यतानिरूपकानुभवत्वमिति रीत्या व्याप्याव्याप्यवृत्तिप्रकारभेदेऽपि लक्षणैक्यस्य सुवचतया तद्भेदेन लक्षणभेदवर्णनमयुक्ततमम् । वैशिष्टयं च [3]स्वनिरूपितत्वस्वविशिष्टाधिकरणनिष्ठत्वोभयसम्बन्धेन । स्ववैशिष्टयं च स्वविशिष्टाभाववत्तासम्बन्धेन । स्ववैशिष्टयं च अभावे स्वावच्छेदकसम्बन्धेन स्वाश्रयानधिकरणवृत्तित्वस्वविशिष्टप्रतियोगिताकत्वोभयसम्बन्धेन। स्ववैशिष्टयं च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वाश्रयनिष्ठत्वोभयसम्बन्धेन ।

---

1. स्वविशिष्टेति । स्वविशिष्टेत्यस्य एकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगितायामन्वयः । तथा च स्वं रजतत्वनिष्ठप्रकारता तदवच्छेदकसंबन्धः समवायसंबन्धः तदवच्छिन्ना रजतत्वनिष्ठा प्रतियोगिता एवं सा प्रकारताश्रयनिष्ठा च भवति इति प्रकारताविशिष्टा प्रतियोगिता रजतत्वत्वरूपैकमात्रवृत्तिधर्मावच्छिन्ना तन्निरूपकाभाववन्निष्ठत्वं विशेष्यतायामिति रीत्या समन्वयः कार्यः ।
2. स्वयमूह्यमिति । प्रकारिताविशिष्टविशेष्यितावदनुभवत्वं भ्रमत्वम् । वैशिष्ट्यं च स्वावच्छिन्नस्वनिरूपितप्रकारताविशिष्टविशेष्यतानिरूपितत्वोभयसंबन्धेन । विशेष्यतायां प्रकारतावैशिष्ट्यं च स्वविशिष्टैकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभाववन्निष्ठत्वस्वनिरूपितत्वोभयसंबन्धेन । प्रतियोगितायां स्वविशिष्टत्वं च स्वावच्छेदकसंबन्धावच्छिन्नत्वस्वाश्रयनिष्ठत्वोभयसम्बन्धेनेत्यूह्यमित्यर्थः ।
3. स्वनिरूपितत्वेत्यादि । अत्रानुगमे स्वशब्दाः सर्वेऽपि प्रकारतापराः । समन्वयः पूर्ववदूह्यः ।

यत्तु - दर्शितसम्बन्धेन स्वविशिष्टविशेष्यतानिरूपितत्वतादात्म्योभयसम्बन्धेन प्रकारताविशिष्टप्रकारतानिरूपकानुभवत्वं तदिति-तदसत्-प्रकारत्वस्य द्विधा निवेशेनाधिकस्य तादात्म्यस्य च प्रवेशेन महागौरवप्रसङ्गात् । न च [१२०] **यदवच्छेदेन** इत्यादि **दीपिका**-वाक्यस्वारस्यानुरोधेन तथावर्णनमिति वाच्यम् । तादृश**दीपिका**वाक्यस्य लक्षणभेदपरत्वे मूलोपलक्षितो वृक्षः कपिसंयोगीत्यादिप्रमायामतिव्याप्तेः । अव्याप्यवृत्तिप्रकारस्थलीयभ्रमलक्षणस्य दुर्वारत्वात् । विषयबाधविरहेणेष्टापत्तेरयोगात् । तस्मात् उक्त**दीपिका**वाक्यं अस्मदुक्तरीत्या भ्रमलक्षणपरिष्काराभिप्रायेणाव्याप्यवृत्तिप्रकारकभ्रमेऽव्याप्तिमाशङ्क्य मूलादिविशिष्टानुयोगिकसंयोगादिवैशिष्ट्यावगाहिज्ञानस्यैव भ्रमत्वेन लक्ष्यताप्रदर्शनपरम् । एवं च **दीपिकायाम्** [१२०] **विवक्षितत्वा**दित्यस्य लक्ष्यत्वेनेत्यादिः [१२०] **विशेष्यत्वे**ति । अत्र यद्यपि विशेष्यताप्रकारतयोः निरूप्यनिरूपकभावं निवेश्यापि समूहालम्बनव्यावृत्तिसम्भवः, तथापि शिष्यधीवैशद्याय प्रकारान्तरमप्युक्तमिति ध्येयम् ।

### यथार्थानुभवविभागः

**दीपिकायाम्** [१२३] **प्रसङ्गा**दिति । अत्र पञ्चम्यर्थो ज्ञानजन्यजिज्ञासाधीनत्वं विभागान्वितम् । कः प्रसङ्गः इत्याकाङ्क्षायामाह - **प्रकाशिकायाम्** [१२३] **स्मृतस्योपेक्षानर्हत्वा**मित्यादि । स्मृतस्य पूर्वाहितपदार्थसम्बन्धेन स्मृतिगोचरस्योपेक्षानर्हत्वं द्वेष्यज्ञानविषयताविरोधिरूपम् । तच्च प्रकृते प्रमितिकरणत्वम् । इदं चोपोद्घातादिपञ्चकभिन्नत्वमनिवेश्यानन्तराभिधानप्रयोजकजिज्ञासाजनकज्ञानप्रकारत्वेनोपोद्घातादीनामपि प्रसङ्गे एवान्तर्भाव इत्यभिमानेन अन्यथा करणत्वस्य कारणताविशेषरूपतया कारणतासामान्यभेदघटितप्रसङ्गलक्षणस्य प्रकृतेऽसम्भवेनासङ्गतेः । वस्तुतस्तु अनन्तराभिधाननियामकजिज्ञासाजनकनिरूप्यतावच्छेदकप्रकारकस्मरणप्रयोजकः निरूप्यनिष्ठः

उपोद्घातादिव्यतिरिक्तः सम्बन्धः प्रसङ्गसङ्गतिः । प्रकृते च चतुर्विध-त्वेन प्रमितिसादृश्यमेव प्रमाणस्य तादृशमिति ।

इदमत्रावधेयम् – धर्मविशिष्टधर्मवत्वं सङ्गतिः वैशिष्टयं च स्वभिन्नत्वस्वविशिष्टशब्दविशिष्टत्वोभयसंबन्धेन । स्ववैशिष्टयं च स्वविशिष्टशब्दोत्तरत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्स्वस्वावच्छिन्नकर्मनिरूपणोत्तरत्वोभयसम्बन्धेन। स्ववैशिष्टयं च स्वावच्छिन्नकर्मकनिरूपणोत्तरत्वस्वभिन्नधर्मावच्छिन्नविशेष्यकलक्षणादिप्रकारकज्ञानजनकत्वोभयसंबन्धेन । शब्दवैशिष्टयं च आधेयत्वस्वप्रयोजकेच्छाविशिष्टत्वोभयसम्बन्धेन । आधेयत्वं च स्वावच्छिन्नधर्मिकलक्षणादिप्रकारकज्ञानकत्वसम्बन्धेन । इच्छावैशिष्टयं च आधेयत्वस्वजनकज्ञानप्रकारत्वोभयसम्बन्धेन । आधेयत्वं स्वनिष्ठप्रकारतानिरूपितव्याप्यत्वप्रकारतानिरूपितधर्मप्रकारतानिरूपितप्रकारत्वप्रकारतानिरूपितनिरूपकत्वप्रकारतानिरूपितज्ञानत्वावच्छिन्नविशेष्यताकत्वसंबन्धेन । तथा चानुमानं प्रत्यक्षसङ्गतमित्यादौ धर्मविशिष्टधर्म एव सङ्गतिपदार्थः । तत्र प्रत्यक्षत्वनिष्ठाधेयतासम्बन्धेन प्रत्यक्षस्य प्रथमधर्मेऽन्वयः । धर्मत्वेनान्वयितावच्छेदकधर्मविशेषबोधकत्वं सङ्गतिपदस्य व्युत्पत्तिसिद्धम् । एवमन्वयिसमर्पकपदप्रवृत्तिनिमित्तताघटकसम्बन्धावच्छिन्ननिष्ठनिरूपितत्वसम्बन्धेनप्रत्ययार्थैकदेशाश्रयतायां द्वितीयधर्मान्वियबोधकत्वमपि तथा ।

वस्तुतस्तु धर्मविशिष्टत्वमेव सङ्गतिः । वैशिष्टयं च स्वविशिष्टाधिकरणताविशिष्टत्वसम्बन्धेन । स्ववैशिष्टयं च स्वभिन्नधर्मावच्छिन्नप्रतियोगिताकभेदनिरूपितत्वस्वविशिष्टशब्दविशिष्टत्वोभयसम्बन्धेन । शब्दे स्ववैशिष्टयं च प्राग्वत् । शब्दवैशिष्टयं च आधेयत्वस्वप्रयोजकेच्छाविशिष्टत्वोभयसम्बन्धेन । आधेयता स्वनिरूपकभेदप्रतियोगितावच्छेदकधर्मावच्छिन्नविशेष्यकलक्षणादिप्रकारकज्ञानजनकत्वसम्बन्धेन । इच्छावैशिष्टयं च स्वनिरूपकभेदप्रतियोगितावच्छेदक-

त्वोपलक्षितधर्मव्याप्यधर्मप्रकारज्ञानत्वावच्छिन्नविशेष्यताकत्वसम्बन्धा-वच्छिन्नाधेयत्वप्रयोजकस्मरणविशिष्टत्वोभयसम्बन्धेन। **वैशिष्ट्यं च** स्वप्रयोजकसंबन्धनिष्ठत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकधर्मप्रकार-कत्वसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्धेन। अधिकरणतावैशिष्ट्यं च स्वाश्रयाश्रयत्वसम्बन्धेन। अत्र च सङ्गतमित्यादौ तत्प्रत्ययार्थैक-देशभूताश्रयतायामधिकरणतायाः येन सम्बन्धेन सम्बन्धज्ञानस्य स्मारकत्वं तत्सम्बन्धावच्छिन्ननिष्ठस्वाश्रयनिरूपितत्वसंबन्धेन अन्व-यव्युत्पत्तिः स्वीकार्या। अन्यत् पूर्ववदिति।

**करणलक्षणम्**

[१२४] **अदृष्टादे**रित्यादिना ईश्वरपरिग्रहः। [१२४] **अनुभव-त्वव्याप्येति**। यद्यपि कार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपित-कारणत्वनिवेशादपि कालादिवारणसम्भवः, तथापि ज्ञानसामान्यहेतु-भूतस्यात्मादेरवारणात् तदुपेक्षा। [१२४] **प्रमावृत्तीति**। इदं भ्रम-जनकदोषेऽतिव्याप्तिवारणाय। ननु निरुक्तप्रमाणलक्षणस्य चक्षुस्संयो-गादावतिव्याप्तिः। न च द्रव्यत्वनिवेशात् न दोष इति वाच्यम्। तथा सति व्याप्तिज्ञानादेः प्रमाणत्वानुपपत्तेरित्यत आह – [१२४] **व्यापारवत्त्वे सतीत्यपीति**। व्यापारवत्त्वं च स्वजनकत्वस्वजन्यजनकत्वो-भयसंबन्धेन किंचिद्विशिष्टत्वम्। व्यापारत्वं च तज्जन्यत्वे सति तज्जन्यजनकत्वम्। कारणवारणाय सत्यन्तम्। फलवारणाय विशेष्यम्। स्वजन्यत्वस्वजन्यजनकत्वोभयसम्बन्धेन प्रमेयविशिष्टत्वमनुगतार्थः। यदि च प्रमेयत्वादिरूपाधिकपदार्थनिवेशात् गौरवमित्युच्यते तदा जन्यताविशिष्टत्वं तद्वाच्यम्। वैशिष्ट्यं च स्वाश्रयत्वस्वनिरूपक-जन्यजनकत्वोभयसम्बन्धेन। अथ वा स्वाश्रयजनकत्वस्वनिरूपक-जन्यत्वोभयसम्बन्धेन। जन्यताविशिष्टत्वमित्यनुगमो बोध्यः।

वस्तुतस्तु फलजनकताप्रयोजकजनकतानिरूपकत्वं व्यापारत्वम्। तेन कुलालपुत्रादेः कुलालादिव्यापारताप्रसङ्गस्य नावकाशः। यद्वा

तज्जन्यजनकत्वं तादृशजनकतावच्छेदकसम्बन्धत्वरूपमिह बोध्यम् । नन्वेवं सति श्रोत्रेन्द्रियस्य प्रमाणतानुपपत्तिः । तत्र समवायस्यैव सन्निकर्षतया तस्याजन्यत्वेन निरुक्तव्यापारत्वासम्भवादित्यत आह [१२४] **श्रोत्रेति** । ननु कारणत्वं फलाव्यवहितपूर्ववृत्तित्वम् । तच्च कारणतावच्छेदकसम्बन्धेन वाच्यम् । अन्यथा यागादेः स्वर्गादिकारणत्वानुपपत्तेः । तथोक्तौ तु स्वजन्यापूर्वसम्बन्धेन यागादेस्तथात्वात् नानुपपत्तिः । एवं च व्यापारसम्बन्धावच्छिन्नकारणत्वमेव करणत्वम् । व्यापारवत्त्वे सतीति पृथग्विशेषणस्य व्यर्थत्वात् चक्षुस्संयोगादेरुक्तरूपाभावेन तत्रानतिप्रसङ्गात् । तथा च शब्दवृत्तिलौकिकविषयतासम्बन्धेन श्रावणं प्रति स्ववृत्तिमनस्संयोगसम्बन्धेन श्रोत्रस्य कारणत्वं न सम्भवतीत्यत आह [१२४] **शब्दो वेति** । तथा च स्ववृत्तिशब्दतादात्म्यसम्बन्धेन श्रोत्रस्य करणत्वं सम्भवतीति भावः । [१२४] **वदन्तीति** । प्राञ्च इति शेषः । नवीनमतमाह [१२४] **यद्विलम्बादिति** । स्वेतरयावत्प्रकृतकार्यकारणसमवधानकालीनकार्योत्पत्त्यभावप्रयोजकीभूताभावप्रतियोगित्वं कार्योत्पत्त्यभावविशिष्टत्वपर्यवसितम् असाधारणत्वमिति निष्कर्षः । तेन न स्वत्वाननुगमः । वैशिष्टयं च स्वप्रयोजकीभूताभावप्रतियोगित्वस्वाधिकरणक्षणवृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकता[1]स्वसेत्याद्यवच्छेदकत्वसम्बन्धेन । स्वाधिकरणता स्वेतरप्रकृतकार्यकारणाधिकरणत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता आधेयत्वसम्बन्धेन। यस्तु स्वविशि-

---

1. स्वसेत्याद्यवच्छेदकत्वसम्बन्धेनेति । स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसंबन्धेनेत्यर्थः । अत्रैवं समन्वयः - स्वप्रयोजकेत्यत्र स्वाधिकरणेत्यत्र च स्वशब्दः कार्योत्पत्त्यभावपरः । स्वसेत्यादीत्यत्र स्वशब्दः दण्डादिकारणपरः । स्वेतरेत्यत्र-स्वशब्दः दण्डादिकारणपरः । तथा च-

स्वं घटोत्पत्त्यभावः तद्विशिष्टत्वं दण्डे इति तस्यासाधारणकारणत्वम् । स्वं घटोत्पत्त्यभावः तत्प्रयोजकीभूतोऽभावः दण्डाभावः तत्प्रतियोगित्वं दण्डे । एवं स्वं घटोत्पत्त्यभावः तदधिकरणक्षणे वर्तते यः भेदः दण्डवद्भेदः तत्प्रतियोगितावच्छेदकत्वं च दण्डे । दण्डवद्भेदशब्देनात्र स्वेतरप्रकृतकार्यकारणाधिकरणवृत्तिभेदप्रतियोगितानिरूपिताधेयतासम्बन्धावच्छिन्नावच्छेदकतासम्बन्धेन दण्डवद्भेदो

ष्टक्षणवृत्तिप्रकृतकार्योत्पत्त्यभावप्रयोजकाभावप्रतियोगित्वतादात्म्योभ-यसंबन्धेन प्रमेयविशिष्टत्वं तत्, वैशिष्टचं च [1]स्वसेत्यादिभेदवत्त्व-संबन्धेन। स्वाधिकरणत्वादिकं प्राग्वदिति रीत्या अनुगमः। स तु ता-दात्म्यादिनिवेशेन गौरवदूषितत्वादनादरणीयः।

**कारणलक्षणम्**

ननु स्वभिन्नत्वनिवेशनेनापि स्ववारणसम्भवः। एवं संयोगा-दिना घटाद्यधिकरणे भूतलादौ तादात्म्यादिसम्बन्धेन कपालाभाव-सत्त्वात् कपालादीनां घटाधिकारणत्वाद्यनुपपत्तिः। एवं कार्याधिकरणे कार्याव्यवहितपूर्वकालावच्छेदेन कार्योत्तरकालावच्छेदेन च कारणा-भावसम्भवात् स एव दोषः। एवं सर्वेषामेव द्वित्वाद्यवच्छिन्नाभाव-प्रतियोगित्वादसम्भवः। तादृशाभावप्रतियोगितानवच्छेदकधर्मवत्त्वं तु तादृशप्रमेयत्वादिधर्ममादाय रासभादावतिप्रसक्तम्,अतो निष्कर्षमाह– [१२६] **कार्यतावच्छेदकसंबन्धेने**त्यादि। अत्र चाभावेत्यतः परं प्रति-योगितेत्यतः प्राक्कारणताघटकत्वेनाभिमतसम्बन्धावच्छिन्नेति पूर-णीयम्। तेन न सम्बन्धान्तरावच्छिन्नकारणाभावमादाय दोष इति ध्येयम्।

**अन्यथासिद्धिनिरूपणम्**

[१२७] **येन सहे**त्यादि **दीपिका**वाक्ये तृतीयान्तयत्पदं कारणता-वच्छेदकत्वाभिमततन्तुत्वाद्यवच्छिन्नपरम्। षष्ठ्यन्तयत्पदं अन्यथा-

---

प्राञ्चः दण्डेतरघटकारणाधिकरणप्रदेशस्य घटोत्पत्त्यभावाधिकरणक्षणवृत्तित्व-नियमात् तादृशप्रदेशे वर्तमानः भेदः आधेयतासम्बन्धेन घटोत्पत्त्यभावाधिकरण-क्षणवच्छेदः न भवति, अतः स्वेतरप्रकृतकार्यकारणाधिकरणवृत्तिभेदप्रतियोगिताव-च्छेदकत्वं तादृशक्षणे नास्तीति तादृशावच्छेदकतासंबन्धेन दण्डवान् तादृशक्षणो न भवति। अतः दण्डवद्भेदः तादृशक्षणवृत्तिः। तत्प्रतियोगितावच्छेदकत्वं दण्डेऽस्तीति उक्तोभयसंबन्धेन घटोत्पत्त्यभावविशिष्टत्वात् दण्डस्य घटासाधारण-कारणत्वनिर्वाहः।

1. स्वसेत्यादिभेदवत्त्वसंबन्धेनेति। स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकसंब-न्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेनेत्यर्थः।

सिद्धत्वाभिमततन्तुत्वादिपरम् । द्वितीयान्तयत्पदं प्रकृतकार्यतावच्छेदकधर्मावच्छिन्नपरमिति मनसि निधायार्थमाह - [१२७] **येन तन्तुनेत्यादि** । अत्र च सहशब्दः साहित्यम् । तच्चैकक्रियान्वयः । क्रिया च धातुत एव लभ्यत इत्यन्वय एव सहशब्दार्थः । 'अनन्यलभ्य शब्दार्थः' इति न्यायात् । स चात्र प्रकारतानिरूपकत्वरूपः । येनेति तृतीयायाः प्रकारतान्वितमाधेयत्वमर्थः । विशेषणसङ्गतैवकारमहिम्ना यद्धर्मावच्छिन्नविशेष्यकप्रकृतकार्यनियतपूर्ववृत्तित्वप्रकारकज्ञानत्वव्यापकत्वविशिष्टस्वरूपसंबन्धेन अवपूर्वकगमिधात्वर्थज्ञाने तादृशप्रकारतानिरूपकत्वान्वयः । आख्यातस्य प्रकारत्वमर्थः, यस्येति षष्ठ्यन्तार्थयद्धर्मावच्छिन्नविशेष्यकत्वस्य ज्ञानेऽन्वयः । प्रकारत्वं च प्रथमान्तपदार्थान्वयि । तथा चोक्तसंबन्धेन यन्निष्ठप्रकारतानिरूपकत्वविशेषितयद्धर्मावच्छिन्नविशेष्यकज्ञानप्रकारीभूतं प्रकृतकार्यनियतपूर्ववृत्तित्वमिति 'येन सहे'त्यादिवाक्याधीनो बोधः । एवं च यद्धर्मावच्छिन्नविशेष्यकप्रकृतकार्यनियतपूर्ववृत्तित्वप्रकारकज्ञानसामान्यं यद्धर्मावच्छिन्नप्रकारतानिरूपकं तद्धर्मवत्त्वमेकम् अन्यथासिद्धत्वमिति फलितम् ।

अयमत्रानुगमः - धर्मविशिष्टधर्मवत्त्वम् वैशिष्ट्यं चाधेयतासंबन्धेन । सा च स्वसेत्यादिभेदवत्त्वसम्बन्धेन । स्वाधिकरणता स्वावच्छिन्नविशेष्यकप्रकृतकार्यनियतपूर्ववृत्तित्वप्रकारकज्ञानत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वावच्छिन्नप्रकारतानिरूपकत्वसम्बन्धेन । अत्र च पटादीनां तन्तुत्वादेः समूहालम्बनमादायान्यथासिद्धिवारणाय सामान्यपदार्थव्यापकत्वनिवेशनम् । विषयतामात्रनिवेशे दण्डादेः स्वेनान्यथासिद्धिप्रसङ्गः इति प्रकारतानिवेशनम् । पटं प्रति तन्तुरूपस्य रूपत्वेन न कारणत्वं व्यभिचारादेव । अतः तदानीं प्रथमान्यथासिद्ध्यसम्भवेऽपि न क्षतिरिति सूचनायानतिप्रसक्तेत्युक्तम् ।

[१२८] **तन्तुविषयकमेवेति** । जातिवाचिपदोल्लिखितप्रत्यये जातेः किंचिद्रूपेणैव भानात् तन्तुत्वस्य प्रकृते तन्तुत्वत्वेनैव विशेष्यत्वात्

तन्तुत्वत्वस्य च तन्त्वितरासमवेतत्वे सति निखिलतन्तुसमवेतत्वरूपत्वादिति भावः । [१२७] **सङ्क्षेप** इति । यद्यपि तन्तुना तन्तुसंयोगस्यान्यथासिद्धिवारणायावश्यकेन विशेषणेनैव तन्तुत्वेन तन्तोरन्यथासिद्धिवारणात् येनेत्यस्य स्वतन्त्रान्वयव्यतिरेकशालिनेति विशेषणं विफलम्, तथापि तन्तुरूपस्य तन्तुत्वेनान्यथासिद्धिवारणाय तदावश्यकता बोध्या । अत एव यत्पदस्य यद्धर्मावच्छिन्नपरतया व्याख्यानादेव तन्तुत्वेन तन्तोरन्यथासिद्धिवारणसम्भवः । तन्तुः पटनियतपूर्ववृत्तिरिति ज्ञाने तन्तुत्वस्य स्वरूपत एव भानात् । एवं च शून्यान्तविशेषणं व्यर्थमिति शङ्का निरस्ता । तन्तुत्वत्वविशिष्टेन तदाश्रयवृत्तिरूपत्वावच्छिन्नस्यान्यथासिद्धिवारणाय तत्सार्थक्यात् । स्वतन्त्रान्वयव्यतिरेकशालित्वं स्वेतरगतान्वयव्यतिरेकानधीनान्वयव्यतिरेकवत्त्वम् । अन्वयश्च प्रकृतकार्यसत्ताप्रयोजकसत्तावत्त्वम् । व्यतिरेकश्च प्रकृतकार्यविरहप्रयोजकविरहनिरूपकत्वम् । अत्र च [1]तादृशसत्ताविशिष्टत्वे सति तादृशव्यतिरेकविशिष्टत्वमित्यनुगमः । प्रथमे वैशिष्ट्यं च स्वाश्रयत्वस्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसंबन्धेन । अवच्छेदकत्वं स्वभिन्नगतान्वयाधीनत्वसम्बन्धेन । द्वितीये वैशिष्ट्यं च स्वाश्रयत्वस्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वभिन्नगतव्यतिरेकाधीनत्वसम्बन्धेन । अत्र च सत्यन्तं वा विशेष्यदलं वा एकैकमेवोपादेयम् । उभयनिवेशे प्रयोजनविरहात् तादृशविशिष्टाभाव एव स्वतन्त्रान्वयव्यतिरेकशून्यत्वम् ।

---

1. तादृशसत्तेत्यादि । प्रकृतकार्यसत्ताप्रयोजकसत्ताविशिष्टत्वे सति प्रकृतकार्यव्यतिरेकप्रयोजकव्यतिरेकविशिष्टत्वमित्यर्थः । प्रकृतकार्यं पटः तत्सत्ताप्रयोजकसत्ताश्रयत्वं तन्तोः । एवं तादृशसत्तानिष्ठः यो भेदः स्वभिन्नगतान्वयाधीनत्वसंबन्धेन तन्तुमद्भेदः तत्प्रतियोगितावच्छेदकत्वं तन्तौ । एवं प्रकृतकार्यव्यतिरेकः पटाभावः तत्प्रयोजको यो व्यतिरेकः तन्त्वभावः तत्प्रतियोगित्वरूपं तदाश्रयत्वं तन्तौ । एवं तादृशव्यतिरेकनिष्ठः यः स्वभिन्नगतव्यतिरेकाधीनत्वसंबन्धेन तन्तुमद्भेदः तत्प्रतियोगितावच्छेदकत्वं तन्ताविति समन्वयो द्रष्टव्यः ।

[1]वस्तुतस्तु स्वाश्रयान्वयव्यतिरेकप्रयुक्तत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन स्वविशिष्टान्वयव्यतिरेकवत्त्वस्वप्रतियोगित्वोभयसम्बन्धेन वा भेदविशिष्टत्वमित्यनुगमः । स्ववैशिष्ट्यं च स्वप्रतियोगीतरान्वयव्यतिरेकाधीनत्वसम्बन्धेन स्वावच्छिन्नभेदवत्तासम्बन्धेनेति । तत्तु तादात्म्यादिरूपाधिकपदार्थनिवेशनगौरवादुपेक्षणीयमिति ध्येयम् ।

यत्तु - 'येनैव यस्य यं प्रति पूर्ववृत्तित्वमवगम्यते' इत्याद्युक्त्यैव सामञ्जस्ये सहशब्दवैयर्थ्यमिति - तन्न - तथा सति यस्येति षष्ठ्यर्थविशेष्यत्वान्वयिनः अवच्छिन्नत्वस्य तृतीयार्थतया प्रकृतकार्यनियतपूर्ववृत्तित्वज्ञानीययन्निष्ठविशेष्यतासामान्यं यदवच्छिन्नमिति लक्षणं सम्पद्यते । तत्र चावच्छेदककोटिप्रविष्टस्यावच्छेदकत्वानादरे दण्डत्वादावव्याप्तेः। सहशब्दोपादाने चास्मदुक्तार्थपर्यवसानेन दोषविरहादिति। अत एव तन्तुसमवेतत्वादिविशिष्टरूपादेस्तन्तुत्वादिनान्यथासिद्धिरपि सुवचेति ध्येयमिति भावः। तन्तुत्वस्य तद्व्यक्तित्वेन कारणत्वेऽपि प्रथमान्यथासिद्धिमुपपादय तां मतमाह - [१२७] **इतरान्वयेति** । स्वान्वयव्यतिरेकवत्त्वस्वभिन्नत्वोभयसंबन्धेन किंचिद्विशिष्टत्वमन्यथासिद्धत्वमिति तु निष्कर्षः ।

[१२७] **दीपिकायाम् अन्यं प्रतीत्यादि** । अन्यं प्रति प्रकृतकार्येतरकार्यं प्रति । 'पूर्ववृत्तित्वे' इत्यत्र सप्तम्याः 'यस्य च भावेन'इत्युक्तन्यायेन ज्ञानमर्थः । तस्य च जन्यतासम्बन्धेनावगमेऽन्वयः । तथा च प्रकृतकार्येतरकार्यपूर्ववृत्तित्वप्रकारकज्ञानाधीनप्रकृतकार्यपूर्ववृत्तित्वप्रकारकज्ञानविशेष्यत्वं द्वितीयान्यथासिद्धस्य लक्षणमिति फलितम् । तत्र च कारणताज्ञानं विशिष्टानुयोगिकवैशिष्ट्यावगाहितया विशेष्यतावच्छेदकप्रकारकनिर्णयं नियमतोऽपेक्षत इति लक्षणगमनमित्याशयेनाह

---

1. **वस्तुतस्तु स्वाश्रयान्वयेत्यादि । सर्वत्र स्वशब्दः तन्त्वादिभेदपरः ।**

**प्रकाशिकायाम्** [ १२७ ] **तथा चेति । अनेकद्रव्यसमवेतत्वेति** । अणुभिन्न-द्रव्यत्वेत्यर्थः । [ १२८ ] **तदुपस्थितेः** – प्रागभावापस्थितेः ।

**कारणविभागः**

**संग्रहे यत्समवेतमित्यादि** । कार्यमित्यत्र यदित्यादिः कार्यं यत्स-मवेतं सदुत्पद्यत इति योजनया यत्समवेतं प्रतियोगितया यदनुयोगि-कसमवायवत् उत्पद्यत इत्यर्थः । धात्वर्थ आद्यक्षणावच्छिन्नाधेयत्वम् । आख्यातार्थ आश्रयत्वम् । उद्देश्यविधेयभावमहिम्ना तादृशसमवायाव-च्छिन्नत्वमाधेयतायां भासते । सदन्तविशेषणतावच्छेदकस्योद्देश्यताव-च्छेदकत्वनियमात् । उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकविधेय-योरवच्छेद्यावच्छेदकभावभानव्युत्पत्तेः । तथा च यत्कार्यं यदनुयोगि-कसमवायावच्छिन्नतादृशाधेयतावत् तत्कार्यं प्रति तत्समवायिकारण-मिति वाक्यार्थः । अत्र च यत्तत्पदयोः कार्यकारणव्यक्तिपरत्वे कार्य-कारणभावानन्त्यमित्यालोच्य तयोः यत्तद्धर्मावच्छिन्नपरतामभिसन्धा-याह - **प्रकाशिकायाम्** [ १३४ ] **यद्धर्मावच्छिन्नमित्यादिना** । एवं च सम-वायसम्बन्धावच्छिन्नकार्यतानिरूपिततादात्म्यसंबन्धावच्छिन्नकारणत्वं समवायिकारणस्य लक्षणं फलितम् । तत्र च घटादिप्रत्यक्षे घटादि-रूपविषयस्य तादात्म्यसम्बन्धेन कारणत्वात् घटादिविषयस्य स्वप्रत्यक्षं प्रति समवायिकारणतावारणाय कार्यतायां समवायसम्बन्धावच्छिन्न-त्वनिवेशनम् । प्रत्यक्षनिष्ठविषयनिरूपितकार्यतायाः विषयतासंबन्धा-वच्छिन्नत्वात् न दोषः । असमवायिकारणेऽतिव्याप्तिवारणाय कारण-तायां तादात्म्यसंबन्धावच्छिन्नत्वनिवेशः ।

**संग्रहे** [ १३३ ] **कार्येण कारणेन वा सहेत्यादि** । अत्र च कार्येण सहैकस्मिन्नर्थे समवेतं सत् यत्कारणं तदेकं असमवायिकारणम् । का-रणेन सहैकस्मिन्नर्थे समवेतं सत् यत्कारणं तदपरं असमवायिकारण-मिति वाक्यभेदेन योजना । वाकारश्च एतद्द्योतक एव । सहशब्दार्थः सहितत्वम्, तच्च प्रकृते अधिकरणनिरूपितत्वरूपम् समवेतपदार्थता-

वच्छेदकसमवेतत्वे अन्वितम् । कार्येणेत्यत्र तृतीयायाः अधिकरणता-न्वयिनिरूपितत्वमर्थः । एकपदमत्र यत्किञ्चित्परम् । अर्थपदोत्तर-सप्तम्याः निरूपितत्वमर्थः । तथा च कार्याधिकरणनिरूपितयत्किञ्चि-दर्थनिरूपितसमवेतत्ववत् कारणमिति एको वाक्यार्थः । एवं कारणेने-त्यादिवाक्येऽपि बोध्यम् ।

वस्तुतः **संग्रहे** [१३३] **कार्येण सहे**त्यादि । अत्र सहशब्दार्थः साहित्यम् । तच्चैकक्रियान्वयित्वरूपम् । प्रकृते समवेतत्वनिरूपकत्व-पर्यवसितम् । कार्येणेत्यत्र तृतीयार्थ आधेयत्वम् , एकशब्दोऽधि-करणपरः । अर्थ इत्यत्र समवेतत्वान्वयिनिरूपितत्वमर्थः । तथा च कार्यनिष्ठसमवेतत्वनिरूपकीभूताधिकरणार्थनिरूपितसमवेतत्ववदित्यर्थ इति फलितम् । कारणेनेत्यादावपि एवमेव बोध्यमिति तु सारम् । कारणेनेत्यत्र कस्य कारणमित्याकाङ्क्षायां आह - **प्रकाशिकायाम्**[१३४ **स्वकार्ये**ति । स्वकार्यस्य समवायिकारणेनेत्यर्थः । अत्र च समवाय-सम्बन्धावच्छिन्नकार्यतानिरूपितसमवायस्वाश्रयसमवेतत्वान्यतरसम्ब -न्धावच्छिन्नकारणत्वं असमवायिकारणसामान्यस्य लक्षणम् । कारण-तायां समवायसम्बन्धावच्छिन्नत्वमात्रनिवेशे प्रथमासमवायिकारणस्य स्वाश्रयसमवेतत्वसंबन्धावछिन्नत्वमात्रनिवेशे द्वितीयासमवायिकारणस्य च तदेव लक्षणं बोध्यम् । द्रव्यवृत्तिलौकिकविषयतासंबन्धेन द्रव्यसम-वेतवृत्तिलौकिकविषयतासंबन्धेन च प्रत्यक्षं प्रति समवायेन स्वाश्रयस-मवेतत्वसंबन्धेन च हेतुभूते उद्भूतरूपादावतिव्याप्तिवारणाय लक्षण-द्वयेऽपि कार्यतायां समवायसम्बन्धावच्छिन्नत्वनिवेशः । द्वितीयासम-वायिकारणे अतिव्याप्तिवारणाय प्रथमासमवायिकारणलक्षणे कारण-तायां समवायसम्बन्धावच्छिन्नत्वनिवेशः । प्रथमासमवायिकारणे अति-व्याप्तिवारणाय द्वितीयासमवायिकारणलक्षणे तत्र स्वाश्रयसमवेतत्व-संबन्धावच्छिन्नत्वनिवेशः । अत्र चोक्तान्यतरसंबन्धावच्छिन्नत्वस्थले स-मवायसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वा-श्रयसमवेतत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेद -

वत्त्वोभयसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-संबन्धावच्छिन्नत्वं निवेशनीयमित्यवधेयम् । तुरीतन्तुसंयोगादेरपि तुरीपटसंयोगादिकं प्रत्यसमवायिकारणत्वात् असमवायिकारणसामान्यलक्षणे तद्भिन्नत्वनिवेशनमव्याप्तिसम्पादकमित्यालोच्य उक्तम् तत्तदसमवायिकारणलक्षण इति । [१३४] दिगिति । अयं भावः – समवायेन पटं प्रति संयोगेन तुर्या एव कारणत्वस्वीकारात् न विशेषणलक्षणेऽपि तद्भिन्नत्वं निवेशनीयमिति तु न सम्यक् । नियतपूर्ववृत्तित्वलक्षणस्य कारणत्वस्य तुरीतन्तुसंयोगेऽप्यक्षतत्वात् । यद्यप्येवमपि तन्त्वाकाशसंयोगादौ विशिष्टलक्षणस्य अतिव्याप्तिः । तद्भिन्नत्वस्यापि निवेशे महागौरवम्, तथापि तन्त्वादिमात्रसमवेतत्वं तन्त्वन्यासमवेतत्वादिपर्यवसितं विशेषणं निवेश्यमिति न दोष इति ।

**सङ्ग्रहे** [१३३] **तदुभयभिन्नमि**त्यादि । निमित्तकारणलक्षणे तदुभयपदं समवाय्यसमवायिकारणद्वयपरमित्याह - **दीपिकायाम्**[१३३] **समवायीत्यादि** । अत्र च तत्कार्यविशिष्टं तत्कार्यं प्रति निमित्तकारणमिति लक्षणं वाच्यम् । वैशिष्ट्यं च स्वनिरूपितसमवायिकारणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वनिरूपितासमवायिकारणत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वनिरूपितकारणत्वत्रितयसम्बन्धेन । यद्यपि ध्वंसादौ प्रतियोग्यादेः निमित्तकारणत्वहानिः । अभावकार्ये समवायिकारणाद्यप्रसिद्धेः, तथापि स्वनिरूपितसमवायिकारणत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावस्वनिरूपितासमवायिकारणत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकाभावस्वनिरूपितकारणत्वत्रितयसंबन्धेन तत्कार्यवैशिष्ट्यं निवेश्यमिति न दोषः । ध्वंसादिकं प्रति समवायिकारणत्वादेर्व्यधिकरणसम्बन्धतया तादृशसम्बन्धावच्छिन्नप्रतियोगिताकतदभावसौलभ्यात् । अत एव तुर्यादेः स्वगतरूपादौ समवायिकारणत्वादिमत्त्वेऽपि सामान्यतस्समवाय्यादिभिन्नत्वासम्भवनिबन्धना न क्षतिरिति ।

[१३६] **तुरीयविषयतानिरूपकत्वस्येति** । अन्यथा सविषयकत्वाभावेन ज्ञानत्वमेव निर्विकल्पकस्य भज्येत। ज्ञानत्वस्य सविषयत्वव्याप्यतया व्यापकनिवृत्तौ व्याप्यनिवृत्तेरावश्यकत्वादिति भावः । [१३६] **विशेष्यादिविधयेत्यादि** । इदं च विशेषणविशेष्यसम्बन्धानवगाहीति यथाश्रुतेऽसम्भवः । निर्विकल्पके घटादेः चक्षुस्संयोगसत्त्वेन भानवत् घटत्वसमवाययोरपि चक्षुस्संयुक्तसमवायचक्षुस्संयुक्तविशेषणतारूपसन्निकर्षसत्त्वेन तद्भानस्याप्यवर्जनीयत्वात् । परं तु घटघटत्वसमवायेषु तत्र तुरीयविषयतामात्रमित्याशयेन पूरितम् । [१३६] **विशेष्यादीति**। आदिपदेन प्रकारसंबन्धयोः परिग्रहः । विशेष्यत्वादिनेत्यर्थः। विशेष्याद्यनवगाहीत्यत्र धात्वर्थोऽवगाहनम्, तच्च विषयता, णिनिप्रत्ययार्थो निरूपकम्, विधयेत्यत्र तृतीयार्थोऽभेदः विषयतान्वयि निरूपकस्य नञर्थभेदेऽन्वयः । तथा च विशेष्यत्वाद्यभिन्नविशेष्यादिनिष्ठविषयतानिरूपकभिन्नत्वलाभः । तत्र चाभेदतादृशनिष्ठत्वांशयोर्व्यर्थत्वात् विशेष्यतादिनिरूपकाभिन्नमात्रं लक्षणमित्यभिप्रायेणाह - [१३६] **तथा चेति** । [१३६] **ज्ञानत्वघटितमिति** । घटादिष्वतिव्याप्तिवारणाय इदमुक्तम् । [१३५] **विशेष्यविशेषणसम्बन्धानवगाहीत्यत्र दीपिकावाक्ये** न द्वन्द्वः । अपि तु विशेष्यणविशेष्ययोः यस्ससंम्बन्ध इत्यभिप्रायेण व्याख्याताणानां मतमाह – [१३६] **केचित्त्विति** । [१३६] **भासमानेति** । विषयताश्रयेत्यर्थः । तज्ज्ञानीयविषयताश्रयवैशिष्ट्यप्रतियोगित्वं तज्ज्ञाने प्रकारत्वमित्यर्थः । तेन नातिप्रसङ्गः । ननु घटभूतलसंयोगा इति ज्ञाने घटस्य प्रकारतापत्तिः । अत आह – [१३६] **संसर्गावच्छिन्नेति** । ननु पूर्वोक्तयुक्त्या निर्विकल्पकेऽपि संसर्गभानस्यावश्यकत्वान् असम्भव इत्यत आह – [१३६] **संसर्गतेति** । लाघवादित्यस्य संसर्गावच्छिन्नविषयताशन्यत्वरूपलक्षणापेक्षयेत्यादिः। तथा च संसर्गानवगाहित्वं संसर्गनिष्ठविषयत्वानिरूपकत्वम्। संसर्गावच्छिन्नविषयताशून्यत्वं च संसर्गनिरूपितावच्छिन्नत्ववद्विषयताशून्यत्वम्।

तत्र च निरूपितत्वस्याधेयत्वस्थानीयत्वेऽपि अवच्छिन्नत्वस्याधिक्यस्य निवेशात् संसर्गावच्छिन्नेत्यादिलक्षणापेक्षया गौरवम् । संसर्गताशून्यत्व-लक्षणमपेक्ष्य तु तादृशलक्षणस्य गौरवं स्फुटमेवेति भावः । [१३६] **बोध्यमिति** । अन्यथा उक्तरीत्या निर्विकल्पकेऽतिव्याप्तेरिति भावः । [१३६] **दिगिति** । अयमत्र भावः - विशेष्यविशेषणसंबन्धानवगाही-त्यत्र षष्ठीतत्पुरुषाश्रयणे संबन्धे विशेष्यविशेषणनिष्ठत्वनिवेशनं वि-फलमिति **दीपिका**वाक्यास्वारस्यम् । अस्मन्मते तु लक्षणत्रयलाभार्थ-तया न तदुक्तिवैफल्यमिति । 'ननु विशिष्टबुद्धिर्विशेषणज्ञानजन्या विशि-ष्टबुद्धित्वात्' इत्यनुमानमप्रयोजकम् अनुकूलतर्कविरहादित्याशङ्क्य विशिष्टबुद्धिविशेषणज्ञानयोः कार्यकारणभावभङ्गप्रसङ्गलक्षणस्तर्को-ऽत्रास्तीति नास्याप्रयोजकत्वमित्याशयेनाह - [१३६] **विशिष्टबुद्धिं प्रती**त्यादि । अत्र [यदि] विशिष्टबुद्धित्वं विशेषणजन्यत्वव्यभिचारि स्यात् तर्हि विशेषणज्ञानजन्यतावच्छेदकं न स्यादिति तर्कोऽभिमत इत्याशयेनाह - [१३६] **भाव** इति । **दीपिकायां** [१३६] **अनवस्था-प्रसङ्गा**दिति । जन्यज्ञानत्वव्यापकं स्वनिरूपकज्ञानजन्यत्व स्वसमानाधि-करणप्रकारतानिरूपकत्वोभयसंबन्धेन विषयताविशिष्टत्वमिति अव्य-वस्थितपरम्परारोपात् सुषुप्त्याद्यनुपपत्तिरूपानिष्टप्रसञ्जनसहितात् निष्प्रकारकत्वेन ज्ञानमनुमितौ भासते । अथवा विशेषणनिष्ठायां विषयतायामनवच्छिन्नत्वं विषयतानिरूपितत्वसामान्याभावरूपमुक्त-**तर्कसंग्रह**बलात् तत्र भासत इति भावः । [१३६] **गौरिती**ति । इदं च स्वस्मिन् यद्विशेषणं तद्विषयकधीजन्यत्वरूपसाध्यविशेषलाभायाभि-हितम् । अन्यथा यद्विशेषणप्रकारकं ज्ञानं तदन्यविशेषणज्ञानजन्यत्वसि-द्धिमादायार्थान्तरतापत्तेरिति भावः ।

**सङ्ग्रहे** [१३५] **इन्द्रियार्थसन्निकर्षजन्य**मित्यादि । इदं च जन्य-प्रत्यक्षस्यैव लक्ष्यत्वाभिप्रायेण । तेनेश्वरप्रत्यक्षस्य नित्यत्वात् तत्रा-व्याप्तिशङ्कानिरासः । तस्यालक्ष्यत्वात् । अन्यथा पुनरिन्द्रियार्थ-

सन्निकर्षाजन्यत्वजन्यत्वोभयाभावं जन्यनिष्ठस्वाभाववत्तासंबन्धावच्छि-न्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन इन्द्रियार्थसन्नि-कर्षजन्यताविशिष्टत्वपर्यवसितं निवेश्य तत्सङ्ग्रहो बोध्यः। अत्र यद्यपि आत्ममनःसंयोगस्य ज्ञानसामान्यहेतुत्वात् अनुमित्यादावतिव्याप्तिः। मनस इन्द्रियत्वात् आत्मनश्चार्थत्वात् तथापि जन्यतायामनुभवत्वव्याप्यधर्मावच्छिन्नत्वनिवेशात् न दोषः। यथाश्रुते ज्ञानपदमेतत्तात्पर्य-ग्राहकम्। निरुक्तोभयाभावनिवेशने त्वाकाशादिवारणाय ज्ञानपदम्। केचित्तु – जन्यनित्यप्रत्यक्षसाधारणं ज्ञानाकरणकत्वे सति ज्ञानत्वं लक्षणम्। अनुमित्यादीनां व्याप्त्यादिज्ञानकरणकत्वात् न तत्राति-व्याप्तिः। ईश्वरप्रत्यक्षस्याजन्यत्वात्। जन्यप्रत्यक्षे तु इन्द्रियस्यैव करणत्वाच्च लक्षणसमन्वयः। निर्विकल्पकस्य सविकल्पकारणत्वात् करणत्वं निवेशितमित्याहुः।

**सन्निकर्षविभागः**

**दीपिकायाम्** [१३७] **द्रव्यप्रत्यक्ष** इत्यादि। अत्र च द्रव्यवृत्ति-लौकिकविषयतासंबन्धेन चाक्षुषं प्रति समवायेन चक्षुस्संयोगस्य कारणत्वं वाच्यम्। तत्र रूपादौ व्यभिचारवारणाय कार्यदिशि द्रव्य-वृत्तित्वनिवेशनम्। घटत्वादिसामान्यप्रत्यासत्तिजन्यचक्षुरसम्बद्धाती-तानागतघटादिविषयकालौकिकचाक्षुषमादाय व्यभिचारवारणाय लौ-किकत्वप्रवेशः। एवं दण्डाद्यंशे ज्ञानप्रत्यासत्तिजन्ये पूर्वदण्डवानय-मासीदिति चाक्षुषेऽपि तद्बोध्यम्। एवं द्रव्यसमवेतवृत्तिलौकिक-विषयतासंबन्धेन चाक्षुषं प्रति स्वरूपसंबन्धेन चक्षुस्संयुक्तसमवायस्य कारणत्वम्। अत्र चावयवपरम्परायाः त्र्यणुकपर्यन्तविश्रामपक्षे त्र्यणुके व्यभिचारनिरासाय कार्यदिशि वृत्त्यन्तम्। यद्यपि द्रव्य-समवेतवृत्तित्वनिवेशनेऽपि परमाणुस्वीकारपक्षे तदवस्थोदोषः, तथापि द्रव्यान्यत्वस्य समवेतविशेषणत्वाभ्युपगमात् न दोषः। वृत्त्यन्तं च रूपत्वादिजातिप्रत्यक्षे व्यभिचारवारणाय बोध्यम्। रूपत्वादिसामान्यप्रत्यासत्तिजन्यातीतादिरूपादिविषयकालौकिकचाक्षु-

षमादाय तद्वारणाय विषयतायां लौकिकत्वनिवेशः। एवं नीलाद्यंशे ज्ञानप्रत्यासत्तिजन्यपूर्वंनीलरूपवानयमासीदितिप्रत्यक्षेऽपि चक्षुस्संयोगविशिष्टनिरूपितसमवायविरहात् व्यभिचारवारणायापि तथा। एवं द्रव्यसमवेतसमवेतवृत्तिलौकिकविषयतासंबन्धेन चाक्षुषं प्रति चक्षुस्संयुक्तसमवेतसमवायस्य कारणत्वम्। योगजधर्मप्रत्यासत्तिजन्यनिखिलविषयकयोगिचाक्षुषे जातित्वसामान्यप्रत्यासत्तिजन्यनिखिलजातिचाक्षुषे च व्यभिचारवारणायात्र लौकिकत्वनिवेशः। स्वतन्त्रत्र्यणुकपक्षे त्र्यणुकतद्रूपादौ व्यभिचारवारणाय वृत्त्यन्तम्। मतान्तरेऽपि तादृशविषयताया आकस्मिकतावारणाय तन्निवेश्यमेव। शब्दवृत्तिलौकिकविषयतासंबन्धेन श्रावणप्रत्यक्षं प्रति श्रोत्रसमवायस्य कारणत्वम्, शब्दत्वादौ व्यभिचारवारणाय वृत्त्यन्तम्। शब्दत्वसामान्यप्रत्यासत्तिजन्ये अतीतादिशब्दविषयके योगजप्रत्यासत्तिजन्यतादृशप्रत्यक्षे च व्यभिचारनिरासाय लौकिकत्वनिवेशनम्। शब्दसमवेतवृत्तिलौकिकविषयतासंबन्धेन श्रावणं प्रति श्रोत्रसमवेतसमवायस्य कारणत्वम्। शब्दे व्यभिचारवारणाय वृत्तित्वविशेषणम्। जातित्वसामान्यप्रत्यासत्त्यातीतानागतककारादिवृत्तिकत्वादिजातिप्रत्यक्षे व्यभिचारवारणाय लौकिकत्वनिवेशः। एवमन्यत्रापि बोध्यम्।

ननु विशेषणतानां संयुक्तविशेषणतासंयुक्तसमवेतविशेषणतादिभेदेन नानात्वात् कथं सन्निकर्षषाड्विध्यम्। यदि च तासां विशेषणतात्वेनानुगमः तर्हि संयुक्तसमवायादीनां समवायत्वेनानुगमः किं न स्यादित्याशङ्कां निराकरोति – [१३८] **अत्रेदमवधेय**मित्यादिना।

**अनुपलब्धेःप्रमाणान्तरत्वनिराकरणम्**

[१४२] **विशेषणविशेष्यभावसन्निकर्षे**ति। विशेष्यत्वविशेषणत्वान्यतरसन्निकर्षेत्यर्थः। [१४२] **घटोपलब्धिदशाया**मित्यादि। लौकिकसन्निकर्षाजन्यतदभाववत्ताबुद्धिं प्रत्येव तद्वत्तानिश्चयस्य प्रति-

बन्धकतया लौकिकसन्निकर्षजन्यघटाभावप्रत्यक्षस्य घटवत्तानिश्चय-दशायामापत्तिः । न च घटाभावरूपविषयविरहादेव न घटवति देशे घटाभावप्रत्यक्षप्रसंगः । घटासत्त्वे कथं घटवत्तानिश्चयसंभव इति वाच्यम् । घटशून्यदेशेऽपि धर्म्यन्तरघटितसन्निकर्षेण भ्रमात्मकघटवत्ता-निश्चयसम्भवेन तत्र घटाभावप्रत्यक्षापत्तिसम्भवात् । घटादिमति देशे-ऽपि धर्म्यन्तरघटितसन्निकर्षवलेन घटाभावप्रत्यक्षापत्तिसंभवाच्चेति । [१४१] **प्रमाणान्तरत्वमि**त्यादि । यद्यप्यन्यत् प्रमाणं प्रमाणान्तरमिति व्युत्पत्त्या प्रत्यक्षाद्यतिरेकेण प्रमितिकरणत्वं लभ्यते तत्तु-सहकारितयोपगताया अनुपलब्धेः नैयायिकैरप्युपगतम् । तस्या अभावरूपाया एवाभावप्रमाकरणत्वस्य तैरभ्युपगमात्, तथाप्यन्तर-पदव्यत्यासमुपगम्य प्रत्यक्षाद्यतिरिक्ता या प्रमा तत्करणत्वं प्रत्यक्षादि-प्रमितिविजातीयप्रमितिकरणत्वपर्यवसितं विवक्षितमिति न कोऽपि दोषः । अभावप्रमितेः प्रत्यक्षरूपाया एव नैयायिकैरुपगमात् । अत एवाग्रे विजातीयप्रमितिकरणत्वकल्पनमित्युक्तम् । ननु द्रक्ष्येतेत्यन्ते-नैवानुपलब्धौ योग्यतोपपादनात् 'दर्शनाभावात् नास्ती'ति वाक्यखण्डवै-यर्थ्यमित्याशङ्क्यावतारयति – [१४२] **तर्कस्ये**त्यादिना । [१४२] **विपर्यये** - आपादकाभावव्याप्याभावे । प्रतियोगित्वं कोट्यन्वितं सप्तम्यर्थः । **तत्कोटिपर्यवसायित्वं** - तस्य तर्कस्य कोटिः आपाद्यरूपा तद्विषयकत्वमित्यर्थः । [१४२] **सत्त्वस्य - सत्त्वप्रसक्तेः विरोधिनी या उपलब्धिरि**ति । उपलब्धेस्सत्त्वप्रसक्तिविरोधित्वं चापत्तिहेतुभूतापाद्य-व्यतिरेकनिश्चयविघटनद्वारा, न तु स्वरूपतः । तथा च सत्त्वप्रसक्ति-विरोधित्वं तद्धेतुभूतापाद्यव्यतिरेकनिश्चयप्रतिबन्धकत्वम् । प्रतिबन्ध-कत्वं चानाहार्यस्यैव सम्भवतीति अनाहार्यत्वमेव विरोधित्वविशेषणेन विवक्षणीयम् । अन्यथा आहार्यप्रतियोग्युपलम्भदशायामभावग्रहाना-पत्तेरिति वदन्ति [१४२] **विरोधित्वविशेषणमि**ति । नन्वन्धकारे योग्यो-पलम्भविरहात् घटाभावप्रत्यक्षापत्तिरित्याशङ्क्य निष्कृष्टार्थमाह - [१४२] **प्रतियोगिसत्त्वे**त्यादिना । प्रतियोगिसत्त्वविषयकापत्तिजन्या-

पतितविषयेत्यर्थः । [१४२] **सङ्क्षेप** इति । अत्रायमाशयः - सर्वत्राभावप्रत्यक्षस्थले'यद्यत्र प्रतियोगि स्यात् तर्ह्युपलभ्येत' इत्यापादनोत्पत्तौ मानाभाव इति । [१४२] **प्रतियोगिसत्तापादने**त्यादिना प्रतियोगिनिष्ठव्याप्यतानिरूपितव्यापकत्वं विवक्षणीयम् । अधिकं **मुक्तावलीप्रकाशादौ** द्रष्टव्यमिति ।

अन्धकारे घटाभावप्रत्यक्षापत्तिमनुपलब्धौ निरुक्तयोग्यताविशेषणमनिवेश्यैव प्रकारान्तरेण योग्यतां परिष्कृत्य तन्निवेशेन वारयतां **तर्किते**त्यादि**दीपिका**वाक्यमपि अन्यथा व्याचक्षाणानां केषांचिन्मतमाह- [१४२]**केचित्त्विति** । **अत एव** उपलम्भाभावे तादृशप्रयोज्यत्वविशेषणदानादेव । [१४२] **आहु**रित्यस्वरससूचनम् । तद्बीजन्तु प्रतियोगिसत्त्वे तर्कितत्वविशेषणवैयर्थ्यम् । पूर्वमते तु अनुपलब्धौ योग्यतानिवेशतात्पर्यग्राहकतया तर्कितपदस्योपयोगः । एतन्मते तु प्रतियोगिसत्त्वरूपकारणविरहप्रयोज्यत्वस्यैव योग्यतारूपतया तस्य च प्रतियोगिसत्त्वविरोधिपदेनैव लाभात् तर्कितपदस्य न क्वाप्युपयोगः । एवमधिकरणभेदेनाभावभेदविरहात् अन्धकारे घटाभावप्रत्यक्षापत्त्यवारणं चेति । न्यूनतापरिहारायाह - [१४३] **अत्रेद**मिति । [१४३] **तत्र**-दर्शितत्रिविधप्रत्यासत्तिमध्ये । ननु कथमेतादृशार्थलाभ इत्यत्राह - [१४३] **सामान्यमि**त्यादि ।[१४३] **तदि**ति । धूमत्वादिसामान्येत्यर्थः । [१४३] **तदि**ति । जातीत्यर्थः । सामान्यलक्षणेत्यत्र सामान्यशब्दस्य तद्ज्ञानपरत्वे लक्षणापत्त्या यथाश्रुतार्थानुरोधायाह - [१४२] **विषयो वे**ति । ननु चक्षुस्संयोगादिरूपोक्तसन्निकर्षेणैव निर्वाहे किमस्याः प्रत्यासत्तितोपगमेनेत्यत आह - [१४३] **अतीते**ति । ननु विनैव सन्निकर्षमिन्द्रियेण तत्प्रत्यक्षं कुतो न स्यादित्यत्राह - [१४३] **इन्द्रियाणा**मिति । असन्निकृष्टानामित्यस्य प्रत्यक्षेत्यस्य च तदर्थेत्यादिः । [१४३] **भान** इति । उपयुज्यत इत्यनुषज्यते । ननु चक्षुस्संयुक्तसमवायेनैव निर्वाहः

कुतो न भवतीत्यत्राह - [१४३] **सौरभेणे**ति । तदिन्द्रियग्रहणयोग्य-पदार्थस्यैव तदिन्द्रियसंयुक्तसमवायादिः प्रत्यक्षहेतुः न तु तदिन्द्रिय-ग्रहणायोग्यपदार्थस्य, तथासति तदिन्द्रियग्राह्याग्राह्यगुणविशेषादिव्य-वस्थानुपपत्तेरित्यभिप्रायेणोक्तम् **योग्येति** । **मुक्तावलीप्रकाशोक्तं** कारण-तावच्छेदकसम्बन्धादिकमभिसन्धायाह - **सङ्क्षेप** इति ।

**इति प्रसरणाख्यायां दीपिकाप्रकाशव्याख्यायां**
**प्रत्यक्षपरिच्छेदः समाप्तः**



## अनुमानपरिच्छेदः

### अनुमानलक्षणम्

[१४७] **प्रत्यक्षोपजीवकत्वसङ्गत्येति** । प्रत्यक्षस्य प्रत्यक्षप्रमाण-भूतस्य चक्षुरादेः उपजीवकं कार्यम्, तत्त्वलक्षणया सङ्गत्येत्यर्थः । निरूपणान्वयि ज्ञानजन्यजिज्ञासाप्रयोज्यत्वं तृतीयार्थः । ज्ञाने च विषयितया प्रकृत्यर्थान्वयः । सङ्गतिप्रदर्शनं च शिष्याणामसङ्गतत्वज्ञानेन उन्मत्तप्रलपितत्वशङ्कया अनवधानं स्यादिति तन्निरासाय । पूर्वोत्तरग्रन्थयोः एकवाक्यताप्रतिपत्तिरपि सङ्गतिप्रदर्शनप्रयोजनमित्यपि द्रष्टव्यम् । तादृशप्रतिपत्तिश्च 'अनुमानग्रन्थः प्रत्यक्षग्रन्थैकवाक्यतावान्, प्रत्यक्षग्रन्थप्रतिपाद्यार्थसङ्गतार्थप्रतिपादकत्वात्' इत्यनुमानत इत्याद्यन्यत्र विस्तरः । [१४७] **लक्षयतीति दीपिका**वाक्यात् लक्षण-प्रकारकज्ञानजनकशब्दानुकूलकृतिमानित्यर्थो लभ्यते । तत्र चाग्रे स्वरूपविभागादीनामपि प्रतिपादनात् तदप्रतिज्ञानेन न्यूनता स्यादिति निरूपयतीत्युक्तम् । निरूपणं च लक्षणस्वरूपप्रामाण्याद्यन्यतमप्रकार-कज्ञानानुकूलशब्दः अतो न न्यूनता । एवमग्रेऽपि द्रष्टव्यम् । **सङ्ग्रहे** [१४७] **अनुमितिकरणमनुमानमिति** । [1]अनुमानपदस्यानुमानपदार्थ-त्वावच्छिन्नलाक्षणिकतया तत्पुरुषे [2]पूर्वपदलक्षणाविरहपक्षे 'घटो घट' इतिवदत्र न निराकाङ्क्षता । अनुमितिकरणत्वं चानुमिति-

---

1. ननु 'अनुमितिकरणमनुमानम्' इति मूले अनुमानपदस्यानुमितिकरणार्थकतया अनुमितिकरणमनुमितिकरणम् इति वाक्यार्थपर्यवसानात् अभेदान्वयस्थले उद्देश्य-तावच्छेदकविधेयतावच्छेदकयोर्भेदस्य 'घटो घट' इति वाक्यप्रामाण्यवारणाय स्वीकरणीयत्वात् अनुमितिकरणत्वस्यैव उद्देश्यतावच्छेदकत्वाद्विधेयतावच्छेदकत्वा-च्च कथमुक्तवाक्यस्य प्रामाण्यमित्यत आह - अनुमानपदस्येति । तथा चानुमिति-करणत्वमुद्देश्यतावच्छेदकम्, अनुमानपदार्थत्वं विधेयतावच्छेदकमिति तयोर्भेदात् अनुमितिकरणमनुमानपदार्थाभिन्नमिति वाक्यार्थे नानुपपत्तिरिति भावः ।

2. पूर्वपदलक्षणाविरहपक्ष इति । पूर्वपदलक्षणापक्षे तु अनुमितिसम्बन्ध्यभिन्नकरणत्वमु-द्देश्यतावच्छेदकम् अनुमितिकरणत्वं विधेयतावच्छेदकमिति तयोर्भेदात् अनुमान-पदस्यानुमितिकरणार्थकत्वेऽपि न निराकाङ्क्षतेति भावः ।

निष्ठानुभवत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वम् । [1]तेन नात्मादौ अतिव्याप्तिः । ननु परामर्शजन्यं ज्ञानमित्यनुमितेर्लक्षणं किमर्थमुक्तम्? न च घटितज्ञाने घटकज्ञानस्य कारणत्वादनुमितिज्ञानमन्तरा तद्घटितानुमानलक्षणज्ञानं न सम्भवतीति तदुक्तिसाफल्यमिति वाच्यम् । तथाप्यनुमितिस्वरूपप्रदर्शनमात्रेणैव तत्सिद्धेः तल्लक्षणकथनानुपयोगात् इत्याशङ्क्य तल्लक्षणाकथनेऽनुमानस्य प्रमाणान्तरत्वं न सिध्यति प्रत्यक्षानुमितिप्रमित्योः व्यावृत्तलक्षणाभ्यां वैलक्षण्ये अज्ञाते सति प्रत्यक्षाद्यतिरिक्तप्रमाणत्वसाध्यकानुमितिकरणत्वहेतुकानुमाने व्यभिचारशङ्काया दुर्वारत्वात् । अतः **सङ्ग्रहे** अनुमितिलक्षणकथनमुचितमित्यभिप्रायेण भावमाह - [१४७] **तथा चेति** ।

**अनुमितिलक्षणम्**

[१४७] **ननु संशयोत्तरप्रत्यक्ष** इति **दीपिका**वाक्यमसङ्गतम्, 'नायं पुरुष' इति विपरीतनिश्चयोत्तरप्रत्यक्षेऽप्यतिव्याप्तिसम्भवेन तदकथनेन न्यूनतापत्तेरित्याशङ्क्य **दीपिका**वाक्यस्थसंशयपदं विपरीतज्ञानमात्रोपलक्षणपरमित्यभिप्रायेणाह - [१४८] **विपरीतज्ञानोत्तरप्रत्यक्षं प्रतीति**। [१४८] **अङ्गीकुर्वतामिति** । **मिश्रादीनामिति** शेषः । एतेन प्रात्यक्षिकनिश्चये विशेषदर्शनाभावविशिष्टविपरीतज्ञानस्य प्रतिबन्धकत्वं तदभावस्य हेतुत्वमिति वदतां **दीधितिकारादीनां** मते नातिव्याप्तिरिति सूचितम् । ननु [१४७] **स्थाणुपुरुषसंशयानन्तरमिति दीपिका**वाक्यमसङ्गतम् । संशयस्य तत्तदभावकोटिकत्वनियमेन स्थाणुपुरुषकोटिकत्वायोगात् इत्यत आह - [१४८] **इदमिति**। [१४८] **आहुः** इत्यस्वरससूचनम् । तद्बीजन्तु स्थाणुत्वतदभावकोटिकसंशयस्य प्रथमं विवक्षितत्वे पुरुष एवेति प्रत्यक्षजननादित्युत्तरग्रन्थविरोधः। स्थाणुरेवेति प्रत्यक्षजननादिति वक्तव्यत्वात् । अतः तादृशग्रन्थपर्या-

---

1. **तेनेति । आत्मादेः अनुमितिनिष्ठज्ञानत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वेऽपि अनुमितित्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वाभावान्नातिव्याप्तिरिति भावः ।**

लोचनया स्थाणुपुरुषसंशयानन्तरमिति वाक्ये संशयद्वयं न विवक्षितम्, किन्तु एक एव संशय इति। तच्चैतन्मते न घटत इति। ननु पुरुष इति प्रत्यक्षजननादिति वक्तव्यम्,किमेवकारोपादानेनेत्याशङ्क्याह- [१४८] **पुरुष एवे**तीति। ननु 'पुरुषं अनुमिनोमी'त्यनुव्यवसायसत्त्वे अनुमितित्वमपि तत्र स्वीकार्यं स्यादित्यत आह - [१४८] **इदमुपलक्षण**मिति। [१४८] **इदं** बाधकयुक्तिप्रदर्शनम्। [१४८] **उपलक्षणम्** बाधकयुक्त्यन्तरस्यापि सूचकम्। ननु संशयोत्तरप्रत्यक्षेऽतिव्याप्तिवारणाथ [1]परामर्शजन्यत्वशरीरप्रविष्टजनकतायां विशिष्टपरामर्शत्वावच्छिन्नत्वमेव कुतो न निवेशितम्। संशयोत्तरप्रत्यक्षे च पुरुषत्वव्याप्यकरादिमानयमिति परामर्शस्य [2]विशकलितज्ञानसाधारण्यानुरोधेन [3]ज्ञानविशिष्टज्ञानत्वेनैव कारणत्वोपगमात्। एवं विशेषदर्शनस्य विपरीतज्ञानप्रतिबन्धकतायां उत्तेजकतामते उक्तविशेषणं विफलं स्यात्। संशयोत्तरप्रत्यक्षे [4]अतिव्याप्तेरनवकाशादित्यत आह - [१४८] **एतेने**ति। जनकतायां तादृशधर्मावच्छिन्नत्वमनिवेश्य पक्षतासहकृतपरामर्शजन्यत्वस्यैव विवक्षणेनेत्यर्थः। [१४८] **विशेषणतावच्छेदकप्रकारकनिर्णयविधयेत्य**नेन विशिष्टवैशिष्ट्यावगाहिबुद्धेः तादृशविशिष्टपरामर्शत्वावच्छिन्नजनकताकत्वमस्तीति सूचितम्। **सङ्क्षेप** इति। अत्रायमाशयः — पक्षतासहकृतस्यैव परामर्शस्य विशेषदर्शनत्वेन संशयोत्तरप्रत्यक्षे हेतुत्वात् तद्दोषतादवस्थ्यमिति पक्षताजन्यत्वे सति परामर्शजन्यत्वमिति तदर्थो वक्तव्यः। एवं पक्षताप्रत्यक्षे अतिव्याप्तिवारणाय परामर्शजन्यत्वो-

---

1. परामर्शजन्यत्वेति। परामर्शनिष्ठजनकतानिरूपितजन्यत्वेत्यर्थः।
2. विशकलितज्ञानेति। 'पुरुषत्वव्याप्यं करादि', 'करादिमांश्चायम्' इति ज्ञानद्वयसाधारण्यानुरोधेनेत्यथः।
3. ज्ञानविशिष्टज्ञानत्वेनेति। करादिविशेष्यकपुरुषत्वव्याप्यत्वप्रकारकज्ञानविशिष्टकरादिप्रकारकेदन्त्वावच्छिन्नविशेष्यकज्ञानत्वेनेत्यर्थः।
4. अतिव्याप्तेरनवकाशादिति। ज्ञानविशिष्टज्ञानत्वावच्छिन्नकारणतानिरूपितकार्यतानिरूपितकार्यतायाः सत्त्वेऽपि परामर्शत्वावच्छिन्नकारणतानिरूपितकार्यतायाः विरहादिति भावः।

पादानम् । यद्यपि पक्षतापरामर्शोभयविषयकसमूहालम्बनप्रत्यक्षेऽतिव्याप्तिरेवमपि सम्भवति , तथापि पक्षताजन्यतावच्छेदकधर्मावच्छिन्नपरामर्शजन्यताविवक्षणात् [1]न दोषः । पक्षताप्रत्यक्षत्वपरामर्शप्रत्यक्षत्वयोः अवच्छेदकयोः भेदादित्यादिकं **अनुमितिग्रन्थादौ** विस्तरेणोक्तं द्रष्टव्यमिति ।

**पक्षतालक्षणम्**

ननु साध्यसंशयरूपपक्षतासहकृतत्वं कुतो नात्र निवेशयितुं शक्यमित्यभिप्रायेण शङ्कते - [१५०] **यद्यपीति** । घनगर्जनेन सुप्तोत्थितस्य मेघानुमितौ साध्यसंशयरूपकारणाभावेन व्यभिचारापत्त्या साध्यसंशयस्यानुमितिहेतुभूतपक्षतारूपत्वं न सम्भवतीति नात्र तद्विवक्षणं शक्यमित्यभिप्रायेण समाधत्ते - [१५०] **तथापीति** । [१५०] **साध्यानुमितीच्छाया** इति । अत्र चेच्छामात्रनिवेशे सिद्धिसत्त्वे घटो भूयात् इतीच्छादशायामनुमित्यापत्तिः । अनुमित्सानिवेशेऽपि घटानुमितिः भूयात् इतीच्छाया वारणासम्भवः । साध्यानुमितिविषयकेच्छानिवेशेऽपि घटानुमितिः भूयादितीच्छावारणं न सम्भवति । [2]घटसाध्योभयसमूहालम्बनानुमितेर्विषयत्वसम्भवात् । अतः प्रकृतसाध्यकत्वविशेषितानुमितित्वप्रकारिकेच्छाया इति तदर्थो बोध्यः । अभावप्रतियोगितायां च तादृशेच्छात्वावच्छिन्नत्वं निवेश्यम्, तेन तादृशेच्छाघटोभयाभावादिकमादाय [3]न दोषः । तादृशेच्छात्वावच्छिन्नत्वं च तादृशेच्छात्वपर्याप्तावच्छेदकताकत्वम् । तच्च [4]तादृशे-

---

1. न दोष इति । समूहालम्बनप्रत्यक्षनिष्ठायाः परामर्शजन्यतायाः परामर्शविषयकप्रत्यक्षत्वावच्छिन्नत्वेऽपि पक्षतायाः जन्यतावच्छेदकं यत् पक्षताप्रत्यक्षत्वं तदवच्छिन्नत्वाभावादिति भावः ।

2. घटसाध्येति । 'घटवह्न्युभयानुमितिर्भूयात्' इति इच्छा अत्र विवक्षिता ।

3. न दोष इति । सिद्धिसिषाधयिषोभयसत्त्वकाले न पक्षतानुपपत्तिरित्यर्थः ।

4. तादृशेच्छात्वेत्यादि । तथा च घटवह्न्युभयानुमितिर्भूयादितीच्छायाः योऽभावः तदीयप्रतियोगितायाः तादृशेच्छात्वेतरघटसाध्यकत्वाद्यवच्छिन्नतया तदनवच्छिन्नत्वाभावात् तादृशाभावस्य न उत्तेजकाभावरूपतेत्याशय ।

च्छात्वेतरधर्मानवच्छिन्नत्वपर्यवसितम् । तेन चैत्रस्य सिद्धिसिषाधयिषयोः सत्त्वे मैत्रवृत्तित्वविशिष्टसिषाधयिषाया अभावमादाय नानुमित्यनुपपत्तिः । एवमग्रेऽपि प्रतियोगितायां विशिष्टसिद्धित्वेतरधर्मावच्छिन्नत्वं निवेश्यम् । तेन विशिष्टसिद्धिघटोभयाद्यभावस्य यत्किञ्चिदात्मवृत्तित्वविशिष्टतादृशसिद्ध्यभावस्य च व्युदासः । अन्यथा सिषाधयिषां विना सिद्धिसत्त्वेऽनुमित्यापत्तेः । यद्यपि तादृशेच्छात्वेतरधर्मः तादृशानुमितित्वप्रकारकत्वरूप इति सिषाधयिषाविरहस्यैवासंग्रहः । एवमग्रेऽपि । तथापि [1]तादृशप्रकारकत्वनिष्ठावच्छेदकताभिन्न - इच्छात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वं विवक्षणीयम् । एवं सिषाधयिषाविरहवैशिष्ट्यनिष्ठावच्छेदकताभिन्नसिद्धित्वनिष्ठावच्छे - दकताभिन्नावच्छेदकत्वानिरूपकत्वमग्रिमप्रतियोगितायां निवेश्यमिति । एवमन्यत्रापि बोध्यम् । [१५१] **समवायेनाभाव** इति । सिषाधयिषासिद्ध्योः सत्त्वदशायां संयोगसंबन्धावच्छिन्नप्रतियोगिताकसिषाधयिषाविरहस्यात्मनि सत्त्वात् अनुमित्यनुपपत्तिः अतः समवायेनेत्युक्तम् । अवच्छिन्नप्रतियोगिताकत्वमभावान्वयि तृतीयार्थः । ननु सिषाधयिषाविरहस्य स्वरूपसंबन्धेन सिद्धिविशेषणत्वे सिद्धिसिषाधयिषयोः सत्त्वेऽनुमित्यनुपपत्तितादवस्थ्यम् । सिषाधयिषायाः समवायेनात्मन्येव सत्त्वात् इत्यत आह – [१५१] **स्वरूपे**त्यादि । तथा च सिषाधयिषाविरहवैशिष्ट्यं सिद्धौ न स्वरूपसम्बन्धेन, येनोक्तदोषः स्यात् । अपि तु स्वनिष्ठस्वरूपसंबन्धावच्छिन्नाधेयतानिरूपकनिरूपितसमवाय - सम्बन्धावच्छिन्नाधेयतासम्बन्धेन तथा च नोक्तदोष इति भावः । [१५१] **तद्विशिष्टाया स्सद्धे**रिति व्यासेन लेखनात् सिषाधयिषाविरहविशिष्टसिद्ध्यभाव इति **दीपिका**वाक्यस्थसमस्तपदे विशिष्टान्तं सि-

---

1. **तादृशप्रकारकत्वेति । तत्साध्यविशिष्टतत्पक्षविषयकानुमितित्वप्रकारकत्वनिष्ठावच्छेदकताभिन्ना इच्छात्वनिष्ठावच्छेदकताभिन्ना च या अवच्छेदकता तदनिरूपिका या सिषाधयिषानिष्ठा प्रतियोगिता तन्निरूपकाभावः सिषाधयिषाविरहपदेन विवक्षित इति भावः ।**

द्ध्यभावविशेषणमिति भ्रमो निरस्तः । तथा सति सिद्धिसिषाधयिषयोः सत्त्वेऽनुमित्यनुपपत्तितादवस्थ्यात् । सिद्ध्यभावरूपविशेष्यविरहादिति ध्येयम् । [१५१] **सिद्धेस्समवायेनाभाव इत्यर्थ** इति । सिषाधयिषाविरहविशिष्टसिद्धेः संयोगेनाभावमादाय विशिष्टसिद्धिदशायामनुमितिवारणाय समवायेनेत्युक्तम् । अत्र सामानाधिकरण्यशरीरे प्रथमाधेयतायां स्वरूपसंबन्धावच्छिन्नत्वानिवेशे सिद्धिसिषाधयिषयोः सत्त्वेऽपि आत्मनि सिषाधयिषाविरहस्य [1]स्वप्रतियोगिमत्त्वसंबन्धेन सत्त्वादनुमित्यनुपपत्तिः, अतः तन्निवेशः । अनवच्छिन्नस्वरूपसंबन्धावच्छिन्नत्वं तदर्थः । तेन घटाद्यवच्छेदेन सिषाधयिषाविरहस्य सिषाधयिषावत्यप्यात्मनि सत्त्वेऽपि न क्षतिः । सिषाधयिषाविरहवति काले कालिकविशेषणतया सिद्धिसत्त्वात् [2]स एव दोष इति द्वितीयाधेयतायां समवायसंबन्धावच्छिन्नत्वप्रवेशः । तादृशविशिष्टसिद्ध्यभावस्यानवच्छिन्नस्वरूपसम्बन्धेन कारणत्वं वक्तव्यम् । अन्यथा सिद्धिसत्त्वे घटाद्यवच्छेदेन तदभावसत्त्वात् विशिष्टसिद्धिदशायामनुमित्यापत्तेः । [१५१] **साध्यसिद्धिः पक्षतावच्छेदकविशिष्ट इत्यादि** । पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकधर्मसंबन्धावच्छिन्नप्रकारता - शालिसंशयान्यज्ञानमित्यर्थः । अत्र च पाषाणमयः संयोगेन वह्निमानित्यादेः, पर्वतः संयोगेन द्रव्यवान् इत्यादेः, पर्वतः कालिकादिना वह्निमानित्यादेश्च निश्चयस्य सत्त्वेऽपि अनुमित्यनुपपत्तिः स्यादिति पक्षतावच्छेदकादेर्निवेशनम् । विशेष्यताप्रकारतयोर्निरूप्यनिरूपकभावनिवेशनं च पर्वतो घटवान्, ह्रदश्च वह्निमानित्यादिसमूहालंबननिर्णयस्य पर्वतो वह्निमानित्याद्यनुमितिविरोधितावारणायेति बोध्यम् । पर्वतो वह्निमान् नवेति संशयस्य प्रतिबन्धकतावारणाय संशयान्यत्वनिवेशनम् । तच्च न सामान्यतः संशयभिन्नत्वम्,

---

1. **स्वप्रतियोगिमत्त्वेति । एवं सिषाधयिषाविरहः तत्प्रतियोगि सिषाधयिषा तद्वत्त्वमात्मनः ।**

2. **स एव दोष इति । सिद्धिसिषाधयिषयोः सत्त्वेऽपि अनुमित्यनुपपत्तिरित्यर्थः ।**

तथा सति पर्वतः संयोगेन वह्निमान् भूतलं घटवान् नवेत्यादि समूहालम्बनज्ञानस्यांशिकसंशयरूपस्याप्रतिबन्धकत्वप्रसङ्गात्, किन्तु साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावाप्रकारकत्वम्। यद्यपि अत्र वह्नित्वादिना पदार्थान्तरावगाहिनःपर्वतः संयोगेन वह्निमान् नवेत्यादिसंशयस्यापि तादृशत्वमस्ति साध्यतावच्छेदक-धर्मावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धाव-च्छिन्नप्रकारतानिरूपिताभावत्वावच्छिन्नप्रकारतानिरूपकत्वाभावविवक्षायामपि पर्वतो वह्निमान् ह्रदश्च वह्न्यभाववानित्यादिग्रहस्याप्रतिबन्धकत्वप्रसङ्गः। तथापि पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपिता या तादृशाभावत्वावच्छिन्नप्रकारतातन्निरूपकत्वाभाववविवक्षणात् न दोषः। अभावत्वावच्छिन्नप्रकारतायां स्वरूपसम्बन्धावच्छिन्नत्वं निवेशनोयम्। अन्यथा पर्वतः संयोगेन वह्निमान् कालिकादिना सम्बन्धेन वह्न्यभाववांश्चेत्यादिनिश्चयस्यापि विरोधितापत्तिः। पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितसाध्यवद्भेदत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारताकत्वाभावोऽपि निवेश्यः। अन्यथा पर्वतो वह्निमान् वह्निमदन्यो वेति संशयस्य विरोधितापत्तिरित्यलमधिकेन।

ननु सिद्धौ सिषाधयिषाविरहविशिष्टत्वनिवेशप्रयोजनं 'सिद्धि-सत्त्वेऽपी'त्यादि **दीपिका**ग्रन्थोक्तं सिद्धिसिषाधयिषापरामर्शानां यौगपद्य एव सम्भवति। तदेव च न घटते। योग्यविभुविशेषगुणानां स्वोत्तरोत्पन्नगुणनाश्यत्वनियमेन तेषां युगपदवस्थानासम्भवात्, अतः तत्प्रयोजनकथनमसङ्गतमित्याशङ्क्य सिद्ध्यात्मकपरामर्शस्थले तत् सङ्गमयति - [१५१] **अत्र सिद्धिश्चे**त्यादिना। [१५१] **अतः** समूहालम्बनपर्यन्तानुधावनात्। **परामर्शे**ति। अन्यथा यत्र प्रथमं परामर्शः ततः सिद्धिः, ततः सिषाधयिषा, ततः अनुमितिः न जायत एव। परामर्शस्य पूर्वं नष्टत्वात् अतो नात्र प्रयोजनं सम्भवतीति भावः। तथा च विशेषणाभावप्रयुक्तविशिष्टाभावसम्भवात् न सिद्धिसिषाधयिषयोः सत्त्वे व्यभिचार इति भावः।

**प्रकाशिकायाम्** [१५५] **सप्तमीतत्पुरुषाङ्गीकार** इति। नन्वत्र व्याप्तिविशिष्टस्य पक्षधर्मतेति षष्ठीतत्पुरुषः कुतो नाश्रितः, स एव चाश्रयणीयः। कारकाधिकारीयात् '**सप्तम्यधिकरणे चे**'ति सूत्रादसामर्थ्येन समासानुपपत्तिभिया समस्तपदप्रविष्टक्रियासमभिव्याहारस्य दुर्वचत्वेन सप्तम्यनुपपत्तेरिति चेत् - न। शैषिकषष्ठीप्रसक्तावपि अकारकाधिकरणवाचिपदादपि क्वचित् सप्तमी साधुरिति सूचनायैव इह सप्तमीसमासादरः। तत्र प्रमाणं चोक्तसूत्रे चकारोपादानमेव। अन्यथा तद्वैयर्थ्यापत्तेरिति। **स्पष्टं चेदम् व्युत्पत्तिवादे सप्तम्यर्थविचारे**। ननु व्याप्तिविषयकपक्षधर्मताज्ञानस्य परामर्शरूपत्वे धूमो वह्निव्याप्यः धूमवान् पर्वत इति ज्ञानयोः व्यावृत्तिः यद्यपि सम्भवति, तथापि हेतुः साध्यव्याप्यः हेतुमान् पक्ष इति समूहालम्बनस्य परामर्शत्वापत्त्या ततोऽनुमित्यापत्तिः अतो निष्कर्षमाह - [१५५] **व्याप्त्यवच्छिन्नेत्यादिना**। अत्र च व्यभिचारिस्थले हेतुव्यापकसाध्यसामानाधिकरण्यरूपविशिष्टव्याप्त्यप्रसिद्ध्या भ्रमीयविषयतासाधारणनिरूप्यनिरूपकभावापन्नविषयतैव व्याप्तिघटकतावत्पदार्थानां निवेशनीया। तथा च व्याप्त्यवच्छिन्नेत्यस्य हेतुप्रकारकतानिरूपितव्यापकत्वप्रकारतानिरूपितसाध्यप्रकारतानिरूपितसामानाधिकरण्यप्रकारतानिरूपितेत्यर्थः। व्यापकत्वघटकपदार्थानामपि निरूप्यनिरूपकभावापन्नविषयतैव निवेश्या। वह्निव्याप्यधूमवान् ह्रदः, पर्वतो घटवानिति समूहालम्बनतः अनुमितिवारणाय विशेष्यताप्रकारतयोर्निरूप्यनिरूपकभावनिवेशः। वह्निव्याप्यधूमवत् द्रव्यमिति ज्ञानात् पर्वतो वह्निमान् इत्यनुमितिवारणाय पक्षतावच्छेदकनिवेशः। पर्वतो वह्निव्याप्यधूमवान् न वेति संशयादनुमितिवारणाय निश्चय इत्युक्तम्। निश्चयत्वं च न सामान्यतः संशयभिन्नत्वमांशिकसंशयस्याजनकत्वापत्तेः। किं तु साध्यव्याप्यहेतुत्वाभावप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपकत्वाभावादिरूपमिति ध्येयम्।

**यत्र धूमः तत्राग्निरिति साहचर्यनियमो व्याप्तिरिति संग्रह**वाक्ये तादृशवाक्यप्रतिपाद्या साहचर्यनियमाभिन्ना व्याप्तिरिति बोध इत्यभिप्रायेणाह **दीपिकायाम्** [१५७] **यत्रेत्यादि** । [१५७] **अभिनयः** अभिलापकशब्दकथनम् । [१५७] **साहचर्यनियम** इति **संग्रह**वाक्ये सहचरत इति सहचरौ तयोर्भावः साहचर्यम् । सामानाधिकरण्यमित्यर्थः । तस्य नियमः प्राचीनमते साध्याभाववदवृत्तित्वादिवैशिष्टचम् । नवीनमते हेतुव्यापकसाध्यनिरूपितत्वात्मकं, तस्य हेतुनिष्ठत्वं स्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धेनैव वाच्यमिति व्याप्य इत्यादौ स एव प्रत्ययार्थः स्यादिति गौरवं नियमस्य विशेष्यत्वे दुर्वारम् । तस्य विशेषणत्वे तु नियमविशिष्टसामानाधिकरण्यस्याश्रयतासम्बन्धेनैव हेतुवृत्तित्वात् नोक्तरीत्या गौरवावकाश इति मनसि निधाय [१५७] **नियतसामानाधिकरण्यमित्युक्तम्** । [१५७] **साध्याभाववदवृत्तित्वादिरूपमिति** । आदिना साध्यवदन्यावृत्तित्वपरिग्रहः । साध्याभाववदवृत्तित्वादिरूपं विशेषणं घटकमिति यावत् । तादृशं यत्रेति व्युत्पत्त्या साध्याभाववदवृत्तित्वादिघटितमित्यर्थः । अत्र वह्निमान् गगनादित्यादिविरुद्धवारणाय [1]विशेष्यम् । द्रव्यं सत्त्वात् इत्यादिव्यभिचारिवारणाय [2]विशेषणम् । वृत्तिमात्रनिवेशेनोक्तविरुद्धनिरासे तु 'धूमवान् वह्ने'रित्यादावपि प्रयोजनं बोध्यम् । केचित्तु - साहचर्यनियम इत्यत्र कृदभिहितो भावो द्रव्यवत्प्रकाशत इति न्यायेन नियमशब्दो नियतपरः सामानाधिकरण्यविशेषणमित्यभिप्रायेणाह [१५७] **नियतसामानाधिकरण्यमिति** - इति व्याचक्रुः । तदसत् – तथासति साहचर्यं सामानाधिकरण्यम्, तस्य नियम इति षष्ठीसमासेन व्याख्यानविरोधात्। नियतपरनियमशब्दस्य 'विशेषणं विशेष्ये'त्यादिसूत्रेण पूर्वनिपातापत्तेश्च । तस्मात् नियतसामानाधिकरण्यमिति फलितार्थकथनम्;

---

1. विशेष्यमिति । सामानाधिकरण्यरूपं विशेष्यमित्यर्थः ।
2. विशेषणमिति । नियमरूपं विशेषणमित्यर्थः ।

न तु शब्दार्थकथनमिति तत्त्वम् । तथा च नियतसामानाधिकरण्य-शरीरे नियमः साध्याभाववदवृत्तित्वादिवैशिष्ट्यरूपो न शक्यते वक्तुमिति भावः । तथात्वे दोषमाह – [१५७] **इदं वाच्यमि**त्यादिना । अत्र च साध्याभाववदवृत्तित्वशरीरे किं साध्यनिष्ठप्रतियोगिताकाभावो निवेश्यते, उत साध्यतावच्छेदकेतरधर्मानवच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावपर्यन्तमि ति विकल्पं मनसि निधायाद्ये वाच्यत्वघटोभयाद्यभावमादाय घटादिवृत्तित्वविशिष्टवाच्यत्वाद्यभावं संयोगादिसंबन्धावच्छिन्नप्रतियोगिताकवाच्यत्वाद्यभावं चादाय सद्धेतोरव्यभिचारित्वानुपपत्तेः स्फुटत्वात् द्वितीये दूषणमाह – [१५७] **साध्याभावाप्रसिद्धेरि**ति । [१५७] **प्रतियोगितानवच्छेदकसाध्यतावच्छेदकावच्छिन्नेत्यर्थ** इति । धूमवान् वह्नेरित्यादौ प्रमेयत्वद्रव्यत्वादिकमादाय अतिव्याप्तिवारणाय विशिष्य साध्यतावच्छेदकप्रवेशः । यद्यपि महानसीयवह्न्याद्यभावप्रतियोगितावच्छेदकत्वं वह्नित्वादेरप्यधिकं त्विति न्यायादक्षतम् । तथापि तादृशप्रतियोगितानवच्छेदकेत्यादिना [1]हेतुसमानाधिकरणाभावविशिष्टान्यसाध्यतावच्छेदकावच्छिन्नविषयतावत्त्वविवक्षया न दोषः । वैशिष्ट्यं स्वसेत्यादिभेदवत्त्वसंबन्धेन । स्वाधिकरणता स्वप्रतियोगितावच्छेदकत्वसम्बन्धेन भेदप्रतियोगितावच्छेदकता अवच्छेदकतासंबन्धेन । तथा च महानसीयत्वादौ तादृशविषयतावच्छेदकताविरहात् लक्षणसङ्गतिः । विषयतायां साध्यतावच्छेदकावच्छिन्नत्वं चैकमात्रवृत्तिधर्मस्य साध्य-

---

1. हेतुसमानाधिकरणाभावविशिष्टान्या या साध्यतावच्छेदकावच्छिन्नविषयता तद्वत्त्वमित्यर्थः । स्वपदेन हेतुसमानाधिकरणः घटाद्यभावो ग्राह्यः । स्वसेत्यादिभेदवत्त्वं नाम स्वाधिकरणवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वम् । स्वं घटाभावः स्वप्रतियोगितावच्छेदकतासंबन्धेन घटाभावाधिकरणं घटत्वं, तत्र यो भेदः अवच्छेदकतासंबन्धेन वह्नित्वावच्छिन्नविषयतावद्भेदः तत्प्रतियोगितावच्छेदकत्वं वह्नित्वावच्छिन्नविषयतायामिति तादृशभेदप्रतियोगितावच्छेदकतासंबन्धेन घटाभाववती वह्नित्वावच्छिन्नविषयता तेन संबन्धेन घटाभाववद्भिन्ना च घटत्वावच्छिन्नविषयतेति स्वसेत्यादिभेदवत्त्वसंबन्धेन घटाभावविशिष्टा घटत्वावच्छिन्नविषयता, तदन्या वह्नित्वावच्छिन्नविषयतेति समन्वयो बोध्यः ।

ताववच्छेदकत्वे तन्निष्ठावच्छेदकताकत्वम् , धर्मद्वयादेः तथात्वे तु धर्मद्वयादेर्विशेषणविशेष्यतावच्छेदकभावेन यादृशं विलक्षणं अवच्छेदकत्वं तन्निरूपकत्वरूपमिति न क्षतिरिति । न चैवमपि संयोगसमवायोभयसम्बन्धावच्छिन्नप्रतियोगिताकवह्न्याद्यभावमादाय तद्दोषतादवस्थ्यमिति वाच्यम् । साध्यतावच्छेदकसम्बन्धमात्रावच्छिन्नत्वस्य तदितरसम्बन्धानवच्छिन्नत्वपर्यवसितस्य विवक्षितत्वात् । [१५८] **हेतुतावच्छेदकावच्छिन्नपरमिति** । [1]प्रकृतहेतुतावच्छेदकताव्यापकतावच्छेदकताकनिरूपकताकपरमित्यर्थः । तादृशनिरूपकताकत्वमधिकरणतान्वयि । तेन विशिष्टसत्ताहेतुके सत्तात्वस्यापि हेतुतावच्छेदकतया तद्दोषतादवस्थ्यमिति शङ्का परास्ता ।

वस्तुतस्तु एकधर्मस्य हेतुतावच्छेदकत्वे तन्निष्ठावच्छेदकताकत्वमेवाधिकरणतायां निवेश्यम् । यत्र धर्मद्वयादेः तथात्वं तत्र पूर्वोक्तरीत्या विलक्षणावच्छेदकताकत्वमिति न किंचिदवहीनम् । अत्रैव [१५८] **हेतुतावच्छेदकावच्छिन्नपर**मित्यस्यापि तात्पर्यमिति ध्येयम् । [१५८] **विशिष्टे**ति । [2]स्वरूपसमवायोभयघटितसामानाधिकरण्यसम्बन्धेन गुणकर्मान्यत्वविशिष्टेत्यर्थः । ननु विशिष्टशुद्धयोर्भेदात् कथं हेत्वधिकरणत्व गुणादेरित्यत आह - [१५८] **विशिष्टस्ये**ति । द्रव्यत्वाभावस्य हेत्वधिकरणगुणादिनिष्ठत्वेऽपीति योजना । गुणादीत्या-

---

1. निरूपकतापदेनात्र आधेयता विवक्षिता । तथा च प्रकृतहेतुतावच्छेदकताव्यापिका या आधेयतावच्छेदकता तन्निरूपकाधेयतानिरूपकत्वमधिकरणतायां विवक्षितम् । तेन द्रव्यं विशिष्टसत्त्वात् इत्यत्र हेतुतावच्छेदकता विशिष्टसत्तात्वे , तत्र गुणनिष्ठाधिकरणतानिरूपिताधेयतावच्छेदकता नास्ति , 'गुणो गुणकर्मान्यत्वविशिष्टसत्तावान्' इति प्रतीतिविरहात् । अपि तु द्रव्यनिष्ठाधिकरणतानिरूपिताधेयतावच्छेदकता अस्ति , 'द्रव्यं गुणकर्मान्यत्वविशिष्टसत्तावत्' इति प्रतीतेः । अतः हेतुतावच्छेदकताव्यापकावच्छेदकताकाधेयताकाधिकरणतावत् द्रव्यमेव , तद्वृत्त्यत्यन्ताभावाप्रतियोगित्वं द्रव्यत्वेऽस्तीति नाव्याप्तिरिति भावः ।

2. स्वरूपसमवायोभयघटितसामानाधिकरण्यं नाम स्वरूपसंबन्धावच्छिन्नस्वनिष्ठाधेयतानिरूपकाधिकरणनिरूपितसमवायसंबन्धावच्छिन्नवृत्तित्वम् ।

दिना कर्मादिसङ्ग्रहः । [१५८] **नाव्याप्तिरिति** । तन्निष्ठाधिकरणता-निरूपकतावच्छेदकं यत् तस्यैव तदवच्छिन्ननिरूपिताधिकरणतावत्त्वेन गुणादेरतथात्वादिति भावः । यद्यपि हेत्वधिकरणतायां हेतुतावच्छेदकसम्बन्धावच्छिन्नत्वानिवेशे कालिकादिना धूमाद्यधिकरणे ह्रदादौ संयोगाद्यवच्छिन्नवह्न्याद्यभावसत्त्वात् अप्यव्याप्तिसम्भवः । तथापि जन्यमात्रस्य कालत्वानुपगमे नैष दोषः सम्भवतीति तत्र तन्निवेशस्य प्रकारान्तरेण फलमाह - [१५८] **नाव्याप्तिरिति** । आत्मभिन्नं ज्ञानवदन्यत्वादित्यादौ आत्मनः केनापि सम्बन्धेन हेत्वधिकरणताविरहेण लक्षणसमन्वयसम्भवात् नासम्भवो दर्शितः । संयोगसामान्याभावस्य वृक्षे सविवादत्वादाह — [१५८] **कपीति** । [१५८] **प्रतियोगिवैयधिकरण्यस्येति** । यद्यपि सामान्यतः प्रतियोगिनिवेशे तादृशविशेषणाक्रान्ताभावाप्रसिद्धिः । स्वप्रतियोगिनिवेशे स्वत्वस्य तत्तद्व्यक्तिविश्रान्ततया व्याप्तेरसर्वज्ञदुर्ज्ञेयतापत्तिः । तथापि [1]तादात्म्यस्वप्रतियोग्यधिकरणवृत्तित्वोभयसंबन्धेन अभावविशिष्टान्यत्वं निरूपकत्वस्वाश्रयाधिकरणवृत्तित्वोभयसंबन्धेन प्रतियोगिताविशिष्टान्यत्वं वा स्थूलसूक्ष्मरीतिभ्यामनुगतमभावे निवेश्यमिति न दोषः । अत्र च स्वप्रतियोग्यधिकरणावृत्तित्वस्य प्रतियोगिवैयधिकरण्यशब्दार्थत्वे कपिसंयोगी सत्त्वादित्यादौ व्यभिचारिण्यतिप्रसङ्गः । अधिकरणभेदेनाभावभेदविरहेण साध्याभावस्य व्यापकताघटकत्वासम्भवात् । स्वप्रतियोग्यनधिकरणवृत्तित्वस्य निवेशे च कपिसंयोगी एतत्त्वादित्यादौ अव्याप्तितादवस्थ्यमिति हेत्वधिकरणे स्वप्रतियोग्यनधिकरणत्वं निवेशनीयमित्यादिकं मनसि निधायाह - [१५८] **अधिकमिति** ।

---

1. अभावपदेन संयोगाभावो ग्राह्यः तादात्म्यसंबन्धेन स्वप्रतियोग्यधिकरणवृत्तित्वसम्बन्धेन च तद्विशिष्टः स एव , तदन्यो घटाद्यभावः । एवं प्रतियोगिता संयोगनिष्ठा, तन्निरूपकः संयोगाभावः तथा स्वं प्रतियोगिता तदाश्रयः संयोगः तदधिकरणवृत्तिश्च संयोगाभाव इति उक्तोभयसम्बन्धेन प्रतियोगिताविशिष्टः संयोगाभावः तदन्यः घटाद्यभाव इति समन्वयो द्रष्टव्यः ।

### अनुमानविभागः

**सङ्ग्रहे**[१६४]**स्वयमेवे**त्यादि । अस्य वाक्यस्य परानधीनभूयोदर्शन-जन्यमहानसादिनिरूपितस्वाश्रयाश्रयत्वरूपपरम्परासम्बन्धावच्छिन्नाधेयताश्रयः यत्र धूमस्तत्राग्निरिति व्याप्तिविषयकप्रत्यक्षोत्तरकालीनपर्वतसमीपकर्मकगमनाश्रयः पर्वतवृत्तिवह्निविषयकसन्देहवान् पर्वतधर्मिकधूमप्रकारकचाक्षुषाश्रयः यत्र धूमस्तत्राग्निरित्याकारकव्याप्तिविषयकस्मरणाश्रय इत्यखण्डबोधः । तत्र धूमं पश्यन् स्मरतीत्यनेन धूमदर्शनजन्यत्वं व्याप्तिस्मरणे लभ्यते । उद्देश्यविधेयभावस्थले उद्देश्यतावच्छेदकविधेययोर्जन्यजनकभावसम्बन्धभानस्य धनवान् सुखीत्यादौ दृष्टत्वात् । तथा च कथं व्याप्तिस्मरणहेतुत्वं धूमदर्शनस्येत्याशङ्कायां तदुपपादयति **प्रकाशिकायाम्** [१६५] **एकसंबन्धी**ति ।

### स्वार्थानुमाननिरूपणम्

**भूयोदर्शनेन व्याप्तिं गृहीत्वे**ति **सङ्ग्रह**वाक्यात् भूयोदर्शनस्य व्याप्तिग्राहकता लभ्यते । तच्च नोपपद्यते । अन्वयव्यभिचारादित्याशङ्कते - **दीपिकायां** [१६४] **नन्वि**ति ।

### व्याप्तिग्रहोपायनिरूपणम्

ननु व्यभिचारज्ञानदशायामपि भूयोदर्शनेन व्याप्तिनिश्चयः स्वीक्रियते इतीष्टापत्तिः कुतो न सम्भवति इत्यत आह - [१६५] **व्यभिचारज्ञानदशायामि**त्यादि । तथा चानुभवविरोध इति भावः । यदि चानुभवविरोधमप्यनादृत्य इष्टापत्तिः स्वीक्रियते तदाप्याह - [१६५] **इदमुपलक्षणमि**ति । इदं-व्यभिचारज्ञानदशायां व्याप्तिनिश्चयापत्तिरूपातिप्रसङ्गकथनम् उपलक्षणम्-वक्ष्यमाणदूषणान्तरसूचकम् । [१६५] **रासभादिसाधारण्या**दिति । इदमुपलक्षणम् सामान्य-प्रत्यासत्त्यनुपगमपक्षे पर्वतीयवह्निधूमयोः सामानाधिकरण्यस्यासन्निकृष्टतया महानसादौ व्याप्तिप्रत्यक्षे भानासम्भवात् पर्वतादौ धूमादिदर्शनानन्तरं व्याप्तिस्मरणानुपपत्तिरित्यपि द्रष्टव्यम् । हेतुतावच्छेदकपर्यन्तस्य व्याप्तित्वे धूमत्वादिकमेवावच्छेदकं अवच्छेद्यं च भवतीति अवच्छे-

द्यावच्छेदकयोरैक्यप्रसङ्गः । न चेष्टापत्तिः । अवच्छेद्यप्रकारकज्ञानेऽवच्छेदकप्रकारकज्ञानस्य कारणतया आत्माश्रयप्रसङ्गात् । आत्माश्रयश्च प्रकृते स्वज्ञानहेतुत्वापादनजन्यस्वज्ञानभेदारोपात्मकः । यदि स्वज्ञानं स्वज्ञानहेतुः स्यात् तर्हि स्वज्ञानव्यतिरिक्तं स्यादिति तर्क इति यावत् । यद्वा यदि स्वं स्वहेतुः स्यात् तर्हि स्वभिन्नं स्यादित्यादि तर्करूपः । स्वज्ञानादिहेतुत्वस्य स्वज्ञानादिव्यतिरिक्तत्वव्याप्यतया आपाद्यापादकयोर्व्याप्तिसत्त्वादत आह - [१६५] **धूमत्वादे**रिति । [१६५] **न क्षति**रिति । तथा च तादृशधूमत्वत्वावच्छिन्नप्रकारताशालिज्ञानं कार्यम् ; धूमत्वादिनिष्ठानवच्छिन्नप्रकारताकज्ञानं कारणमिति कार्यकारणयोः भेदात् नात्माश्रय इत्यर्थः । इष्टापत्तिदोषेण तर्कानुत्थानादिति भावः ।

ननु व्यभिचारज्ञानाभावः सहचारग्रहश्च व्याप्तिग्रहहेतुरित्युक्तम् तत्र तादृशविशिष्टव्याप्तिग्रहे किमंशे व्यभिचारग्रहाभावस्योपयोगः सामानाधिकरण्यग्रहस्य च कुत्रोपयोग इत्याशङ्कायां तदुपपादयति [१६५] **इत्थं चे**त्यादिना । [१६५] **विशेषणज्ञानविधये**ति । हेतुः साध्यसमानाधिकरण इति ज्ञानं विना हेतुतावच्छेदके साध्यसमानाधिकरणवृत्तित्वस्य दुर्ग्रहत्वादिति भावः । साध्यसामानाधिकरण्यस्य व्याप्तित्वेऽपि न दोष इत्याह - [१६५] **वस्तुतस्त्वि**ति । [१६६] **तद्धर्मधर्मितावच्छेदकके**ति । तद्धर्मावच्छिन्नविशेष्यताकेत्यर्थः । [१६६] **अत एवे**ति । सामानाधिकरण्यान्तस्यैव व्याप्तित्वव्यवस्थापनादेवेत्यर्थः। [१६६] **धूमत्वत्वे**ति । धूमत्वत्वस्य धूमेतरासमवेतत्वसहितनिखिलधूमवृत्तित्वरूपत्वादिति भावः ।

[१६६] **दिगि**ति । अयमाशयः - हेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितव्यापकत्वप्रकारतानिरूपित साध्यतावच्छेदकावच्छिन्न - प्रकारतानिरूपितसामानाधिकरण्यप्रकारतानिरूपितहेतुतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यता -

कनिश्चयत्वेन हेतुत्वोपगमात् न विशिष्टपरामर्शस्य अनुमितिहेतुत्वानुपपत्तिः । एवं पूर्वमते वह्निमान् जलात् इत्यादौ साध्यसमानाधिकरणावृत्तिहेतुतावच्छेदकं विरोधः । एतन्मते च साध्याधिकरणावृत्तिहेतुः तथा । एवं पूर्वमते हेतुतावच्छेदकस्य पक्षविशेषणतावच्छेदकतया स्वरूपतोऽपि निवेशस्य स्वरूपासिद्धेर्हेत्वाभासतोपपत्तये आवश्यकतया व्याप्तिग्रहनिष्ठहेतुतावच्छेदकगर्भे त्रेधा हेतुतावच्छेदकप्रवेशनमावश्यकमिति गौरवम् एतन्मते तु द्विधेति लाघवम् । एवं हेतुप्रकारतानिरूपितव्यापकत्वप्रकारतानिरूपितसाध्यप्रकारतानिरूपितसमानाधिकरणप्रकारतानिरूपितवृत्तित्वप्रकारतानिरूपितहेतुतावच्छेदकप्रकारतानिरूपितहेतुतावच्छेदकावच्छिन्नप्रकारतानिरूपितपक्षतावच्छेदकावच्छिन्नविशेष्यताकनिश्चयत्वेन पूर्वमते हेतुत्वं वाच्यमिति गौरवम् । एतन्मते तु न तथेति लाघवमिति । अत्र च व्यभिचार संशयस्य व्याप्तिप्रत्यक्षं प्रत्येव विरोधिता न तु व्याप्त्यनुमित्यादौ तत्र तस्यानुकूलत्वात् । तथा च व्याप्तिप्रत्यक्षत्वमेव व्यभिचारसंशयप्रतिबध्यतावच्छेदकम्, न त्वनुमित्यादिसाधारणव्याप्तिज्ञानत्वम् । तथा सति व्यभिचारसंशयदशायां व्याप्त्यनुमित्यनुपपत्तेः । एवं चैकधर्मावच्छिन्नं प्रति संशयनिश्चयसाधारणव्यभिचारज्ञानत्वेन नैकं प्रतिबन्धकत्वं सम्भवति । एवं तदवच्छिन्नाभावस्य हेतुत्वमपि । किं च व्यभिचारसंशयप्रतिबन्धकतायां तर्क उत्तेजकः । निश्चयप्रतिबन्धकतायां तु स न तथेति तर्काभावविशिष्टव्यभिचारसंशयत्वेन व्याप्तिप्रत्यक्षप्रतिबन्धकत्वं तदविशेषितव्यभिचारनिश्चयत्वेन च व्याप्तिग्रहप्रतिबन्धकत्वमिति न प्रतिबन्धकतैक्यसम्भव इति एकस्याभावस्य हेतुत्वं न सम्भवतीत्यभिसन्धाय [१६६] **हृदय**मित्युक्तम् ।

[१६६]**धूमाग्न्योरि**त्यादिवाक्ये **दीपिका**स्थे **व्याप्तिग्रहे** इति सप्तम्यन्तस्य अन्वयानुपपत्तिमाशङ्क्य शेषं पूरयति-[१६६] **व्याप्तिग्रहे उत्पत्स्यमान** इति । तथा च 'यस्य च भावेन भावलक्षणम्' इति सूत्रेण प्राप्ता सप्तमी व्याप्तिग्रहपदोत्तरं उत्पत्तिं बोधयति । तस्याश्च **व्यभिचार**-

**शङ्कानिवर्तक** इत्यत्र निवृत्तौ स्वप्राक्कालीनत्वसंबन्धेन अन्वयः । अज्ञातस्य विधेयत्वात् ज्ञातस्य चोद्देश्यत्वात् सामान्यतो व्यभिचारशङ्कानिवर्तकस्य कस्यचित् अवगतत्वेन दर्शित**दीपिका**वाक्ये योजनया अन्वयमाह - [१६६] **व्यभिचारशङ्कानिवर्तक** इत्यादि । तर्काकारः कथमित्याशङ्कायामाह - [१६६] **स चेति** [१६६] **असन्निकर्षेणे**त्यादि । प्रत्यक्षविषयतायाः सन्निकर्षव्याप्यत्वादिति भावः ।

**परार्थानुमाननिरूपणम्**

[१७०] **परार्थानुमानप्रयोजक** इत्यादि । अयं भावः – परार्थं अनुमानं यस्मादिति व्युत्पत्त्या बहुव्रीहावुत्तरपदस्यान्यपदार्थलाक्षणिकतया परार्थानुमानशब्देन परार्थानुमानप्रयोजकत्वावच्छिन्नं बोध्यत इति तस्यौपचारिकत्वमिति ।

**यत्तु** - परार्थानुमानशब्दे कर्मधारयमाश्रित्य प्रयोजकतारूपलक्षणया पञ्चावयववाक्यत्वावच्छिन्नमेव तेन बोध्यते । परार्थानुमानप्रयोजक इत्युक्तिस्तु शक्यसंबन्धप्रदर्शनार्थेति — तत्तुच्छम्-परार्थानुमानशब्दस्य वाक्यरूपतया नैयायिकैः वाक्यलक्षणाया अनभ्युपगमात् । वाक्यशक्याप्रसिद्ध्या शक्यसंबन्धरूपलक्षणाया असम्भवात् । अन्यथा गभीरायां नद्यां घोष इत्यादौ नद्यादिपदस्य ग्रन्थकृतां गभीरनदीतीरादिलक्षकत्वकथनविरोधापातात् । अयमत्र संग्रहः –

" बहुव्रीहिः पदार्थानुमानशब्देऽत्र कीर्त्यते ।
केचित्तु ब्रुवते कर्मधारयं तत्र तन्न सत् ॥
तथात्वे तस्य वाक्यत्वात् लक्षणा नोपपद्यते ।
वाक्यशक्यस्याप्रसिद्धेः वाक्ययोगो हि लक्षणा ॥
अस्मन्मते बहुव्रीहौ लक्षकं पदमुत्तरम् ।
तत्प्रयोजकतारूपशक्ययोगेन युज्यते " ॥ इति ।

अत्र चानुमानशब्दः परार्थानुमानप्रयोजकपरः । परार्थपदं तात्पर्यग्राहकमिति केषांचिन्मतम् । अनुमानशब्दः अनुमानप्रयोजक-

परः । तदेकदेशेऽनुमाने परार्थपदार्थस्यान्वय इति परेषां मतमिति विवेकः ।

**न्यायावयवनिरूपणम्**

[१७२] **न्यायलक्षणं बोध्यमि**ति । तथा च न्यायलक्षणापरिज्ञाने न्यायावयवत्वघटितवक्ष्यमाणलक्षणं दुर्ज्ञेयमिति शङ्का निरस्ता । ननु [१७२] **अनेन प्रतिपादिताल्लिङ्गा**दित्यादि**संग्रह**वाक्ये प्रतिज्ञाद्यवयवपञ्चकसमुदायप्रयोज्यज्ञानविषयीभूतलिङ्गजन्यानुमित्याश्रयः परोऽपीत्यर्थो लभ्यते । स च न घटते । ज्ञायमानलिङ्गस्यानुमितिहेतुताया असम्भवात् । अन्यथा अतीतादिलिङ्गज्ञानदशायां अनुमित्यनुपपत्तेरित्याशङ्क्य लिङ्गपदमत्र लिङ्गपरामर्शपरम्, अतस्तादृशसमुदायप्रयोज्यलिङ्गपरामर्शजन्यानुमितिमान् परोऽपीत्यर्थो लभ्यत इति नानुपपत्तिरिति समाधिमभिप्रयन्नाह -[१७२]**अनेने**त्यादि । [१७२]**साध्यवत्तया पक्षवचनम्** इति **दीपिका**वाक्ये साध्यपदं साध्यतावच्छेदकावच्छिन्नपरम् । तृतीयार्थः प्रकारत्वम् । पक्षपदं पक्षतावच्छेदकावच्छिन्नपरमित्यभिप्रायेणार्थमाह - [१७२] **साध्यतावच्छेदकावच्छिन्ने**त्यादिना । पक्षतावच्छेदकनिवेशप्रयोजनमाह - [१७२] **उदाहरणे**त्यादिना । इदं चोदाहरणस्थसाध्यपदस्य केवलसाध्यपरतामङ्गीकृत्य । तेन कल्पान्तरस्य वक्ष्यमाणत्वेन तस्यैव च यौक्तिकत्वात् तदभिप्रायेण तेन निगमनस्य व्युदासाय शुद्धसाध्यतावच्छेदकनिवेशस्यावश्यकतया उदाहरणस्थसाध्यवाचिपदस्य हेतुव्यापकताविशिष्टसाध्यपरत्वे तत्रातिप्रसङ्गविरहात् पक्षतावच्छेदकप्रवेशवैयर्थ्यमिति निरस्तम् । विशेष्यताप्रकारतयोर्निरूप्यनिरूपकभावस्य साध्यतावच्छेदकस्य च निवेशफलमाह – [१७३] **उपनयाच्चे**ति । वह्निव्याप्यधूमवान् पर्वत इत्याद्युपनयजन्यबोधीयसाध्यतावच्छेदकावच्छिन्नप्रकारतायाः पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वविरहात् द्रव्यादिसाध्यके धूमादिहेतुके स्थले द्रव्यव्याप्यधूमवानित्याद्युपनयजन्यबोधीयपक्षविशेष्यतानिरूपितप्रकारतायाः साध्यतावच्छेदकावच्छिन्नत्वविरहाच्च

नोपनयेऽतिप्रसङ्ग इति भावः । कालिकसंयोगाभ्यां वह्न्यादेरेव हेतुसाध्यभावस्थले उपनयवारणाय साध्यतावच्छेदकसम्बन्धनिवेशः । ननु तादृशबोधजनकत्वमेव लक्षणमास्ताम्, किं वाक्यत्वनिवेशनेने- त्याशङ्क्य तस्य न्यायबहिर्भूतवाक्यवारकत्वेन सार्थक्यमाह - [१७२] **वाक्यपदस्ये**ति । निगमनघटके साध्यज्ञानयमिति भागेऽतिप्रसङ्ग व्युदा- सायावयवत्वस्य प्रवेशः । [१७३] **अग्रेऽपि** - हेत्वादिलक्षणेऽपि । **दीपि- कायाम्** [१७२] **पञ्चम्यन्तमि**त्यादि । पञ्चमी अन्तः यस्मिन् इति व्यु- त्पत्त्या पञ्चम्यन्तत्वं [1]स्वघटकपदपूर्वत्वाभाववत्पञ्चमीघटितत्वं पञ्चमी- विशिष्टत्वपर्यवसितम् । वैशिष्ट्यं [2]स्वघटितत्वस्वनिष्ठभेदप्रतियोगि- तावच्छेदकत्वोभयसम्बन्धेन । अवच्छेदकता [3]स्वघटकपदपूर्वत्वसम्ब- न्धेन । तन्निवेशफलस्य तस्मात् वह्निमानिति निगमनवारणस्य स्फुट- त्वात् लिङ्गप्रतिपादकत्वनिवेशफलमाह - **प्रकाशिकायाम्** [१७३] **अयं न दण्डादि**त्यादिना । [१७३] **दण्डसंयोगाजन्येत्यादि** । घटादौ दण्डरूपादौ च व्यभिचारवारणाय विशेषणविशेष्ययोरुपादानम् । पञ्चमीघटितत्वनिवेशेनैवोपनयवारणात् तदन्तत्वपर्यन्तनिवेशस्य निग- मनवारणमेव फलम् । पर्वतो वह्निमानित्यादिप्रतिज्ञायाः पञ्चम्यन्त- त्वविरहात् तदुपेक्षणम् । अयं दण्डादित्यादेः सम्प्रदायविरोधात् न दण्डादित्युक्तम् । पुंस्त्वादिरूपलिङ्ग परतायाः लिङ्गपदे भ्रमवारणाया- ह-[१७३]**हेत्वि**ति । यद्यपि दण्डसंयोगाजन्यद्रव्यत्वात दण्डाजन्यत्वव- त्सधर्मा न दण्डात् दण्डसंयोगाजन्यद्रव्यत्वादित्यादौ एवमप्यतिव्याप्तिः, तथापि पक्षतावच्छेदकावच्छिन्नविशेषणतापन्नसाध्यान्वितलिङ्गप्रति- पादकत्वस्य पक्षतावच्छेदकावच्छिन्नविषयतानिरूपितसाध्यविषयता- निरूपितहेतुविषयताशालिबोधजनकत्वरूपस्य विवक्षणात् न दोषः ।

---

1. स्वं = यस्मिन् समुदाये पञ्चमी अन्तः भवति स समुदायः, स्वघटकं यत्पदं तत्पूर्वत्वाभाववती या पञ्चमी तद्घटितत्वं समुदाये ।
2. स्वशब्दद्वयमपि पञ्चमीपरम् ।
3. स्वपदं पञ्चम्यन्तसमुदायपरम् ।

नन्वेवमपि थाल्प्रत्ययार्थविकल्पमुखेन तन्निरासपूर्वकमन्यत्र थाल्-प्रत्ययघटितयोरुपनयनिगमनयोर्दूषितत्वेन प्रकृते तस्मात् न दण्डादित्याकारकस्यैव निगमनस्य वाच्यत्वेन तत्रातिप्रसङ्गः। पञ्चम्यन्तत्वस्य तत्राक्षतत्वादिति चेत् - न। लिङ्गप्रतिपादकत्वशरीरे शुद्धत्वस्य लिङ्गविशेषणतया निवेशात् प्रकृतलिङ्गतावच्छेदकातिरिक्तानवच्छिन्न-लिङ्गविषयताकबोधजनकत्वरूपस्य शुद्धलिङ्गप्रतिपादकत्वस्यातिव्याप्त्यभावात् निगमनजन्यबोधे लिङ्गे व्याप्त्यंशस्याधिकस्य भानादिति। उपनयादावपि व्याप्तिप्रतिपादकत्वसत्त्वात् आह - [१७३] **प्रकृतहेतुमती**त्यादि। वादिवाक्ये स्वारसिकलक्षणाया एवातिप्रसञ्जकत्वादाह- [१७३] **निरूढे**ति। अनादितात्पर्यविषयीभूतार्थनिष्ठेत्यर्थः। सम्भवति सार्थकत्वे नैरर्थक्यमन्याय्यमिति आशयत्रानाह - [१७३] **अथवे**ति। ननूदाहरणात् व्याप्तिबोधाभावे तस्य व्याप्तिपरत्वं न निर्वहतीत्यत आह - [१७३] **तथाचे**ति। तथा चोदाहरणस्य व्याप्तिविषयकमानसबोधमौत्तरकालिकमादाय व्याप्तिप्रतीतीच्छया उच्चरितत्वरूपं व्याप्तिप्रतिपत्तिपरत्वम् व्याप्तिप्रतिपादकेत्यनेन विवक्षितं उपपादनीयमिति भावः। [१७३] **दिगि**ति। अयं भावः - अयं न दण्डात् दण्डसंयोगाजन्यद्रव्यत्वात् इत्यादौ यो हेतुमान् स न दण्डादित्युदाहरणवाक्ये धर्मिणोऽविवक्षायां नञो बोधकत्वं एव न स्यात्। एवं निर्धूमो निर्वह्नित्वादित्यादौ यो न वह्निमान् स न धूमवानित्याद्यन्वय्युदाहरणस्य यत्तदर्थाविवक्षायामनुपपत्तिरिति। [१७३] **व्याप्तिविशिष्टलिङ्गप्रतिपादकमि**ति **दीपिको**क्तोपनयलक्षणस्य निगमनेऽतिव्याप्तिमाशङ्क्याह- [१७३] **पक्षतावच्छेदकविशिष्टविशेष्यके**ति। निरूप्यनिरूपकभावनिवेशात् न दोष इति भावः। [१७३] **प्रयुज्यत इतिशेषपूरणेने**ति। इदं च पक्षधर्मताज्ञानाय - पक्षधर्मताज्ञानार्थमिति समासपक्षे चतुर्थ्याः कारकविभक्तितया क्रियापदसापेक्षत्वादुक्तम्। पक्षधर्मताज्ञानमर्थो यस्मादिति व्युत्पत्तिस्वीकारे तु शेषपूरणस्य नावश्यकता। वचनमित्यध्याहारेण नपुंसकत्वमिति ध्येयम्। [१७२]

**हेतुसाध्यवत्तया पक्षवचनमि**ति निगमनलक्षणे हेतोस्साध्यमिति पञ्चमी समासः। पञ्चमीति योगविभागेनोपपादनीयः। यद्वा हेतोः साध्यमिति षष्ठी शैषिकी ज्ञानज्ञाप्यत्वं बोधयति। इदानीं 'सुप् सुपे'ति समासो बोध्य इत्यभिप्रायेणार्थमाह - [१७३] **हेतुज्ञाने**ति। [१७३] **साध्य-वद्विषयके**ति। तादृशसाध्यप्रकारकपक्षतावच्छेदकावच्छिन्नविशेष्यताके-त्यर्थः। ननु पक्षसाध्यसम्बन्धादीनां प्रतिज्ञादित एव लाभात् निगमनं विफलमित्याशङ्क्य निगमनस्थहेतुवाचिपदस्याबाधितत्वादिविशिष्ट-हेतुलाक्षणिकत्वमुपगम्य तत्प्रतीतेः शाब्दत्वं लक्षणाया जघन्यत्वाद-युक्तमिति मनसि निधाय मानसी अबाधितत्वादिप्रतिपत्तिरेव निगम-नप्रयोजनमित्याह **दीपिकायाम्** [१७२] **अबाधितत्वादिकमि**ति। आ-दिपदेनासत्प्रतिपक्षितत्वपरिग्रहः। अबाधितत्वादिकम् - अबाधितत्वा-दिप्रतिपत्तिः। तेन यथाश्रुते विषयस्य जन्यत्वघटितप्रयोजनत्वासम्भ-वादसङ्गतिरिति निरस्तम्। उत्तरकालमित्यत्यन्तसंयोगे द्वितीया। तेन निगमनजन्यशाब्दबोधोत्तरं हेतावबाधितत्वादिप्रतीतिर्नियमेन जायत इति लभ्यते। उक्तरीत्या तत्प्रतिपत्तेः शाब्दत्वासम्भवादाह-**प्रकाशिकायाम्** [१७६] **मानसो द्रष्टव्य इ**ति।

### विशिष्टपरामर्शस्यानुमितिहेतुत्वस्थापनम्

**क्लृप्तस्ये**ति। एतेन नियतपूर्ववृत्तित्वमुभयसम्मतमिति सूचितम्। **दीपिकायाम्** [१७६] **किमर्थमङ्गीकर्तव्य** इति। तद्धेतोरेवेति न्यायादिति भावः। [१७७] **अत्र त्वदभिम**तेत्यादि। एतेन मीमांसकस्यापि ज्ञान-द्वये पूर्ववृत्तित्वं कल्पनीयमिति सूचितम्। [१७७] **शाब्देती**ति। तद्बोधकपदमन्तरेण तद्भानासम्भवादिति भावः। एतेन प्रत्यक्षस्थले सन्निकर्षवशात् कस्यचित् हेतुतावच्छेदकस्य भानं दुर्वारमिति न तत्र व्यभिचारसम्भव इति सूचितम्। **दीपिकायाम्** [१७७] **परामर्शस्याव-श्यकतये**ति। त्वदभिमतज्ञानद्वयं विनैव विशिष्टपरामर्शस्यानुमितिपू-र्वमुपेयतयेत्यर्थः। ननु क्वचित् विशिष्टपरामर्शादनुमितिरस्तु किं सर्वत्र विशिष्टपरामर्शकल्पनयेत्यत आह – [१७७] **लाघवेने**ति।

कस्य लाघवमित्याशङ्कायामाह — **प्रकाशिकायाम्** [१७७] **कल्पनालाघवेनेत्यर्थ** इति । [१७७] ज्ञानद्वये-व्याप्तिज्ञानत्वपक्षधर्मताज्ञानत्वावच्छिन्नद्वये । [१७७] **विशिष्टपरामर्शे**-व्याप्तिविशिष्टवैशिष्ट्यावगाहिपरामर्शत्वावच्छिन्ने । तथा चैकधर्मावच्छिन्नेऽनन्यथासिद्धत्वादिकल्पनमपेक्ष्य पूर्वोक्तधर्मावच्छिन्नद्वये तत्कल्पनस्य गुरुत्वादिति भावः । ननु व्याप्तिग्रहपक्षधर्मताग्रहयोः प्रातिस्विकरूपाभ्यां हेतुत्वं नोपेयते । येनोक्तदोषस्स्यात् । अपि तु व्याप्तिग्रहविशिष्टपक्षधर्मताज्ञानत्वेन तथात्वमुपेयते । एवं चास्मन्मतेऽपि एकधर्मावच्छिन्न एव तत्कल्पनमिति लाघवं दुरपह्नवम् । विनिगमनाविरहस्तुल्य एव । उपदर्शितशाब्दपरामर्शस्थले व्यभिचारस्तु कार्यतावच्छेदकगर्भे विशिष्टपरामर्शाव्यवहितोत्तरत्वं निवेश्यैव परिहर्तव्यः । अन्यथा साध्यव्याप्यहेतुतावच्छेदकावच्छिन्नवानिति विशिष्टपरामर्शस्य तत्र व्यभिचारप्रसङ्गात् इत्यत्राह — [१७७] **वस्तुतस्त्विति** ।।

[१७७] **अवधेयमिति** । अयं भावः - मीमांसकमतेऽनुमितिकारणतावच्छेदककोटौ सामानाधिकरण्यस्य द्विधा ज्ञानत्वस्य च प्रवेशः आवश्यकः । अस्मन्मते तु न तथा । एवं व्याप्तिग्रहविशिष्टपक्षधर्मताज्ञानत्वेन पक्षधर्मताज्ञानविशिष्टव्याप्तिग्रहत्वेन वा कारणतेति विनिगमनाविरहात् कारणताद्वयं तन्मते वक्तव्यम् । अस्मन्मते तु विनिगमनाविरहसम्भवेऽपि समनियतकारणतानामभेदोपगमात् न कारणताद्वयावकाशः । एवं व्याप्त्यवच्छिन्नप्रतियोगिताकत्वविशिष्टसमवायादिसम्बन्धावच्छिन्नतादृशधूमादिप्रकारताशालिज्ञात्वेन हेतुत्वे व्याप्त्यंशे निश्चयत्वमपि न निवेशनीयम्; अस्मन्मते विशेषणतावच्छेदकांशे संशयात्मकज्ञानस्य विशिष्टवैशिष्ट्यावगाहित्वायोगादिति लाघवमिति। [१७७] **विनिगमनाविरहेणेति** । लिङ्गविशेषितपरामर्शत्वेनैव कारणत्वं वक्तव्यमित्यत्र नियामकाभावेनेत्यर्थः । उद्देश्यतासंबन्धेन अनुमितिं प्रति हेतुतावच्छेदकसंबन्धेन संयोगादिना धूमादिहेतोः कारणत्वं दुर्घटमित्याशयेनाह - [१७७] **तत्राप्यनुमितेरिति** ।

**अन्वयव्यतिरेकिनिरूपणम्**

अन्वयेन व्यतिरेकेण च व्याप्तिमदिति **संग्रहे**ऽन्वयशब्दः हेतु-साध्यसामानाधिकरण्यरूपान्वयसहचारपरः । ग्रहग्राह्यत्वं तृतीयार्थः । अत एव केवलव्यतिरेकिनिरासः । व्यतिरेकेणेत्यत्रापि व्यतिरेको व्यति-रेकसहचारः। साध्याभावहेत्वभावयोः सामानाधिकरण्यरूपः । तृतीयार्थः पूर्ववत् । **प्रकाशिकायाम् अन्वयसहचारे**त्यादि । केवलव्यतिरेकिवारणाय सत्यन्तम् । केवलान्वयिव्युदासाय विशेष्यम् । अन्वयव्याप्तिमत्त्वमात्र-निवेशे 'पृथिवी इतरेभ्यो भिद्यते गन्धवत्त्वात्' इत्यादिव्यतिरेकिवार-णासम्भवः । उक्तपरिष्कारे त्वन्वयव्याप्तिग्राहकदृष्टान्तविरहात् न हेतुसाध्ययोः सहचारग्रह इति न दोषः । विशेष्यदले तु विशिष्यैव व्याप्तिरुपादेया । न तु तादृशग्रहग्राह्यत्वेनापीति बोध्यम् । **संग्रहे** [१८०] **वह्नौ साध्य** इति । वह्निनिष्ठसाध्यतानिरूपकं धूमवत्त्वमित्यर्थः । दृष्टान्तवाक्ये महानसादिपदं सप्तम्यन्तम् । यत्रेत्यनुरोधात् ।

**केवलान्वयिनिरूपणम्**

ननु केवलान्वयित्वमेव हेतोर्लक्षणम् कुतो नोक्तमित्यत आह - [१८२] **केवलान्वयिसाध्यके**ति । घटोऽभिधेयः पृथिवीत्वात् इत्यादि-हेतोरित्यर्थः । [१८२] **तदेव** केवलान्वयित्वमेव । ननु गगनाभाववान् मेयत्वात् इत्यादावव्याप्तिः । साध्यस्य गगनाद्यात्मकाभावप्रतियोगि-त्वात् । एवं संयोगाभाववान् प्रमेयत्वात् इत्यादावपि साध्यस्य सं-योगाद्यात्मकाभावप्रतियोगित्वादित्यत्राह - [१८२] **निरवच्छिन्ने**ति । सप्तमीनिर्देश्यं यत् विलक्षणमवच्छेद्यत्वं तद्रहितेत्यर्थः । तेनाधेयतायाः किंचिद्धर्मावच्छेद्यत्वनियमेऽपि न क्षतिः । तथा च गगनादेः वृत्तिम-त्त्वाभावात् संयोगादिनिष्ठवृत्तेः निरवच्छिन्नत्वविरहाच्च नोक्तदोष-स्यावकाश इति भावः । केचित्तु - स्वविरोधिवृत्तिमदत्यन्ताभावा-प्रतियोगित्वं केवलान्वयित्वम् । यद्यप्यत्र स्वपदेनानुयोग्युपादाने तत्त-द्व्यक्तिविश्रामापत्तिः तावदन्यतमत्वं च दुर्ग्रहम् । प्रतियोग्युपादाने वीप्साविरहेऽतिप्रसंगः वीप्साकरणे दुर्ज्ञेयता ; तथापि वृत्तिमदत्यन्ता-

भावविशिष्टान्यत्वं तत्। [1]वैशिष्ट्यं स्वप्रतियोगित्वस्वनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। अवच्छेदकता स्वाधिकरणवृत्तित्वसंबन्धावच्छिन्ना। अतो न दोष इत्याहुः। तच्चिन्त्यम् – संयोगादावुक्तकेवलान्वयित्वमतिव्याप्तमिति स्वानधिकरणवृत्तित्वप्रवेशनस्यावश्यकत्वेन स्वातन्त्र्येण वृत्तिमत्त्वविशेषणनिवेशवैयर्थ्यापत्तेः। स्वाधिकरणनिरूपितनिरवच्छिन्नाधेयताशून्यत्वप्रवेशे च संयोगाभावस्य केवलान्वयिताभङ्गापत्तेः। संयोगादिरूपाभावस्य तथात्वात्। वृत्तावपि निरवच्छिन्नत्वनिवेशने च प्रक्षालनाद्धिन्यायापत्तेः।

**केवलव्यतिरेकिनिरूपणम्**

[१८३] **व्यतिरेकमात्रव्याप्तिकमिति संग्रह**पङ्क्तौ अन्वयव्याप्तिशून्यत्वे सति व्यतिरेकव्याप्तिमत्त्वमर्थो लभ्यते। अत्र चान्वयव्यतिरेकिवारणाय विशेषणम्, व्यभिचारिवारणाय विशेष्यमिति बोध्यम्। तच्च न घटते हेतुव्यापकसाध्यसामानाधिकरण्यरूपायाः साध्याभाववदवृत्तित्वरूपाया वा व्याप्तेः पृथिवी इतरेभ्यो भिद्यते गन्धवत्वात् इत्यादौ हेतौ सत्त्वात् अन्वयव्याप्तिप्रकारकनिश्चयाविशेष्यत्वे सति व्यतिरेकव्याप्तिप्रकारकनिश्चयविशेष्यत्वं लक्षणं वाच्यमित्यभिप्रायेण व्याचष्टे [१८४] **निश्चितेति**। अत्राप्यन्वयव्यतिरेकिव्यभिचारिणोः वारणाय विशेषणविशेष्ये। व्यतिरेकव्याप्तिमत्त्वमेवालम् न लक्षणासङ्गतिरिति। पृथिवीसामान्यस्य पक्षत्वेन तदतिरिक्तदृष्टान्तदौर्लभ्येनान्वयव्याप्तिनिश्चयासम्भवादिति भावः। इतरप्रतियोगिकभेदस्य जलत्वाद्यवच्छिन्नभेदाद्यात्मकस्य प्रसिद्ध्या विकल्पासङ्गतेराह - [१८४] **पृथिवीतरत्वावच्छिन्नेति**। ननु पृथिवीतरत्वावच्छिन्नप्रतियोगिताकभेदरूपस्य साध्यस्य प्रसिद्धिपक्षे आद्ये [१८३] **यत्नेत्यादिना दीपिकोक्तं** दूषणम-

---

1. स्वं वृत्तिमान् अत्यन्ताभावः घटाभावः तद्विशिष्टः घटः तदन्यत्वं अभिधेयत्वादेः। घटस्य उक्तोभयसंबन्धेन घटाभावविशिष्टत्वं चेत्थम्-स्वं घटाभावःतत्प्रतियोगित्वं घटस्य, एवं स्वं घटाभावः तन्निष्ठो यो भेदः स्वाधिकरणवृत्तित्वसंबन्धेन घटवद्भेदः, घटाभावस्य घटाधिकरणवृत्तित्वाभावात्, तादृशभेदप्रतियोगितावच्छेदकत्वं च घटस्येति।

सङ्गतम् । अन्वयित्वस्यान्वयव्याप्तिमत्त्वरूपस्य तत्र सत्त्वेन तदापाद-नासम्भवात् आपत्तावापाद्य व्यतिरेकनिर्णयस्य हेतुतया तदसम्भवात् इत्यत आह - [१८४] **अन्वयसहचारे**ति । इष्टापत्तिः कुतो न संभवतीत्याशङ्क्य भावमाह - [१८४] **तथाचे**ति । [१८४] **प्रसिद्धा-नुमानम्** वह्न्यादिसाध्यकधूमादिहेतुकानुमानम् । [१८४] **एत-दपि** - पृथिवी इतरेभ्यो भिद्यते गन्धवत्वादित्यादिकमपि । [१८४] **सपक्षे**ति । सपक्षत्वमत्र साध्यप्रकारकनिश्चयविशेष्यत्वम् न तु साध्य-वत्त्वमात्रम् असम्भवात् । तथा च पृथिवीतरभेदे साध्ये गन्धवत्त्वादि-रसाधारणहेत्वाभास एव स्यात् न तु सद्धेतुरिति भावः । ननु विशे-ष्यज्ञानविरहेऽपि साध्यविशेष्यकानुमितेः साध्याघटितव्यतिरेकव्याप्ति-विषयकात् पृथिवीतरत्वव्यापकीभूताभावप्रतियोगि गन्धवती पृथिवी इत्याकारकात् परामर्शात् सम्भवे बाधकाभाव इत्यत आह - [१८४] **अप्रसिद्धे**ति [१८४] **अभिप्रायेणे**ति । तथा चाप्रसिद्धसाध्यकेऽपि सा-ध्यप्रकारिकैवानुमितिरित्यभ्युपगम्यैव इदं दूषणमुक्तमिति भावः । एवेन साध्यविशेष्यकानुमितिव्यवच्छेदः । [१८४] **जलादीनामि**त्यादि । त्रयोदशान्योन्याभावा इति कर्मधारय एतन्मत इति ध्येयम् । केचित्तु मते तु जलादित्रयोदशेति पुनर्बहुव्रीहिः । अन्यथा चतुर्दशात्मकसमुदा-यालाभात् । त्रयोदशान्योन्याभावा इति षष्ठीसमासः । [१८४] **त्रयोदशत्वावच्छिन्ने**ति **दीपिका**वाक्ये त्रयोदशत्वं समुदायत्वविशेष इति सूचितम् [१८४] **अपेक्षे**त्यादिना । अवच्छिन्नत्वं वैशिष्टचं भेदगतम् ।

ननु जलादित्रयोदशेत्यत्रोक्तरीत्या चतुर्दशलाभेऽपि केवलं त्रयोदशेत्यादिवाक्ये कथं तल्लाभ इत्यत आह – [१८४] **जलादीत्या-दिरि**ति । तथा च शेषपूरणेन तादृशार्थलाभ इति भावः । मतान्तर-साधारण्येन व्यतिरेकव्याप्तेरनुमित्यङ्गत्वस्थापनानुपपत्तिश्च । एवं जलादित्रयोदशेत्यत्र बहुव्रीह्यन्तरकल्पनाप्रयासः प्रत्येकमिति पदपूरणेन चतुर्दशात्मकसमुदायस्य प्रत्येकं येऽन्योन्याभावा इति व्याख्यानक्लेशः । स्वायत्ते शब्दप्रयोगे ईदृशवक्राभिधानस्य ग्रन्थकाररीतिविरुद्धत्वं **प्रथम**_

घटकार्थस्यादिपदस्य प्राथम्यमात्रपरत्वेऽस्वारस्यम् चेति । **दीपिकायाम्** [१८४] **एकाधिकरणवृत्तित्वाभावादिति** । एकाधिकरणवृत्तितया अनुमितेः प्राङ्निश्चितत्वाभावादित्यर्थः । साध्याघटितव्यतिरेकव्याप्तिविषयकज्ञानस्य साध्यज्ञाननिरपेक्षत्वादाह - [१८४] **साध्याभावेति** । अपि तु जलादिभेदकूटमिति । एतेन **दीपिका**वाक्यस्थं मेलनमित्यन्तं व्याख्यातम् । यद्यपि कूटत्वस्यैकविशिष्टापरत्वरूपत्वे तद्दोषतादवस्थ्यम् , तावद्विषयकधीविषयत्वरूपत्वे विषयताया व्यासज्यवृत्तित्वे मानाभावात् प्रत्येकविश्रान्तत्वेन उक्तानुमानस्यान्वयित्वप्रसङ्गः, तादृशसाध्यतावच्छेदकावच्छिन्नाभावस्याप्रसिद्धत्वेन व्यतिरेकव्याप्तिग्रहासम्भवश्च, तथापि जलभिन्नानुयोगिकत्वविशिष्टस्वरूपसम्बन्धेन वाय्वादिभेदविशिष्टतेजोभेदस्य साध्यत्वस्वीकारात् न दोषः । अपेक्षाबुद्धिविशेषेत्यादिवक्ष्यमाणग्रन्थस्तु विषयताया व्यासज्यवृत्तित्वाभ्युपगमेन प्रवृत्तः । अन्यथा पुनरुक्तरीतिरेवेति ध्येयम् । [१८४] **अनुमित्यङ्गत्वम्** अनुमितिप्रयोजकत्वम् । [१८५] **अग्रेऽपि - जलादित्रयोदशत्वावच्छिन्नभेदात्मकसाध्यस्येत्यत्रापि** । अस्मदुक्तरीत्या यथाश्रुतार्थस्यैव उपपत्तेः । जलादीति शेषपूरणस्यायुक्तत्वमित्यस्वरसः आहुरित्यनेन सूचितः । इदमत्रावधेयम् - तावद्विषयकधीविषयत्वस्याधेयतासम्बन्धावच्छिन्नव्यापकतासम्बन्धेन साध्यत्वमङ्गीकार्यमिति विषयत्वस्याव्यासज्यवृत्तित्वेऽपि न विरोधः । एवमन्यत्रापि बोध्यम् । तादृशव्यापकता च स्वसमानाधिकरणभेदप्रतियोगित्वीयाधेयतासम्बन्धावच्छिन्नावच्छेदकतासम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वमिति ।

### पक्षलक्षणम्

[१८८] **सन्दिग्धसाध्यवानिति सङ्ग्रहोक्त**पक्षलक्षणवाक्येन सन्देहप्रकारीभूतसाध्यवत्त्वं पक्षलक्षणमिति लभ्यते । तच्च ह्रदो वह्निमानित्यादौ ह्रदाद्यव्यापकमित्याशङ्क्याह [१८८] **विशेष्यतासम्बन्धेनेति** । [१८८] **सपक्षलक्षणादिकमि**त्यादि । विशेष्यतासंबन्धेन साध्यप्रकारकनि-

श्रयवत्त्वं सपक्षलक्षणम् । आदिपदग्राह्यं विपक्षलक्षणमपि तेन संबन्धेन साध्याभावप्रकारकनिश्चयवत्त्वम्। अन्यथा ह्रदादौ वह्न्यादिभ्रमदशायां तस्य सपक्षतया पर्वतादौ निर्वह्नित्वादिभ्रमदशायां तस्य विपक्षतया भ्रान्तपुरुषीयोपन्यासानुपपत्तेः। **दीपिकायाम्**[१८८]**निश्चितत्वेने**ति । **इतर-विलक्षणत्वेने**त्यादि । **दीपिकायां**[१८८]**उक्ते**त्यादि । यद्यपि तादृशसिद्-ध्यभावः घटादावप्यस्तीति पर्वतो वह्निमानित्यादौ तत्रातिप्रसङ्गः । तथा च स्वप्रतियोगितावच्छेदककोटिप्रविष्टविशेष्यतावच्छेदकधर्मव-त्तासम्बन्धेन तादृशसिद्ध्यभावस्य पक्षपदप्रवृत्तिनिमित्ततोपेयत इति न दोषः । [1]तादृशस्य इह पर्वतत्वादेः घटादावभावादिति बोध्यम् ।

**हेत्वाभासनिरूपणम्**

**दीपिकास्थ'सद्धेतुं निरूप्ये'**त्यन्तोपादानस्य प्रयोजनमाह - [१८९] **असद्धेतुनिरूपण** इति । कृत इति शेषः । तथा च कृतिः सप्तम्यर्थः । तस्या उत्तरकालीनत्वसम्बन्धेन स्मरणेऽन्वयः । [१८९] **प्रसङ्गसङ्गत्ये**ति । असद्धेतुत्वादिरूपयेति शेषः । [१८९] **तदि**ति । असद्धेत्वित्यर्थः । (१९०) **हेतुवदाभासन्त** इतीति । इदं **चार्थप्रदर्शनपरम्**, न तु विग्र-हप्रदर्शनपरम् । विग्रहस्तु हेतव इवाभासा इति वक्तव्यम् । तादा-त्म्येन सद्धेतुप्रकारकभ्रमविशेष्यतेत्यर्थः । भ्रमहेतुदोषश्च पञ्चम्यन्त-पदप्रतिपाद्यत्वरूपः । **दीपिकायाम्** [१८९] **सद्धेतुं निरूप्येत्यादि** सद्धेतु-विशेष्यकलक्षणादिप्रकारकज्ञानजनकशब्दप्रतियोगिकध्वंसविशिष्टः अ-सद्धेतुविशेष्यकलक्षणादिप्रकारकज्ञानजनकशब्दविषयकेच्छाविशिष्टश्च यः असद्धेतुत्वव्याप्यधर्मप्रकारकज्ञानजनकशब्दः तदनुकूलवर्तमानका-लीनकृतिमानित्यखण्डबोधः । अत्रासद्धेतुमित्यस्य देहलीदीपन्यायेनो-भयत्रान्वयः। प्रथमवैशिष्ट्यं स्वप्रतियोगिसमानकर्तृकत्वस्वाश्रयकाल-वृत्तित्वोभयसम्बन्धेन । द्वितीयवैशिष्ट्यं स्वप्रयोज्येच्छाविषयत्वस्ववि-षयसमानकर्तृकत्वोभयसम्बन्धेन। सद्धेतुमित्यत्र सत्पदस्यार्थमाह - **प्रका-शिकायाम्** [१८९] **व्याप्त्यादिविशिष्टे**ति । आदिना पक्षधर्मतापरिग्रहः ।

1. तादृशस्येति । स्वप्रतियोगितावच्छेदककोटिप्रविष्टविशेष्यतावच्छेदकधर्मरूपस्येत्यर्थः

ननु स्यान्नाम सामान्यधर्मकथनस्यावश्यकता, तथापि दुष्टलक्षणस्य प्रतिज्ञातत्वात् तस्यैव वक्तव्यतया तदुपेक्ष्य दोषलक्षणाभिधानासङ्गतिरित्यत आह - **दोषलक्षण** इत्यादि । [१९०] **लाभः** बोधः । प्राप्त्यर्थकधातोर्ज्ञानार्थकत्वादिति भावः । [१९०] **अत्रानुमितिपदमि**त्यादि । अयमाशयः-अनुमितिपदं प्रकृतपक्षधर्मिकप्रकृतसाध्यप्रकारकानुमिति-प्रकृतपक्षविशेष्यकप्रकृतसाध्यव्याप्यहेतुप्रकारकपरामर्शान्यतरपरम् , न तु परामर्शस्यानुमितिकरणत्वेनात्र प्रवेशः । यद्यपि पर्वतो वह्निमान् ह्रदश्च तथेत्यनुमितौ पर्वतो वह्निव्याप्यधूमवान् ह्रदश्च तथेत्यादिपरामर्शे च समूहालम्बने ह्रदो न वह्निमान् नापि वह्निव्याप्यधूमवानित्यादिविपरीतनिश्चययोः प्रतिबन्धकत्वात् तद्विषयेऽतिव्याप्तिः । बाधाद्यसङ्ग्रहभिया तादृशान्यतरत्वव्यापकप्रतिबध्यतानिवेशासम्भवात् । तथापि प्रकृतानुमितित्वव्यापकत्वप्रकृतपरामर्शत्वव्यापकत्वान्यतरवत्प्रतिबध्यतानिरूपितप्रतिबन्धकतानिवेशात् न दोषः । अत एवानुमितिकरणत्वेन परामर्शनिवेशोपेक्षा । **भ्रमभिन्नेत्यर्थः** इति । **भ्रमत्वं** च [1]स्वावच्छिन्नत्वस्वानुयोगिनिष्ठविशेष्यतानिरूपितत्वस्वप्रतियोगिनिष्ठत्वत्रितयसम्बन्धेन संसर्गविशिष्टान्यप्रकारतानिरूपकत्वम् । तेन पर्वतो निर्वह्निरिति ज्ञानस्य किंचिदंशे प्रमात्वेऽपि न क्षतिः ।

[१९०] **यद्रूपावच्छिन्नविषयकेति** । यद्विषयकेत्युक्तौ विशिष्टशुद्धयोरनतिरेकात् ह्रद इत्याद्येकदेशज्ञानमादायासम्भवस्स्यादिति तदुपेक्षा । कस्तर्हि ज्ञानविशेष इत्याकाङ्क्षायां तत्प्रदर्शनमुखेन निष्कृष्टहेत्वाभासलक्षणं प्रदर्शयति – [१९०] **एवं चेति** । अत्रायमनुगमः

---

1. स्वशब्देन रजते इदं रजतमिति प्रमायां विषयभूतः यः समवायाख्यः संबन्धः स ग्राह्यः, तदवच्छिन्नत्वं रजतत्वनिष्ठप्रकारतायामस्ति । एवं स्वं समवायः तदनुयोगि रजतं तन्निष्ठविशेष्यतानिरूपितत्वं च रजतत्वनिष्ठप्रकारतायामस्ति । एवं स्वं समवायः तत्प्रतियोगि रजतत्वं तन्निष्ठत्वं च प्रकारतायामस्ति । अतः उक्तत्रितयसंबन्धेन संसर्गविशिष्टा प्रमीयप्रकारता तदन्या प्रकारता भ्रमीया रजतत्वनिष्ठप्रकारता तन्निरूपकत्वं भ्रम इति ।

पक्षतावच्छेदकविशिष्टरूपवत्त्वं हेत्वाभासत्वम् । वैशिष्टचं च स्वविशिष्टप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टत्वसम्बन्धेन । स्ववैशिष्टचं [1]स्वावच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकारताशाल्यनुमितिवृत्तिभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वावच्छिन्नविशेष्यतानिरूपितसाध्यव्याप्यहेतुप्रकारताशालिपरामर्शवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । प्रतिबन्धकतावैशिष्टचं आधेयतासम्बन्धेन । सा च [2]स्वसेत्यादिभेदवत्त्वसंबन्धेन। स्वाधिकरणता स्वावच्छिन्नविषयकानाहार्यप्रामाण्यज्ञानानास्कन्दितनिश्चयत्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वरूपसम्बन्धेन । तेनात्रायं दोष इत्यादौ न वाक्यभेदः । अत्रायं प्रतिबध्यप्रतिबन्धकभावनिष्कर्षः । ह्रदत्वादिनिष्ठानवच्छिन्नावच्छेदकताकविशेष्यतानिरूपितसंयोगत्वावच्छिन्नसंसर्गताकवह्नित्वादिनिष्ठानवच्छिन्नवच्छेदकताकप्रकारताकानाहार्यबुद्धित्वावच्छिन्नं प्रति ह्रदत्वादिनिष्ठानवच्छिन्नावच्छेदकताकविशेष्यतानिरूपिता या वह्नित्वादिनिष्ठानवच्छिन्नावच्छेदकताकसंयोगसम्बन्धावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नप्रकारतानिरूपितस्वरूपसम्बन्धावच्छिन्नाभावत्वावच्छिन्नप्रकारता तच्छाल्यनाहार्यत्वादिविशिष्टज्ञानत्वेन विरोधित्वम् । अत्र जातिमान् वह्निमानिति ज्ञानव्यावृत्तये प्रतिबध्यदिशि जातिमान् वह्न्यभाववानित्यादिज्ञानव्यावृत्तये प्रतिबन्धकदिशि अनवच्छिन्नत्वनिवेशनम् । एवं प्रतिबध्यदिशि कालिकत्वादिना संयोगावगाहिभ्रमस्याप्रतिबध्यत्वोपपत्तये संयोगत्वादिना पदार्थान्तरावगाहिभ्रमस्य प्रतिबध्यत्वोपपत्तये च संयोगत्वावच्छिन्नसंसर्गताप्रवेश इति ध्येयम् । ज्ञानविशेषनिवेशे प्रयोजनमाह - [१९०] **तेनेति** । [१९०]**अप्रामाण्यज्ञानविशिष्टस्येति** । विषयत्वसामानाधिकरण्योभयसम्बन्धेनेत्यादिः ।

---

1. एवं - पक्षतावच्छेदकम् ।

अत्र सर्वत्र स्वशब्दः दोषतावच्छेदकरूपपरः ।

**मिश्र**व्याख्यामुपन्यस्यति - [१९१] **परेत्वि**त्यादिना । [१९१] **दुष्टानामि**त्यादि । तथा च न दुष्टनिरूपणप्रतिज्ञाविरोध इति भावः । [१९१] **इदम्** - अनुमितिप्रतिबन्धकयथार्थज्ञानविषयत्वम् । [१९१] **दुष्टानामेवे**ति । एवेन दोषव्यवच्छेदः । ननु पर्वतो वह्निमान् धूमादित्यादौ पर्वतो वह्न्यभाववानिति बाधभ्रममादायातिप्रसङ्गः । तस्याप्यनुमितिप्रतिबन्धकतया हेतौ तत्प्रकारकग्रहस्य यथार्थत्वसम्भवादित्यत आह - [१९१] **परन्त्विवि**ति । ननु ज्ञायमानव्यभिचारादिप्रतिबन्धकतामताश्रयणे प्रतिबन्धकयथार्थज्ञानेत्यत्र कर्मधारयासम्भवात् लक्षणवाक्यार्थानुपपत्तिरित्यत आह -[१९१] **तदर्थस्त्वि**ति । अनुमितीत्यादिलक्षणवाक्यार्थस्त्वित्यर्थः । [१९१]**एके**ति । स्वविषयकेत्यर्थः ज्ञानविशेषणम् । लक्ष्ये लक्षणं ग्राहयति - [१९१] **धूमवानित्या**दिना । [१९१] **उक्ते**ति । एकज्ञानविषयप्रकृतहेतुतावच्छेदकधर्मवत्त्वरूपेत्यर्थः । एवमग्रेऽपि [१९१] **दर्शिते**त्यस्य । [१९१] **तदि**ति । धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपव्यभिचारेत्यर्थः ।

**ननु** इह लक्षणेऽनुमितिसामान्यस्य प्रवेशात् पर्वतो वह्निमान् धूमादित्यादावतिव्याप्तिः । ह्रदो धूमवानित्याद्यनुमितिप्रतिबन्धको यो व्यभिचारः धूमाभाववद्वृत्तित्वविशिष्टवह्न्यादिरूपः प्रागुक्तसंबन्धेन तत्प्रकारकप्रमाविशेष्यत्वस्य धूमादिसद्धेतौ सत्त्वात् इत्याशङ्कां निराकरोति[१९१] **प्रकृते**ति । प्रकृतपक्षकप्रकृतसाध्यकप्रकृतहेतुकेत्यर्थः । [१९१] सद्धेताविति । नातिव्याप्तिरित्यनेन सम्बन्धः । [१९१] **यथार्थपदानुपादान** इत्यादि । यद्यप्यनुपदमेव पर्वतो वह्निमान् धूमादित्यादिस्थले तादृशव्यभिचाराद्यप्रसिद्ध्या नातिप्रसङ्गप्रसक्तिरित्युक्तत्वात् कथमेतत्प्रयोजनकथनसङ्गतिः । तथापि धूमवान् वह्नेरित्यत्रैव रासभादिधर्मिकदर्शितसंसर्गकतादृशव्यभिचारादिरूपतत्स्थलप्रसिद्धदोषप्रकारकभ्रमविशेष्यतामादाय रासभादावतिप्रसङ्ग इत्याशयात् न दोषः । न चैवं सद्धेतावित्युक्तिरयुक्तेति वाच्यम् । इह सद्धेतुपदस्य प्रकृतहेतुभिन्नपरत्वात् । तथा च सद्धेतावपि प्रकृतहेतुभिन्नेऽपि रासभा-

दाविति शेषः । अपिना प्रकृतहेतुसंग्रहः । दृष्टान्ततया भ्रमप्रमासाधारण्येनैव ज्ञानस्य लक्षणे निवेशादिति भावः । [१९१] तदिति । यथार्थपदेत्यर्थः । [१९१] आहुरिति । अत्रायमस्वरसः — अनुमितीत्यादेर्दोषलक्षणत्वे दोषवत्त्वं दुष्टानां लक्षणं स्फुटतया लभ्यते । उक्तरीत्या तस्य दुष्टलक्षणत्वे तु दोषलक्षणं नैव लभ्यत इति शिष्यधीवैशद्यासिद्धिः । यद्यप्यनुमितिप्रतिबन्धकेत्यनेन अनुमितिप्रतिबन्धकत्वं तल्लक्षणं लभ्यते तथापि तन्मतेऽनुमितिप्रतिबन्धकवत्त्वमित्युक्तिमात्रेणोभयसामञ्जस्ये प्रतिबन्धकयथार्थज्ञानेत्याद्युक्तेरस्वारस्यमिति ।

सव्यभिचारनिरूपणम्

**सङ्ग्रहे** [१९५] **साध्याभाववद्वृत्तिरिति** । अत्र केचित् · वह्निमान् धूमादित्यादौ अतिव्याप्तिः । साध्याभाववती या धूमाधिकरणता तन्निरूपिताधेयत्वस्य धूमादौ सत्त्वात् । न च साध्याभाववन्निष्ठाधिकरणतानिरूपिताधेयत्वं विवक्षितमिति न दोष इति वाच्यम् । एवमपि धूमाधिकरणता पर्वतान्या धूमाधिकरणतात्वादित्यादौ अतिव्याप्तेः । तत्र साध्याभाववान् पर्वतः तन्निष्ठा या धूमाधिकरणता तन्निरूपिताधेयत्वस्य धूमाधिकरणतात्वे सत्त्वात् । न च साध्याभाववन्निरूपितत्वे सति साध्याभाववन्निष्ठाधिकरणतानिरूपिता या आधेयता इति विवक्षणात् [1]न दोष इति वाच्यम् । एवमपि धूमाधिकरणता अधिकरणताभिन्नत्वपर्वतान्यत्वोभयवती धूमाधिकरणतात्वात् [2]इत्यत्रातिव्याप्तेः ।

---

1. न दोष इति । धूमाधिकरणतात्वनिष्ठायामाधेयतायां साध्याभाववत्पर्वतनिष्ठधूमाधिकरणतानिरूपितत्वेऽपि साध्यभाववत्पर्वतनिरूपितत्वाभावादिति भावः ।

2. इत्यत्रातिव्याप्तेरिति । तत्र हि साध्याभाववान् पर्वतः धूमाधिकरणता च भवति । साध्याभाववत्पदेन पर्वतस्योपादाने तन्निष्ठा या अधिकरणता धूमाधिकरणता तन्निरूपितत्वं धूमाधिकरणतात्वनिष्ठायां आधेयतायामस्ति , एवं साध्याभाववत्पदेन धूमाधिकरणतारूपायाः अधिकरणतायाः उपादाने तन्निरूपितत्वं च धूमाधिकरणतात्वनिष्ठायामाधेयतायामस्ति इत्यतिव्याप्तेरित्यर्थः ।

न च साध्याभाववद्विशिष्टाधेयत्वं विवक्षितम् । वैशिष्ट्यं च स्वनिरूपितत्वस्वनिष्ठाधिकरणतानिरूपितत्वोभयसम्बन्धेन । अतो न दोष इति वाच्यम् । एवमपि प्रमेयत्वाधिकरणता प्रमेयत्वाधिकरणतात्वनिष्ठाधेयतानिरूपिताधिकरणताभिन्ना प्रमेयत्वाधिकरणतात्वात् इत्यत्रातिव्याप्तेः । साध्याभाववती या साध्यभूतभेदप्रतियोग्यधिकरणता तन्निरूपितत्वस्य साध्याभाववती या तादृशाधिकरणता तन्निष्ठा या प्रमेयत्वाधिकरणता तन्निरूपितत्वस्य च प्रमेयत्वाधिकरणतात्वनिष्ठाधिकरणतानिरूपिताधेयतायां सत्त्वात् ।

न च स्वनिष्ठाधिकरणतानिरूपितत्वस्थले स्वनिष्ठाधिकरणतानिरूपकत्वं वाच्यम् । आधेयताया अधिकरणनिरूपकत्वाभावेनोक्तदोषानवकाशादिति वाच्यम् । एवमपि आधेयत्वाधिकरणता आधेयतात्वनिष्ठाधिकरणतानिरूपिताधिकरणताभिन्ना आधेयत्वाधिकरणतात्वादित्यत्रातिव्याप्तेः । आधेयतासामान्यनिरूपिताधिकरणतानिरूपकत्वस्याधेयतामात्रे सत्त्वात् ।

न च स्वनिरूपकत्वस्थले स्वनिरूपकतावच्छेदकहेतुतावच्छेदकधर्मसम्बन्धावच्छिन्नाधेयतात्वकत्वनिवेशात् न दोष इति वाच्यम् । तथा सति साध्याभाववदवृत्तित्वरूपव्याप्तेः निरुक्तव्यभिचाराभावरूपत्वे हेतुभेदेन भेदापत्त्या केवलान्वयिग्रन्थविरोधापत्तेः । तत्र तादृशव्याप्तेरभेदस्योक्तत्वात् ।

न च स्वनिरूपकत्वसम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभावस्वनिरूपितत्वोभयसम्बन्धेन । साध्याभाववद्विशिष्टाधेयत्वं विवक्षितमिति न दोषः । आधेयताया अधिकरणनिरूपकताविरहात् इति वाच्यम् । वृत्त्यनियामकसम्बन्धस्यात्यन्ताभावप्रतियोगितानवच्छेदकतामते उक्तपरिष्कारासम्भवात् ।

न च स्वनिरूपकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वमेव निवेश्यमिति न दोषः । वृत्त्यनियामकसम्ब-

न्धस्याप्यन्योन्याभावप्रतियोगितावच्छेदकतावच्छेदकतायाः सर्वसंमतत्वात् इति वाच्यम्। तथासति धूमवान् वह्नेरित्यादावसम्भवापत्तेः। निरूपकतया अयोगोलकादिमतोऽप्रसिद्धेरिति वदन्ति।

अत्रोच्यते-विलक्षणनिरूपितत्वसम्बन्धेन साध्याभाववद्विशिष्टाधेयत्वं विवक्षितम्। वैलक्षण्यं चाखण्डोपाधिः। न च तत्र मानाभाव इति वाच्यम्। कार्यतायाः कारणमित्याद्यव्यवहारात् कार्यस्य कारणमिति व्यवहाराच्च विलक्षणनिरूपितत्वस्य षष्ठ्यर्थताया **गदाधरेण बाधग्रन्थे** उक्ततया तत्तुल्ययुक्त्या अधिकरणे वर्तते, अधिकरणतायां वर्तत इत्यादिव्यवहाराव्यवहाराभ्यां विलक्षणनिरूपितत्वस्य सप्तम्यर्थताया अप्यावश्यकत्वात्। वैलक्षण्यस्य चाखण्डोपाधिरूपादन्यस्य निर्वक्तुमशक्यत्वात् इति बोध्यम्।

अन्ये तु साध्याभाववन्निष्ठाधिकरणतानिरूपकत्वं विवक्षितमिति न दोष इत्याहुः। तच्चिन्त्यम् - प्रमेयाधिकरणता पर्वतान्या प्रमेयाधिकरणतात्वादित्यादावव्याप्तेः। प्रमेयत्वेन प्रकृतहेतोरपि तादृशाधिकरणतानिरूपकत्वात् इति।

**प्रकाशिकायाम्**[१९६]**साध्यतावच्छेदकधर्मसंबन्धावच्छिन्नेति**। साध्यतावच्छेदकधर्मसम्बन्धपर्याप्तावच्छेदकताकेत्यर्थः। तेन द्वित्वाद्यवच्छिन्नाभावविशिष्टाभावयोः संयोगसमवायोभयसंबन्धावच्छिन्नप्रतियोगिताकाभावस्य च व्यावृत्तिः। तादृशावच्छेदकताकत्वं च तादृशधर्मेतरधर्मानवच्छिन्नत्वे सति तादृशसम्बन्धेतरसम्बन्धानवच्छिन्नत्वम्। धर्मसम्बन्धयोर्निवेशप्रयोजनमाह - [१९६] **तेनेति** हेतुतावच्छेदकसंबन्धप्रवेशनं च वह्निमान् धूमादित्यादौ विपक्षभूते ह्रदादौ कालिकादिनां धूमादेस्सत्त्वात् अतिव्याप्तिवारणाय। [१९६]**साध्याभाववत्तायाम्** साध्याभावनिष्ठाधेयतायाम्। ननु कपिसंयोगी एतत्वादित्यादौ अतिव्याप्तिः। शुद्धविशेषणतायास्तादृशत्वादित्यत आह - **कपीति**। [१९६] **द्विगिति**। आकाशाभावत्वावच्छिन्नकालिकविशेषणतासंबन्धावच्छि-

न्नप्रतियोगिताकाभाववान् आत्मत्वादित्यादौ कालिकविशेषणतैव ता-दृशसम्बन्धः । यदि च 'अधिकं तु' इत्यादि न्यायेन निरवच्छिन्न-विशेषणतासंसर्गककपिसंयोगाभावप्रकारकनिश्चयमादाय तद्दोषतादव-स्थ्यमित्युच्यते । तदा यद्धर्मपर्याप्तावच्छेदकताकसंसर्गतानिरूपित-साध्याभावप्रकारताकनिश्चियः प्रतिबन्धकः तद्धर्मपर्याप्ताधेयतावच्छेद-कतानिवेशात् न दोषः । न चैवमपि तादृशसमूहालम्बनज्ञानमादाय तद्दोषतादवस्थ्यमिति वाच्यम्। तादृशनिश्चयसामान्यं प्रतिबन्धकमित्यर्थ-विवक्षणात् । तथा च ज्ञानत्ववृत्तिधर्मपर्याप्तावच्छेदकताकत्वं निवेश्यम्। वृत्तिश्च स्वसेत्यादि भेदवत्त्वसंबन्धेन । स्वाधिकरणता स्वपर्याप्ताव-च्छेदकताकसंसर्गताकसाध्याभावप्रकारतानिरूपितविशेष्यतावच्छेदक-तानिरूपकनिश्चयत्वसंबन्धेन । भेदप्रतियोगितावच्छेदकतास्वाश्रयवि-शिष्टत्वसंबन्धेन । वैशिष्टचं तादात्म्यस्वविशिष्टप्रतिबध्यतानिरूपित-प्रतिबन्धकत्वोभयसम्बन्धेन । स्ववैशिष्टचं स्वविशेष्यतावच्छेदकधर्मा-वच्छिन्नविशेष्यतानिरूपितसाध्यतावच्छेदकधर्मसम्बन्धावच्छिन्नप्रकार-ताशाल्यनाहार्यज्ञानवृत्तिभेदप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्नस्व-निष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन । नातो व्यभिचार-स्य विशिष्टैकार्थरूपताभङ्ग इति ।

सपक्षवृत्तित्वसामान्याभावनिवेशस्यावश्यकतया तत एव किं-चित्सपक्षमादाय दोषविरहात् सर्वपदवैयर्थ्यमित्याशङ्क्याह- [१९६] **सपक्षवृत्तित्वेति** । ननु सपक्षत्वं यदि साध्यवत्त्वमात्रं तदा असम्भवः । शब्दत्वादावनित्यत्वादिसामानाधिकरण्यसत्त्वादित्यत आह - [१९६] **सपक्षपदमिति** । ननु शब्दादावनित्यत्वादिसाधने शब्दत्वादिःसद्धेतुरेवेति कथं तस्यासाधारणहेत्वाभासतेत्याशङ्क्याह - [१९७]**शब्द इत्यादि** । [१९७] **सम्प्रदायविदः** प्राञ्चः । नवीनमतस्य निर्दुष्टत्वात् प्राहुरि-त्युक्तम् । [१९५] **अन्वयव्यतिरेकदृष्टान्तरहितोऽनुपसंहारी** इति **संग्रहो-**क्तयथाश्रुतलक्षणे सिद्ध्यसिद्धिभ्यां व्याघात इत्यालोच्याह - [१९७]

**अन्वयव्यतिरेकेति** । यत्किंचिद्धर्मिणि साध्यनिश्चयस्य साध्याभावनिश्च-यस्य वा सत्त्वे अनुपसंहारव्यवहारविरहात् दलद्वयोपादानम् ।

**विरुद्धनिरूपणम्**

ननु विरोधासाधारण्ययोरभेदप्रसङ्गः इत्यत आह - [२०३] **साध्याभावेति** । **साक्षात्** - परामर्शमद्वारीकृत्य । तदभावव्याप्यवत्ता-ज्ञानविषयेति यावत् ।

**सत्प्रतिपक्षनिरूपणम्**

[२०३] **यस्य साध्याभावसाधकमित्यादिसङ्ग्रहवाक्ये** षष्ठ्यन्त-यच्छब्दार्थस्य साध्येऽन्वयः । पक्ष इत्यध्याहार्यम् । प्राचीनमते सत्प्रति-पक्षस्यानित्यदोषत्वेन सद्धेतोरपि तद्व्यवहारस्येष्टत्वेन विद्यत इत्यस्य ज्ञायत इत्यर्थः कर्माख्याताश्रयणात् । नव्यमते तु कर्त्राख्याताश्रयणेन वर्तत इत्यर्थः । **साधकम्** - व्याप्यतया गृह्यमाणमित्यर्थः प्राचांमते । नवीनमते तु व्याप्यमित्यर्थ इत्यभिप्रायेण व्याचष्टे - [२०३] **यस्स-म्बन्धीत्यादि** । [२०३] **नवीनाः पुनरिति** । साध्याभावव्याप्य हेत्वन्त-रवत्पक्षः सत्प्रतिपक्षः । व्याप्तिश्चान्वयतो व्यतिरेकतश्च बोध्या । तद्ग्रहश्च तदभावव्याप्यवत्ताग्रहविषयानुमितिविरोधीति भावः ।

**असिद्धनिरूपणम्**

[२०३] **पक्षे पक्षतावच्छेदकविरह** इति । तज्ज्ञानस्य पक्षताव-च्छेदकविशिष्टपक्षग्रहविरोधित्वम् । [२०३] **पक्षे हेत्वभाव इति** । तद्ग्रहस्य च पक्षधर्मतावगाहिपरामर्शविरोधित्वं बोध्यम् । ननु बाधा-देरिवोपाधेरपि दोषत्वात् तद्विशिष्टस्यातिरिक्तहेत्वाभासत्वमावश्य-कत्वं बाधितादिवत् उपधेयसङ्करेऽपीति न्यायात् । अतः सोपाधिको व्याप्यत्वासिद्ध इत्यसङ्गतमिति हेत्वाभासपञ्चत्वव्याघातापत्तिरि-त्यत आह - [२०४] **उपाधेरिति** । ननु साध्याप्रसिद्धिसाधनाप्रसि-द्धिरूपयोर्दोषयोरधिकयोस्सत्त्वात् कथं हेत्वाभासानां पाञ्चविध्यमि-त्याशङ्क्य तयोर्व्याप्यत्वासिद्धावन्तर्भावात् न तद्विरोध इत्याह - [२०४] **अत्रेदमवधेयमित्यादिना** ।

**संग्रहे** [२०७] **साध्यव्यापकत्वे सतीत्यादि** । अत्र च वह्निमा-न्धूमादित्यादौ द्रव्यत्वादेर्घटादेश्च वारणाय दलद्वयोपादानम् । ननु सा-ध्यव्यापकत्वं साध्यवन्निष्ठाभावाप्रतियोगित्वरूपं चेत्, तदा असम्भवः; सर्वेषामेव द्वित्वाद्यवच्छिन्नाभावप्रतियोगित्वात् । किं तु साध्यवन्नि-ष्ठाभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । तथा च वह्निमान् धूमा-दित्यादौ वह्नित्वादिना महानसीयवह्न्यादेः साध्यव्यापकत्वात् उपा-धितापत्तिरित्यत आह - **प्रकाशिकायाम्** [२०७] **साध्यव्यापकत्वेत्यादि** । साध्यतावच्छेदकसंबन्धेन साध्यवन्निष्ठाभावीयोपाधिताघटकसंबन्धा-वच्छिन्नप्रतियोगितानवच्छेदकः साधनतावच्छेदकसंबन्धेन साधनव-न्निष्ठाभावीयोपाधिताघटकसम्बन्धावच्छिन्नप्रतियोगितावच्छेदकश्च य [1]उपाधिताघटकधर्मः तद्वत्त्वमित्यर्थः । अयमत्रानुगमः – भेदविशि-ष्टोपाधितावच्छेदकधर्मवत्वं उपाधिलक्षणम् । वैशिष्टचं स्वाश्रय-त्वस्वविशिष्टोपाधितावच्छेदकसम्बन्धावच्छिन्नसाधनवन्निष्ठाभावी - यप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । स्ववैशिष्टचं स्वप्रतियोगि-तावच्छेदकतासम्बन्धेन । अवच्छेदकता स्वावच्छिन्नसाध्यवन्निष्ठा-भावप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्ना इति । उपाधितावच्छे-दकसम्बन्धप्रवेशफलमाह — **तेनेति** ।

केचित्तु - उपाधिताघटकसम्बन्धविशिष्टोपाधिताघटकधर्मवत्त्वं लक्षणम् । वैशिष्टचं स्वावच्छिन्न साध्यवन्निष्ठाभावप्रतियोगितावच्छे-दकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वस्वा वच्छिन्नसाधनवन्निष्ठाभावीयप्रतियोगितावच्छेदकत्वोभयसम्बन्धेनेति वदन्ति । वस्तुतस्तु अवच्छेदकताविशिष्टधर्मवत्त्वम् तत् । वैशिष्टचं स्वाश्रयत्वस्त्रविशिष्टावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकता-

---

1 उपाधिताघटकधर्म इति । उपाधितावच्छेदकधर्म इत्यर्थः । उपाधिताघटकसंबन्धे-ष्वत्रापि उपाधितावच्छेदकसंबन्धेष्वर्थः ।

कप्रतियोगिताकभेदवत्त्वोभयसंबन्धेन । स्ववैशिष्टयं स्वावच्छेदकसं-बन्धावच्छिन्नत्वस्वविशिष्टप्रतियोगितानिरूपितत्वोभयसंबन्धेन । स्व-वैशिष्ट्यं स्वनिरूपकप्रतियोगिताविशिष्टत्वसंबन्धेन । वैशिष्टयं स्वा-वच्छेदकसम्बन्धावच्छिन्नत्वस्वनिरूपकाभावनिष्ठसाधनतावच्छेदकसं-बन्धेन साधनतावच्छेदकावच्छिन्नवन्निरूपिताधेयतावच्छेदकसम्बन्धाव-च्छिन्नसाध्यतावच्छेदकावच्छिन्नवन्निरूपिताधेयतावदभावीयत्वोभयसं-बन्धेन । अतो न सम्बन्धान्तराण्यादाय दूषणावकाश इति । [२०८] **अव्याप्तिमिति** । वायुः प्रत्यक्ष इत्यादौ उद्भूतरूपादेः गुणादिसाधारण-शुद्धसाध्यव्यापकत्वाभावादिति भावः । [२०८] **यद्धर्मविशिष्टसाध्ये-**त्यादि । पक्षधर्मादिविशिष्टोपाधितावच्छेदकधर्मवत्त्वमिति निष्कर्षः । वैशिष्टयं स्वावच्छिन्नसाध्यनिरूपिततत्सम्बन्धावच्छिन्नव्यापकताव-च्छेदकत्वस्वावच्छिन्नसाधननिरूपिततत्सम्बन्धावच्छिन्नाव्यापकताव-च्छेदकत्वोभयसंबन्धेन ।

वस्तुतस्तु अधिकरणताविशिष्टरूपवत्वं विवक्षितम् । वैशिष्टयं स्वाश्रयावच्छेदकत्वस्वविशिष्टप्रतियोगितावच्छेदकत्वसंबन्धावच्छिन्न-स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वोभयसम्बन्धेन । स्ववैशि-ष्टयं स्वाश्रयावच्छेदकसंबन्धावच्छिन्नत्वस्वनिरूपकपक्षधर्मादिविशि-ष्टसाध्यवन्निष्ठात्यन्ताभावीयत्वोभयसंबन्धेन । अधिकरणता च स्वा-वच्छिन्नसाधनवन्निष्ठाभावीयत्वसम्बन्धावच्छिन्ना । तेनात्रायमुपाधि-रित्यत्र न वाक्यभेदः। वस्तुतस्तु अधिकरणताविशिष्टधर्मवत्त्वमुपाधि-लक्षणम् । वैशिष्ट्यं स्वनिरूपकभेदप्रतियोगिताकाधिकरणतानिरूपक-भेदप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वस्वविशिष्टप्रतियोगितानिरू-पितत्वोभयसंबन्धेन । स्ववैशिष्टयं स्वविशिष्टसाध्यवन्निरूपिताधेयता-वदभावीयत्वस्वनिरूपकभेदप्रतियोगितावच्छेदकाधिकरणताश्रयसम्ब-न्धावच्छिन्नत्वोभयसम्बन्धेन । स्ववैशिष्टयं स्वाश्रयसंम्बन्धावच्छिन्न-त्वसंबन्धेन । द्वितीये वैशिष्टयं स्वनिरूपकभेदप्रतियोगितावच्छेदका-धिकरणतानिरूपकभेदप्रतियोगितावच्छेदकसंबन्धावच्छिन्नत्वस्वविशि -

ष्टप्रतियोगितानिरूपितत्वोभयसंबन्धेन । स्ववैशिष्टचं स्वनिरूपक-भेदप्रतियोगितावच्छेदकाधिकरणताश्रयसम्बन्धावच्छिन्नत्वस्वविशिष्ट-साधनवन्निरूपिताधेयतावदभावीयत्वोभयसम्बन्धेन । स्ववैशिष्टचं स्वाश्रयसम्बन्धावच्छिन्नत्वसम्बन्धेन । अत्र साध्यवत्त्वं साध्यतावच्छेदक-सम्बन्धेन साध्यतावच्छेदकावच्छिन्नवत्त्वम्, तेन संबन्धान्तरेण साध्याधिकरणमादाय न दोषः । न वा विशिष्टसत्तावान् जातेरित्यादौ द्रव्यत्वादेरूपाधितानुपपत्तिः । एवं साधनवत्त्वमपि साधनतावच्छेदकसम्बन्धेन साधनतावच्छेदकावच्छिन्नवत्त्वम् । तेन संबन्धान्तरेण साधनाधिकरणमादाय न दोषः । न वा द्रव्यं विशिष्टसत्त्वादित्यादौ गुणादेरुपाधितापत्तिः एवं व्यावृत्त्यन्तरमवसेयम् । **कस्यचिदि**ति । पर्वतीयधूमाधेरित्यर्थः । [२०८] **इदं**-बहिर्द्रव्यस्य पक्ष-धर्मताकथनम् । तेन बाह्यप्रत्यक्षविषयत्वस्य साध्यतायां द्रव्यत्वमात्र-मेव पक्षधर्म इति सूचितम् । [२०८] **अनित्यत्वव्यापकमि**ति । **दीपिका**-वाक्येऽनित्यत्वपदस्य जन्यत्वविनाशित्वसाधारणत्वात् प्रकृतानुगुण्यार्थमाह — [२०८] **विनाशित्वे**ति । अन्यथा तादृशसाध्यव्यापकत्वोपपादनपरत्वं तादृशग्रन्थस्य न संभवतीति भावः ।

### बाधितनिरूपणम्

[२०८]**यस्य साध्याभाव** इति **संग्रह**पङ्क्तौ पक्ष इत्यध्याहार्यम् । तथा चानुमानातिरिक्तप्रमाणजन्यपक्षधर्मिकनिश्चयप्रकारीभूतः यद्धेतुसंबन्धि यत् साध्यं तदभाव इत्यर्थः । सम्बन्धश्च हेतुसाध्यभावलक्षणः । अत्र बाधादिनिश्चयानां कुत्र केन रूपेण प्रतिबन्धकत्वमित्याशङ्कायामाह - **दीपिकायाम् बाधस्ये**त्यादिना ।

### दोषाणामनुमितिप्रतिबन्धकत्वप्रकारशोधनम्

बाधशब्दस्य दोषविशेषेऽपि प्रयोगादाह — **प्रकाशिकायाम्** [२१२] **बाधस्य साध्याभाववत्तानिश्चयस्ये**ति । **दीपिकायाम्** [२१२] **सत्प्रतिपक्षस्य विरोधिज्ञानजनकसामग्रीत्वेने**ति । **सत्प्रतिपक्षस्य** सत्प्रतिपक्ष-

ज्ञानस्य । **विरोधिज्ञानजनकसामग्रीत्वेन** तदभाववत्ताज्ञानजनकसामग्रीत्वेन ।

अत्र नवीनाः — सामग्रीत्वमेककारणविशिष्टापरकारणत्वमिति प्रतिबन्धकतावच्छेदकगर्भे कारणान्तरप्रवेशो निष्फलः गौरवसम्पादकश्चेति विशेष्यभूतज्ञानस्य तदभावव्याप्यवत्ताज्ञानत्वेनैव प्रतिबन्धकत्वमुचितम्,लाघवात् । एवं प्रतिहेतुव्यापकः साध्याभावः प्रतिहेतुमान् पक्ष इति विशकलितज्ञानद्वयसाधारणतया ज्ञानविशिष्टज्ञानत्वेनैव विरोधित्वमावश्यकम् । एतेन विरोधिज्ञानजनकत्वेन विरोधित्वमित्यपि प्रत्युक्तमिति प्राहुः । तन्मतं दर्शयति — **प्रकाशिकायाम्** [२१२] **वस्तुतस्त्विति** । ननु **दीपिकायाम् साधारणस्य** इत्याद्यसङ्गतम् , दुष्टहेतोरेव साधारणशब्दार्थतया तस्याव्यभिचाराभावरूपत्वासम्भवात् इत्यत आह-[२१२] **भावप्रधाननिर्देशतयेति** । वैशिष्ट्ये तृतीया ।[२१२] **एवमग्रेऽपीति** । विरुद्धस्येत्यादावित्यर्थः । वस्तुतस्तु विरुद्धस्येत्यत्र भावे क्त प्रत्ययमङ्गीकृत्य विरोधस्येत्यर्थः सुलभ इति ध्येयम् । ननु साध्याभाववद्वृत्तित्वज्ञानस्य हेतुधर्मिकस्य सत्त्वेऽपि हेतुसमानाधिकरणेत्यादिव्याप्तिः न हेतौ गृह्यत इत्यनुभवसिद्धम् , तच्च नोपपद्यते । साध्याभाववद्वृत्तित्वज्ञानस्य ग्राह्याभावानवगाहित्वेन तादृशव्याप्तिज्ञानविरोधित्वासम्भवात् इत्याशङ्क्याह - [२१२] **हेताविति** । **व्याप्तीति** । हेतुसमानाधिकरणेत्यादिव्याप्तीत्यर्थः । [२१२] **मणिमन्त्रादिन्यायेनेति** । तेन ग्राह्याभावानवगाहित्वेन तादृशव्यभिचारग्रहस्य तादृशव्याप्तिग्रहाविरोधित्वेऽपि न तद्दशायां तदापत्तिरिति भावः । [२१२] **विशिष्टव्याप्त्यभावतयेत्यादि** । अथात्र धूमवान् वह्नेरित्यादौ हेतुव्यापकसाध्याप्रसिद्ध्या तद्घटितविशिष्टव्याप्तेरप्रसिद्ध्या तदभावस्य सुतरामप्रसिद्ध्या कथमाभासता । न च - स्वव्यापकतावच्छेदकसाध्यतावच्छेदकावच्छिन्नसामानाधिकरण्यसम्बन्धावच्छिन्नहेतुनिष्ठप्रतियोगिताकात्यन्ताभाव एव हेतुनिष्ठः व्याप्यत्वासिद्धिरिति न

दोषः । तादृशसामानाधिकरण्यसंबन्धेन हेतुविशिष्टहेतुमान् पक्ष इति ज्ञानस्यैव चानुमितिहेतुत्वम् अतो न तस्याभासतानुपपत्तिरिति वाच्यम् । तथा सति प्रागुक्तव्यभिचारादीनामाभासतानुपपत्तेरशक्य-परिहारत्वादिति । मैवम् । यतः स्ववृत्तिभेदप्रतियोगितावच्छेदकत्वस्वावच्छिन्नसामानाधिकरण्योभयसम्बन्धेन साध्यतावच्छेदकविशिष्ट-हेतुमान् पक्ष इति ज्ञानमेवानुमितिहेतुरूपेयते। भेदप्रतियोगितावच्छेदकता स्वसेत्याद्यवच्छेदकत्वसम्बन्धेन । उक्तस्ववृत्तिभेदप्रतियोगित्व-संबन्धावछिन्नसाध्यतावच्छेदकनिष्ठप्रतियोगिताकाभाववद्धेतुरेव व्य-भिचारः । स्वावच्छिन्नसामानाधिकरण्यसम्बन्धावच्छिन्नसाध्यतावच्छे-दकनिष्ठप्रतियोगिताकात्यन्ताभाववद्धेतुरेव व्याप्यत्वासिद्धिः । उक्त-ग्रन्थस्याप्यत्रैव तात्पर्यम् । अतो न धूमवान् वह्नेरित्यादौ उक्तरीत्या तदप्रसिद्धिरिति **मदेकपरिशीलितः पन्थाः** ।

केचित्तु - साध्यतावच्छेदकनिष्ठहेतुव्यापकतावच्छेदकत्वहेत्व-धिकरणवृत्तितावच्छेदकत्वोभयाभावो विवक्षित इति नाप्रसिद्धिरिति वदन्ति । तत्तुच्छम् — धूमवान् वह्नेरित्यादौ हेतुव्यापकसाध्यसमा-नाधिकरणहेतुमान् पक्ष इति ज्ञानस्य साध्यतावच्छेदके हेत्वधिकरण-वृत्तितावच्छेदकत्वानवगाहितया दर्शितोभयाभावस्य तद्विरोधितया हेत्वाभासताया दुर्वचत्वात् । दर्शितज्ञाने तुल्यवित्तिवेद्यतान्यायेन नि-यमतस्तद्भाने मानाभावात् । प्रत्यक्षरूपे तादृशज्ञाने कथंचित् तस्य तथा भानेऽपि अनुमितौ शाब्दे च तद्भाने नियामकाभावेन तादृशा-भावग्रहदशायां तादृशपरामर्शसम्भवात् अनुमित्युत्पादसम्भवेन तादृशा-भावस्य हेत्वाभासताया अयुक्तत्वात् । तादृशपरामर्शस्य तुल्यरूपो-भयानवगाहित्वेन तादृशोभयाभावग्रहप्रतिबध्यत्वायोगात् । तादृश-परामर्शे धूमत्वादिरूपसाध्यतावच्छेदकस्य स्वरूपत एव भानेन व्या-पकतावच्छेदकत्वाद्यंशे तस्य नियमतोऽवच्छेदककत्वेन सुतरां विपरी-तनिश्चयप्रतिबध्यत्वासंभवाच्च । धूमत्वत्वादिरूपेण धूमत्वादिभानोप-

गमे च धूमत्वत्वाद्यनवच्छिन्नविधेयतावच्छेदकताकानुमित्यनुपपत्ति-प्रसङ्गात् । यदपि हेतुव्यापकतावच्छेदकत्वहेत्वधिकरणवृत्तितावच्छेदकत्वोभयविशिष्टसाध्यतावच्छेदकहेतुमान् पक्ष इति परामर्शस्यानुमितिहेतुत्वं स्वीक्रियते , नातो दोष इति — तदपि न सत् । कारणतावच्छेदकगर्भे हेतुतावच्छेदकावच्छिन्नविषयतायाः त्रेधा निवेशेन व्याप्यत्वासिद्धेः । [२१२] **विशिष्टव्याप्यभावतये**ति **दीपिका**वाक्येन हेतुनिष्ठाभावस्यैव दोषताप्रतीतेः तावतापि तदनुपपादनाच्च । हेतुभूतपरामर्शे बहुव्रीह्यर्थस्य सम्बन्धस्याधिकस्य भानेन महागौरवाच्च इति सर्वमनवद्यम् ।

**दीपिकायाम्** [२१२] **व्याप्तिसंशयाधायकत्वेने**ति । आधायकत्वं प्रयोजकत्वम् । ननु व्याप्तिसंशयप्रयोजकत्वं कथं तयोरित्यतः तदुपपादयति — **प्रकाशिकायाम्** [२१३] **हेतावसाधारण्यादी**ति । आदिना अनुपसंहारित्वसंग्रहः । **प्राचीने**ति । नवीनमतं तु प्रागेवोक्तमिति भावः। [२१३] **व्याप्तिज्ञानप्रतिबन्धकः** – व्याप्तिज्ञानविरोधिधीविषयः । **परमुखनिरीक्षकस्ये**त्यत्र प्रतिबन्ध इत्यादिः । [२१३] **तथा चे**त्यादि । अत्रायमाशयः — हेत्वाभाससामान्यलक्षणे निविष्टमनुमितितत्करणान्यतरप्रतिबन्धकत्वम् न तावत् तदनुत्पादप्रयोजकत्वम् । व्यभिचारितासम्बन्धेन उपाधिविशिष्टहेतावतिप्रसङ्गात् । एवं च हेतावुपाधिप्रकारकज्ञानाभावस्य परामर्शकारणताविरहात् नातिव्याप्तिरिति । **शिथिलम्** अयुक्तम् । पक्षतावच्छेदकविशिष्टपक्षग्रहाविरोधित्वस्यैवाश्रयासिद्धिलक्षणतया साध्यवत्पक्षे तदभावात् उक्तलक्षणे च साध्यसंशयांशनिवेशस्य विफलत्वेन संशयस्य पक्षतात्वनिरासाच्च दर्शितस्य शिथिलत्वमिति भावः। **दीपिकायाम्** [२१२] **आश्रयासिद्धावन्तर्भवती**ति। अयं भावः - आश्रयस्य पक्षताविशिष्टस्यासिद्धिः येनेति विग्रहः । तथा च साध्यनिश्चयदशायां साध्यसंशयरूपपक्षताविरहेण तद्विशिष्टस्य पक्षतावच्छेदकावच्छिन्नस्य तदानीमसिद्धेः । साध्यवत्पक्षस्य तत्रान्तर्भाव उचित इति भावः । सिद्धसाधनस्याश्रयासिद्ध्यन्तर्भाव-

प्रयोजकं पक्षताविघटकत्वमुपपादयति — [२१३] **प्रकाशे तन्मत** इति । प्राचीनमत इत्यर्थः । अयं भावः – पक्षताविघटकत्वं आश्रयासिद्धित्वम् । विघटकत्वं च विरोधिग्रहविषयत्वम् । पक्षता च पक्षतावच्छेदकविशिष्टपक्षधर्मकसाध्यसंशयात्मिका प्राचीनमते । तथा च पक्षनिष्ठपक्षतावच्छेदकविरहस्य साध्यवत्पक्षस्य च निश्चयदशायामुक्तपक्षताया असम्भवात् । उभयोरपि तथात्वमव्याहतमिति साध्यवत्पक्षस्य सिद्धसाधनरूपस्याश्रयासिद्धिरूपतया नाधिक्यापत्तिरिति न विभागव्याघातशङ्केति भावः । सिद्धेः पूर्वं परतो वा यत्र सिषाधयिषा तत्र सिषाधयिषाविरहकालावच्छेदेन सिद्धेः । प्रतिबन्धकताया आवश्यकत्वेन साध्वत्पक्षातिप्रसङ्गतादवस्थ्यमिति शङ्कानिरासायोक्तं [२१३] **केवलमिति** । अनेन सिद्धेः सिषाधयिषासाहित्याभावव्यवच्छेदः । तथा च सिद्धेः पूर्वं परतश्च यत्र सिषाधयिषा जाता तत्र सिद्धेरतथात्वात् नातिप्रसङ्ग इत्यर्थः ॥

**॥ इति प्रसरणाख्यायां दीपिकाप्रकाशव्याख्यायामनुमानपरिच्छेदः ॥**

**समाप्तः**



[२१८] **कुतश्चिदारण्यकपुरुषादित्यादिसङ्ग्रह**वाक्ये पञ्चम्याः प्रयोज्यत्वमर्थः। तस्य श्रुधात्वर्थशाब्दबोधे अन्वयः। इति शब्दस्य शब्दान्वयीत्याकारकत्वमर्थः। स्फुटमन्यत्। यत्तु इतिशब्दः तादृशानुपूर्व्यवच्छिन्नवाक्यपरः, श्रुधातोः श्रावणप्रत्यक्षमर्थः। तत्र विषयितया वाक्यस्यान्वयः इति - तत्तुच्छम् - स्मरन्नित्युक्तस्मृतिसामग्रीप्रविष्टावश्यकशाब्दरूपानुभवप्रतिपादनपरत्वसम्भवे तत्परित्यागेनानुपयुक्तान्यथासिद्धवाक्यसाक्षात्कारप्रतिपादनपरताया अन्याय्यत्वात्। **प्रकाशे** [२१८] **अवसरसङ्गत्ये**ति। प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्युत्तरकालीनावश्यवक्तव्यत्वमवसरः। तृतीयार्थादिकं सर्वमपि पूर्ववत्।

ननु [२१८] **संज्ञासंज्ञिसंबन्धज्ञानमुपमितिरिति सङ्ग्रह**वाक्येन उपमितेः पदपदार्थसम्बन्धविषयकज्ञानत्वं लक्षणमुक्तम् - तन्न युज्यते। तादृशानुमित्यादावतिव्याप्तेः। अतस्तादृश**सङ्ग्रह**वाक्यं नोपमितेर्लक्षणकथनपरम्, अपि तु तत्स्वरूपमात्रप्रदर्शनपरमित्याह - [२१८] **उपमितिस्वरूपमिति**। किं तर्हि तस्या लक्षणमित्याकाङ्क्षायाम् आह - [२१८] **लक्षणं त्विति। गम्येत्यन्तम्** उपमितित्वस्य जातिरूपतायां प्रमाणसूचनाय। [२१८]**एतेन** स्मरन्निति वर्तमाननिर्देशेन। [२१८] **आहुरिति**। अत्र च **संग्रह**कारस्य कुतश्चिदारण्यकादित्याद्यभिहितवतः अतिदेशवाक्यार्थविषयकशाब्दबोधः करणम् तद्विषयकं स्मरणं व्यापारः- उपमितिः फलमिति मतप्रदर्शनमेवाभिमतम्, न तु सादृश्यादिविशिष्टपिण्डदर्शनं करणं तादृशस्मरणं व्यापारः उपमितिः फलमिति मतप्रदर्शनम्। तथासति शब्दप्रयोगस्य स्वाधीनत्वेन स्मरिष्यन्निति पिण्डं पश्यतीति ब्रूयात्, अतः स्मरन्नित्याद्युक्तिस्वारस्यपर्यालोचनया पूर्वमतमेवाभिमतम्, न तु द्वितीयं मतमिति तत्प्रदर्शनपरतया तादृशग्रन्थव्याख्यानानौचित्यमरुचिबीजम्। **संग्रहे वाक्येति**। गोसदृशो गवयपदवाच्य इति स्वरूपातिदेशेत्यादिः। [२१८] **उद्बोधकान्तरेति**।

सादृश्यविशिष्टपिण्डदर्शनातिरिक्तादृष्टादिरूपोद्बोधकेत्यर्थः । [२१९] **सादृश्य(विशिष्टपिण्ड)दर्शनानन्तरमि**त्यादि। अत्रोपमितेःअयं गवयपदवाच्य इत्याकारत्वोपगमे गवयव्यक्त्यन्तरदर्शनानन्तरं तत्र पदवाच्यतायाः स्मरणानुपपत्तिः, गोसदृशो गवयपदवाच्य इत्याकारकत्वस्योपगमे च सादृश्यस्य तद्भेदसमानाधिकरणतद्गतधर्मवत्त्वरूपस्य गुरुत्वेन पद-वाच्यतावच्छेदकत्वासम्भवात् तस्या भ्रमत्वापत्तिरित्यालोच्य गवयो गवयपदवाच्य इत्याकारिकैव उपमितिरुपगन्तव्येत्यभिप्रायेणोक्तम् [२१९] **गवयत्वादिरूपलघुधर्मे**ति । तादृशधर्मावच्छिन्नविशेष्यताके-त्यर्थः । [२१९]**इदम्**-सादृश्यदर्शनस्य उपमितिहेतुताप्रदर्शनं, **उपलक्षणं** वक्ष्यमाणार्थसूचकम् । [२१८] **सादृश्यादी**त्यादिना वैधर्म्यसंग्रहः ।

॥ **इति प्रसरणाख्यायां दीपिकाप्रकाशिकाव्याख्यायां उपमानपरिच्छेदः** ॥



शब्दलक्षणम्

[२२२] **उपजीव्योपजीवकत्वसङ्गत्येति** । अत्र वक्तव्यं सर्वं प्रागेव प्रपञ्चितम् । [२२२] **शाब्दबोधोपजीव्यत्वेन** - शाब्दबोधहेतुत्वेन । [२२२] **फलनिष्ठत्वेऽपीति** । आश्रयतारूपसाक्षात्सम्बन्धेनेत्यादिः । [२२२] **स्वरूपयोरपि** - शब्दप्रमाणोपमानप्रमाणयोरपि । एतेन सङ्गतेः साक्षात्सम्बन्धेन करणनिष्ठत्वं सूचितम् । [२२२] **करणयो**रित्यादि षष्ठ्यर्थो विषयत्वम् अभिधानशब्दार्थैकदेशज्ञानान्वितम् । अनन्तरत्वं चाव्यवहितत्वम् । तच्च पूर्वापरसाधारणम् । स्वनिरूपणपूर्वनिरूपणपूर्वत्वशून्यत्वस्वोत्तरनिरूपणानुत्तरत्वान्यतरवत्त्वरूपं बोध्यम् ।

ननु [२२२] **आप्तवाक्यं शब्द** इति **संग्रहे** शब्दत्वस्य लक्ष्यतावच्छेदकत्वे वह्निना सिञ्चतीत्याद्यप्रमाणवाक्येऽव्याप्तिः; आप्तोच्चरितत्वविरहादित्यत आह - [२२२] **प्रमाणशब्द** इति । तथा च प्रमाणशब्दत्वं लक्ष्यतावच्छेदकम् । तच्च वह्निना सिञ्चतीत्यादिवाक्यव्यावृत्तमिति भावः । [२२२] **लक्षणमिति** । जबगडदशादौ अतिव्याप्तिव्युदासाय वाक्यत्वमुक्तम् । आप्तोक्तवाक्यमित्यत्र उक्तशब्देन समासान्तर्गतषष्ठ्याः उच्चरितत्वमर्थ इति सूचितम् । [२२२] **यथार्थवक्तृत्वरूपेति** । एतेन आप्तत्वं ह्रीष्टत्वम् । तथा च वह्निना सिञ्चतीति वाक्येऽतिव्याप्तितादवस्थ्यम् । तत्प्रयोक्तुः कस्यचित् इष्टत्वसम्भवादितिशङ्का निरस्ता । ननु वह्निना सिञ्चतीत्यादिप्रयोक्तुरपि कदाचित् बाधितार्थकवाक्यप्रयोगहेतुभूतयथार्थज्ञानवत्तायाः सम्भवात् कथमतिव्याप्तिवारणमित्यत आह – [२२२] **प्रकृतवाक्यार्थेति** । [२२२] **निष्कर्ष** इति । अयं भावः – तादात्म्य[1]स्वप्रतिपाद्यार्थगोचरयथार्थज्ञान-

---

1. स्वप्रतिपाद्येत्यादि । स्वं जलेन सिञ्चतीत्यादिवाक्यं तत्प्रतिपाद्यो योऽर्थः जलकरणकसेककर्ता तद्विषयकं यत् यथार्थज्ञानं तादृशवाक्यप्रयोक्तृनिष्ठं तज्जन्यत्वं तादृशवाक्ये , 'अर्थं बुद्ध्वा शब्दरचना' इति न्यायादिति भावः ।

जन्यत्वोभयसम्बन्धेन वाक्यविशिष्टवाक्यत्वं [1]स्वजन्यत्वस्वविषयीभूतार्थप्रतिपादकत्वोभयसम्बन्धेन यथार्थज्ञानविशिष्टवाक्यत्वं वा शब्दलक्षणमिति । [२२२] **एतत्** वाक्यार्थज्ञानस्य शब्दप्रयोगहेतुत्वम् ।

**शक्तिनिरूपणम्**

ननु [२२५] **अर्थस्मृत्यनुकूलेत्यादिना दीपिकायाम्** शक्तिपदार्थनिरुक्तिरयुक्ता । तन्निरुक्तेरिहाप्रकृतत्वादित्याशङ्क्याह - [२२५] **मीमांसकेत्यादि** । [२२५] **निरासकत्वेनेति** । प्रयोजनतया हेतुत्वविवक्षया तृतीया । **अग्र** इत्यवतारणान्वयि । अवतारणं प्रवृत्त्यनुकूलो व्यापारः । स च शङ्काग्रन्थप्रवृत्तिः । [२२५] **तदिति** । मीमांसकेत्यर्थः । [२२५] **मतम्** प्रामाणिकतया स्वीकृतोऽर्थः । [२२७] **साधारण्येनेति** । साधारण्यं तद्वृत्तिरूपवत्त्वम् । रूपं चार्थेत्याद्युक्तम् । शक्तिपदार्थान्वितं वैशिष्टयं तृतीयार्थः । स्फुटमन्यत् । **दीपिकास्थशक्तिरित्यस्य** शक्तिपदार्थ इत्यर्थसूचनाय [२२५] **शक्तिपदार्थमित्युक्तम्** । **दीपिकायाम् अनुकूलेत्य**न्तं संबन्धविशेषणम् । ननु दीपिकोक्तशक्तिपदार्थलक्षणेऽर्थस्मृत्यनुकूलत्वनिवेशनेऽपि घटादिपदाकाशयोः समवायेऽतिप्रसङ्गः तदवस्थः । स्वनिष्ठत्वस्वार्थनिष्ठत्वोभयसम्बन्धेन पदविशिष्टत्वनिवेशनेऽप्याकाशपदाकाशयोस्समवायवारणमशक्यम् तस्यापि तदुभयसम्बन्धत्वात् अर्थस्मृत्यनुकूलत्वाच्चेत्यत आह - [२२५] **शाब्दबोधजनकेति** । स्मृतिविशेषणमेतत् । तथा च समवायज्ञानाधीन - आकाशादिरूपार्थस्मृतेश्शाब्दबोधजनकत्वाभावात् नातिप्रसङ्ग इति भावः । ननु अनुकूलत्वं जनकत्वम् , तच्च संबन्धे बाधितम् तज्ज्ञानस्यैव स्मृतिजनकत्वादित्यत आह - [२२५] **अनुकूलत्वमिहेति** । [२२५] **विशेष्यमितीति** । यद्यपि स्वप्रयोजकादृष्टवत्त्वादेरात्मपदं प्रति आत्मनि सम्बन्धत्वमस्ति, तथापि स्मृतिनिष्ठा या शाब्दबोधजनकता तन्निरूपिता या जन्यता-

---

1. **स्वजन्यत्वेत्यादि । स्वं जलेन सिञ्चतीत्यादिवाक्यार्थविषयकं ज्ञानं तज्जन्यत्वं तादृशवाक्ये, एवं स्वं तादृशवाक्यार्थज्ञानं तद्विषयो योऽर्थः वाक्यार्थः तत्प्रतिपादकत्वं च तस्मिन् वाक्ये इति समन्वयः ।**

सम्बन्धावच्छिन्ना ज्ञाननिष्ठावच्छेदकता तदवच्छेदकसंसर्गताश्रयत्व-मिति निष्कर्षात् न दोषः । [1]जन्यतासम्बन्धेन तत्तदर्थधर्मिकतत्तत्पद-प्रकारकशक्तिसंसर्गकज्ञानविशिष्टतत्तदर्थस्मृतित्वेन शाब्दबोधहेतुत्वो-पगमात् लक्षणसमन्वयः । एवं संबन्धान्तरज्ञानजन्यार्थस्मृतेः शाब्द-बोधहेतुताविरहात् न दोष इति ।

ननु अन्यः पदार्थः पदार्थान्तरमिति व्युत्पत्त्या पदार्थान्तरपदं क्लृप्तपदार्थातिरिक्तपरम्, प्रतियोगिविशेषसमर्पकपदासमभिव्याहृता-तिरिक्तादिपदानां स्वसमभिव्याहृतपदार्थतावच्छेदकाश्रयत्वेन क्लृप्त-तत्तद्धर्मिप्रतियोगिकभेदकूटवद्बोधकतायाः 'चित्रमतिरिक्तं रूप'मित्यादौ दृष्टत्वात् । तथा च मीमांसकैः शक्तेरपि पदार्थत्वाङ्गीकारात् तादृश-भेदकूटवत्पदार्थाप्रसिद्धिरित्याशङ्क्याह - [२२५] **तत्तदिति** । तथा च शक्तित्वातिरिक्तानां द्रव्यत्वादीनामेव ग्रहणात् नाप्रसिद्धिरिति भावः । [२२५] **व्याघातः** - विरोधः । अप्रसिद्धिरिति यावत् । अथवा नैयायिकमते शक्तिः न पदार्थान्तरमिति निषेधो नोपपद्यते । प्रतियोग्यप्रसिद्धेरत आह - [२२५] **तत्तत्पदार्थतावच्छेदकाभाव-कूटवदित्यर्थ** इति । अत्र च पदार्थानां तत्तत्पदार्थतावच्छेदकानां अन्त-रमभावकूटः अत्रास्तीति पदार्थान्तरमिति अर्शआद्यजन्ततया उपगमे-नोक्तार्थलाभात् न पदार्थान्तरमित्यत्र च नञः प्रकृतिप्रत्ययार्थयोरन्तरा-भासमानार्थकताया अन्यत्र दर्शनात् प्रकृतेऽपि अन्तरपदार्थस्याभाव-कूटस्य नञर्थाभावे प्रतियोगितयान्वयेन तत्तत्पदार्थतावच्छेदकविरह-कूटाभावाश्रय इत्यर्थं मनसि निधायाह - [२२५] **न व्याघात** इति । व्याघात इत्यतः प्राक् सिद्ध्यसिद्धिभ्यांमित्यादिः । [२२७] **अन्येति** नैयायिकेत्यर्थः । तत्तत्पदार्थतावच्छेदकाभावकूटस्य प्रत्येकं प्रसिद्धत्वात् प्रतियोगितावच्छेदकविशिष्टप्रतियोगिज्ञानसम्भवेन नैयायिकमते निषे-धोपपत्तेरिति भावः । यद्यप्यत्र कूटत्वं दुर्वचम् । अप्रसिद्ध्या एका-

---

1. जन्यतासंबन्धेनेत्यस्य ज्ञानविशिष्टेत्यत्रान्वयः ।

भावविशिष्टापराभावनिवेशश्च न सम्भवति । तथापि तत्तदभावविष-यकधीविषयत्ववदित्यर्थाङ्गीकारात् न दोषः । विषयत्ववत्त्वं चाधेय-तासम्बन्धावच्छिन्नस्वव्यापकतासम्बन्धेन । तत्सम्बन्धावच्छिन्नप्रति-योगिताकतदभावप्रसिद्धया निषेधोपपत्तेः । [२२५] **अनिरिक्तैवेति** । क्लृप्तयोर्विनिगमनाविरहेऽक्लृप्तमन्यत् सिद्धयतीति न्यायादिति भावः । [२२५] **यत** इत्यादि । अत्र कल्पे वाच्य इत्यादौ धातोस्तादृशविशे-ष्यत्वमर्थः । प्रत्ययस्य आश्रय इति बोध्यम् । नन्वेवं सति वाच्य इत्यादिवाक्यजन्यशाब्दबोधे आश्रयत्वरूपाधिकपदार्थभानस्य वक्तव्य-तया गौरवम् । एवं विशेष्यतायामिच्छासम्बन्धतया निरूपितत्वस्य निवेशनीयतयापि तथेत्याशङ्क्य कल्पान्तरमाह - [२२६] **तादृशेति** । तत्तत्पदजन्यबोधविषयत्वनिष्ठेत्यर्थः । [२२६] **तदिति** । ईश्वरेत्यर्थः । एवं चात्र कल्पे धातोरीश्वरेच्छैवार्थः, प्रत्ययस्य पदजन्यबोधविषयत्व-प्रकारतानिरूपितविशेष्यतावानर्थः, विशेष्यतायां च निरूपितत्वसम्ब-न्धेन इच्छान्वय इति भावः [२२६] **नातिप्रसङ्ग** इति । घटादिपद-जन्यबोधविषयत्वादेः ईश्वरेच्छायां घटादावेव भानात् तद्विषयतयोरेव निरूप्यनिरूपकभावसत्त्वादिति भावः ।

ननु गङ्गायां घोष इत्यादौ गङ्गापदादितः तीरादिबोधोत्पत्त्या तीरादिगतस्य तादृशबोधविषयत्वादेरपि ईश्वरेच्छया विषयीकरण-मावश्यकम् । तस्याः विद्यमानयावद्धर्मविषयकत्वनियमात् । तथा च तीरं गङ्गापदजन्यबोधविषयो भवत्वित्याकारकत्वमपि तस्या अस्तीति प्रागुक्तरीत्या लक्षणोच्छेदप्रसङ्गतादवस्थ्यमित्यत आह - [२२६] **गङ्गापदजन्यत्वस्येति** । गङ्गापदजन्यो बोधः बोधविषयो भवतु तीर-मित्याकारकत्वमेव ईश्वरेच्छायां स्वीक्रियते, तावतैव तस्या उक्त-नियमोपपत्तेः । बोधविषयतात्वरूपेण गङ्गापदजन्यबोधविषयत्वादेरपि तत्र भानसम्भवादित्यर्थः । [२२६] अभावेनेति । अन्यथा विशिष्टा-कारेच्छाविशकलिताकारेच्छयोरवैलक्षण्यप्रसङ्गादिति भावः । [२२६]

**गङ्गापदजन्यत्वप्रकारतानिरूपितेत्यादि** । एतेन बोधविषयो भवतु तीर-मित्याकारकत्वस्य तादृशेच्छायामुपगमात् । बोधविषयतात्वेन गङ्गा-पदजन्यबोधविषयत्वप्रकारतानिरूपितत्वं तीरविशेष्यताया अप्यक्षत-मित्यतिप्रसङ्गतादवस्थ्यमिति शङ्का निरस्ता । विशकलितेच्छीयविशे-ष्यताप्रकारतयोरैक्यासम्भवेन जन्यत्वबोधविषयत्वयोः प्रकारतारूपयोः निरूप्यनिरूपकभावासम्भवात् । [२२६] **न क्षतिः** - न लक्षणोच्छेद-प्रसङ्गः । [२०६] **स्वातन्त्र्येण भानमि**ति । वैशिष्टचे तृतीया भानं प्रकारता । स्वातन्त्र्यं चार्थविशेष्यतानिरूपितविषयत्वप्रकारतानिरू-पितबोधप्रकारतानिरूपितत्वाभावः । पदनिष्ठप्रकारतानिरूपितजन्य-त्वप्रकारतानिरूपितबोधप्रकारतानिरूपितत्वाभावश्च । स्वातन्त्र्येणेत्य-स्योक्तार्थकस्य यथायोगमन्वयो बोध्यः । [२०६] **सङ्क्षेप** इति । अत्रा-यमाशयः - ईश्वरेच्छायां तीरं गङ्गापदजन्यबोधविषयो भवत्वित्याका-रकत्वमनभ्युपगम्य दर्शितविशकलिताकारकत्वाभ्युपगमे लक्षणाया वृत्त्यन्तरत्वकल्पनस्यावश्यकत्वेन गौरवम् । विशिष्टाकारकत्वाभ्युप-गमे तु लाघवमिति तर्कानुगृहीतेन ईश्वरेच्छा विशिष्टाकारकत्वतद-भावान्यतरवती प्रमेयत्वादित्यनुमानेन तस्याः विशिष्टाकारकत्वसिद्धि-रिति तु न शङ्कनीयम् । तथासति अभ्रान्तानां घटो घटपदवाच्य इति व्यवहारप्रसङ्गात् । बाधकतर्काभावविशिष्टस्यैव लाघवतर्कस्या-नुमानानुग्राहकत्वोपगमात् । उक्तानुमानेन तत्र तदसिद्धेः । एवं घटो घटपदस्य वाच्य इत्यादौ प्रत्ययार्थे विभक्त्यर्थस्यान्वयो वाच्यः । स चानुभवविरुद्ध इति । षष्ठ्या जन्यत्वप्रकारतार्थः । तत्र प्रकृत्यर्थस्य स्वनिष्ठप्रकारतानिरूपितत्वसम्बन्धेनान्वयः । वच धातोः बोधप्रकार-तानिरूपितविषयत्वप्रकारतानिरूपकत्वविशिष्टेच्छार्थः । षष्ठ्यर्थस्य बोधप्रकारतायां निरूपितत्वसम्बन्धेनान्वयः । विशिष्टेच्छायाश्च प्रत्य-यार्थविशेष्यतावदेकदेशविशेष्यत्वे विशेषणावच्छिन्ननिरूपितत्वसम्बन्धे-नान्वयः । एवं प्रथमकल्पोऽपि साधुरेवेति । एवं विशिष्टेच्छीयविशेष्य-ताप्रकारतयोरभेदमनुपगम्य अवच्छेद्यावच्छेदकभावाङ्गीकारे प्रकार-

तानिरूपितप्रकारतास्थले प्रकारतानिरूपितविशेष्यत्वावच्छिन्नप्रकारता निवेश्येति ।

### विशिष्टशक्तिस्थापनम्

[२३०] **विशिष्टे शक्तिमि**त्यादि । विशिष्टविशेष्यकशक्तिप्रकारकाप्रामाण्यज्ञानानास्कन्दितनिश्चयानुकूलव्यापारविषयकेच्छाविशिष्टः मीमांसकमतविषयकज्ञानजनकशब्दप्रतियोगिकध्वंसविशिष्टः मीमांसकमतविशेष्यकानुपपन्नत्वप्रकारकज्ञानजनकशब्दः तदनुकूलकृतिमानित्यखण्डबोधः । द्वितीयं वैशिष्ट्यं स्वप्रतियोगिसमानकर्तृकत्वस्वाश्रयकालवृत्तित्वोभयसम्बन्धेन । स्फुटमन्यत् । [२३०] **अर्थापत्ती**ति । अर्थापत्तिश्च आनयनकर्मत्वस्य साक्षात्सम्बन्धेन गोनिष्ठत्वमन्तरा स्वाश्रयवृत्तित्वरूपपरम्परासम्बन्धेन गोत्ववृत्तित्वमनुपपन्नमित्याकारिका बोध्या ।

ननु जात्याश्रयव्यक्तावेव शक्तिस्वीकारे गवादिपदजन्यशाब्दबोधे गोत्वादितत्सम्बन्धयोः कथं भानसम्भवः । अशक्यस्य शाब्दबोधे भानं नास्तीति नियमात् । न च तादृशनियमे मानाभाव इति वाच्यम् । तथा सति गवादिपदजन्यशाब्दबोधे घटादीनां बोधापत्तेः । यत्तु - नीलो घट इत्यादौ अभेदस्य एवं सति शाब्दबोधे भानं न स्यादिति - तन्न - पदार्थद्वय - संसर्गातिरिक्तस्येति विशेषणादित्याशङ्क्य प्राचीनाभिमतसमाधानमाह - [२३१] **अत्रेदं बोध्यमि**त्यादिना । नवीनास्तु तादृशनियमे मानाभावः । न चोक्तातिप्रसङ्गः । शक्तितदवच्छेदकतदवच्छेदकताघटकसम्बन्धत्वानामेव शाब्दबोधे भाननियामकत्वाङ्गीकारात् । एवं च जातितद्वैशिष्ट्ययोः शक्तिर्नाभ्युपेयेति वदन्ति । तन्मतं दर्शयति - **नव्यास्त्व**ति ।

### शक्तिग्रहोपायप्रतिपादनम्

ननु **अप्येकदन्ते**त्यादि**कोशादौ** एकदन्तादिशब्दानां द्वन्द्वसमासोऽनुपपन्नः । समस्यमानपदार्थानां मिथो भेदसत्त्व एव द्वन्द्वस्य साधु-

त्वादिह तदभावादित्यत आह - [२३४] **तत्रेति** । [२३५] **व्यवहारतः** । प्रवृत्तेरित्यर्थः। [२३४] **वृद्धव्यवहारेणे**ति **दीपिका**वाक्येऽपि वृद्धस्य व्युत्पन्नस्य व्यवहारेण प्रवृत्त्येत्यर्थः । ननु **दीपिका**स्थ[२३७] **नन्वि**त्यादिवाक्ये कार्यपरत्वादित्यस्य षष्ठ्यन्ताकाङ्क्षासम्भवात् व्यवहारस्येत्यस्योत्तरत्रान्वयासम्भवाच्चाह - [२३७] **व्यवहारस्ये**त्यादि । [२३७] **व्यवहारस्य** - वाक्यप्रयोगस्य । ननु [२३४] **प्रवृत्तिमुपलभ्य गवानयनं च दृष्ट्वेति दीपिका**वाक्यात् प्रवृत्त्यनुमानानन्तरं गवानयनज्ञानमिति लभ्यते। तच्च न युज्यते । पक्षज्ञानमन्तरा अनुमानासम्भवेन गवानयनज्ञानस्य प्रथममावश्यकत्वादित्यत आह - [२३७] **गवानयनं दृष्ट्वे**त्यादि। प्रवृत्युपलम्भस्य प्रमित्यन्तरस्यासम्भवादाह - **उपलभ्येत्यस्ये**ति । अनुमानप्रयोगमाह - [२३५] **इयं क्रिये**ति । अयं प्रयत्नः गवानयनधर्मिकेष्टसाधनताज्ञानजन्यः प्रवृत्तित्वात् स्वीयप्रवृत्तिवत् इत्यनुमानान्तरमपीह बोध्यम् । [२३५] **गवानयनज्ञानस्य** - गवानयनधर्मिकेष्टसाधनताज्ञानस्य ।

[२३४] **निश्चित्येति** । अयमाशयः - तादृशज्ञानं तादृशवाक्यजन्यम् तादृशवाक्यविशिष्टत्वादित्यानुमानिकोऽत्र निश्चयः । वैशिष्ट्यं च स्वसत्ताधीनसत्ताकत्वस्वाभावाधीनाभावप्रतियोगित्वोभयसम्बन्धेनेति ।

ननु गामानय इत्यादिविशिष्टवाक्यस्यैव तादृशविशिष्टार्थे शक्तिः कुतो न स्वीक्रियत इत्यत आह - [२३५] **वाक्यस्येति**। ननु यवशब्दस्य दीर्घशूकविशिष्ट शक्तिस्वीकारे म्लेच्छानां प्रियङ्गौ प्रयोगो न स्यादित्यत आह - [२३५] **प्रियङ्गौ** त्विति । [२३५] **आख्यातस्य यत्नत्वविशिष्ट** इत्यादि । आख्यातं यत्नत्वविशिष्टवाचकं [1]तादृशकरोतिव्याख्येयत्वादिति रीत्या विवरणस्य शक्तिग्राहकता बोध्या । तत्समानार्थकपदान्तरेण तदर्थकथनं हि व्याख्यानमिति भावः ।

ननु सिद्धार्थोऽपि वाक्यप्रयोगो भवतु किं तावता व्युत्पत्तेरित्यत आह - [२३७] **तथाचे**ति । [२३७]**अन्यथा**-तत्र शक्तिग्रहावश्यम्भावविरहे ।

### लक्षणानिरूपणम्

ननु [२३७] **तीरेपि शक्तिः न कल्प्यत** इति **दीपिका**वाक्यमनुपपन्नम् । तीरादिशब्दानां तीरे शक्तिस्वीकारादित्यत आह -[२३८] **गङ्गापदस्ये**ति । [२३८] **शेष** इति । [२३८] **नानार्थकत्वानुपपत्तिरि**ति । नानार्थशक्तत्वानुपपत्तिरित्यर्थः ।

ननु लवणाश्वयोरपि कथंचित् संयोगः सम्भवति, एवमेककालीनत्वादिसम्बन्धोऽपीति नोक्तदोषविस्तारसंभव इत्यत आह - [२३८] **इदमुपलक्षणमिति** । [२३७] **इदं** लवणाश्वयोः परस्परसम्बन्धाभावात् नानाशक्तिकल्पनम् । [२३८] **प्रसिद्धयोः** समानप्रयोगप्राचुर्ययोरित्यर्थः । एतेन गङ्गादिपदात् विशेषस्सूचितः । तत्र तीरप्रवाहयोरतथात्वात् । [२३८] **मञ्चस्थपुरुष** इति । अत्र मञ्चपदं पुरुषमात्रपरम्, मञ्चस्थेत्युक्तिस्तु तत्र शक्यसम्बन्धलाभाय । वाच्यार्थस्य **मञ्चा**देस्तु न शाब्दबोधे भानमिति ध्येयम् । इदमत्रजहल्लक्षणालक्षणम् - लक्ष्यतावच्छेदकरूपेण लक्ष्यमात्रविषयकबोधजनिका लक्षणेति । [२३८]**अपिना**- अपिशब्देन । [२३८] **एकसार्थवाहित्वेन** - एकसमुदायघटकत्वेन । अजहल्लक्षणालक्षणम् - लक्ष्यतावच्छेदकरूपेण शक्यलक्ष्योभयबोधिका लक्षणेति । लक्ष्यतावच्छेदकं दर्शितम् । ननु छत्रिपदमुख्यार्थस्य छत्रिणः गमनकर्तृत्वान्वयानुपपत्तिविरहात् किमत्र लक्षणानियामकमित्यत आह [२३८] **तात्पर्ये**ति । **मतुबर्थके**त्यनेन इनिप्रत्ययस्य शक्तत्वलक्षणपदत्वं सूचितम् । [२३८] **तच्छक्त्ये**ति । वाक्यशक्त्येत्यर्थः । मीमांसकमतमभिप्रयन्नाह - [२३८] **प्रतिपाद्ये**ति । स्वमताभिप्रायेणाह - [२३८] **अन्यथे**ति । [२३८]**एकसार्थे** एकसमु-

दाये लक्षणा स्वाश्रयपुरुषघटितत्वरूपपरम्परासम्बन्धात्मिका। [२३८] **आहुरि**त्यस्वरससूचनम्। तद्वीजन्तु तथासति जहल्लक्षणोदाहरणमेवेदं स्यात्। तथा च प्रकृतानुपयोगः **दीपिकायाम्** तस्याजहल्लक्षणोदाहरणत्व-कथनादिति। [२३९] **तस्य** जीवब्रह्मणोरैक्यस्य। [२३९] **तत्तांश-स्येदानी**मित्यादि। अयं भावः - तद्देशादिसम्बन्धविशिष्टे एतद्देशादि-सम्बन्धो बाधितः, विशिष्टे अन्वीयमानधर्मस्य विशेषणेऽप्यन्वयावश्य-कतया विशेषणीभूततद्देशादिसम्बन्धे तद्बाधात्। अतः तत्पदं देश-कालसम्बन्धिमात्रपरम् न तु देशादौ तत्तांशोऽपि विवक्षितः। तथा च तच्छब्दलक्षणा जहदजहल्लक्षणा। तल्लक्षणन्तु वाच्यतावच्छेदका-प्रकारकवाच्यविषयकबोधप्रयोजिका लक्षणेतीति।

सोऽयं देवदत्त इत्यादौ यदि विशिष्टवैशिष्ट्यावगाहिशाब्द-बोधः स्वीक्रियते तदैवं स्यात्, न चायं स्वीक्रियते, किं तु तद्देशतत्का-लवृत्तित्वोपलक्षितानुयोगिकवैशिष्ट्यावगाहिबोधः। तत्र च न प्रागु-क्तरीत्या बाधावकाशः। विशेषणे विधेयानन्वयात्। अत एव सोऽयं देव-दत्त इत्यादिवाक्यजन्यशाब्दबोधसमनन्तरं तद्देशतत्कालवृत्तिः न वा देवदत्त इत्यादिसंशयानुत्पादोऽप्यनुभवसिद्ध उपपद्यते। अतस्तत्तांश-स्याहानात् नात्रलक्षणावकाश इति नोपेयत एव जहदजहल्लक्षणेति वदन्ति। तन्मतमाह - [२३९] **परे त्वि**त्यादिना।

**गौणीव्यञ्जनयोर्वृत्त्यन्तरत्वखण्डनम्**

[२४२] **राज्ञामपि शक्त्यैवे**ति। भुवं धरति रक्षतीति रीत्या योग**शक्त्यै**वेत्यर्थः। ननु व्यञ्जनायाः कुत्र लक्षणायामन्तर्भाव इत्य-त्राह - [२४२] **गङ्गायामि**त्यादि। [२४२] **लक्षणासाम्राज्यात्** - लक्षणा-बलात्। चकारस्य समुच्चयपरत्वासम्भवादाह - [२४२] **चस्त्वर्थ** इति। [२४२] **विलक्षणशब्दप्रयोक्तृत्वादि**ति। विलक्षणशब्दप्रयोगवि-शिष्टत्वादित्यर्थः। वैशिष्ट्यं स्वानुकूलकृतिमत्त्वाधेयत्वोभयसम्बन्धेन। आधेयता स्वपतिविशेष्यक-एवंविधशाब्दबोधप्रकारकेच्छाप्रयोज्यत्वो-भयसम्बन्धेन। तेनास्मदादिष्वपि यथाश्रुतहेतुसत्त्वेन न व्यभिचारः।

[२४२] **सम्भावनादी**त्यादिना मानसपरिग्रहः । [२४३] **मन्तव्यमिति** । तथा च तथानुव्यसायोऽसिद्ध इति भावः ।

**लक्षणाबीजनिरूपणम्**

[२४५] **लक्षणानुपपत्ति**रिति । शक्यार्थस्य यष्ट्यादेः क्रियान्वयसम्भवादिति भावः । [२४५] **नियतकाले** - अश्वादिनियतप्रयाणादिकाल इत्यर्थः । [२४५] **विशेषणादे**रित्यादिना साहचर्यादेः परिग्रहः ।

**अर्थाध्याहारखण्डनम्**

[२४६] **अध्याहारः** - उपस्थितिः । [२४६] **अर्थज्ञानार्थत्वादि**त्यत्रार्थज्ञानमुपस्थितिः । **यथाकथंचिदि**ति । मानान्तरेणेत्यर्थः । ननु पदजन्यत्वनिवेशस्य घटः कर्मत्वमित्यादिस्थलविशेषप्रयोजनकथनं विफलं, प्रत्यक्षाद्युपस्थितपदार्थस्थलेऽपि तत्सम्भवात् इत्याशङ्क्य न बोधे पदजन्यत्वनिवेशस्य इदं प्रयोजनकथनम्, अपि तु विशेषपदस्यापीति समाधानमाह - [२४७] **विशेषपदस्यापी**ति । वृत्त्येति वैशिष्ट्ये तृतीया । [२४७] **दिगि**ति । अयं भावः — यद्यपि घटादिपदं वस्तुगत्या वृत्तिविशिष्टमेवेति तत्समवायज्ञानजन्याकाशोपस्थित्या शाब्दबोधवारणाय तत्तद्वण्डवृत्तिप्रकारकतत्तत्पदधर्मिकज्ञानजन्यतत्तदर्थोपस्थितेर्हेतुत्वं वक्तव्यम् । एवं तत्तत्पदवृत्तिप्रकारकतत्तदर्थधर्मिकज्ञानजन्यतत्तदर्थोपस्थितेरपि । एवं च समवायस्य वृत्तिरूपत्वाभावात् नातिप्रसङ्गः । शक्तिलक्षणयोरेव वृत्तिरूपत्वादिति ।

**पदविभागः**

[२४८] **अवयवशक्तिः** - स्वघटकपदशक्तिः । [२४८] **तन्मात्रेणे**ति । अवयवशक्तिमात्रेणेत्यर्थः । मात्रशब्देन रूढिशक्तिव्यवच्छेदः । तथा च रूढिशक्तिज्ञानजन्यार्थविषयकबोधजनकत्वाभावे सति अवयवशक्तिज्ञानजन्यार्थविषयकबोधजनकत्वं यौगिकस्य लक्षणमिति पर्यवसितम् । योगरूढिवारणाय सत्यन्तम् । [२४८] **तन्मात्रेणे**त्यादि । रूढिमात्रेणेत्यर्थः । मात्रपदेनावयवशक्तिव्ययच्छेदः । तथा च योगशक्तिज्ञानजन्यार्थविषयकबोधजनकत्वाभावे सति रूढिशक्तिज्ञानजन्यार्थ-

विषयकबोधजनकत्वं रूढस्य लक्षणम् । यौगिकवारणाय सत्यन्तम् ।
[२४८] **योगरूढिभ्यामित्यादि** योगशक्तिज्ञानजन्यः यः रूढिशक्तिज्ञान-जन्यशाब्दबोधः तज्जनकत्वमित्यर्थः । रूढिवारणाय प्रथमं जन्यान्तम् । यौगिकवारणाय द्वितीयम् । परस्परसहकारेणेत्यनुदपादाने रूढ्या अर्थप्रतिपादकत्वे सति योगेनार्थप्रतिपादकत्वं लक्षणं स्यात् । तत्र च यौगिकरूढाविशेषः, अतस्तदुपादानं तेनैकत्र शाब्दबोधे द्विविधशक्ति-ज्ञानजन्यत्वलाभः । सहकारे परस्परत्वं च स्वाश्रयनिरूपितसहकारा-श्रयनिरूपितत्वं सहकारविशिष्टत्वपर्यवसितम् । वैशिष्टयं स्वनिरूप-कवृत्तित्वस्वाश्रयनिरूपितत्वोभयसम्बन्धेन । [२४८] **परस्परासहायेने**त्य-ग्रिमग्रन्थस्य निरुक्तसहकाराभावेनेत्यर्थः । तृतीयार्थस्य वैशिष्टयस्य शक्त्यादावन्वयः । तथा च रूढिशक्तिज्ञानजन्ययोगशक्तिज्ञानाजन्यार्थ-विषयकबोधजनकत्वे सति रूढिशक्तिज्ञानाजन्ययोगशक्तिज्ञानजन्यार्थ-विषयकबोधजनकत्वं यौगिकरूढस्य लक्षणम् पर्यवसितम् । केवलयौ-गिककेवलरूढयोः वारणाय दलद्वयम् । [२४९] **योगरूढिमिति** । योगसहितां रूढिमित्यर्थः । तेन - योगः च रूढिश्चेति इतरेतरयोगद्वन्द्वा-श्रयणे योगरूढी इति द्विवचनान्तत्वप्रसङ्गः । योगरूढयोस्समाहार इति समाहारद्वन्द्वाश्रयणे योगरूढीति नपुंसकत्वप्रसङ्ग इति शङ्कायाः नावकाशः । शाकपार्थिवादिवत् मध्यमपदलोपिसमासाश्रयणेनाविरो-धात् । एतदभिप्रायेणैवाग्रे कुमुदे कुमुदप्रयोगसत्त्वात् इष्टापत्तिरित्यत आह - [२४९] **पङ्कजादी**ति ।

**अन्विताशक्तिखण्डनम्**

[२५०] पदार्थद्वयस्यैव परस्परान्वय इत्येतल्लाभाय इतरे-त्युक्तम् । नन्वितरत्वमपि शक्यतावच्छेदकघटकमित्यभिप्रायेणाह - [२५१] **अन्वित** इति । नन्वन्वयांशेऽपि शक्तिरास्ताम्, किं तत इत्याह - [२५१] **अन्वित** इत्यादि । उक्तरीत्या कार्यांशोपेक्षाबीज-सम्भवात् इतरपदस्य कार्यपरत्वे गौणत्वापत्तेश्चास्वरसं हृदि निधाय [२५१] **आहुरित्युक्तम्** । तत्तत्कारणाव्यवहितोत्तरत्वं स्वसामानाधि-

करण्यावच्छिन्न-स्वाव्यवहितोत्तरक्षणोत्पत्तिकत्वसम्बन्धेन तत्कारणवै-शिष्टयम् । तेन व्यधिकरणशाब्दबोधव्युदासः ।

**आकाङ्क्षादिनिरूपणम्**

[२५५] **योग्यतादी**त्यादिना अविलम्बोच्चरितपदपरिग्रहः । ननु यत्पदाभावप्रयुक्तत्वं तज्जन्यत्वम्, तच्च शाब्दबोधजनकत्वेऽभाव-रूपे न सम्भवति । तस्य नित्यत्वादित्यत आह – [२५५] **प्रयुक्तत्वं चे**ति । ननु निरुक्तशाब्दबोधाजनकत्वज्ञानं विनापि शाब्दबोधोदयात् कथं तद्घटितस्याकाङ्क्षारूपत्वमित्यत आह - [२५५] **अजनकत्वा-न्तमि**ति । [२५५] परिचायकम् - बोधकम् । वाक्यर्थस्यापूर्वतया शा-ब्दबोधात् प्राग्दुर्ग्रहत्वेन क्वचिद्योग्यतासंशयादपि शाब्दबोधः जायत इत्यभिप्रायेणोक्तम् - [२५५] **संशयनिश्चयसाधारणे**ति । [२५५] **स्व-रूपसत्येव** – अज्ञातैव । [२५५] **दिगि**ति । अयं भावः – योग्यता-ज्ञानत्वेन हेतुत्वेऽप्रामाण्यनिश्चयाभाव एव हेतुतावच्छेदके निवेश्यः । नवीनमते संशयसाधारणाप्रामाण्यग्रहत्वावच्छिन्नप्रतियोगिताकाभावः तथेति । [२५५] **दीपिकायां अविलम्बेने**त्यादि । एतेन मौनिश्लोकादौ शाब्दबोधानुपपत्तिर्निरस्ता । अन्यथा तत्र पदोच्चारणाभावेन शाब्द-बोधानुपपत्तेः । ननु गौरश्वः पुरुष इत्यादिमूलोक्तमसङ्गतम् । तथा हि - तत्र कीदृशबोध आपाद्यते । अश्वादावेकत्वादिबोधो वा उत गवाश्वादौ अभेदान्वयबोधो वा । नाद्यः; इष्टापत्तेः । न द्वितीयः; अयोग्योदाहरणत्वादित्याद्याशङ्क्यानाकाङ्क्षोदाहरणान्तरमाह [२५५] **घट** इत्यादि ।

**वेदापौरुषेयत्वम्**

प्रतीतिद्वयस्यान्यविषयकत्वकल्पनामपेक्ष्य एकस्याः प्रतीतेस्तत्क-ल्पनं युक्तम् । तथा च प्रत्यभिज्ञा साजात्यावगाहित्वतदभावान्यतर-वती प्रमेयत्वादित्यनुमानं प्रत्यभिज्ञायास्साजात्यावगाहित्वे उत्पत्ति-विनाशप्रत्यययोः ककाराद्यभिव्यञ्जककण्ठताल्वादिव्यापारविषयकत्व-रूपं लाघवं स्यादिति तर्कानुगृहीतं प्रमाणमित्याशयेनाह - [२५९]

**उत्पत्तीति** । अत्र च यदि प्रत्यभिज्ञा साजात्यावगाहिनी स्यात् तर्हि वर्णानामनित्यतया ध्वंसप्रतियोगित्वं प्रागभावप्रतियोगित्वं च स्यात् इति गौरवतर्कसहकृतेनोक्तानुमानेन प्रत्यभिज्ञायास्साजात्यावगाहित्वाभावसिद्धं उत्पत्तिविनाशप्रत्यययोरन्यविषयकत्वकल्पनं निराबाधमेवेति उक्तयुक्तिरेवेत्यभिप्रेत्य [२५९] **हृदयम्** इत्युक्तम् । एतदस्वरसेनैव युक्त्यन्तरमाह - [२५९] **वर्णानामिति** ।

ननु वर्णनित्यत्वे कथं वेदस्यानित्यत्वमित्याशङ्क्य तदुपपादयति - [२५९] **प्रकाशिकायाम् अग्नीति** । [२५९] **उचितमिति** । उत्पत्तिविनाशप्रत्ययानुगुण्यादितिभावः ।

**स्मृत्याचारयोः प्रामाण्यम्**

ननु आचारो नाम अनुष्ठानम् । तच्च व्यापारात्मकमिति तस्य प्रमाणत्वे प्रागुक्तप्रमाणविभागव्याघात इत्यत आह - [२६०] **आचाराणामितीति** । [२६१] **एतेन** आचारपदस्य निरुक्तवाक्यपरत्वेन । [२६०] **अनुमीयत इति** । अत्रेत्थमनुमानप्रकारः - इयं स्मृतिः किंचिच्छाखामूलिका स्मृतित्वादित्यनुमानात् व्यासादिस्मृतिमूलभूतशाखासिद्धौ तादृशीशाखा इदानीमुच्छिन्नपाठा इदानीमनुपलभ्यमानत्वात् यन्नैवम् तन्नैवम् यथा पठ्यमानशाखेति । [२६१] **नदीदीनादि** इत्यादिना राजजरासरो रस इत्यादीनां परिग्रहः । [२६१] **अर्थविशेषेति** । नद्यादिशब्दात् दीनादिरूपार्थबोधप्रसङ्गादित्यर्थः । तथा च येन रूपेण पदान्तरसमभिव्याहारो गृहीतः तद्रूपावच्छिन्नशक्तिज्ञानं शाब्दबोधहेतुर्वाच्यम् । अन्यथा प्रमेयत्वादिना शक्तिग्रहेऽपि शाब्दबोधापत्तेः। एवं चानुमीयमानश्रुतेः 'अष्टकां कुर्वीते'त्याकारकत्वमेवेति विशिष्य निर्णयाभावात् बोधकत्वासम्भवः । एवमष्टकापदस्थानेऽपि पर्यायपदान्तरप्रक्षेपो बोध्य इति भावः । इदं चार्थविशेषबोधापत्तेरिति पाठमभिसन्धाय । अर्थविशेषबोधानापत्तेरिति पाठे तु तन्नैयत्यानुपपत्तेरित्यर्थः ।

[२६४] **अनुमानानुसरणमिति**। अयमर्थविशेषतात्पर्यवान् विलक्षणचेष्टावत्त्वादित्यनुमानप्रकारो बोध्यः। [२६४] **विशिष्येत्यादि**। प्रथमवक्तुरपि सामान्यरूपेण ज्ञातत्वात् उक्तं **विशिष्येति**। **प्रथमेति** क्रियाविशेषणम्। प्राथम्यं च वचने स्वप्रतिपाद्यार्थप्रतिपादकवचन-ध्वंसासमानकालीनत्वं ध्वंसविशिष्टान्यत्व पर्यवसितम्। वैशिष्टयं स्व-समानकालीनत्वस्वप्रतियोगिवचनप्रतिपाद्यार्थप्रतिपादकत्वोभयसम्ब-न्धेन॥

**इति दीपिकाप्रसरणाख्यायां प्रकाशव्याख्यायां शब्दपरिच्छेदः॥**



## प्रामाण्यवादः

### तत्र विप्रतिपत्तिप्रदर्शनम्

[२६८] **प्रमाणप्रसङ्गादिति** । [1]प्रमाणनिरूपितस्वजन्यवृत्तिनिष्ठत्वात्मकप्रसङ्गसङ्गतेरित्यर्थः । प्रमाणशब्दः इह करणे ल्युडन्तः - यद्वा [2]तन्निरूपितस्मृतनिष्ठोपेक्षाविषयताविरोधिरूपात्मकसङ्गतेरित्यर्थः । तच्च रूपं प्रकृते परतोग्राह्यत्वम् । स्मृतिश्च [3]स्वजन्यवृत्तिनिष्ठत्वसम्बन्धेन जायते । अथ वा प्रमाणं प्रमा,[4]तन्निरूपितस्ववृत्तिनिष्ठत्वात्मकप्रसङ्गसङ्गतेरित्यर्थः । ज्ञानजन्यजिज्ञासाधीनत्वं पञ्चम्यर्थः । व्यवस्थापनान्वयि । तथा च प्रमाणनिरूपितप्रसङ्गसङ्गतिविषयकज्ञानजन्यजिज्ञासधीनप्रमात्वधर्मिकपरतोग्राह्यत्वप्रकारकाप्रामाण्यज्ञानानास्कन्दितनिश्चयानुकूलव्यापारानुकूलभविष्यत्कालीनकृतिमान् सन् ज्ञानोद्देश्यकप्रवृत्तिप्रयोज्यजानानामिति ग्रन्थाभिन्नशब्दानुकूलवर्तमानकालीनकृतिमानिति बोधः । स्वतोग्राह्यमित्यत्र [5]स्वशब्दः ज्ञानग्राहकसामग्रीपरः । तसिलो जन्यत्वमर्थः इत्यभिप्रायेणाह - [२६८] **ज्ञानग्राहकेति** । [२६८] **परत** इत्यत्र परशब्दः अनुमानादिपर इत्याशयेनाह - [२६८] **अनुमानादीति** । आदिना आप्तोक्तशब्दपरिग्रहः ।

---

1. प्रमाणनिरूपितेत्यादि । प्रमाणनिरूपितेत्यस्य संगतावन्वयः । स्वं प्रमाणं तज्जन्या प्रमा तद्वृत्ति प्रमात्वं तन्निष्ठत्वं परतोग्राह्यत्वे । तथा च यन्निरूपणानन्तरं यन्निरूप्यते तयोरेव संगतिरूपः संबन्धः । प्रमाणनिरूपणानन्तरं प्रमात्वस्य परतोग्राह्यत्वं निरूप्यत इति प्रमाणनिरूपिता संगतिः परतोग्राह्यत्वे वक्तव्या । सा च स्वजन्यवृत्तिनिष्ठत्वात्मकप्रसङ्गरूपेति भावः ।

2. तन्निरूपितेत्यादि । तन्निरूपिता प्रमाणनिरूपिता, स्मृतं प्रमात्वं तन्निष्ठं उपेक्षाविषयताविरोधिरूपं परतोग्राह्यत्वं तदात्मिका संगतिः ।

3. स्वजन्येत्यादि । स्वं प्रमाणम्, तज्जन्या प्रमा तद्वृत्ति प्रमात्वं तन्निष्ठत्वं परतोग्राह्यत्वे ।

4. तन्निरूपितेत्यादि । तन्निरूपिता प्रमानिरूपिता, संगतिरित्यन्वयः । स्वं प्रमा तद्वृत्ति प्रमात्वं तन्निष्ठत्वं परतोग्राह्यत्वे ।

5. स्वशब्द इति । स्वशब्दोऽत्र स्वीयवाची सन् ज्ञानग्राहकसामग्रीपर इति भावः ।

शङ्कते - [२६८] **कथमिति** । [२६८] **तस्याः** - विप्रतिपत्तेः । [२६८] **अत्र** - विप्रतिपत्तिनिष्ठविचारप्रयोजकत्वविषये [२६८] **अक्षतमिति वदन्तीत्यन्वयः** । [२६८] **हि** - यतः । उपपादयति — [२६८] **विरुद्धेत्यादि** । [२६८] **कबलितेति** । विषयीभूतेत्यर्थः बोधविशेषणम् । [२६८] **विचार** इति । प्रवर्तक इति शेषः । [२६८] **एवं च** - उक्तरीत्या विचारप्रवृत्तौ च । [२६८] **विचारोपयोगित्वमिति** । विप्रतिपत्तेरित्यादिः । अत्र ज्ञानप्रामाण्यमिति पक्षनिर्देशः । घटकत्वं सप्तम्यर्थः ज्ञानपदान्वितम् । [२३९] **तादृशेति** । अप्रामाण्याग्राहकज्ञानग्राहकयावत्सामग्रीजन्येत्यर्थः । [२६९] **अत्र** - उक्तमतत्रये । घटकत्वं सप्तम्यर्थः गुरुमतान्वयि । [२६९] **तदिति** । गुर्वित्यर्थः । [२६९] **एवं च** उक्तरीत्या व्यवस्थापने च । ननु तत्प्रकारकबुद्धौ तद्ज्ञानस्य कारणत्वात् उक्तव्यवसायात् प्राक् प्रामाण्यानुपस्थितेः कथं दर्शितव्यवसाये प्रामाण्यभानसम्भव इत्यत आह — [२३९] **विशिष्टेति** । [२६९] **विशेषणेति** । **तद्रूपेत्यादिः** । यावदिति सामग्रीविशेषणम् । अत एवाग्रे **ज्ञानग्राहकयावदित्युक्तम्** । प्रमितिकरणत्वरूपप्रामाण्यस्य परैः स्वतोग्राह्यत्वानुपगमेन तत्र विचारासम्भवादाह [२६८] **वस्तुतस्त्विति** ।

यत्तु - ज्ञानपदेन प्रमितिकरणत्वव्यावृत्तिः न सम्भवति । परामर्शादेः प्रमितिकरणत्वात् अत आह - **वस्तुतस्त्विति** इति व्याख्यानम् - तदसत् । ज्ञानस्यैव प्रामाण्यमित्यवधारणविवक्षया प्रमितिकरणत्वस्येन्द्रियसाधारणस्य व्यावृत्तिसम्भवात् । सर्वं वाक्यमिति न्यायेन शब्देनैव तादृशार्थलाभात् । ननु विशिष्य यावज्ज्ञानव्यक्तीनां दुर्ग्रहत्वात् तन्निवेशो न सम्भवतीत्यत आह - [२६८] **तद्धर्मेति** । यावत्पदस्य समभिव्याहृतपदार्थतावच्छेदकव्यापकत्वपरत्वादिति भावः । [२७४] **फलतः**– तात्पर्यतः । [२६८] **समान्यतः** सामान्यरूपेण । **तद्धर्मप्रकारकत्वरूपज्ञानविशेषणाविशेषितेन ज्ञानत्वेनेति** यावत् ।

ज्ञानान्वयिनि वैशिष्टचे तसिल्। अन्यथा घटत्वादिघटितप्रामाण्यस्य घटत्वादिप्रकारकज्ञानग्राहकग्राह्यत्वाभावेन विधौ बाधापत्तेः। इदं ज्ञानं प्रमेति ज्ञानेन स्वात्मकानुव्यवसायनिष्ठप्रामाण्यग्रहात् **प्रामाण्याग्रहादिति दीपिका**वाक्यमसङ्गतम् अत आह - [२७४] **व्यवसायनिष्ठे**त्यादिः। सामग्रचा एव प्रामाण्यग्राहकतया अनुव्यवसायनिष्ठप्रामाण्यग्राहिकाया इति स्त्रीलिङ्गनिर्देश एव कार्य इत्यत आह - [२७४] **सामान्य** इति। तथा च लिङ्गविशेषाविवक्षायां नपुंसकस्यैव निर्देष्टव्यतया नोक्तदोष इति भावः। तस्याप्रामाण्यमिति षष्ठीतत्पुरुषभ्रमवारणाय [२७४] **सप्तमी**ति।-[२७४] **यादृशप्रामाण्य**मित्यादि। अत्रायं निष्कर्षः — तद्धर्मघटितप्रामाण्यं किंचिद्विशिष्टमिति। वैशिष्टचं तादात्म्यस्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। अवच्छेदकता [1]स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतासम्बन्धेन। स्वाधिकरणता स्वविशिष्टतद्धर्मप्रकारकज्ञानग्राहकसामग्रीजन्यज्ञानत्वसम्बन्धेन। स्ववैशिष्टचं स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्व-

---

1. अत्र सर्वत्र स्वशब्दः तद्धर्मघटितप्रामाण्यपरः। स्वविशिष्टेत्यस्य ज्ञानग्राहकसामग्रयामन्वयः। स्वाश्रयनिष्ठविशेष्यतानिरूपितप्रामाण्यनिष्ठप्रकारताशालिज्ञानजनकत्वसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन स्वविशिष्टा या तद्धर्मप्रकारकज्ञानग्राहकसामग्री तज्जन्यज्ञाननिष्ठभेदप्रतियोगितानिरूपिता या स्वनिरूपितविषयितासंबन्धावच्छिन्नावच्छेदकता तत्संबन्धावच्छिन्ना या स्ववृत्तिभेदप्रतियोगितावच्छेदकता तेन संबन्धेन तादात्म्यसंबन्धेन च किंचिद्विशिष्टं तद्धर्मघटितप्रामाण्यमिति फलितम्। एतत्समन्वयप्रकारः इत्थम्—स्वं घटत्ववति घटत्वप्रकारकत्वरूपं प्रमात्वं तदाश्रयः। अयं घट इति प्रमा; तद्विशेष्यकाप्रामाण्यप्रकारकज्ञानजनकत्वं अयं घट इति ज्ञानग्राहकसामग्रयां नास्तीति सा सामग्री स्वाश्रयेत्यादितादृशजनकत्वसंबन्धावच्छिन्नस्व (प्रमात्व) निष्ठावच्छेदकताकप्रतियोगिताकभेदवती भवति। अतस्तादृशभेदवत्त्वसंबन्धेन स्वविशिष्टा या उक्तसामग्री तज्जन्यो यत् ज्ञानं घटज्ञानविषयकं ज्ञानं तन्निष्ठो यो भेदः स्वनिरूपितविषयितासंबन्धेन घटत्वघटितप्रमात्ववद्भेदो न भवति, तेन संबन्धेन तादृशप्रमात्ववत्त्वात्; अपि त्वन्यभेदः तत्प्रतियोगितावच्छेदकत्वं घटत्वघटितप्रमात्वे नास्तीति तादृशावच्छेदकतासंबन्धेन प्रमात्ववद्भेदः तादृशप्रमात्वनिष्ठः तत्प्रतियोगितावच्छेदकत्वं घटत्वघटितप्रमात्वे, तत्तादात्म्यं च तत्रेति संबन्धद्वयोपपत्तिरिति। पश्चात्तनेष्वनुगमेष्वप्येवमूह्यम्।

सम्बन्धेन । अवच्छेदकता स्वाश्रयनिष्ठविशेष्यतानिरूपिताप्रामाण्यनिष्ठप्रकारताशालिज्ञानजनकत्वसंबन्धेन ; भेदप्रतियोगितावच्छेदकता स्वनिरूपितविषयितासम्बन्धेन । यद्वा विषयिताविशिष्टत्वम् । वैशिष्ट्यं स्वनिरूपकत्वस्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । अवच्छेदकत्वं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतासम्बन्धेन । स्वाधिकरणता स्वाश्रयविशेष्यकेत्यादि प्राग्वत् । अत्र च सामग्र्यां यावत्त्वपक्षे किंचिद्विशिष्टत्वं स्थूलानुगमः । वैशिष्ट्यं तादात्म्यस्वविशिष्टज्ञानविषयत्वोभयसम्बन्धेन । स्ववैशिष्ट्यं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । स्वाधिकरणता स्वविशिष्टज्ञानग्राहकतावच्छेदकव्यासज्यवृत्तित्वसम्बन्धेन । स्ववैशिष्ट्यं स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानजनकतावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसंबन्धेन । भेदप्रतियोगितावच्छेदकता स्वोत्पादकतावच्छेदकतासम्बन्धेन । तेनानन्तानां देशान्तरीयकालान्तरीयतत्तत्कारणानामसर्वज्ञदुर्ज्ञेयत्वेन स्वतस्त्वशरीरे तत्तन्निवेशदौर्घट्येऽपि न क्षतिः । एवं च गुर्वादिमते व्यवसायादिकारणकूटत्वं इदं ज्ञानं प्रमेत्यनुमित्यादिकारणकूटत्वं च तत्तदवच्छिन्नोत्पाद्यं च ज्ञानं मिथो विजातीयमिति निरुक्तकिंचिद्विशिष्टत्वं न सुसाधमिति । शङ्कते – [२७४] **नन्विति** । अप्रसिद्धिमुपपादयति – [२७४] **न हीति** । [२६४] **एकम्** - एकजातीयम् । [२७४] **न जन्यत** इत्यन्वयः । अत्र च यावन्तस्तादृशाः धर्माः तदवच्छिन्नोत्पाद्यज्ञानविषयत्वे सति तदवच्छिन्नोत्पाद्यज्ञानविषयत्वमिति रीत्या स्वतस्त्वं साध्यमिति नोक्ताप्रसिद्धिरिति । शङ्कते- [२७४] **न चेति** ।

ननु प्रथमोपात्तस्याग्राहकान्तस्यैव प्रथमं प्रयोजनं वक्तव्यमिति तदुपेक्ष्य चरमोपात्तस्य यावत्त्वविशेषणस्य प्रथमं प्रयोजनकथनमनुचितमित्याशङ्कां परिजिहीर्षुराह - [२७३] **यावत्त्वेत्यादि** । अयं भावः - अग्राहकान्तस्य प्रयोजनं हि अप्रामाण्यग्राहकसामग्रीवारणम् , तच्च

सामग्र्यां यावत्त्वाप्रवेशे न निर्वहति । प्रामाण्यग्राहकसामग्रीमादाय प्रामाण्ये स्वतस्त्वस्य सूपपादत्वात् । तत्र तद्विशेषणसत्त्वे तु अप्रामाण्यग्राहकसामग्र्या अपि तादृशयावदन्तर्गतत्वेन प्रामाण्यस्य तदग्राह्यतया बाधः स्यादिति यावत्त्वविशेषणसत्त्वस्याग्राहकान्तसार्थक्योपपादकत्वमिति । [२७३] **प्रथमतः** - अग्राहकान्तप्रयोजनकथनात् प्राक् । सामग्रीगतयावत्त्वविशेषणेन वारणीयं सिद्धसाधनमुपपादयति - [२७३] **नैयायिके**ति । यद्यपि विधिकोटौ यावत्त्वविशेषणस्य सिद्धसाधनवारणफलसम्भवेऽपि निषेधकोटौ न तत्सम्भवः । तथापि बाधवारणमेव फलं निषेधकोटौ सम्भवतीत्याह - [२७४] **नैयायिके**ति । [२७४] **वाक्येन चे**त्यनेन **अनुमानादी**त्यादिपदार्थ उक्तः । [२७३] **इदं ज्ञानमप्रमेति ज्ञानेन प्रामाण्याग्रहादि**त्यत्र तादृशज्ञानप्रयुक्तप्रामाण्यग्रहाभावादित्यर्थः यथाश्रुतो लभ्यते । स च प्रकृतानुपयुक्तः, बाधस्यैव प्रकृते वक्तव्यत्वात्, अतः प्रामाण्याग्रहादित्यस्य प्रामाण्याविषयीकरणादित्यर्थमाह - [२७४] **प्रामाण्ये**त्यादि । [२७४] **तादृशे**ति । इदं ज्ञानमप्रमेत्याकारकेत्यर्थः । [२७४] **तया** उक्तज्ञानसामग्र्या । [२७४] **विशिष्टे**ति । अवच्छिन्नेत्यर्थः । यद्यपि इदं ज्ञानमप्रमेति ज्ञाने प्रामाण्यं प्रतियोगितया विषयः तथापि ज्ञानग्राहकसामग्रीजन्यग्रहीयप्रतियोगितासम्बन्धानवच्छिन्नविषयत्वं स्वतोग्राह्यत्वम्, अथवा स्वाश्रयनिष्ठविशेष्यतानिरूपितस्वनिष्ठप्रकारताकत्वसम्बन्धेन व्यापकत्वं विवक्षितमिति नासङ्गतिः । [२८०] **स्वत एव गृह्यत** इति । इदमत्र चिन्त्यम्-अत्र एवकारः गृह्यत इत्यनन्तरं योजनया 'गृह्यत एवे'त्यर्थः । तथा चायं क्रियासङ्गत एवकारः नीलं सरोजं भवत्येवेतिवत् । अतो न विरोध इति तस्य अप्यर्थकताकथनमनुपपन्नमिति । इदमत्र बोध्यम् - सामग्र्यां यावत्त्वप्रवेशे ज्ञानविशिष्टत्वं सूक्ष्मानुगमः । वैशिष्ट्यं विषयत्वस्ववृत्तिभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन । अवच्छेदकता स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकतासम्बन्धेन । स्वाधिकरणत्वादिकं पूर्ववत् । [२७४] **विशिष्य** - तत्तत्कारणकूटत्वेन । एवमग्रेऽपि ।

तादूप्येणेत्यत्र ज्ञाने यावत्त्वप्रवेशे भेदविशिष्टत्वमिति सूक्ष्मानुगमः । वैशिष्टचं स्वप्रतियोगितावच्छेदकत्वस्वाश्रयत्वोभयसम्बन्धेन । अवच्छेदकत्वं स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नम् । स्वाधिकरणता स्वविशिष्टज्ञानग्राहकसामग्रीजन्यग्रहत्वससम्बन्धेन । स्ववैशिष्टचं स्वाश्रयविशेष्यकाप्रामाण्यप्रकारकज्ञानजनकत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । भेदप्रतियोगितावच्छेदकता स्वनिरूपितविषयितासम्बन्धेन । [२७४] **सङ्क्षेप** इत्यनेन **प्रामाण्यवादगादाधर्याम्रुक्तं** सर्वमभिसंहितम् ।

ननु तद्वद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वं हि तत्प्रमात्वम् । तत्कथं **पुरोवर्तिनी**त्यादि**दीपिका**वाक्यसङ्गतिरित्यत आह - [२८०] **पुरोवर्तिनी**ति। ननु पुरोवर्तिनि प्रकारसम्बन्धभानव्यवस्थापनमात्रेण कथं विशिष्टप्रामाण्यभानसिद्धिरनुव्यवसायादावित्यत आह - [२८०] **नैयायिका अपी**ति । ननु विशिष्टबुद्धौ विशेषणज्ञानस्य हेतुत्वात् कथमनुव्यवसाये प्रागनुपस्थितविशेष्यत्वादिभानमित्यत आह - [२८१] **अनुपस्थितयोरपी**ति । अयं भावः - विशेषणज्ञानस्य हेतुत्वं विशेषणभेदेन भिन्नभिन्नमिति फलानुरोधेन प्रकृते न तादृशकारणत्वकल्पनमिति ।

ननु व्यवसायज्ञातताालिङ्गकानुमितिभ्यां प्रामाण्यग्रहणस्य गुरुभट्टाभ्यामुपगमात् [२४२] **अनुव्यवसायेने**त्युक्तिः **दीपिकायां** कथमित्याशङ्क्य तस्य मिश्रमताभिप्रायकतामाह - (इदं **चे**ति ।) **तन्निरसनप्रकारो बोध्य** इति । न च तथासति घटं जानामीत्यादौ घटादेः ज्ञानादिक्रियाकर्मतानुपपत्तिः क्रियाजन्यफलशालिताया एव कर्मतारूपत्वादिति, तत्र द्वितीयानुपपत्तिरिति वाच्यम् । तादृशफलशालित्वस्य मुख्यकर्मतारूपतया ग्रामं गच्छतीत्यादावेव ग्रामादौ तदुपगमात् । घटं जानातीत्यादिषु तदनभ्युपगमात् विषयतालक्षणगौणकर्मताया एव तत्र स्वीकरणात् । अन्यथा 'घटमिच्छति' घटं द्वेष्टी'त्यादौ इष्टत्वादिरूपपदार्थान्तरकल्पनापातात् इति ।

[२८३] **सङ्क्षेप** इति । अयं भावः - अगृहीताप्रामाण्यकत्वमप्रामाण्यज्ञानानास्कन्दितत्वम् , तच्चाप्रामाण्यप्रकारतानिरूपितविशेष्यत्वसामानाधिकरण्योभयसम्बन्धावच्छिन्नज्ञानत्वावच्छिन्नप्रति - योगिताकाभावः । एवं भ्रमत्वज्ञानाभावप्रमात्वग्रहाभावावपि निवेश्यौ । एवमप्रामाण्यज्ञाने अप्रामाण्यज्ञानं यत्रोत्पन्नम् तत्र प्रवृत्त्युपपत्तये अप्रामाण्यज्ञानधर्मिकाप्रामाण्यज्ञानत्वेन पृथक्कारणत्वं कल्पनीयम्। अधिकं **प्रामाण्यवादादौ** द्रष्टव्यमिति। [२८३] **प्रामाण्यव्यवस्थापकहेतोः** सफलप्रवृत्तिजनकत्वरूपेत्यादिः । प्रामाण्ये परतो ग्राह्यत्वस्य मीमांसकैरप्युपगमात् सिद्धसाधनमाशङ्क्य एवकारपूरणेन व्याचष्टे - [२८२] **प्रामाण्यस्यानुमानादित** एवेति । [२८२] **एतेन** - अनुव्यवसायादौ प्रामाण्यभानासम्भवस्थापनेन। [२८२] **व्यभिचार** इति । **व्यतिरेके**त्यादिः।

[२८७] **एवं ज्ञप्तावित्यादि** उक्तप्रकाराभिन्नज्ञप्तिधर्मिकपरतस्त्वव्यवस्थापकध्वंसविशिष्टः उत्पत्तिधर्मिकपरतस्त्वप्रकारकज्ञानानुकूलशब्दः तत्कर्तृत्यन्वयबोधः । [२८७] **मात्रे**ति । मात्रपदमत्रकात्स्न्र्यंपरम् । [२८७] **व्युदा**स इति ज्ञानत्वादीनामतथात्वादिति भावः । ननु प्रमासाधारणकारणत्वं प्रमानिष्ठकार्यत्वातिरिक्तधर्मावच्छिन्नकार्यतानिरूपितकारणत्वम् । एवं च कालादिवारणेऽपि आत्मादिवारणमशक्यमत आह - [२८७] **प्रमात्वाधिके**त्यादि । प्रमात्वविशिष्टकार्यतानिरूपितकारणत्वमिति निष्कर्षः । वैशिष्ट्यं [1]स्वाधिकरणवृत्तित्वस्वविशि-

---

1. स्वाधिकरणेत्यादि । स्वाधिकरणवृत्तित्व - स्वाधिकरणवृत्तित्वस्वाभावाधिकरणवृत्तित्वोभयसंबन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवद्धर्मावच्छिन्नत्वोभयसम्बधेन प्रमात्वविशिष्टा या कार्यता तन्निरूपितकारणत्वं प्रमासाधारणकारणत्वमित्यर्थः । स्वं प्रमात्वं तदधिकरणं प्रमा तन्निष्ठत्वं कार्यतायाम् , एवं स्वं प्रमात्वं तदधिकरणं प्रमातद्वृत्तित्वं ज्ञानत्वे स्वं प्रमात्वं तदभावाधिकरणभ्रमवृत्तित्वं च ज्ञानत्वे इति ज्ञानत्वं स्वाधिकरणवृत्तित्वस्वाभावाधिकरणवृत्तित्वोभयसम्बन्धेन प्रमात्ववत्, प्रमात्वं तु न तथा तस्य प्रमात्वाभावाधिकरणवृत्तित्वाभावात्, अतः तादृशोभयसम्बन्धावच्छिन्नप्रमात्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत् प्रमात्वं तदवच्छिन्नत्वं च प्रमानिष्ठकार्यतायामिति उभयसम्बन्धेन प्रमात्वविशिष्टा कार्यता भवतीति समन्वयो ज्ञेयः ।

ष्टधर्मावच्छिन्नत्वोभयसंबन्धेन। वैशिष्ट्यं स्वनिष्ठावच्छेदकताक-प्रतियोगिताकभेदवत्त्वसम्बन्धेन। अवच्छेदकता स्वाधिकरणवृत्तित्व-स्वाभावाधिकरणवृत्तित्वोभयसम्बन्धेन। कार्यतायां प्रमानिष्ठनिवेश-फलमाह - [२८७] **भ्रमेति**। [२८७] **इत्यादा**वित्यादिना वंशोरगभ्रमा-दिसङ्ग्रहः। [२८७] पित्तादीत्यादिना मण्डूकवसाञ्जनादिग्रहणम्।

[२८९] **विसंवादो**ति। तदभाववति तत्प्रकारकेत्यर्थः। **बोध्ये**-ति। एतेन धर्मिणोऽप्रसिद्ध्या निषेधोऽनुपपन्न इति शङ्का निरस्ता।

[२८९] **क्लृप्तनियते**ति। एतेन कल्पनासाम्यशङ्कानिरासः। ननु इष्टभेदाग्रहमात्रस्य कारणत्वोपपत्तौ इष्टे स्वतन्त्रोपस्थितत्व-विशेषणं व्यर्थमित्यत आह – [२८९] **एतावते**ति। ननु इष्टभेदाग्र-हस्यैवेत्येवकारासङ्गतिः। स्मृतेरप्यपेक्षितत्वेनेतरव्यवच्छेदस्य तेना-शक्यत्वादित्यत आह — [२८९] **एवकारेणे**ति। [२८९] **लाघवा**-**दि**ति। अन्यथा तद्वति तत्प्रकारकत्वस्याधिकस्य निवेशे कार्यतावच्छे-दकगौरवादिति भावः। [२८९] **सामान्यतः**– सामान्यरूपेण। अभेदः प्रत्ययार्थः वृत्तित्वान्वयी।

### अयथार्थानुभवनिरूपणम्

[२९२] **प्रदेशविशेषे**त्यादि। प्रदेशविशेषः निद्रानाडीविशेषः। तत्रावस्थितं यन्मनः तेन आत्मनः संयोग इत्यर्थः। [२९२] **तदसमवा**-**यिकारणके**त्यादि। अयं भावः — स्वप्नशब्दस्य ज्ञानविशेष एव लक्षणा तदसमवायिकारणकेत्यनेन शक्यसम्बन्धस्सूचित इति। [२९२] **भाक्तः** लाक्षणिकः। [२९२] **तत्भाष्यविरुद्धमि**ति। अननुभूता-र्थविषयकस्य स्वाप्नज्ञानस्य दर्शनात्। स्मृतेश्चातथात्वादिति भावः। ननु पटत्ववानिति ज्ञानवारणमपि नानात्वनिवेशप्रयोजनं सभवतीति घटत्वविरुद्धपटत्ववानिति ज्ञानपर्यन्तानुधावनं विफलमित्याशङ्क्याह - [२९२] **कोट्योरि**ति। ननु घटत्वविरुद्धपटत्ववानिति ज्ञानेऽपि घट-त्वपटत्वरूपनानाधर्मप्रकारकत्वसत्त्वात् कथं तद्वारणमिति, **तत्राह**–

[२९३] **एकधर्मिके**ति । अयं भावः - [1]प्रकारताविशिष्टज्ञानत्वं संशयत्वम् । वैशिष्ट्यं स्वनिरूपकत्वस्वावच्छिन्नविषयतानिरूपितविरोधविषयतानिरूपितविषयत्वावच्छिन्नत्वस्वनिरूपितविशेष्यतासमानाधिकरणविशेष्यतानिरूपितत्वोभयसम्बन्धेन स्वविशिष्टप्रकारतानिरूपकत्वोभयसंबन्धेन । एवमपि पर्वतो वह्निमान् द्रव्यं वह्निविरुद्धजलवत् । इति ज्ञाने अतिव्याप्तिर्दुर्वारैवेति शङ्कते – [२९३] **न चेति** । [२९३] **एकधर्मावच्छिन्ने**त्यादि । अयमाशयः – स्वनिरूपितविशेष्यतासमानाधिकरणत्वस्थले स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वं निवेश्य [2]अन्यत् पूर्ववत् बोध्यमिति । [२९३]

---

1. प्रकारताविशिष्टेत्यादि । पर्वतो वह्निमान् न वेति संशये वह्निः तदभावश्च प्रकारः । वह्नितदभावयोर्विरोधः संसर्गतया भासते । वह्निनिष्ठप्रकारतानिरूपिता पर्वतनिष्ठा विशेष्यता अन्या, वह्न्यभावनिष्ठप्रकारतानिरूपिता पवतनिष्ठा विशेष्यता अन्या, इति स्थितिः । एतां मनसिकृत्य अनुगमस्य समन्वयो ज्ञेयः । तथा हि - स्वं वह्निनिष्ठप्रकारता तन्निरूपकत्वं उक्तसंशयात्मकज्ञाने, एवं स्वं वह्निनिष्ठप्रकारता तदवच्छिन्ना या वह्निनिष्ठा विषयता (विरोधनिष्ठविषयतानिरूपितविषयता) तन्निरूपिताया विरोधनिष्ठा विषयता तन्निरूपितविषयता वह्न्यभावनिष्ठविषयता तदवच्छिन्नत्वं वह्न्यभावनिष्ठप्रकारतायां एवं वह्निनिष्ठप्रकारता तन्निरूपिता या पर्वतनिष्ठा विशेष्यता तत्समानाधिकरणा या विशेष्यता पर्वतनिष्ठा वह्न्यभावप्रकारता निरूपिता विशेष्यता तन्निरूपितत्वं च वह्न्यभावनिष्ठप्रकारतायामिति उभयसंबन्धेन वह्निनिष्ठप्रकारताविशिष्टा या प्रकारता वह्न्यभावनिष्ठा तन्निरूपकत्वं च पर्वतो वह्निमान्न वेति संशयेऽस्तीति । अत्र वह्निनिष्ठा विरोधनिष्ठसंसर्गताख्यविषयतानिरूपिता विषयता पर्वतनिष्ठविशेष्यतानिरूपितया वह्निनिष्ठप्रकारतया अवच्छिद्यते, वह्न्यभावनिष्ठा या पर्वतनिष्ठविशेष्यतानिरुपितप्रकारता सा विरोधनिष्ठविषयतानिरुपितवह्न्यभावनिष्ठविषयतया अवच्छिद्यते, अन्तराभासमानपदार्थनिष्ठविषयतयोरवच्छेद्यावच्छेदकभाव इति सिद्धान्तादित्यपि ध्येयम् ।

2. अन्यत् पूर्ववदिति । तथा च प्रकारताविशिष्टज्ञानत्वं संशयत्वम् । वैशिष्ट्यं च स्वनिरूपकत्व-स्वावच्छिन्नविषयतानिरूपितविरोधविषयतानिरूपितविषयतावच्छिन्नत्व,स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वोभयसंबन्धेन स्वविशिष्टप्रकारतानिरुपकत्वोभयसंबन्धेनेति भावः ।

दिगिति । अयं भावः - यद्यपि प्रत्येकं धर्मयोरेकत्वमस्ति तथापि [1]स्वावच्छिन्नविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वस्वावच्छिन्नविशेष्यता - निरूपिततदभावनिष्ठप्रकारताकत्वोभयसम्बन्धेन धर्मविशिष्टज्ञानत्वं, प्रकारताविशिष्टप्रकारताशालिज्ञानत्वं वा संशयत्वम् । द्वितीये वैशिष्ट्यं [2]स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्व-स्वावच्छेदकावच्छिन्नविषयतानिरूपितविरोधविषयतानिरूपितत्वस्वा - नवच्छेदकावच्छिन्नत्वत्रितयसम्बन्धेन । अतो न दोष इति । [२९३] **तन्त्रान्तरे** - अद्वैतशास्त्रे । [२९३] **तत्प्रकारकत्वेत्यादि** इत्यादिना तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताकत्वपरिग्रहः । [२९३] **सङ्क्षेप** इति । अयमाशयः – यद्यपि इदं रजतम् भूतलं घटवत न-वेत्याद्यांशिकसंशयेऽव्याप्तिरस्ति, तथापि तदंशे संशयान्यत्वनिवेशात् न दोषः । तदंशे संशयत्वं चैकस्मिन् धर्मिणि तत्तदभावोभयप्रकारकत्वमिति । [२९३] **शाखादावित्यादि** । इदमुपलक्षणम् - पुरुषत्वनिश्चयस्याहार्यत्वोपपत्तये पुरुषत्वनिश्चयो जायतामितीच्छाया वाच्यत्वात् । अन्यथा बाधकालीनेच्छाजन्यज्ञानत्वलक्षणस्याहार्यत्वस्य तत्रासम्भवात् । ज्ञानेच्छयोः युगपदुत्पादमते तादृशभ्रमदशायामेव इच्छादिसम्भ - वादिति ध्येयम् । [२९३] **उपयोगित्वम्** प्रयोजकत्वम् । [२९८] **वेदनीयमित्यादि** इत्यादिना प्रतिकूलतया वेदनीयं दुःखमित्यस्य सङ्ग्रहः । [२९८] **सुखादी**त्यादिना दुःखपरिग्रहः । [२९८] **अन्यासे**-रिति । इदमुपलक्षणम् । असाधूनां परद्रव्योपभोगादिजन्यनरकादि-

---

1. स्वावच्छिन्नेत्यादि । स्वं पर्वतत्वं तदवच्छिन्नविशेष्यतानिरूपितवह्निनिष्ठप्रकारतानिरूपकत्वं 'पर्वतो वह्निमान्न' इति संशये, एवं स्वं पर्वतत्वं तदवच्छिन्नविशेष्यतानिरूपितत्ववह्न्यभावनिष्ठप्रकारतानिरूपकत्वं च तादृशसंशये इति समन्वयः ।
2. स्वनिरूपितेत्यादि । स्वं वह्निनिष्ठप्रकारता तन्निरूपितपर्वतनिष्ठविशेष्यतावच्छेदकं पर्वतत्वं तदवच्छिन्नविशेष्यता निरूपितत्वं वह्न्यभावनिष्ठप्रकारतायां, एवं स्वं वह्निनिष्ठप्रकारता तदवच्छेदकं वह्नित्वं तदवच्छिन्नविषयतानिरूपिता या विरोधनिष्ठविषयता तन्निरूपितत्वं वह्न्यभावनिष्ठप्रकारतायां, एवं स्वं वह्निनिष्ठप्रकारता स्वानवच्छेदकंवह्न्यभावत्वं तदवच्छिन्नत्वं च वह्न्यभावनिष्ठप्रकारतायाम् तच्छालिज्ञानत्वं संशयेऽस्तीति समन्वयः ।

दुखे द्वेषादर्शनात् अव्याप्तेरित्यपि द्रष्टव्यम् । [२९८] **सुख्यहमित्या-**दीत्यादिना दुःख्यहमित्यस्य सङ्ग्रहः । एवमग्रेऽपि ।

**स्मृतिनिरूपणम्**

अनुभवजन्येत्यस्य प्रयोजनमाह - **दीपिकायाम्** [२९९] **आत्मा-दावि**ति । ननु जन्यत्वनिवेशमात्रेणात्मादिवारणेऽनुभवेत्यंशो विफल इत्याशङ्कायां उक्तम् - **आदा**विति । आदिपदेनात्ममनोयोगपरिग्रहः । अनुभवत्वं नाम स्मृतिभिन्नज्ञानत्वम् । तथा च कारणतावच्छेदक-शरीरे स्मृतिभिन्नत्वप्रवेशे गौरवात् ज्ञानत्वमात्रेण लाघवात् कारण-त्वमुचितमित्याशङ्कायामाह - **प्रकाशिकायाम्** । [३००] **अनुभवत्वस्या-पी**ति । [३००] **जातित्वेने**ति । तत्र प्रमाणं तु अनुभवामीत्यनुव्यव-साय एव, जानामीत्यनुव्यवसायो ज्ञानत्व इवेति ध्येयम् । [३००] **अन्यथासिद्धिनिरूपकत्वादि**ति । तत्तद्धर्मभेदप्रतियोगित्वादित्यर्थः । अन्य-था अत्यन्ताहेतुभूतस्मरणानां कारणत्वस्वीकारे गौरवादिति भावः । [३००] **स्वजन्ये**ति । स्वं संस्कारः । एवमग्रेऽपि । पुनरनुभवान्तरेण स्मृतिर्जायत इति शङ्कावारणाय [३००] **सकृदि**त्यादि । [३००] **चरमे**ति । चरमत्वमत्र स्वजनकसंस्कारजन्यस्वसमानविषयकस्मृति-प्रागभावासमानकालीनत्वं स्वप्रागभावसमानकालीनत्व-स्वजनकसं-स्कारजन्यत्व-स्वसमानविषयकत्वत्रितयसम्बन्धेन स्मृतिवशिष्टान्यत्व-पर्यवसितम् । [३००] **अनायत्या तत्तद्व्यक्तित्वेने**ति । इदमत्र चिन्त्यम्-स्वरूपसम्बन्धेन तद्विषयकसंस्कारनाशं प्रति तद्विषयकचरमस्मृतित्वेन समवायसम्बन्धेन हेतुत्वोपगमे बाधकाभावः । अन्यथा तत्समानकाली-नवायुसंयोगादिकमादाय विनिगमनाविरहापातादिति । [३००]**संस्कार-स्य फलनाश्यतये**ति । एतेन पूर्वजातानुभवेनैव संस्काररूपव्यापारद्वारा स्मरणोत्तरं स्मरणोपपत्तिरिति शङ्का निरस्ता । संस्कारात्मकस्य व्यापारस्य तदानीं नष्टत्वेन तद्द्वारा प्रागनुभवस्य स्मरणोत्तरस्मरण-दशायामभावात् । अनुभवस्य च संस्कारलक्षणव्यापारद्वारैव स्मृति-हेतुतायाः सर्वसम्मतत्वादिति । [३००] **अन्यूनविषयकस्यैवे**ति । अयं

भावः - स्वसमानेत्यादिभेदवत्त्वसम्बन्धावच्छिन्नाधेयत्वसामानाधिकरण्योभयसम्बन्धेन स्वसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वसम्बन्धावच्छिन्नस्वनिष्ठभेदप्रतियोगितावच्छेदकत्वसामानाधिकरण्योभयसम्बन्धेन वा स्मृतेः कारणत्वमुपगन्तव्यम्। स्वाधिकरणता स्वनिरूपितविषयतासम्बन्धेन। भेदप्रतियोगितावच्छेदकतापि तेनैव सम्बन्धेन। [३००] **झटिति स्मृती**त्यादि। इदं जातिविशेषप्रमाणसूचनाय झटिति स्मृतिजनकतावच्छेदक इत्यर्थः। प्रमाणं चानुमानं जनकतापक्षकं बोध्यम्। [३००] **संस्कारातिशयः** - संस्कारगतो जातिविशेषः। नन्वनुभवजन्येत्यादिसंस्कारलक्षणस्य स्मरणजन्यसंस्कारेऽव्याप्तिरित्यत्राह - [३००] **एतन्मत** इति। नव्यमत इत्यर्थः।

**विशेषगुणलक्षणम्**

[३०३] **पृथिवीत्वेत्या**दि। स्वाधिकरणवृत्तित्वस्वभिन्नद्रव्यविभाजकोपाध्यधिकरणवृत्तित्वोभयसम्बन्धेन द्रव्यविभाजकोपाधिविशिष्टावृत्तिजातिमद्गुणत्वमिति फलितम्। अत्र तादृशोपाधिद्वयाधिकरणाप्रसिद्ध्या प्रत्येकमित्युक्तम्। [३०३] **तादृशत्वात्**-द्रव्यविभाजकोपाधिविशिष्टावृत्तित्वात्। [३०३] **अवान्तरेति**। व्याप्येत्यर्थः। एवमग्रेऽपि। [३०३] **तादृशोपाधिद्वये**त्यादि। द्रव्यविभाजकोपाधिविशिष्टान्यत्वं शून्यान्तेन विवक्षणीयम्। वैशिष्ट्यं स्वविशिष्टवृत्तिगुणत्वन्यूनवृत्तिजातिमत्त्वसम्बन्धेन। स्ववैशिष्ट्यं स्वाधिकरणवृत्तित्वस्वभिन्नद्रव्यविभाजकोपाध्यधिकरणवृत्तित्वोभयसम्बन्धेन। [३०३] **संख्यात्वादेरसत्त्वा**दिति। सङ्ख्यात्वादेः तादृशद्वित्वादिवृत्तेः विद्यमानत्वादित्यर्थः। [३०३] **नीलत्वादिकमि**त्यादि। यद्यपि इदानीं रूपत्वादिकमादायापि लक्षणगमनसम्भवः। तथापि वक्ष्यमाणपरिष्कारानुसरणेन रूपत्वादिकमुपेक्षितम्। अत्र न्यूनवृत्तित्वविशेषणं गुणत्वादिकमादायासम्भववारणाय। [३०३] **यद्रूपावच्छिन्ने**त्यादि। अयमर्थः — द्रव्यविभाजकोपाधिविशिष्टान्यस्थितस्थापकवृत्तिजातिमद्गुणत्वं विशेषगुणलक्षणम्। वैशिष्ट्यं च स्वाधिकरणवृत्तिताव-

च्छेदकत्वस्वभिन्नद्रव्यविभाजकोपाध्यधिकरणवृत्तितावच्छेदकत्वोभय - संबन्धेन । तेन न भेदकूटनिवेशनिबन्धनगौरवम्। तादृशोपाधिद्वयत्वावच्छेदेन सामानाधिकरण्यान्वयस्वारस्यव्यावर्तककिंचित्वनिवेशकृताननुगमश्च । तादृशयत्किंचिदेकभेदनिवेशने एकत्वत्वादिभेदमादाय द्वित्वादावतिप्रसङ्गः। एवं द्रव्यत्वादिरूपोपाधौ सङ्ख्यारूपस्य द्वित्वस्यासम्भवात् अपेक्षाधीनविषयत्वरूपस्य तस्य वाच्यत्वेन महागौरवस्य यत्त्वतत्त्वप्रवेशेन लक्षणस्य विशिष्टैकार्थताविरहात् रूपं विशेषगुणइत्यादौ वाक्यभेदप्रसङ्गस्य च नावकाश इति । [३०३] **समवायसंबन्धघटितस्यैवेति** । अन्यथा कालिकादिसम्बन्धघटितसामानाधिकरण्यमादायासम्भवापत्तेः । [३०४] **न देयमिति** । स्थितस्थापकत्वस्य यद्रूपपदेन धर्तुमशक्यत्वादिति भावः। नन्वनुष्णाशीतः पृथिवीवाय्वोरित्युक्तत्वात् अनुष्णाशीतत्वस्य यद्रूपपदेन धर्तुं शक्यतया अनुष्णाशीतस्पर्शेऽव्याप्तिरित्यत्राह — [३०४] **पार्थिवेति** । तथा च तत्रापि वैजात्यविशेषमादाय लक्षणगमनमिति भावः । [३०४] **तत्र** — सङ्ख्यादिषु । एवमग्रेऽपि । [३०४] **तादृशेति** । उक्तोभयसम्बन्धेन द्रव्यविभाजकोपाधिविशिष्टान्येत्यर्थः ।

यत्तु केनचिदुक्तम् - तादृशजातिमत्त्वे सति गुणत्वमेव लक्षणमास्ताम्, किं निषेधद्वयोपादानेनेति — तन्न - तथासति रूपत्वादिजातिमादाय रूपादिविशेषगुणेष्वतिप्रसङ्गात् । निषेधद्वयोपादाने तु तादृशनीलत्वादिजातिसत्त्वेनातिव्याप्त्यप्रसक्तेः तस्यावश्यकत्वदिति ।

**कर्मनिरूपणम्**

[३०९] **मूलोक्तमित्यादि** । पत्राद्याकुञ्चनक्रियायामव्याप्तिरिति भावः । [३०९] **इत्याहेति** । इत्याशयेनाहेत्यर्थः ।

**सामान्यनिरूपणम्**

ननु सामान्यानां लक्षणे एकत्वनिवेशनं विफलमित्यत आह - [३०९] **एकपदमिति** । ननु सामान्यलक्षणे एकत्वावच्छिन्नप्रतियोगिताकभेदरूपानेकत्वशरीरप्रविष्टमेकत्वं किं सङ्ख्यारूपम् उत एकमात्र-

वृत्तिधर्मः । नाद्यः, गुणादौ गुणाद्यनुपगमेन गुणत्वादौ लक्षणगमनेऽपि द्रव्यत्वादावव्याप्तेः । नोत्तरः; तादृशधर्मस्य केवलान्वयितया तदवच्छिन्नप्रतियोगिताकभेदाप्रसिद्धेः । मैवम् — यतोऽत्र प्रमेयविशिष्टत्वं भेदविशिष्टत्वं वा अनेकसमवेतत्वम् । प्रथमे वैशिष्टयं स्वसमवेतत्वस्वभिन्नसमवेतत्वोभयसम्बन्धेन । द्वितीये स्वप्रतियोगिसमवेतत्वस्वानुयोगिसमवेतत्वोभयसम्बन्धेन । अतो न दोष इति ।

### विशेषनिरूपणम्

[३०९] **परस्परमिति** । परस्परत्वं च स्वाश्रयनिरूपितभेदाश्रयनिरूपितत्वम् स्वनिरूपकाश्रयवृत्तित्वस्वाश्रयनिरूपितत्वोभयसंबन्धेन भेदविशिष्टत्वपर्यवसितम् । [३०९] **भेदसाधका** इति । एतेन व्यावर्तका इत्यत्र व्यावृत्तिशब्दार्थः भेदः साधकः प्रत्ययार्थ इति स्फुटीकृतम् । [३०९] **न च सुग्रहमि**त्यन्वयः । अत्र च प्रागुक्तरीत्या धर्मिग्राहकप्रमाणसिद्धमिथोभेदानां विशेषाणां 'अयं विशेषः तद्विशेषात् भिद्यते तादात्म्येन एतद्विशेषा'दित्यनुमानेनापि धर्मिमानोपजीविना मिथोभेदसिद्धिरिति स्वतो व्यावर्तकता तेषामित्याह - [३०९] **स एवे**ति । [३०९] **अत्यन्तं संकीर्णानामिति** । अत्यन्तदुर्ग्रहभेदानामित्यर्थः । स्वसजातीयानां विशेषान्तराणां परस्परमित्यत्रापि पूर्ववदेव बोध्यम् । [३०९] **तत्रापि** - विशेषेऽपि । **नानवस्थेति** । अत्र वक्तव्यम् प्रागेव प्रपञ्चितम् ।

### समवायनिरूपणम्

[३१०] **नीलो घट इति विशिष्टप्रतीतिरि**त्यादि । अयमत्रानुमानपरिष्कारः — घटादिविशेष्यतानिरूपितनीलरूपादिप्रकारता किंचिन्निष्ठसंसर्गतानिरूपिका प्रकारतात्वात् संयोगनिष्ठसंसर्गतानिरूपकदण्डादिविशेष्यतानिरूपितदण्डादिप्रकारतावदिति रीत्या बोध्यः । अत्र संयोगादेः बाधनिश्चयसहायबलात् संयोगाद्यतिरिक्तकिंचिन्निष्ठसंसर्गतानिरूपकत्वसिद्धिरिति स एव संबन्धः समवायशब्दित इति

ध्येयम् । ननु समवायसद्भावे नीलो घट इत्यादिप्रत्यक्षमेव प्रमाणं भविष्यतीति अनुमानपर्यन्तानुधावनवैफल्यमित्यत आह - [३११] **वैशेषिके**त्यादि । वैशेषिकैः समवायप्रत्यक्षतानुगमादिति भावः । **संग्रहे** [३१०] **तावयुतसिद्धाविति** । अथात्र किमिदमयुतसिद्धत्वम्, न तावत् युतसिद्धभिन्नत्वम् । युतसिद्धस्यैव दुर्निरूपत्वात् । नापि संयुक्तत्वम् घटकपालादौ तदसम्भवात् । न च ययोर्द्वयोर्मध्ये एकमपराश्रितमेवावतिष्ठते तत्त्वमयुतसिद्धत्वमिति वाच्यम् । यत्त्वतत्त्वाननुगमेनायुतसिद्धपदार्थतावच्छेदकस्याननुगतत्वादिति - अत्र केचित् - द्वित्वविशिष्टद्वित्वमेवायुतसिद्धम् । वैशिष्टयं तादात्म्यस्वाश्रयव्यक्तिविशिष्टत्वोभयसम्बन्धेन । वैशिष्टयं च स्वविशिष्टवृत्तित्वसम्बन्धेन । स्ववैशिष्टयं च स्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । अवच्छेदकता च स्वनिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वसम्बन्धेन । प्रतियोगिता चाधेयतासम्बन्धावच्छिन्ना घटकपालादिगतद्वित्वस्य स्वपदेनोपादाने तदाश्रयीभूतकपालादिव्यक्तीनामाधेयतासम्बन्धावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वसम्बन्धेन । कपालदिविशिष्टघटादौ वृत्तित्वस्य तादात्म्यस्य चोक्तद्वित्वे सत्त्वात् लक्षणसमन्वयः । भूतलादेस्तु घटादिशून्यतादशायां आधेयतासम्बन्धावच्छिन्नप्रतियोगिताकात्यन्ताभावसत्त्वात् निरुक्तसम्बन्धेन भूतलादिविशिष्टत्वस्य घटादावसत्त्वात् भूतलघटादीनां द्वित्वं न तादृशमिति न भूतलघटाद्योरतिप्रसङ्गः । यद्यपि संयोगसंबन्धावछिन्नाधेयतासम्बन्धेन कपालादिकं घटादौ नास्ति, तथापि आधेयतासामान्यावच्छिन्नस्वनिष्ठप्रतियोगिताकात्यन्ताभाववत्त्वप्रवेशात् न दोषः । न चैवमपि कपालादिनाशक्षणे कपालादेर्घटादौ उक्तसम्बन्धेनाभावादव्याप्तिरिति वाच्यम् । स्वविशिष्टात्यन्ताभाववत्त्वस्य निवेश्यत्वात् । स्ववैशिष्टयं च स्वावच्छिन्नाधिकरणकालावच्छिन्नत्वाधेयतासामान्यावच्छिन्नस्वाश्रयप्रति - योगिताकत्वोभयसम्बन्धेन । यद्यपि एवमपि अभावाभावत्वयोरयुत-

सिद्धिप्रसङ्गः, तथापि स्वाश्रयातिरिक्तसम्बन्धावच्छिन्नाधेयतानिवेशात् न दोष इति वदन्ति ।

तन्न—कालिकादिसम्बन्धमादायातिप्रसङ्गव्युदासाय समवायसम्बन्धेन तस्य प्रवृत्तिनिमित्ततया वाच्यत्वेन प्राचीनमते अवयवावयविनावयुतसिद्धावित्यादिवाक्यस्य निराकाङ्क्षतापत्तेः । स्वविशिष्टद्वित्वसम्बन्धेन द्वित्वस्य तथात्वेऽपि द्वित्वस्य सङ्ख्यारूपत्वे गुणगुण्याद्योरव्याप्तेः । अपेक्षाधीविशेषविषयत्वरूपत्वे च अपेक्षाबुद्धेः विषयविशेषनियन्त्रिततया अननुगमापत्तेः। स्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताकत्वस्वभिन्नधर्मावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताकत्वोभयसम्बन्धेन धर्मविशिष्टबुद्धित्वेनानुगमे च स्वाश्रयधर्मावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताकत्वस्वप्रतियोगिधर्मावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताकत्वोभयसम्बन्धेन भेदविशिष्टबुद्धित्वादिना अनुगममादाय विनिगमनाविरहापत्त्या अयुतसिद्धपदार्थतावच्छेदकनानात्वापत्तेः । तन्निष्कर्षस्तु अस्माभिरन्यत्र प्रपञ्चितः ।

**अभावनिरूपणम्**

ननु ध्वंसादिप्रतियोगितायाः सम्बन्धावच्छिन्नत्वे मानाभावात् संसर्गाभावत्वनिवेशादेव ध्वंसादिवारणे नित्यत्वविशेषणवैयर्थ्यमित्यत्राह - [३१३] **ध्वंसे**त्यादि । सिद्धान्ते ध्वंसादिप्रतियोगितायाः संबन्धावच्छिन्नत्वानङ्गीकर्तृनव्यमते ग्रन्थान्तरोक्तं मनसि निधायाह— [३१४] **सङ्क्षेप** इति । [३१४] **ध्वंसप्रागभावयो**रित्यादि । ध्वंसप्रागभावयोरेकप्रतियोगिकयोरपि एकरूपत्वमेव । तद्वदिह नेत्यर्थः । **दीपिकायाम्** [३१३[ **प्रतियोगितावच्छेदकारोप्ये**त्यादि । प्रतियोगितावच्छेदकश्च आरोप्यसंसर्गश्च तयोर्भेदात् इत्यर्थः । आरोप्यं च प्रतियोग्यारोपविषयत्वम् । अभावबुद्धौ प्रतियोग्यारोपहेतुतायाः नवीनैरनभ्युपगमादाह - **प्रकाशिकायाम्** [३१४] **आरोप्येती**ति । नन्वन्योन्याभावभेदे प्रतियोगितावच्छेदकसंसर्गभेदो न नियामकः, अन्योन्याभावस्य तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वनियमात् । अत्र [३१४] **यथा-**

**योगमिति** [३१४] **अवच्छेदकभेदादतिरिक्त** इत्यन्वयः [३२२] **प्रसङ्गा-दिति**। स्ववृत्त्यभावत्ववत्त्वमत्र प्रसङ्गः। [३२२] **तच्छब्दोल्लिखि-तेति**। तच्छब्दजन्यबोधसमानार्थकेत्यर्थः। [३२२] **स्वातन्त्र्येण** प्रति-योगिनि अभासमानतया।

**षोडशपदार्थानां सप्तपदार्थेष्वन्तर्भावः**

प्रमाणप्रमेयेत्यादिसूत्रे प्रथमतः कथितस्य क्लृप्ते यत्र कुत्र-चिदन्तर्भावमनुमुक्त्वा द्वितीयत उक्तस्य प्रमेयस्य द्वादशविधस्य यथा-यथं क्लृप्तान्तर्भावकथनमनुपपन्नमित्यत्राह- [३३१] **प्रत्यक्षेति**। चक्षु-रादीन्द्रियरूपस्येत्यादिः। [३३१] **अनुमानादीनामिति** आदिनोपमान-शब्दयोः सङ्ग्रहः। [३३१] **द्रव्य** इति अन्तर्भाव इत्यनेन सम्बन्धः। [३३१] **एवमग्रेऽपीति**। प्रवृत्तिदोषादिरूपे प्रमेयेऽपीत्यर्थः। ननु प्रयत्नविशेषः प्रवृत्तिरिति तस्याः धर्माधर्मरूपत्वकथनमनुपपन्नमित्यत आह - [३३१] **तदिति**। धर्माधर्मेत्यर्थः। स्वोक्तार्थे पूर्वग्रन्थसम्म-तिमाह - [३३१] **एतच्चेति**। धर्माधर्मावित्यस्य तज्जनिकेत्यर्थकथनं चेत्यर्थः। [३३१] **आकरे** भाष्ये।

ननु **प्रेत्यभावो मरणमिति दीपिकावाक्यमसङ्गतम्**। प्रोपसृष्टइण् धातुमात्रेण मरणबोधनात् प्रेत्यभावशब्दघटकस्य ल्यपः भावशब्दस्य चार्थाकथनात् प्रेत्यभाव इति समुदायस्य मरणरूपार्थाबोधकत्वाच्चे-त्यत्राह - [३३१] **मरणानन्तरेति**। अनन्तरत्वं उत्तरकालिकत्वम्। उक्तार्थस्य प्रेत्यभावशब्दव्युत्पत्त्यानुगुण्यं दर्शयति - [३३१] **तथाचेति**। प्रेत्यभावशब्दस्योक्तार्थपरत्वे चेत्यर्थः। मरणजननशब्दार्थौ **क्रमेण** दर्शयति - [३३१] **चरमेत्यादिना**। चरमेति संयोगविशेषणम्। एवमग्रेऽपि। [३३१] **आद्येति** संयोगविशेषणम्। चरमत्वं स्वस-मानाधिकरणतादृशसंयोगप्रागभावासमानकालीनत्वम्। यद्यपि अत्रा-नुयोगिनि स्वत्वप्रवेशे स्वसमानाधिकरणतादृशप्रागभावसमानकालीन-भिन्नं यत्तत्त्वं चरमत्वमिति चरमसंयोगव्यक्तीनामानन्त्यादननुगमः।

प्रतियोगिनि स्वत्वप्रवेशे च स्वासमानाधिकरणतादृशसंयोगप्रागभाव-समानकालीनं यत् तादृशैकव्यक्तिभेदप्रवेशे इदानीन्तनस्यापि तादृश-संयोगस्योक्तचरमत्वं स्यादिति तस्य ध्वंसमादायेदानीमपि मरणा-पत्तिः। तादृशप्रागभावसमानकालीनं यद्यत् तत्तद्व्यक्तिभेदकूटनिवेशे च चरमत्वस्य यत्त्वतत्त्वघटितत्वेन विशिष्टैकार्थरूपताभङ्गः। विशि-ष्य तत्तद्व्यक्तीनामसर्वज्ञदुर्विज्ञेयताप्रसङ्गः। कूटत्वस्यैकविशिष्टा-परत्वरूपत्वेन विशेषणविशेष्यभावे विनिगमनाविरहप्रसङ्गः। तथापि अनुयोगिनि स्वत्वप्रवेशे प्रमेयविशिष्टत्वं चरमत्वमिति स्थूलोऽनुगमः। वैशिष्ट्यं च तादात्म्यस्वसमानाधिकरणतादृशसंयोगप्रागभावसमानका-लीनत्वसम्बन्धावच्छिन्नस्वनिष्ठावच्छेदकताकप्रतियोगिताकभेदवत्त्वो - भयसम्बन्धेन भेदविशिष्टत्वमिति सूक्ष्मोऽनुगमः। वैशिष्ट्यं स्वाश्रय-त्वस्वप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन। अवच्छेदकत्वं स्वसमा-नाधिकरणतादृशसंयोगप्रागभावसमानकालीनत्वसम्बन्धेन। प्रतियो-गिनि स्वत्वप्रवेशे च तादृशसंयोगप्रागभावविशिष्टान्यत्वं चरमत्वम्। वैशिष्ट्यं स्वसमानकालिकत्वस्वसामानाधिकरण्योभयसम्बन्धेन, एक-क्षणावच्छिन्नसामानाधिकरण्यसम्बन्धेन वा। तच्च स्वनिष्ठस्वरूप-सम्बन्धावच्छिन्नाधेयताविशिष्टसमवायावच्छिन्नाधेयतारूपम्। वैशि-ष्ट्यं च स्वनिरूपकनिरूपितत्वस्वावच्छेदकक्षणावच्छिन्नत्वोभय-सम्बन्धेन। आद्यत्वं च स्वसमानाधिकरणतादृशसंयोगध्वंसासमानका-लिकत्वम्। अत्रापि प्रमेयविशिष्टत्वं भेदविशिष्टत्वं वा तादृशसंयो-गध्वंसविशिष्टान्यत्वं वा प्रागभावस्थले ध्वंसं निवेश्य निर्वाच्यम्। अन्यत् पूर्ववत्। **दीपिकायाम्** [३३१] **स च** मोक्षश्च। यद्यपि चरमं यद्दुःखं तद्ध्वंसो मोक्ष इत्यन्यत्र प्रतिपादितम्, तथापि दुःखविशेष-णेन कालीनान्तेन चरमपदार्थ एव विवृत इति न विरोधः। अनु-गमस्तु पूर्ववदेव बोध्यः। प्रागुक्तसामानाधिकरण्यसम्बन्धेन दुःखप्राग-भावविशिष्टान्यत्वादिरूपः। अत्र च स्वसमानाधिकरणदुःखप्रागभा-वासमानकालीनः यः कश्चन पदार्थः तद्ध्वंसो मोक्ष इति तत्र ध्वंसप्रति-

योगितया दुःखांशोपादानवैयर्थ्यमित्याशङ्कायां तदुपादानस्य प्रयोजनमाह - **प्रकाशिकायाम्** [३३१] **मुक्तात्मे**ति । अत्र च प्रागभावांशमनुपादाय स्वसमानाधिकरणदुःखासमानकालीनत्वम् एकक्षणावच्छिन्नसामानाधिकरण्यसम्बन्धेन दुःखविशिष्टान्यत्वादिरूपमेव चरमत्वं सुवचम् । न च तस्य दुःखविशेषणत्वेऽप्रसिद्धिः । इदानीं तस्य ध्वंसविशेषणत्वोपगमात् । न च तथा सति सुषुप्तिदशायां अस्मदादीनामपि मुक्तत्वप्रसङ्गः । तदानीमस्मदाद्यात्मनि दुःखविरहात् , तदातनस्य दुःखध्वंसस्य निरुक्तविशेषणाक्रान्तत्वादिति शङ्क्यम् । सुषुप्तिकालीनस्य तादृशदुःखध्वंसस्य सुषुप्त्युत्तरकालिकदुःखसमानकालीनत्वेनादोषत्वादित्याशङ्कते - [३३१] **न चे**ति । [३३१] **अग्रिमे**ति । [३३१] **सुषुप्ती**त्यादिः । उत्तरेत्यर्थः । [३३१] **यथासन्निवेशे**-प्रागभावघटितनिरुक्तप्रकारे । अत्र च प्रागभावानुपगमे उक्तरीत्या तादृशदुःखासमानकालीनत्वघटित एवादरणीयः । एवं **पक्षताग्रन्थोक्त**रीत्या दुःखप्रागभावसमानकालीनत्वस्थले दुःखवृत्तिध्वंसप्रतियोगित्वं निवेश्यमित्यभिसन्धायाभिहितम् - [३३१] **दिगि**ति । ननु प्रमाणेत्यादिसूत्रे प्रमेयानन्तरं संशयकथनात् **दीपिकायाम्** तत्स्वरूपमप्रदर्श्य प्रयोजनादिस्वरूपकथनमयुक्तमित्यत आह - [३३१] **संशयस्ये**ति । उभयसाधनवतीत्यस्य प्रयोजनमाह – [३३५] **इदं चे**ति । उभयेत्याद्युक्तविशेषणं चेत्यर्थः । ननु कथालक्षणे नानावक्तृत्वोक्तिरयुक्ता पूर्वपक्षवाक्यस्य उत्तरवाक्यस्य वैकस्य नानावक्तृकत्वविरहादित्यत आह - [३३५] **एकेने**ति । छलं उदाहरति - [३३६] **यथे**ति । [३३६] **इती**ति । उक्तशब्दस्येत्यर्थः । [३३६] **अर्थान्तरम्** - नूतनारूपार्थातिरिक्तमर्थम् । [३३६] **न सन्ती**त्यन्वयः । इति दूषयतीत्यन्वयः । [३३६] **स्वासाधकतासाधारण्येने**ति । साधारण्यमाधेयत्वम् । वैशिष्ट्ये तृतीया । तस्य परासाधकतासाधकतयेत्यत्र समासघटकषष्ट्यर्थनिरूपकत्वेऽन्वयः । अत्र स्वम् दूषणवक्ता । परः अनुमानवक्ता । [३३६] **स्वव्याघातकत्वादि**ति । असत्त्वान्वयिनि प्रयोज्यत्वे

पञ्चमी । [३३६] **तथा च** उक्तरीत्या उत्तरस्य स्वव्याघातकत्व-सिद्धौ च । [३३६] **तदिति** । उक्तलक्षणजातीत्यर्थः [३३६] **प्रत्येक**-मिति । तृतीयाबहुवचनान्तमव्ययम् । साधर्म्यवैधर्म्यादिशब्दैरित्यर्थः । [३३७] **योगः** - सम्बन्धः ।

**जातिनिरूपणम्**

क्रमेण जातीनां लक्षणोदाहरणान्याह - [३३७] **साधर्म्येण** इत्यादिना । तत्र **साधर्म्येणे**त्यादि **उत्तरमि**त्यन्तं साधर्म्यसमालक्षणम् । **साधर्म्यम्** सादृश्यम् । **स्थापना**-स्थापकानुमानम् । साधर्म्यसमाया उदाहरणमाह - **यथे**ति । **सक्रियः** क्रियावान् । **अत्र** क्रियाहेतुगुणवत्त्व-रूपहेतुशरीरे । त्रलर्थो घटकत्वं गुणान्वितम् । **जनके**ति संयोगादि-विशेषणम् । सक्रियो यदि तदेत्यन्वयः । न चास्तीत्यन्वयः । **अत्र** सक्रियसाधर्म्ययप्रयुक्तसक्रियत्वमात्रे, निष्क्रियसाधर्म्यप्रयुक्तनिष्क्रियत्व-मात्रे वा । **विनिगमकं** नियामकम् ।

वैधर्म्यसमालक्षणमाह - [३३८] **वैधर्म्येणे**ति । **वैधर्म्यं** व्या-वृत्तधर्मः । **तदिति** । स्थापनाहेत्वित्यर्थः । वैधर्म्यसमाया उदाहरण-माह - **यथे**ति । **तत्रैव** - आत्मा सक्रिय इत्यादि प्रागुक्तानुमान एव । **निष्क्रिय एवे**ति । आत्मेत्यनुषज्यते । नास्तीत्यन्वयः । **तदिति** । लोष्टेत्यर्थः । एवमग्रेऽपि ।

उत्कर्षसमां लक्षयति - [३३८] **परोक्ते**ति । **तदिति** । परोक्त-साधनेत्यर्थः । एतदुदाहरणमाह - **यथे**ति । स्याद्यदीत्यन्वयः । एवमग्रे-ऽपि । **तेनैव** - कृतकत्वेनैव । एवमग्रेऽपि । [३३८] **सावयव** इति । समवायिकारणताविशिष्टत्वं **सावयवत्वम्** । वैशिष्टयं स्वनिरूपक-द्रव्यत्वसम्बन्धेनेति निष्कर्षः । तादृशं च सावयवत्वं कार्यत्वरूपम् कृतकत्वं प्रत्यव्यापकमेव कार्यभूतरूपादिव्यावृत्तत्वादिति ध्येयम् । **इतीति** । 'कश्चिदेवमाहे'ति पूर्वेण सम्बन्धः ।

अपकर्षसमां लक्षयति - [३३९] **परोक्तेति** । **धर्मान्तरस्य** - प्रकृतानुमानसाध्यतयाऽभिमतधर्मातिरिक्तधर्मस्य । अस्या उदाहरणमाह - **यथेति** । **तस्मिन्नेव** - शब्दो नित्य इत्याद्युपदर्शितरूप एव । 'इति कश्चिदेवमाहे'त्यनुषज्यते । एवमग्रेऽपि ।

वर्ण्यसमां लक्षयति - [३४०] **वर्ण्यस्येति** । एवमग्रेऽपि । एतदुदाहरति - **यथेति** । **पूर्वोक्तेति** । आत्मा सक्रियः क्रियाहेतुगुणवत्त्वात् लोष्टवत् इत्येवंरूपेत्यर्थः । **तदिति** । क्रियेत्यर्थः ।

अवर्ण्यसमां लक्षयति - [३४०] **साध्येति** । तामुदाहरति— **यथेति** । **तत्रैव** - आत्मा सक्रिय इत्यादिरूप एव । **साधनम्** - साध्यापत्तिप्रतिपादकमुत्तरम् । एवमग्रेऽपि । **गतेति रूपेति** च गुणविशेषणम् । **तथा** च उक्तगुणवत्त्वस्यात्मन्यसिद्धत्वे च । तुल्यतया आत्मन्यसिद्धहेतुकसाधनत्वसाम्यात् किमिति न साध्यत इति पश्चात्तनेनास्य सम्बन्धः । **तादृशेन** - असिद्धेन । **तदिति** । क्रियेत्यर्थः ।

विकल्पसमां लक्षयति - [३४२] **दृष्टान्तेति** । उदाहरति — **यथेति** । **अयं तु** - उत्तरविकल्पस्तु ।

साध्यसमाँ लक्षयति-[३४१] **दृष्टान्तस्येति** । नन्वस्याः पक्षतुल्यताकथनात्मिकायाः पक्षसमेति नामोचितम्, न तु साध्यसमेत्याशङ्कापरिहाराय साध्यते अत्रेत्यधिकरणव्युत्पत्त्या साध्यशब्द एवात्र पक्षबोधक इत्याह - **साध्येति** । अत्र साध्यसमा शब्दे तलर्थो घटकत्वं साध्यशब्दान्वितम् । उदाहरति - **यथेति** । 'उच्यते यदी'ति सम्बन्धः । तथा च यथा आत्मा तथा लोष्ट इत्यस्याप्यागमेन । **साध्यते यदिति** सम्बन्धः । तत् - क्रियावत्त्वम् ।

प्राप्तिसमाया लक्षणमाह - [३४२] **प्राप्त्येति** । हेतौ तृतीया । **प्रत्यवस्थानम्** – प्रत्युत्तरकथनम् । एवमग्रेऽपि । तथा च प्राप्ति हेतू-

**कृत्य** प्रत्युत्तरोक्तिरिति यावत् । अत्र प्राप्तिशब्दस्यार्थमाह - **प्राप्तिश्चेति** । उदाहरति - **यथेति** । **तादृशेति** । क्रियाहेत्वित्यर्थः । नेति साध्यत इत्यनुषज्यते । **उभयोरविशेषात्** - उभयोः क्रियावत्त्वक्रियाहेतुगुणवत्त्वयोरविशेषात् सामानाधिकरण्यसाम्यात् ।

अप्राप्तिसमां लक्षयति — [३४३] **अप्राप्त्येति** । पूर्ववदेव हेतौ तृतीया । अप्राप्तिं हेतूकृत्य प्रत्युत्तरकथनमप्राप्तिसमेति यावत् । उदाहरति - **यथेति** । **पूर्वोक्तेति** । लोष्टगतनोदनादिरूपेत्यादिना प्रागुपदर्शितेत्यर्थः । **अप्राप्तस्येति** । अप्राप्तिरिह साध्यवैयधिकरण्यम् । **तथा च** - तादृशहेतोस्साध्य साधकत्वोक्तौ च । **अयमेव** - क्रियाहेतुगुणवत्त्वरूप एव ।

प्रसङ्गसमां लक्षयति - [३४३] **साधनेति** । उदाहरति - **यथेति** । **तत्र** - क्रियाहेतुगुणवत्त्वे । ननु साधनापेक्षा किमर्थमित्यत्राह - **न हीति** । नास्ति हीत्यन्वयः । **तत्रापि** - क्रियाहेतुगुणवत्त्वेऽपि ।

प्रतिदृष्टान्तसमां लक्षयति–[३४४] **दृष्टान्तान्तरेणेति** । परोक्तदृष्टान्तातिरिक्तदृष्टान्तजन्येत्यर्थः । **साधनम्** - सिद्ध्यापत्तिप्रतिपादकमुत्तरम् । उदाहरणमाह **यथेति** ।

अनुत्पत्तिसमां लक्षयति— [३४४] **अनुत्पत्त्येति** । अत्रापि हेतौ तृतीया । अनुत्पत्तिं हेतूकृत्य प्रत्युत्तरकथनमित्यर्थः । उदाहरति - **यथेति** । प्रमाणं यदीत्यन्वयः । **तदिति** । जन्यैकत्वरूपप्रमाणेत्यर्थः । **इतीति** । इति कश्चिदाहेति प्राक्तनेन सम्बन्धः ।

संशयसमाया लक्षणमाह — [३४५] **साधारण्येति** । साध्यतदभावसामानाधिकरण्येत्यर्थः । उदाहरति – **यथेति** । **उभयेति** । नित्यानित्योभयेत्यर्थः । एकपरिशेषे एकस्य नित्यत्वमात्रस्यानित्यत्वमात्रस्य वा परिशेषे निश्चये ।

**अत्र** - प्रकरणसमायाम् ।

अहेतुसमाया लक्षणमाह — [३४६] **कालत्रयेऽपीति** । भूत-भविष्यद्वर्तमानकालत्रयेऽपीत्यर्थः । उदाहरति - **यथेति** । **तदानीं** — साध्यभूतानित्यत्वप्राक्काले । **तस्य** - अनित्यत्वस्य । **न साधकम्** कार्यत्वादिरूपसाधनमिति सम्बन्धः । **पश्चादिति** । साध्यादनित्यत्वादिति आदिरनुषज्यते । **पूर्वेति** । कार्यत्वादिरूपसाधनेत्यादिः । **साधनाभावादिति** । साधनेत्यस्य कार्यत्वादिरूपेत्यादिः । **तस्य** - कार्यत्वादिरूपसाधनस्य । **उभयम्** - कार्यत्वादिरूपसाधनानित्यत्वादिरूपसाध्योभयम् ।

अर्थापत्तिसमाया लक्षणमाह - [ ३४६ ] **अर्थापत्तिपुरस्कारेणेति**। अन्यथानुपपत्तिरूपार्थापत्तिं हेतूकृत्येत्यर्थः । **पूर्वोक्तेति** । शब्दो नित्य इत्यादिरूपेत्यर्थः । **यदि साध्यमिति** सम्बन्धः । **नित्यत्वमपीति**। अर्थापत्त्येत्यनुषज्यते । सिद्ध्येदिति शेषः । **एकतरेति** । एकतरस्यानित्यत्वस्य नित्यत्वस्य वा निश्चय इत्यर्थः ।

अविशेषसमां लक्षयति - [ ३४७ ] **सर्वेति** । **अविशेषः** साम्यम् । उदाहरति - **तत्रैवेति** । अनित्यत्वं यदीत्यन्वयः । एवमग्रेऽपि । तदिति । शब्देत्यर्थः । **तत्** - अनित्यत्वम् । उपपत्तिसमां लक्षयति - [३४८] **उभयपक्षेति** । वादिप्रतिवादिसम्मतपक्षद्वयेत्यर्थः । **साधर्म्येणे**त्यभेदे तृतीया । तादृशसाधर्म्याभिन्नसाधनोपपत्तिः उपपत्तिप्रतिपादकमुत्तरमित्यर्थः । उदाहरति – **यथेति** । एवमग्रेऽपि अवतारिका बोध्या ।

**दर्शिते**ति साधनविशेषणम् । **अनुविधायित्वं** - जन्यत्वं नास्तीति सम्बन्धः ।

[ ३४९ [ **साधनं** - सिद्ध्यापत्तिप्रतिपादकमुत्तरम् । एवमग्रेऽपि । **नोपलभ्यते** यदीत्यन्वयः । एवं नाभ्युपेयते यदीत्यन्वयः । **अनुपलब्धेरपीति** । षष्ट्यर्थः प्रतियोगित्वम् निरूपकतया अभावान्वितम् । **अपि**रत्रावरणसमुच्चायकः दृष्टान्तत्वेन । **तदिति** । अनुपलब्धीत्यर्थः ।

**तस्य** - अनित्यत्वस्य । **सदातनत्वात्** - नित्यत्वात् । [३५०] **तथात्वम्** - सदातनत्वम् । **उभयथापि** शब्दवृत्तेरनित्यत्वे नित्यत्वे वा ।

**उच्यते यदी**त्यन्वयः । **तदि**ति अनित्यत्वपदेत्यर्थः ।

**तत्रैव** - शब्दोऽनित्यः प्रयत्नानुविधायित्वात् घटवदित्यनुमान एव । **उभयथा**–उभाभ्यामपि प्रकाराभ्याम् । स्वरूपोत्पत्त्यावारकनिवृत्तिरूपाभ्याम् । **अनुविधानं** - जन्यता । **तथा च** - प्रयत्नानुविधायित्वस्योभयथा सम्भवे च । **तस्य** - प्रयत्नानुविधायित्वस्य । **कार्यान्तरे**ति । स्वरूपोत्पत्तिरूपकार्यव्यतिरिक्तकार्येत्यर्थः **नियतत्वं** - व्याप्यत्वम् **क्वचित्** - केषुचित् पुस्तकेषु । **तस्यापि** तादृशापाठस्यापि । उक्त एवार्थ इत्यग्रिमेणान्वयः । **अत्र** - उक्तसमाविषये ।

### निग्रहस्थाननिरूपणम्

**दीपिकायाम्** [३५३] **वादिनोऽपजयहेतुर्निग्रहस्थानमिति** । तथा च निग्रहस्थानमित्यत्र निग्रहशब्दो वाद्यपजयपरः । स्थानशब्दो हेतुपर इति भावः । **इदं च** वाद्यपजयहेतुत्वरूपं निग्रहस्थानलक्षणं च । **छलादावि**त्यादिना प्रकरणसमारूपजातिसङ्ग्रहः । **अर्थान्तरादी**त्यादिना हेत्वाभाससङ्ग्रहः । ननु तर्हि प्रमाणेत्यादिसूत्रे निग्रहस्थानतः पृथक्तया छलादेरुपादानमनर्थकमित्यत्राह - **छलत्वादिनापीति** । आदिना प्रकरणसमात्वसङ्ग्रहः । अपिर्निग्रहस्थानत्वसमुच्चायकः । दृष्टान्तविधया ज्ञानस्येत्यस्योपादानमित्यस्य च छलादेरित्यादिः । **उपयोगित्वात्** — वाद्यपजयहेतुत्वात् । **पृथगि**ति । निग्रहस्थानत्वातिरिक्तरूपेणेत्यर्थः । छलत्वादिनेत्यनुषज्यते । **उपादानं** – प्रतिपादनम् । प्रमाणेत्यादिसूत्रेण कृतमिति शेषः । गोबलीवर्दन्यायानुसारादिति भावः । **हेत्वाभासव**दिति । षष्ठीसमर्थाद्वतिः, हेत्वाभासस्येवेत्यर्थः ।

### प्रतिज्ञाहानिलक्षणम्

[३५४] **तस्यापि**-निग्रहस्थानस्यापि। **आवान्तरभेदान्**-व्याप्यविशेषान् । अत्र प्रतिज्ञातार्थविरुद्धाभ्युपगमस्य प्रतिज्ञाहानिशब्दमुख्यार्थता

न सम्भवति । प्रतिज्ञायत इति प्रतिज्ञा प्रतिज्ञातोऽर्थः तस्य हानिरित्यवयवव्युत्पत्त्या प्रतिज्ञातार्थपरित्यागस्यैव तादृशत्वात् तादृशाभ्युपगमस्यातथात्वादित्यतः तथैवाह - **प्रतिज्ञातार्थपरित्यागो वेति** ।

### प्रतिज्ञान्तरलक्षणम्

[३५५] **पूर्वेति** । प्रागनुक्तविशेषणदानत इत्यादिः । **दानमिह** कथनम् ।

### अविज्ञातार्थलक्षणम्

[३५७] **तच्च** । अविज्ञातार्थकरूपनिग्रहस्थानं च । **क्लिष्टान्वयम्** । दूरान्वयम् । **अप्रसिद्धार्थकम्** - [1]"भूस्तनं हिमभेषजवत्'इत्यादिरूम् । **इत्यादी**त्यादिना मृदूच्चरितसङ्ग्रहः ।

### अप्राप्तकाललक्षणम्

[३५७] **व्युत्क्रमेण** - शास्त्रसङ्केतसिद्धक्रमातिरिक्तक्रमेण ।

### अधिकलक्षणम्

**हेत्वादी**त्यादिना दृष्टान्तहेतुतावच्छेदकसम्बन्धव्याप्तिद्वयादिसङ्ग्रहः ।

### अपसिद्धान्तलक्षणम्

दानमिह कथनम् । मण्यादेरित्यतः परं दाहादिकं प्रतीति शेषः

### शक्तेरतिरिक्तपदार्थत्वखण्डनम्

[३६२] **सा च** – मण्यादिनिष्ठा दाहादिप्रतिबन्धकता च । कुत इत्यत्राह - **प्रतिबन्धकताया** इति । **अनुकूलेति** । अनुकूलत्वमिह जनकतावच्छेदकत्वम् । **विघटकत्वेति** । **विघटकत्वं च** नाशजनकत्वम् । **तदिति** । कार्यानुकूलशक्तिविघटकत्वरूपप्रतिबन्धकतेत्यर्थः । **अर्थापत्त्येति** । अर्थापत्तिप्रमाणात्मिकयेति शेषः । सिद्ध्यन्वित जन्यत्वं

---

1. भूस्तनमित्यस्य पर्वत इत्यर्थः । हिमभेषजवदित्यस्य अग्निमानित्यर्थः । 'अग्निर्हिमस्य भेषजम्' इति श्रुतिः । पर्वतः भूमिस्तनमिति वदन्ति ।

तृतीयार्थः । सिद्धिरत्रार्थापत्तिप्रमितिरूपा । सा च वह्निः दाहानुकूल-शक्तिमानित्याकारिका बोध्या । प्रमाणरूपा चार्थापत्तिः वह्नेर्दाहानुकूलशक्तिमत्त्वमन्तरा मण्यादिप्रतिबध्यदाहजनकत्वं नोपपद्यते इत्येवमादिरूपा । प्रतिबध्यत्वं च नाश्यशक्तिप्रयुक्तत्वम् । केचित्तु - यथाश्रुतग्रन्थमनुसृत्य वह्नेर्दाहानुकूलशक्तिमत्त्वमन्तरा मणेर्दाहानुकूल-शक्तिविघटकत्वरूपप्रतिबन्धकत्वमनुपपन्नमित्यादिरूपमर्थापत्तिप्रमाण-मूचुः । तत्तुच्छम् — उपपाद्योपपादकयोः सामानाधिकरण्यविरहात् । **इति शङ्कते** इत्यन्वयः । **अतिरिक्तत्वादिति** । क्लृप्तेभ्यः द्रव्यादिभ्य इत्यादिः । एवमग्रेऽपि । **एवम्** - उक्तयुक्त्या । **तस्याः** - शक्तेः । **अत एव** - गुणादिवृत्तित्वादव । **उत्पत्तीत्यादि** । उत्पत्तिश्चार्थापत्त्या सिध्यति । अर्थापत्तिश्च शक्तेर्मण्यपसरणावच्छिन्नोत्पत्तिमन्तरा तादृशक्षणोत्तरक्षणावच्छिन्नदाहानुकूलत्वमनुपपन्नमित्येवमात्मिका । एवं नाशोऽप्यर्थापत्त्या सिध्यति । **सा च** - शक्तिः मण्याद्यपसरणावच्छिन्न-नाशवत्त्वमन्तरा तादृशक्षणोत्तरक्षणावच्छिन्नदाहाननुकूलत्वमनुपपन्न-मित्येवंरूपा । तेन उत्पत्त्यादिहेतोः नासिद्धिशङ्काप्रसक्तिः । **एवं च** उक्तरीत्या शक्तेर्द्रव्याद्यनन्तर्भावसिद्धौ च । **अतिरिक्तेति** । अत्रेदं परि-शेषानुमानमवसेयम् - शक्तिः द्रव्यादि भेदकूटवती द्रव्याद्यनन्तर्भावा-दित्येवंरूपम् । द्रव्यादिभेदकूटवत्त्वं हीहातिरिक्तत्वम् । एतादृशानु-मानहेतुभूतद्रव्याद्यनन्तर्भावशरीरप्रविष्टयोर्विशेषणविशेष्ययोरसिद्धिशं-ङ्का च यत इत्यादिना निराकृता । **तच्च** - कारणीभूताभावप्रतियो-गित्वं च । मण्याद्यभावस्य कारणतापक्षे मणिसत्त्वसमये दाहानुत्पत्ति-मुपपादयति – **मणीति** । **तदिति** । मणीत्यर्थः । **कारणान्तरेति** । वह्न्यादिरूपकारणव्यतिरिक्तकारणेत्यर्थः । एतद्विशेषणं रूपेति । **इत्थं च** — प्रतिबन्धकत्वस्योक्तरीत्या कार्यानुकूलशक्तिविघटकत्वा-दन्यादृशत्वे च । **व्यवहारान्यथानुपपत्त्या** - व्यवहारस्यान्यथा शक्ति-रूपातिरिक्तपदार्थानुपगमे अनुपपत्त्या सविषयकत्वासम्भवेन । ननूत्ते-जकमण्युभयसत्त्वेऽपि वह्नौ दाहानुकूलशक्तिविरहात् कथं त्वन्मतेऽपि

दाहोपपत्तिरित्यत्राह — **मदिति**। प्राभाकरपरमिदम्। एवमग्रेऽपि तवेत्यपि। **शक्त्यन्तरेति**। मण्याद्यपसरणदशाभाविशक्तिव्यतिरिक्त-शक्तीत्यर्थः। **विशिष्टेति** मणिविशेषणम्। एवमग्रेऽपि। **अननुगतत्वात्**-अनुगतरूपेणाभावप्रतियोगितया कारणतावच्छेदककोटौ निवेशयितु-मशक्यत्वात्। **एतादृशेति**। तत्तदुत्तेजकाभावविशिष्टमण्याद्यभावाव-च्छिन्नेत्यर्थः। **तवापीति**। अपिरत्र नैयायिकसमुच्चायकः दृष्टान्ततया। **आवश्यकत्वादिति**। अन्यथा तत्तदुत्तेजकमण्युभयदशायां दाहानुकूल-शक्त्यनुत्पादापत्तेः, मणिमात्रसत्त्वे शक्त्युत्पादापत्तेश्चेति भावः। **ननु** तद्धेतुकारणताकल्पनाया मतद्वयेऽपि समत्वात् मन्मतमेव उपेयमिति मीमांसकशङ्कां परिजिहीर्षुराह — **अनन्तेति**। **तत्तदित्यादि**। तत्प-दद्वयमत्र शक्तिपरम्।

**आधेयशक्तिनिरासः**

[३६८] **एवमपि**-उक्तयुक्त्या अनुकूलशक्तिनिरासेऽपि। **स्पर्श** इति। स्पर्शोऽत्र सर्वत्र संयोगरूपः ग्रन्थ एव स्पष्टः। **रूपेति** कार्य-विशेषणम्। **अर्हतेति**। भवतीति शेषः। न भवतीत्यन्वयः। कुत इत्यत्राह–**शक्तिमदिति**। **तदिति**। भोजनादिरूपकार्येत्यर्थः। एवमग्रेऽपि। **एवं च**-कांस्यादौ भोजनादिरूपकार्यार्हत्वतदभावसिद्धौ च। **कांस्यादा-विति**। कांस्यादिनिष्ठप्रत्यासत्त्येत्यर्थः। प्रत्यासत्तिश्च प्रतिबध्य-तावच्छेदिका आधारता प्रतिबन्धकतावच्छेदिका तु समवाय इति ध्येयम्। **उपपत्ताविति**। कांस्यादिगतभोजनादिरूपकार्यार्हत्वतदभाव-योरित्यादिः। **तदिति**। कांस्यादावित्यादिः। आधेयशक्तीत्यर्थः। ननु स्पर्शो नाम संयोगातिरिक्तो गुण इति कथं तस्य संयोगरूपतेत्यत्राह– **प्रकृते चेति**। कांस्यादिगतभोजनादिकार्यास्पृश्यस्पर्शयोः प्रतिबध्य-प्रतिबन्धकभावकथनप्रकरणे चेत्यर्थः। **तदिति**। संयोगरूपास्पृश्यस्पर्शे-त्यर्थः। ननु भस्मादिसंयोगसम्भवे इष्टापत्तिरित्यत्राह—**अन्तरेति**। विनेत्यर्थः। **भोजनाद्यर्हतापत्तिरिति**। कांस्यादेरित्यादिः। इति **एवं**

रूपेण । **पुनः**-प्रागुक्तातिरिक्तप्रकारेण । **प्रथमेन**-भस्मादिनेत्यत्र प्रविष्टेने-त्यर्थः । **द्वितीयेन चे**ति । आदिशब्देनेत्यनुषज्यते । कांस्यादावित्यत्र प्रविष्टेनेत्यर्थः । **क्लृप्ते**ति । द्रव्याद्यभावान्तसप्तपदार्थान्तर्गततया संप्रति-पन्नेत्यर्थः । **ध्वंसविशेषणैवे**ति । ध्वंसे विशेषत्वं च भस्मादिसंयोग-कालीनास्पृश्यस्पर्शप्रतियोगिकयावदभावसहितत्वे सति भस्मादिसं-योगप्रतियोगिकत्वम् । तत्रापीति । कांस्यादावित्यनुषज्यते । भस्मादि-विशेषणताभ्रमवारणाय **ध्वंसेति** । अत्र- दर्शितशुद्धिपदार्थशरीरे । **सम्बन्धविशेषे**ति । अभावीयविशेषणताविशेषेत्यर्थः । **नियन्त्रितं**-घटितम् । अन्यथा अस्पृश्यस्पर्शवति कांस्यादौ स्वप्रतियोगिमत्तासम्बन्धेन तादृश-स्पर्शप्रतियोगिकयावदभाववत्त्वसम्भवात् तादृशयावदभाववति कांस्या-दौ भस्माद्यसंयुक्ते भस्मादिसंयोगध्वंसस्य कालिकादिना सत्त्वात् तादृशयावदभावविशिष्टभस्मादिसंयोगध्वंसस्य यत्रेत्याद्युक्तकांस्यादि-साधारण्यात् अतिप्रसङ्गतादवस्थ्यापातात् । **सामानाधिकरण्यमि**ति । एतच्च सम्बन्धविधयैव निवेश्यम् । तदीयसम्बन्धाप्रवेशेन लाघवात् । तथा च स्वनिष्ठदैशिकविशेषणतासम्बन्धावच्छिन्नाधेयतानिरूपकनि-रूपिताधेयतारूपतादृशसामानाधिकरण्यसम्बन्धेन तादृशयावदभाव-विशिष्टभस्मादिसंयोगध्वंसः शुद्धिरिति निष्कर्षः । ननु अस्पृश्यस्पर्श-प्रतियोगिकाभावमात्रनिवेशेनैवोपपत्तौ किं यावत्त्वप्रवेशेन । न च तादृशयत्किंचिदभावमादाय यत्रेत्याद्युक्तस्थलेऽतिप्रसङ्गतादवस्थ्यं शङ्कनीयम् । अस्पृश्यवस्तुत्वेन तादृशवस्तून्यनुगमय्य तादृशवस्तुस्पर्श-त्वावच्छिन्नप्रतियोगिताकाभावनिवेशेनादोषादित्यत्राह—**अस्पृश्ये**ति । यत्किंचिदित्यभावविशेषणम् । **यावदिती**ति । तत्र यत्रेत्यादिना प्रागुक्त-कांस्यादौ । **तदि**ति । शुद्धीत्यर्थः । ननु यत्रेत्याद्युक्तकांस्यादौ उक्ताति-प्रसङ्गतादवस्थ्यम् । संयोगरूपस्य तादृशस्पर्शस्याव्याप्यवृत्तित्वेन तद-भावस्यापि तदधिकरणे सत्त्वादत आह—**तत्रे**ति । यत्रेत्याद्युक्तकांस्या-दावित्यर्थः । **निरवच्छिन्ने**ति । तथा च निरुक्तसामानाधिकरण्यघटकप्र-थमाधेयतायां निरवच्छिन्नदैशिकविशेषणतासम्बन्धावच्छिन्नत्वं निवे-

शनीयमिति भावः। **उक्तेति**। शुद्ध्यापत्तिरूपेत्यर्थः। **अभावकूटसामानाधिकरण्यविशिष्टेति** । सामानाधिकरण्यसंबन्धेनाभावकूटविशिष्टेत्यर्थः ध्वंसविशेषणम्। **भस्मादीत्यादि**। **तत्र** — भस्मादिसंयोगादिकरणे। यद्यपि भस्मादिसंयोगकालावच्छिन्नभस्मादिसंयोगाधिकरणनिरूपिताधेयत्वरूपं यथाश्रुतं यत्र भस्मादिसंयोगास्पृश्यस्पर्शावित्याद्युक्तस्थलीयतादृशयावदभावसाधारणं भस्मादिसंयोगनाशकाले तत्र तादृशयावदभावसम्भवेऽपि तादृशाभावानामधिकरणान्तरवृत्तिभस्मादि संयोगावच्छेदकतदधिकरणवृत्तिपूर्वकालीनभस्मादिसंयोगनाशक्षणावच्छेदेन पूर्वकालीनभस्मादिसंयोगाश्रये तदधिकरणे सत्त्वादित्युक्तातिप्रसङ्गतादवस्थ्यशङ्का। तथापि भस्मादिसंयोगविशिष्टत्वं कालीनान्तार्थ इति न दोषः। वैशिष्ट्यं स्वनिष्ठसमवायसम्बन्धावच्छिन्नाधेयताविशिष्टनिरवच्छिन्नविशेषणतासंबन्धावच्छिन्नाधेयतासंबन्धेन। वैशिष्ट्यं स्वनिरूपकनिरूपितत्वस्वावच्छेदकक्षणावच्छिन्नत्वोभयसम्बन्धेन। अस्पृश्यादिविशेषणताभ्रमनिवृत्तये अभावविशेषणमिति। **तथा च** - उक्तार्थककालीनान्तविशेषणदाने च। **तत्र** - यत्रेत्याद्युक्तकांस्यादौ। यावदित्यभावविशेषणम्। **तदिति**। अस्पृश्यस्पर्शेत्यर्थः। **दोष इति**। शुद्धतापत्तिरूप इत्यादिः।

**स्वत्वस्यातिरिक्तपदार्थत्वखण्डनम्**

**प्रतीयत** इति। चैत्रनिरूपितस्वत्ववदिदमिति बोधस्य तत्र जननादिति भावः। अपेर्दृष्टान्ततया उक्तयुक्त्या क्लृप्तपदार्थान्तर्गतकांस्यादिगतशुद्धिरूपाधेयशक्तिलक्षणोक्तार्थसमुच्चायकता न युज्यते। अनुक्तार्थान्तरसमुच्चायकतासम्भवे तदयोगादित्यभिसन्धायाह — **अपिनेति**। प्रतियोगित्वादीत्यादिनानुयोगित्वाधिकरणत्वादिपरिग्रहः। **तादृशेत्यादि**। तादृशशब्दः यथेष्टविनियोगनिरूपितपरः। योग्य त्वान्तेन तदवच्छेदकमित्यत्र तच्छब्दार्थकथनम्। अवच्छेदकशब्दः प्रयोजकपरइत्यभिसन्धिः। **दीपिकायाम्** [३६९] **प्रतिग्रहादीत्यादिना** पित्रादिपरम्परासङ्ग्रहः।

**प्रकाशिकायाम्** [३७०] **सर्वेषामित्यादि** । अत्रायमखण्डः शाब्द-बोधः - सर्वपदार्थविशेष्यक - उक्तपदार्थनिरूपित - यथायोग्यान्तर्भाव-प्रकारकप्रतिपत्त्यनुकूलव्यापारप्रतियोगिकध्वंसविशिष्टः, यः मूलवि-शेष्यकविध्यनिरूपकत्वात्मकन्यूनताप्रतियोगिकाभावप्रकारकेच्छाविशि-ष्टविधिविशेष्यकलक्षणादिप्रकारकज्ञानजनकशब्दः, तदनुकूलभविष्य-कालीनकृतिमान्, शिष्यसमवेतशुश्रूषेच्छाविशिष्टविधिनिरूपणनिष्ठव-र्तमानकालीनत्वावच्छिन्नप्रकारतानिरूपितकर्मत्वनिष्ठप्रकारताकज्ञान-जनकायेत्यादिग्रन्थाभिन्नशब्दानुकूलवर्तमानकालीनकृतिमानित्येवं -रूपः । प्रथमवैशिष्ट्यं [1]स्वाश्रयकालावच्छिन्नवृत्तिकत्वस्वप्रतियो-गिसमानकर्तृकत्वोभयसम्बन्धेन । द्वितीयवैशिष्ट्यं [2]स्वप्रयोज्येच्छा-विषयत्वस्वविषयसमानकर्तृकत्वोभयसम्बन्धेन । एवं तृतीयमपि। **तन्नि-रूपणमि**त्यत्र तच्छब्दो विधिपरः । [3]अत्र स्वपदं सर्वमपि नैयायिकपरम् । **प्रयत्नेति** । प्रवृत्तीत्यर्थः । **विशिष्टेति** । सामानाधिकरण्यसम्बन्धेनेत्यदिः साधनताविशेषणमिदम् । एवमग्रेऽपि । **तादृशेति** । प्रयत्नजनकचि-कीर्षाजनकेत्यर्थः ज्ञानविशेषणम् । कार्यत्वादीत्यनेन तत्प्रतिपादक इत्यत्र तच्छब्दार्थकथनम् । तव्यादीत्यादिना तव्यदनीयरोः परिग्रहः । ननु वस्तुगत्या कृतिसाध्यतारहिते कृतिसाध्यताभ्रमात् लोके प्रवृ-त्तिर्दृश्यते । अतः [३७०] **कृत्यसाध्ये प्रवृत्त्यदर्शनादिति दीपिकावाक्य-**

---

1. स्वं ध्वंसः तदाश्रयकालावच्छेदेन आकाशवृत्तिमान् शब्दः, एवं स्व ध्वंसः तत्प्र-तियोगी प्रतिपत्त्यनुकूलशब्दात्मकव्यापारः तत्समानकर्तृकश्च शब्द इति संबन्ध-द्वयोपपत्तिः ।

2. स्वं न्यूनतापरिहारेच्छा तत्प्रयोज्या इच्छा विधिज्ञानजनकशब्दविषयकेच्छा तद्विष-यत्वं तादृशशब्दे, एवं स्वं न्यूनतापरिहारेच्छा तद्विषयः न्यूनतापरिहारः तत्स-मानकर्तृकत्वं च तादृशशब्दे इति संबन्धद्वयोपपत्तिः ।

3. अत्र स्वपदमिति । एतत्प्रकरणे प्रकाशिकास्थानि स्वपदानि इत्यर्थः । 'स्वपरमत-साधारणम्' 'स्वमते' इत्यादौ स्थितानि स्वपदानि नैयायिकपराणीत्यर्थः ।

मयुक्तमित्यत आह—**कृत्यसाध्यत्वेनेति** । कृत्यसाध्यत्वप्रकारकज्ञान-विषयीभूत इत्यर्थः । **चिकीर्षाद्वा**रेत्यादि । एवमग्रेऽपि बोध्यमिति भावः । **कृत्यसाध्यत्वे**ति । कृतिसाध्यत्वाभावेत्यर्थः । एवमग्रेऽपि । कृत्य-साध्यत्वज्ञानाभाव एवेत्येवेन कृतिसाध्यताज्ञानव्यवच्छेदः । तत्त्वे-प्रवर्तकत्वे **गौरवादि**ति । द्विधा अभावत्वघटितस्य कृत्यसाध्यत्वाभाव- कृतिसा ज्ञानाभावत्वस्य कृतिसाध्यताज्ञानत्वमपेक्ष्येत्यादिः । **तत्तदि**ति । कृति-साध्यत्वाभाव कृतिसाध्यभेदेत्यर्थः । **व्याप्यादी**त्यादिना तत्तदवच्छेदक-धर्मकृतिसाध्यत्वविरुद्धधर्मयोः सङ्ग्रहः । **दिगि**ति । अयमाशयः—यत्र कृत्यसाध्यत्वस्य कृतिसाध्यत्वस्य च ज्ञानं नासीत् तत्र प्रवृत्ति-वारणाय कृतिसाध्यताज्ञानस्य प्रवर्तकत्वमावश्यकमिति । तत्रापि-विष-भक्षणादावपि । **अयम्**-ज्योतिष्टोमादिः । **मत्कृतिं विने**त्यादि । इदं च पुरुषान्तरकृतपाकादौ व्यभिचारवारणाय । **आनुमानिके**ति । अनुमान-जन्येर्थः । **रूपे**ति निमित्तविशेषणम् । **सन्ध्यावन्दने**त्युत्तरमादिशब्दः पूरणीयः । तेन स्नानसङ्ग्रहः । **शुचिजीवित्वादी**त्यत्र शुचिजीवित्वादि-मत्त्वादीत्यर्थः । आदिना तत्कालाशौचसङ्ग्रहः । एवमग्रेऽपि । **दीपिकायाम् अननुगम** इति । उक्तकर्मत्रयस्थलीयकृतिसाध्यताज्ञानानां प्रवृत्तित्वाव-च्छिन्नं प्रति एककारणत्वासम्भव इत्यर्थः । **प्रकाशिकायाम्** उपपादयति-**प्रवृत्तिसामान्ये**ति । प्रवृत्तित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छे-दकरूपस्येत्यर्थः । **एकस्य**- दर्शितकर्मत्रयस्थलीयकृतिसाध्यताज्ञानसाधा-रणस्य । **तस्ये**त्यत्र **तन्निष्ठे**त्यत्र च तच्छब्दः पुरुषपरः । **कामनादि**रित्या-दिना विहितकालशुचिजीवित्वतात्कालिकाशौचवत्त्वयोः सङ्ग्रहः । **तद्वत्ताया** इत्यत्र तच्छब्दः कामनादिपरः । एवं-तत्सम्बन्धस्येत्यत्रापि । तथा - **स्वविषये**ति । स्वपदमत्र कामनापरम् । **साधनत्वादी**त्यादिना आश्रयत्वसङ्ग्रहः । **रूपेति** सम्बन्धविशेषणम् । चरमः **तच्छब्दः** ज्ञानपरः । **अनुगतत्वादि**ति । अथैवमपि स्वत्वस्य तत्तत्पुरुषव्यक्ति-विश्रामात् पुरुषव्यक्तिभेदेनानन्तकार्यकारणभावप्रसङ्गः । **अन्यथा** प्रवृत्तित्वस्यानुगतस्य कार्यतावच्छेदकत्वे व्यभिचारापत्तेः । **मैवम्** –

समवायेन **वैदिककर्मगोचरप्रवृत्तित्वावच्छिन्नं** प्रति आधेयत्वसमवायो-भयसम्बन्धेन कृतिसाध्यताज्ञानत्वेन हेतुत्वोपगमाददोषात् । आधेयत्वं स्वविशेषणवत्ताप्रतिसन्धानजन्यत्वसम्बन्धेन । कारणतावच्छेदकेत्यत-परं संबन्धेति वक्तव्यम् । **लाघवेनेत्यर्थ** इति । समवायस्य तादृशस्यातिलघुत्वादिति भावः । **तदिति** । गुर्वीत्यर्थः । **कारणतावच्छेदकस्येति** । सम्बन्धस्येति शेषः । **जन्यत्वेति** । नियतोत्तरवृत्तित्वरूपेत्यादिः । **जन्यत्वादी**त्यादिना । सम्बन्धावच्छिन्नत्वाधेयत्वोभयत्वानां सङ्ग्रहः । **अत्र** - प्रयत्नजनकज्ञानविषयशरीरे । **बलवदनिष्टाननुबन्धित्वमपि** इति । बलवत् यदनिष्टं तदननुबन्धित्वमपीत्यर्थः ।ज्योतिष्टोमयागहेतुभूतस्यार्थव्ययकायक्लेशादिरूपानिष्टस्य व्यावृत्तये बलवदिति । इष्टोत्पत्ति-प्राक्कालीनभिन्नत्वमिह बलवत्त्वम् । अपिः कृतिसाध्यताज्ञानत्वेष्टसा-साधनताज्ञानत्वयोः दृष्टान्तत्वेन समुच्चायकः । तत्र तदन्तर्भावप्रयो-जनमाह - **तेनेति** । प्रयत्नजनकज्ञानविषयशरीरे बलवदनिष्टाननु-बन्धित्वनिवेशेनेत्यर्थः । न प्रवृत्त्यापत्तिरिति सम्बन्धः । **रूपेष्टेति** कर्म-धारयः । **विशिष्टेति** । बलवदनिष्टाननुबन्धिकृतिसाध्येष्टसाधनतेत्यर्थः । प्रवृत्तावित्यादिः । **कृतिसाध्यत्वादीति** । आदिना इष्टसाधनत्वबलवद-निष्टाननुबन्धित्वयोः सङ्ग्रहः । **पृथगेवेति** । कृतिसाध्यताज्ञानत्वादि-नैवेत्यर्थः । **दण्डचक्रादिन्यायेनेति**। अन्यथ। उक्तविशिष्टज्ञानत्वेन कारणत्वोपगमे विशेषणविशेष्यभावे निनिगमनाविरहेण गुरुधर्माव-च्छिन्ननानाकारणतास्वीकारापत्तेरिति ध्येयम् । **प्रवृत्तीत्यर्थ** इति । अन्यथा प्रयत्नस्य निवृत्तिजीवनयोनिसाधारणस्य कृतिसाध्यत्वादिज्ञा-नकार्यतावच्छेदकत्वे व्यतिरेकव्यभिचारप्रसङ्गादिति भाव. । **प्रत्यवाय-स्येति** ।पापस्येत्यर्थः । **प्रागभावः** - अनुत्पत्तिः । अन्यथा यावदायुषं सन्ध्यवन्दनादिकर्तरि प्रत्यवायाजननात् । प्रागभावासम्भवेन तदीयसन्ध्यावन्दनादेर्निष्फलत्वापत्तेरिति भावः । ननु लोके सुख,दुःख-निवृत्ति,दुःखहेतुनिवृत्तीनामेव फलत्वमिष्टतया दृष्टमिति कथमुक्तलक्ष-णप्रागभावस्य फलत्वसम्भवः, इष्टस्यैव फलत्वादित्यत्राह – **तस्येति** ।

**दुःखजनकाभावतये**ति । दुःखजनकस्य योऽभावः तत्त्वेनेत्यर्थः । **तदिति** दुःखजनकेत्यर्थः । **फलत्वमि**ति । प्रवृत्त्युद्देश्यत्वघटितमित्यादिः दुःखजनकाभावतया इष्टत्वं च तादृशाभावत्वप्रकारकेच्छाविषयत्वमिति ध्येयम् ।ननु प्रत्यवायपरिहारशब्दितस्य तत्प्रागभावस्य तदनुत्पत्तिरूपस्य कथं फलत्वम् । जन्यत्वे सति प्रवृत्युद्देश्यत्वं हि तत् । उक्तप्रागभावस्तु न जन्य इति शङ्कते - **न चे**ति । तदिति । प्रत्यवायेत्यर्थः । **तस्य** - प्रत्यवायप्रागभावस्य । **स्वरूपसंबन्धरूपस्य** - धर्मिस्वरूपानतिरिक्तस्य । **तत्र** - प्रत्यवायप्रागभावे । **फलत्वाक्षते**रिति फलत्वशरीरे- जन्यत्वस्थले प्रयोज्यत्वस्यैव निवेशनीयत्वादिति भावः ।

**अपूर्वस्य लिङर्थत्वखण्डनम्**

[३७७] **इच्छाविशेषे**ति । स्वस्वत्वनिवृत्तिपूर्वकदेवतास्वत्वप्रकारकेच्छेत्यर्थः । **आशुतरविनाशिन** इति । एतदर्थस्त्वग्रे व्यक्तीभविष्यति । **भानम्**-ज्ञानं शाब्दरूपम् । यद्वा भानं-विषयता । एवमग्रेऽपि । साधनत्वेनेत्यत्र तृतीया विषयतान्वयिनि प्रकारतानिरूपितत्वे । भानमित्यस्य शाब्दबुद्धावित्यादिः । [३७८] **अयोग्यत्वा**दिति । स्वर्गसाधनत्वाभाववत्वात् । साधनत्वस्य च कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकतद्धर्मवत्त्वरूपत्वात् स्वर्गाव्यवहितप्राक्क्षणावच्छेदेन यागाभावादिति भावः । ननु आशुतरविनाशित्वमतिशीघ्रविनाशित्वं विनाशित्वं नाशप्रतियोगित्वम् । तच्चाफलस्थायिन्यपि सम्भवति ततोऽधिकस्थाय्यपेक्षया तस्य तथात्वादित्यतो व्याचष्टे - **तृतीये**ति । **स्वोत्पत्तिक्षणे**त्यादिः । अन्यथा किंचिदपेक्षया तृतीयत्वस्यापि सर्वक्षणसाधारण्यानपायात् तद्दोषापत्तेः । स्वोत्पत्तिक्षणतृतीयत्वं च स्वोत्पत्तिक्षणध्वंसोत्पत्त्यधिकरक्षणध्वंसोत्पत्त्यधिकरणत्वम् । न चात्र स्वत्वघटनयाननुगमः । यतः प्रमेयविशिष्टत्वमाशुतरविनाशित्वमिति स्थूलोऽनुगमः । वैशिष्टचं [1]स्वतादात्म्य-

---

1. **यागादेः स्वोत्पत्ति तृतीयक्षणवृत्तिध्वंसप्रतियोगित्वमुपपादनीयम् । तत्र प्रमेयपदेन याग एव ग्राह्यः तद्विशिष्टत्वमुभयसंबन्धेन यागे । तथा हि स्वं यागः तत्तादात्म्यं**

स्वोत्पत्तिक्षणध्वंसोत्पत्त्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वोभयसम्बन्धेन । [1]क्षणविशिष्टत्वमिति सूक्ष्मानुगमः । वैशिष्टयं स्ववृत्तिध्वंसप्रतियोगित्वस्वनिरूपितस्वोत्पत्तिक्षणध्वंसोत्पत्त्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणत्वसम्बन्धावच्छिन्नाधेयत्वोभयसम्बन्धेन । अतो न दोषः । अनेकक्षणवृत्तित्वरूपं स्थायित्वम् । द्वितीयक्षणमात्रवृत्तिपदार्थसाधारणमपीत्यालोच्य व्याचष्टे - **फलपर्यन्तस्थायी**ति । फलेत्यस्य प्रकृतेत्यादिः । [2]स्वोत्पत्तिक्षणध्वंसाधिकरणप्रकृतफलोत्पत्तिक्षणध्वंसानधिकरणयावत्क्षणवृत्तित्वम् । आधेयतया तादृशक्षणत्वव्यापकत्वपर्यवसितं फलपर्यन्तस्थायित्वम् ।

ननु [३७७] **स्थायिकार्यमपूर्वमेव** इति **दीपिकावाक्य**मयुक्तम् । कृतिसाध्यतारूपकार्यताया याग एव सम्भवात् अपूर्वे तदसम्भवादित्यत्राह - **याग** इति । **साक्षात्** - किंचिदद्वारा । आश्रयतासम्बन्धेनेति यावत् । **यागद्वारा** - स्वाश्रययागजन्यत्वरूपपरम्परासम्बन्धेन । **तदि**ति । जन्येत्यर्थः । **एकदेश** इति । कृताविति शेषः । **तत्र** - ज्योतिष्टोमेन यजेतेति वाक्ये । साधनान्तं यागविशेषणम् । **पूर्वमि**ति । ज्योतिष्टोमवाक्यजन्यबोधादित्यादिः । **अनुपस्थितत्वादि**ति । प्रमाणान्तरेणापूर्वसिद्धेरसम्भवात् तादृशवाक्येनैव तत्सिद्धेर्वक्तव्यत्वादिति भावः । **तत्र** - अपूर्वे । **अत्र** - उक्ताक्षेपे । **प्रवदन्ती**ति । समाधानमिति शेषः । **तदि**ति । गुर्वित्यर्थः । **तादृशे**ति । तद्धर्मावच्छिन्नविषयकेत्यर्थः । तद्धर्मावच्छिन्न-

---

यागे, एवं स्वं यागः तदुत्पत्तिक्षणः प्रथमक्षणः तद्ध्वंसोत्पत्त्यधिकरणक्षणः द्वितीयक्षणः तद्ध्वंसोत्पत्त्यधिकरणक्षणः तृतीयक्षणः तद्वृत्तिर्यो यागध्वंसः तत्प्रतियोगि स्वं यागे इति ।

1. प्रथमस्वपदेन यागोत्पत्तितृतीयक्षणो ग्राह्यः । तद्वृत्तिध्वंसप्रतियोगित्वं यागे । द्वितीयस्वपदं तृतीयक्षणपरम् । तृतीयस्वपदं यागपरम् । तृतीयक्षणनिरूपिता यागनिष्ठा आधेयता स्वोत्पत्तिक्षणध्वंसोत्पत्त्यधिकरणक्षणध्वंसोत्पत्त्यधिकरणक्षणत्वसंबन्धावच्छिन्ना । तेन संबन्धेन यागस्य तृतीयक्षणे सत्त्वादिति तादृशाधेयत्वोभयसंबन्धेन तृतीयक्षणविशिष्टत्वं यागस्येति समन्वयः ।

2. स्वं यागः तदुत्पत्तिक्षणध्वंसाधिकरक्षणमारभ्य प्रकृतफलस्वर्गादेरुत्पत्तिक्षणध्वंसानधिकरणभूता यावन्तः क्षणाः तावद्वृत्तित्वमित्यर्थः ।

विषयकत्वं तद्धर्मावच्छिन्नविषयतानिरूपकत्वम् । **न त्विति** । तद्विषयकशाब्दं प्रति तद्विषयकशक्तिग्रहस्य तद्विषयकोपस्थितेश्च हेतुता न स्वीक्रियत इत्यर्थः । एवं चोक्तरीत्या शक्तिग्रहादिशाब्दबोधयोः समानविषयकत्वेन कार्यकारणभावमनुपेत्य समानप्रकारकतया तयोस्तदुपगमे चेत्यर्थः । **यत्र कुत्रचित्** - घटादौ । **योग्यतेति** । यागविषयकत्वान्वयेत्यर्थः । ननु शाब्दबोधे योग्यतावशात् घटादिरूपकार्यस्यैव भानं कुतो न सम्भवतीत्यत्राह - **न हीति** । न सम्भवति हीत्यन्वयः । **अन्यदिति** । अपूर्वरूपकार्यादित्यादिः । **नित्य** इति । कर्मणीति शेषः । **फलाभावादिति** । फलत्वमिह जन्यत्वघटितम् । **तत्र** - नित्यकर्मवाक्ये । **दीपिकायाम्** [३७७] **नित्यवाक्येऽपीति** अपिः काम्यवाक्यसमुच्चायकः दृष्टान्ततया । **वाच्यमिति** । लिङादेरित्यादिः । नन्वपूर्वस्य केनाकारेण नित्यवाक्यस्थलिङादिवाच्यतेत्याशङ्कायामाह - **प्रकाशिकायाम् कार्यत्वेनेत्यादिरिति** । **पण्डेति** । तन्मतेऽपूर्वं द्विविधम् - [1]**कलिकापूर्वम्** पण्डापूर्वम् चेति । तत्र काम्यवाक्यस्थलिङादिवाच्यमपूर्वमाद्यम् । नित्यवाक्यस्थलिङादिवाच्यं द्वितीयम् । पण्डत्वं नपुंसकत्वम् फलाजनकत्वमिति यावत् इति ध्येयम् । **दीपिकायाम्** [३७७] **कल्प्यत** इति । अयमत्र कल्पनाप्रकारः-नित्यवाक्यस्थलिङ् कार्यत्वप्रकारेणापूर्ववाचकः वैदिकलिङ्त्वात् काम्यवाक्यस्थलिङ्वदिति । क्रियेत्यादिवाक्ये क्रियाया धात्वर्थस्य यत्कार्यं फलं तत्रेत्यर्थ इति भ्रमव्युदासायाह - **प्रकाशिकायाम् धात्वर्थनिष्ठेति** । तथा चात्र कार्यशब्दः कार्यत्वपरः । क्रियाकार्य इत्यत्र षष्ठीसमास एवेति भावः । **अलौकिकेति** । वैदिकेत्यर्थः । लिङादीति पूरणीयम् । **साधारण्येनेति** । साधारण्यमाधेयत्वम् शक्त्यन्वयिनि वैशिष्ट्ये तृतीया । **कार्यत्वादावेवेति** । एवेनापूर्वव्यवच्छेदः । **दीपिकायाम्** [३७७] **यागस्यापीति** । अपिरत्र दृष्टान्तत्वेनापूर्वसमु-

---

1. **कलिकापूर्वमिति । कलयति उत्पादयति फलमिति व्युत्पत्त्या निष्पन्नोऽयं शब्दः स्वर्गादिकाम्यफलसाधनमपूर्वमाचष्टे । नपुंसकवाची पण्डशब्दः निष्फलत्वार्थकः । तथा च निष्फलापूर्वमिति पण्डापूर्वशब्दार्थः ।**

च्चायकः । **अयोग्येति** । स्वर्गसाधनत्वाभाववत्तेत्यर्थः **। साधनतयेति ।** स्वर्गादीत्यादिः । **तदिति** । साधनतेत्यर्थः । एवं व्याख्यानेऽपि तन्निर्वाहायेत्यत्र अवान्तरेति । फलसाधनयोर्मध्यदशाभावीत्यर्थः । **अपूर्वकल्पनादिति** । अयमत्र कल्पनाप्रकारः—यागः स्वर्गजनकव्यापारजनकः स्वर्गाव्यवहितप्राक्कालावृत्तित्वे सति स्वर्गजनकत्वात् यो यदव्यवहितप्राक्कालावृत्तित्वे सति यज्जनकः स तज्जनकव्यापारजनकः । यथा संस्कारद्वारा स्मृतिजनकानुभव इति ।

ननु यागस्यायोग्यतानिश्चयो मा भूत् तत्संशयः परं जायत एवेति निश्चयवत्संशयस्यापि तद्वत्ताधीविरोधित्वात् कथं स्वर्गादिसाधनतया यागबोधसम्भव इत्यत्राह — **प्रकाशिकायाम् अयोग्यतेति** । स्वर्गादिसाधनत्वाभाववत्तेत्यर्थः । **तस्य** - अयोग्यतासंशयस्य । **अविघटकत्वादिति** । अविरोधित्वादित्यर्थः । तदभाववत्तानिश्चयस्यैव तद्वत्ताधीविरोधित्वादिति भावः । यागधर्मिकस्वर्गादिसाधनत्वप्रकारकबुद्धावित्यादिः। **बोध** इति । ज्योतिष्टोमादिवाक्यतः स्वर्गादिसाधनताया इत्यादिः । **वाक्यादिति** । ज्योतिष्टोमादीत्यादि : । **तस्य**-यागस्य । नन्वपूर्वस्य यागव्यापारत्वे यागजन्यत्वं यागजन्यस्वर्गादिरूपफलजनकत्वं द्वयमपि कल्पनीयम् । यागध्वंसस्य यागव्यापारतायां तु प्रतियोगिविधया यागजन्यताया यागध्वंसे क्लृप्तत्वात् स्वर्गादिरूपफलजनकतामात्रं कल्पनीयमित्युभयकल्पनया पूर्वपक्षे गौरवमित्याशङ्कते — **नन्विति** । **ध्वंसस्यैवेत्ये**वेनापूर्वव्यवच्छेदः । **व्यापारत्वमिति** । यागेत्यादिः । स्पर्शादीत्यादिना करतोयातिलङ्घनगण्डकीबाहुतरणयोः संग्रहः ।

**दीपिकायाम्** [३७७] **न यागध्वंसो व्यापार** इति । न व्यापार इत्यन्वयः । व्यापार इत्यस्य यागेत्यादिः । अन्यथा श्रौतस्य क्षरतेः नश्यतीत्यर्थपरतया ध्वंसस्य नाशविरहेण व्यापारस्य कीर्तनादिनाशश्रुतिविरोधप्रसङ्गादिति भावः । अत्र च न क्षरतिः नाशरूपमुख्यक्षरणपरः अपि तु फलासमर्थत्वरूपगौणक्षरणपरः । एवं च यागध्वंसस्य

यागव्यापारतायामपि न क्षतिः। तस्य फलासमर्थत्वं च भवति । धर्म-कीर्तनादेः स्वर्गादिफलं प्रति प्रतिबन्धकत्वकल्पनया । अन्यथा प्रागुक्तकल्पना – अपूर्वरूपधर्मस्य नाशकल्पना तन्नाशं प्रति कीर्तनादेः हेतुत्वकल्पना चेति महागौरवापत्तेरिति **दीपिकोक्त**दूषणं न विचारसह-मिति आलोच्य ध्वंसस्य व्यापारतायामभेद्यं दूषणं स्वयमाह - **प्रकाशिकायाम् ध्वंसस्ये**ति । दूषणान्तरम् - प्रागुपादितदूषणातिरिक्तदूषणम् ।

**आख्यातस्य यत्नार्थकत्वस्थापनम्**

ननु लोकव्युत्पत्तीत्यत्र व्युत्पत्तेः कृतिसाध्यत्वादौ लिङ्गादि-शक्तिग्रहरूपतायाः क्रियायां कृतिसाध्यत्वाद्यन्वयनियामकत्वकथनं न युज्यते इत्यतो व्याचष्टे- [३८०]**लोकव्यवहारेत्यर्थ** इति । **स च**·लोक-व्यवहारश्च । **इत्येवंरूप** इत्यनेनान्वयः । **कृतिसाध्यत्वेने**त्यादि । ज्ञाना-न्वयिनि प्रकारत्वे तृतीया। तत्पदं त्वलन्तयत्पदसमानार्थकम् । तथा च कृतिसाध्यत्वेष्टसाधनत्वप्रकारकज्ञानवानित्यर्थः । **तदर्थ** इति । तत्पदमत्र लोकव्युत्पत्तिबलादित्येतत्परम् । **तत्रेती**ति । **तत्र** - लोके । **दीपिकायाम् लिङ्त्वेनेत्यतः** परमादीति शेषः । **विध्यर्थत्वमि**ति। लिङा-देरित्यादिः। विधिरथौ वाच्यो यस्येति बहुव्रीहिः । तथा च विधिश-ब्दस्य प्रवर्तकज्ञानविषयपरतया तादृशविषयवाचकत्वमित्यर्थः । **आख्य-तत्वेने**त्यादि । आख्यातत्वावच्छिन्नं प्रयत्नवाचकमित्यर्थः । नन्वाख्या-तत्वं नाम किमिदमित्याशङ्कायां तन्निर्वक्ति — **प्रकाशिकायाम् आ-ख्यातत्वेने**ति । **तच्च** — आख्यातत्वं च । **संकेते**ति । पाणिनीयेत्यादिः। **शक्तते**ति । लिङादिनिष्ठकृतिनिरूपितेत्यादिः । शक्तिनिरूपकतेत्यर्थः । **अवच्छिन्ने** – विशिष्टे । एवमग्रेऽपि । **संबन्धे**ति । सम्बन्धश्चात्रानु-कूलता । एवमग्रेऽपि । **तत्** - किं करोतीत्येवं रूपम् । **तदि**ति । किं करोतीत्येवंरूपप्रश्नवाक्येत्यर्थः । **निवर्तकत्वमि**ति । सम्भवतीति शेषः । **अन्यथा** । कृतित्वावच्छिन्ने पाकसंबन्धबोधकत्वविरहे । तन्निवर्तकत्व-मित्यादेरनुषङ्गात् तन्निवर्तकत्वं न सम्भवतीत्यन्वयः । **कृतिबोधक-त्वासंभवादि**ति । अचेतने रथादौ चेतनधर्मस्य कृतेरसम्भवादिति

भावः । **तदिति** । रथो गच्छतीत्यादिस्थलीयाख्यातेत्यर्थः । **अनुरोधेने**ति अनेन सर्वाख्यातानां शक्त्यैकरूप्यौचित्यन्यायः सूचितः । **व्यापार एवे**ति । एवेन कृतिव्यवच्छेदः । ननु रथो गच्छतीत्यादौ व्यापारत्वरूपलघुधर्मावच्छिन्ने लक्षणास्वीकारेणैव सामञ्जस्ये अनुकूलव्यापारत्वरूपगुरुधर्मावच्छिन्ने लक्षणाकथनं **दीपिका**कारस्यायुक्तम् । एवमनुकूलत्वे निरूपितत्वसंम्बन्धेन गमनादेरन्वयस्य वाच्यतया तादृशसंबन्धस्याधिकस्य शाब्दबुद्धौ भानकल्पने महागौरवं चेत्यत्राह—**व्यापार** इति । **एतेन** — अनुकूलत्वरूपेण । **निरूढे**ति । अनादितात्पर्यविषयीभूतार्थनिष्ठेत्यर्थः । एवमग्रेऽपि । आश्रयतासम्बन्धेनैवेत्येवकारः अन्वयेनेत्युत्तरं योज्यः । एवेनाख्यातार्थतया कल्पिते आश्रयत्वे निरूपितत्वसम्बन्धेन अन्वयव्यवच्छेदः । **नामार्थयोरिवे**ति एकनामार्थे अपरनामार्थस्य यथा अभेदातिरिक्तसम्बन्धेन नान्वयः । तथेहापि नामार्थे धात्वर्थस्याभेदातिरिक्तसम्बन्धेनान्वयो नोपेयते । अन्यथा राजापुरुष इत्यादौ पुरुषादिपदार्थे राजादिपदार्थस्य स्वस्वामिभावादिसम्बन्धेन पच्यते तण्डुल इत्यादौ धात्वर्थस्य पाकादेः क्रियाकर्मभावादिसम्बन्धेन तण्डुलादिपदार्थे यथाक्रममन्वयापत्तेरिति भावः । **अव्युत्पन्नत्वात्** - समभिव्याहारविशेषज्ञाननियाम्यत्वविरहात् । **तत्र**-रथो गच्छतीत्यादौ । **तथा** - प्रथमान्तार्थे गमनादेराश्रयतासंबन्धेन । संबन्धेऽतिरिक्तत्वविशेषणप्रवेशफलमाह - **स्तोकं पचतीत्यादावपी**ति । कर्तृकर्मणोराख्यातार्थतासम्भवे **दीपिकाकृता** युक्तेरकथनात् स्वयं तत्र तामाह - **आख्याततस्ये**ति । **कर्त्रादावि**ति । आदिना धात्वर्थतावच्छेदकत्वाभिमतसंयोगविभागादिरूपतत्तत्फलवदात्मककर्मपरिग्रहः । महागौरवसूचनायानन्तेत्युक्तम् । कृत्यादेरित्यादिना संयोगादिरूपफलपरिग्रहः । एवमग्रेऽपि । अङ्गीकार्यमित्यतः परं कृतित्वादिजातेः शक्यतावच्छेदकतावच्छेदकमप्यङ्गीकार्यमिति शेषः । कृतित्वादीत्यादिना संयोगत्वादिपरिग्रहः । जात्यखण्डोपाध्यतिरिक्तस्य यत्किंचिद्रूपेणैव भानादिति भावः । **लाघवमि**ति । कृतित्वादिजातेरेकत्वेनानन्त्यविरहात् जात्यनुल्लिखितप्रतीतौ

जातेः स्वरूपत एव भानोपगमेन कस्यचिद्धर्मान्तरस्य शक्यतावच्छेदकतावच्छेदकताया अप्यनुपगमाच्चेति भावः। **दीपिकायाम् तदिति** कर्तृकर्मपरम् । एकत्वादीत्यादिपदार्थ माह - **प्रकाशिकायाम् आदिना कृत्यादीति** । आदिनेत्यस्यादिशब्देनेत्यर्थः । एवमन्यत्रापि। **तर्हि** आख्यातस्य कृत्याद्यर्थकत्वे । **कर्तृकर्मणोरिति** । देवदत्तः पचति पच्यते तण्डुल इत्यादाविति शेषः । **लाभः** - प्रतीतिः । कर्तृत्वकर्मत्वाभ्यां देवदत्ततण्डुलादेरित्यादिः । एवमग्रेऽपि । **दीपिकायाम् तयोः** - कर्तृकर्मणोः । **आक्षेपादेवेति** । आक्षेपश्चार्थापत्तिः । देवदत्तादेः कर्तृत्वादिकमन्तरा कृत्यादिपराख्यातसमभिव्याहृतदेवदत्तादिपदबोध्यत्वमनुपपन्नमित्यादिरूपा । ननु स्वमते उक्तरूपाक्षेपानुपगमादाक्षेपादेरेवेति **दीपिकावाक्यमसङ्गत**मित्यत्राह - **प्रकाशिकायाम् परमतेनेति** । **स्वमते त्विति** । स्वपदमत्र नैयायिकपरम् । पदेनैव इत्येवेन उक्ताक्षेपव्युदासः । **तदिति** कर्तृकर्मेत्यर्थः । देवदत्तः पचतीत्यादौ कंचनाक्षेपं तत्परिहारं च विवक्षन् तदुपयोगित्वेन शाब्दबोधप्रकारं यथायोगं दर्शयति - **देवदत्तः तण्डुलं पचतीत्यत्रेति** । **तत्र** - देवदत्तः पचति, तण्डुलः पच्यत इत्युक्तस्थलयोः । **अनभिधानादितीति**। तृतीयाद्वितीयानियामकयोः सूत्रयोरनभिहिताधिकारीयत्वादिति भावः । **अनभिहित इति** । लकारादिभिरित्यादिः । लकारादि जन्यशाब्दबोधाविषय इत्यर्थः । **तादृशे** - लकारादिभिरनभिहितइत्यर्थः । मूलेऽप्येवम् ।

### उपसर्गाणां द्योतकत्वम्

[३८५] **उपसर्गाणाम्** - उपसर्गात् क्रियायोग इति विहितोपसर्गसंज्ञकानाम् प्रादीनामिति शेषः । **वचनत्वेति** । प्रकर्षादिरूपार्थविशेषेत्यादिः। **तात्पर्येति** । समभिव्याहृतधातुप्रतिपाद्यार्थविशेषेत्यादिः। **ग्राहकत्वमिति** । अन्यथा उपास्यते गुरुः इत्यादौ उपशब्दस्य समीपदेशपरतया आसेश्चाधेयत्वार्थकत्वेन समीपदेशाधेयत्वरूपविशिष्टार्थपरस्योपासेरकर्मकत्वेन 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा. सू

३.४.६९) इति सूत्रोक्तरीत्या कर्मलकारानुपपत्तिप्रसङ्गात्। अतः उप-शब्दः उपासनात्मकज्ञानविशेषरूपार्थविशेषे आसधातोस्तात्पर्यं ग्राह यति इत्येव वक्तव्यमिति । एवमन्यत्रापि बोध्यम् । **दीपिकायाम् प्रकर्षे**-प्रकर्षादौ द्योतकत्वमेवेत्येवकारव्यवच्छेद्यं स्फुटयति-**न तत्र शक्ति**-रिति । तत्र प्रकर्षादौ । **तेन** - उक्तरीत्या उपसर्गाणां द्योतकत्वस्थाप-नेन । सूचितमित्यनेन सम्बन्धः । **इतरे**ति । उपसर्गसंज्ञारहितेत्यर्थः । **निपातनादि**ति एवकारादीनामिति शेषः । 'स्वरादिनिपातमव्ययम्' (पा. सू. १. १. ३७) इति सूत्रविहितनिपातसंज्ञकानामित्यर्थः । एव-कारादीनां वाचकत्वप्रकारमुपपादयति - **तथा ही**त्यादिना । अयोगव्य-वच्छेदः उद्देश्यतावच्छेदकीभूतशङ्खत्वादिव्यापकत्वम् । **अन्ययोगे**ति एवकारस्येत्यादिरनुषज्यते । **व्यवच्छेदश्चे**ति । अर्थ इत्यनुषज्यते । अन्य-योगव्यवच्छेदः उद्देश्यतावच्छेदकपार्थत्वादिव्याप्यत्वम् । **इत्यादिकमि**-त्यादिना क्रियासङ्गतैवकारस्यात्यन्तायोगव्यवच्छेदः उद्देश्यतावच्छेदक-त्वाभिमतसरोजत्वादिसामानाधिकरण्यरूपः । अर्थ इत्यादिकमित्यर्थः ।

#### पदार्थतत्त्वज्ञानस्य मोक्षहेतुत्वनिरूपणम्

[३८८] **प्रेक्षावदि**ति । बुद्धिमदित्यर्थः । विषयेति मुक्तिविशे-षणम् । पृथिव्यादेः जलत्वादिना ज्ञानस्यातत्त्वज्ञानस्य मुक्तिप्रयोजक-त्वासम्भवादाह - **पदार्थतत्त्वज्ञानस्ये**ति । यथावस्थितत्वाकारेण पदार्थ-ज्ञानस्येत्यर्थः । **अन्येषामि**ति । मुक्तिरूपप्रयोजनादित्यादिः । **अवान्त-रे**ति । मध्यवर्तीत्यर्थः । **परमे**ति । परमत्वं च स्वानन्तरोत्पन्नतत्त्व-ज्ञानसाध्यप्रयोजनकान्यत्वम् । साध्यत्वं च साक्षात्परम्परया वा बोध्यम् । अनुगमस्तु स्फुटः । **श्रुतेरि**ति । 'आत्मा वाऽरे'त्यादिः ।

ननूपायस्य फलप्राग्भावित्वानुरोधेनोपायप्रतिपादकस्य भागस्य फलप्रतिपादकभागप्राग्भावित्वमावश्यकमिति कथं द्रष्टव्य इत्यादि-वाक्यसङ्गतिरित्यत्राह **आर्थे**ति । अर्थसम्बन्धीत्यर्थः । **क्रमेणे**ति । क्रमश्च पौर्वापर्यम् । **उक्तश्रुतिवाक्य** इत्यादिः । एवमग्रेऽपि । **शब्दे**ति ।

शब्दसम्बन्धीत्यर्थः । **त्यक्तो भवतीति** । निदिध्यासितव्यो द्रष्टव्य इति योजनेति भावः । **युक्तिभिः** बहुयुक्तिविषयकपरामर्शजन्यानुमिति-धारेत्यर्थः । **आत्मन** इति । आत्मविशेष्यकेतरभिन्नत्वप्रकारकानुमिति-रित्यर्थः । **तच्च** - उक्तरूपानुमानं च । **प्रतियोगीतरेति** समानाधिकरण-समासः । **तच्च** उक्तरूपानुपानं च । **तदिति** । आत्मन इतरभिन्नत्वे-नानुमानेत्यर्थः । तदनन्तरमि त्यत्र तच्छब्दो मननपर इत्याशयेन व्याचष्टे – **मननेत्यादि** । **श्रुतस्येत्यादि** । नैरन्तर्यं विजातीयप्रत्यया-व्यवहितत्वम् । वैशिष्ट्ये तृतीया । प्रत्यये विजातीयत्वं च श्रुतार्था-तिरिक्तार्थविषयकत्वम् । **प्रत्याहृत्येति** । प्रत्याहरणं सम्बन्धनिवृत्त्यनु-कूलव्यापारः । सम्बन्धान्वयिनि अनुयोगित्वे पञ्चमी विषयेभ्य इत्यत्र । एवमग्रेऽपि तदनन्तरमित्यत्र तच्छब्दः निदिध्यासनपर इत्यभिसन्धा-याह - [३८८] **निदिध्यासनेति** । ननु मिथ्याज्ञानमात्रनाशेऽपि तद-धीनवासनासत्त्वे दोषसम्भवात् मिथ्याज्ञाननाशेन दोषाभावकथनम-युक्तमित्यतो व्याचष्टे — [३८८] **वासनासहितेति** । ज्ञानविशेषणम् । **वासना** - संस्कारः । रागादिरित्यादिना दोषमोहयोः परिग्रहः । [६८८] **विशेषेति** । रजतव्यावर्तकाकारेत्यर्थः । शुक्तित्वादिरूपे-त्यादिः । ज्ञानेनैवेत्येवेन तादृशभ्रमनिवृत्त्यर्थकर्मव्यवच्छेदः ।

**[एतावत्पर्यन्तमेवायं ग्रन्थ उपलभ्यते ।**
**अवशिष्टो भागस्तु अतिस्वल्पः]**



# शुद्धिपत्रम्

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 14 | 6 | ि शेषः | विशेषः |
| ,, | 22 | लेन | मूलेन |
| 16 | 15 | मग्रेऽपाति | मग्रेऽपीति |
| 28 | 26 | महाप्रभावत्वाव- | महाप्रभात्वाव- |
| 45 | 2 | क्वचिल्लक्ष्या- | किंचिल्लक्ष्या- |
| 57 | 11 | स्वता | स्वतो |
| ,, | 21 | रभदः | रभेदः |
| 58 | 18 | जातिमत्त्वे | जातित्वे |
| ,, | 19 | जातित्वे | जातिमत्त्वे |
| 59 | 3 | यद्यप्याकाशेऽस्ति | यद्यप्याकाशत्वेऽस्ति |
| ,, | 25 | जातित्व | जातित्वं |
| 67 | 17 | संकीर्तने | संकीर्तनपदार्थे |
| 72 | 7 | पदात्तरं | पदोत्तरं |
| 73 | 7 | विशष | विशेष |
| 74 | 24 | नास्तीती | नास्तीति |
| 93 | 15 | चावयवोपचयाभ्यां | चावयवोपचयापचयाभ्यां |
| 95 | 9-10 | 'न चेदमप्रयोजकमिति ........ तर्को नास्तीति भावः' इति वाक्यं निष्कासनीयम् | |
| 96 | 17 | अवयवोपचयाभ्यां | अवयवोपचयापचयाभ्यां |
| 122 | 8 | प्रकारित्वयो | प्रकारित्वयोः |
| 166 | 5 | धूमत्वाप्रवेशेन | धूमत्वत्वाप्रवेशेन |
| 174 | 4 | इत्याकारकस्य | इत्याकारकस्य बोधस्य |
| ,, | 10 | विशेष्यकेत्यनुक्त्वा | प्रकारकेत्यनुक्त्वा |
| ,, | ,, | विशेष्यकेत्युक्तम् | प्रकारकेत्युक्तम् |
| 175 | 25 | आधिक | अधिक |
| 178 | 20 | यंभ | अयं |

| पृ | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 179 | 2 | ह्रात्यादि | ह्रीत्यादि |
| 181 | 9 | ज्ञात्याव्यापित | ज्ञात्या व्यापिता |
| 184 | 24 | प्रत्येक | प्रत्येकं |
| 190 | 14 | भ्रमाभिन्नेत्यर्थः | भ्रमभिन्नेत्यर्थः |
| 191 | 23 | धूमत्वं च | धूमश्च |
| ,, | ,, | धूमत्वस्य | धूमस्य |
| 205 | 6 | हेत्वन्तर् | हेत्वन्तरं |
| ,, | 13 | नित्यत्कमं | नित्यत्वम् |
| 211 | 2 | व्यापकश्चोपाधि | व्यापकश्चोपाधि |
| 222 | 8 | नि-प | निरूप- |
| 223 | 10 | जन्याप्रमिति | जन्या प्रमिति |
| ,, | 11 | शक्तिग्राहः | शक्तिग्रहः |
| ,, | 23 | पक्षविषय- | शब्दविषय- |
| 224 | 21 | सङ्केतः | सङ्केतः |
| 227 | 19 | उद्भाव्यते | उद्भाव्येते |
| 229 | 15 | रेच्छाया | रेच्छया |
| 231 | 20 | गोपदशक्यत्वात् | गोपदाशक्यत्वात् |
| 246 | 22 | प्रमाणप्रकरणे | युद्धप्रकरणे |
| 251 | 23 | व्यभिचार | व्यभिचारा- |
| 254 | 17 | शक्ति | शक्तिः |
| 256 | 19 | तद्विशिष्टे | तद्विशिष्टो |
| 259 | 6 | समुदायत्मक- | समुदायात्मक- |
| 262 | 6 | योग्यतासत्यों: | योग्यतासत्योः |
| ,, | 21 | कालीक | कालिक |
| 263 | 15 | प्रत्येमीत्येकारकः | प्रत्येमीत्याकारकः |
| ,, | 18 | अर्थापत्यादीनां | अर्थापत्यादीनां |
| 266 | 12 | योगजन्यपीन | योगाजन्यपीन |

| पृ | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 270 | 21 | भावेष्यज्ञा | भावे ष्यज्ञा |
| 272 | 28 | ज्ञानविषयत्व | ज्ञानविषयकज्ञानविषयत्व-- |
| 278 | 23 | अप्रामाण्यग्राहक- | अप्रामाण्याग्राहक- |
| 279 | 9 | अप्रामाण्यग्राहकेति- | अप्रामाण्याग्राहकेति |
| ,, | 15 | ज्ञानजनकत्वात् | ज्ञानाजनकत्वात् |
| 285 | 3 | प्रवृत्यापत्तिः | प्रवृत्यापत्तिः |
| 286 | 19 | मुत्पतौ | मुत्पत्तौ |
| ,, | ,, | कारण | कारणं |
| 288 | 11 | यथा प्रमा | यथा अप्रमा |
| ,, | 17 | व्यवसायविषयत्वात् | व्यवसायाविषयत्वात् |
| 290 | 1 | इतेन | एवेन |
| 291 | 12 | हेतुरिति | हेतु इति |
| 294 | 13 | प्रकारकत्वं | प्रकारत्वं |
| 297 | 21 | निश्चयसत्व | निश्चयसत्व |
| 298 | 16 | अनित्यश्च | अनित्याश्च |
| 300 | 13 | पटादि | घटादि |
| 300 | 25 | स संभवतीति | न संभवतीति |
| 301 | 16 | तत्र | यत्र |
| 302 | 7 | संस्कारन्यून | संस्कारान्यून |
| 303 | 13 | रूपाद्विषु | रूपादिषु |
| 316 | 17 | तथा बाधित | तथा च बाधित |
| 320 | 23 | च्छिन्द्यघटा- | च्छिन्नघटा |
| 324 | 15 | अपस्ता | अपास्ता |
| 327 | 9 | पटाद्यभाव- | घटाद्यभाव- |
| 330 | 2 | सम्बा- | सम्ब- |
| ,, | 3 | विरोधिततय | विरोधितया |
| 331 | 17 | जननमितिः | जननमिति |
| 332 | 14 | आस्मिन् | अस्मिन् |
| 334 | 22 | दुःखासमान- | दुःखसमान- |
| 337 | 11 | श्रुयमाणस्य | श्रयमाणस्य |
| ,, | 15 | स्थापनयमुत्तरं | स्थापनायामुत्तरं |

| पृ | पं | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| 341 | 21 | सक्रियत्वमित्यपि | निष्क्रियत्वमित्यपि |
| 344 | 15 | कुतो न | निष्क्रियत्वं कुतो न |
| 346 | 1 | यत् शब्दः | यत् नित्यत्वं तत्साधकं यत् शब्दः |
| 351 | 25 | कारादयोऽपीति | कारादयोऽपि |
| 352 | 19 | समीकरणोद्धेशो | समीकरणोद्देशो |
| 357 | 11 | दित्यस्थार्थः | दित्यस्यार्थः |
| 360 | 1 | माकारण | माकारणे |
| 366 | 13 | वह्न्याधिकरणे | वह्न्यधिकरणे |
| 367 | 17 | यत्किंचि- | यत्किंचि- |
| 369 | 1 | धेयताय | धेयतायां |
| 391 | 15 | दन्य | दन्यः |
| ,, | 25 | धुरिणैः | धुरीणैः |
| 392 | 7 | मनः प्रीति | मनःप्रीति |

